श्रीगणेशाय नमः



अथ वेदगीता प्रारभ्यते

मङ्गलाचरणम्

ओं निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्।
न ऋते त्वत् क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च॥ ऋ०१०।११२।९
देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सानो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु॥ ऋ०८।१००।११

ग्रन्थारम्भः

विश्वरूपं जगत्सर्वं सर्वेशपरिपूरितम्।
निरीक्ष्य परमात्मानं नमस्येऽहं कृताञ्जलिः॥१॥
सर्वाधारं निराधारं सगुणं निर्गुणं तथा।
अलिङ्गं लिङ्गतो ज्ञातं परं ब्रह्म नमाम्यहम्॥२॥
विद्यागुरून् प्रणम्यैव वेदगीतां समारभे।
वैदिकतत्त्वविज्ञाय जिज्ञासूनां हिताय च॥३॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात्॥४॥
क्व वेदार्थस्य विज्ञानं क्व मेऽल्पविषया मतिः।
कराग्रेण नभःस्थेन्दुं ग्रहीतुमहमुद्यतः॥५॥
ब्रह्मवाणीं नमस्कृत्य गुरुं कृष्णं मुहुर्मुहुः।
गीतावैदिकतां चाहं दर्शयितुं समुद्यतः॥६॥
यानि वै पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि।
अथर्वैकोनविंशके काण्डे पाठः समागतः॥७॥
गीतोपनिषदां सारः केषाञ्चिद् विदुषां मतम्।
अहं त्वेतद्विजानामि वेदाद् गीता समुद्धृता॥८॥
आविंशाब्दं कृतं कर्म गीता वेदविलोकनम्।
मया व्यधायि विप्रेण गीतावेदसमन्वयः॥९॥
समर्पिता मया गीता श्रीकृष्णपदपङ्कजे।
सारस्वत भारद्वाज जगन्नाथेन शास्त्रिणा॥१०॥
दृष्ट्वा वेदमयीं व्याख्यां वेदस्वाध्यायसंरताः।
हृष्टचित्ताः भविष्यन्ति भक्तिसाधनतत्पराः॥११॥
वेदाः श्रीकृष्णवाक्यानि व्यासमन्त्राणि चैव हि।
समाधिभाषा व्यासस्य प्रमाणं वै चतुष्टयम्॥१२॥
विद्वद्वरैर्मान्यैः सकलशास्त्रज्ञातृभिः।
उपनिषत्तत्त्वमादाय व्याख्यायि बहु सूरिभिः॥१३॥
सर्वसंसारविख्यातं सर्वभाषासमुद्धृतम्।

शङ्कराचार्यसिद्धान्तं मन्यन्ते प्रायशो जनाः॥१४
वेदतत्त्वं हि निश्चित्य गीताभावसमन्वितम्।
श्रीकृष्णादेशमात्रेण वेदमार्गः प्रकाशितः॥१५॥
ईस्वी नन्द मही नवेन्दु समयान्निध्यग्नि नन्देन्दुकम्
यावद्वेदपयोधितः प्रकटितं श्री वेद गीतामृतम्।
तद्भाष्यं स्वमनीषया सुरगिरा संलिख्य गीतायुतम्
संप्राब्दे यड्कनिधौ स्वदेशनिस्सृतोऽत्रैवानयं रक्षितम्॥१६॥

सोऽयं ग्रन्थनिधिः पञ्जाब यूनिवर्सिटी पुस्तकालये चण्डीगढ़े १९६१ मिते ख्रिष्टाब्दे मया प्रेषितः। हिन्दीभाषायुता मत्कृता सम्पूर्ण-वेदगीताव्याख्या पं० श्रीपाद दामोदर सातवलेकर महोदयैः पारडी (सूरत) स्थ स्वाध्यायमण्डलस्य वैदिकधर्मपत्रके प्रकाशिता।
पंजाब यूनिवर्सिटी वाइस-चांसलर पदवीमलंकुर्वाणानां श्री डाक्टर-अमरचन्द जोशी महोदयानां प्रेरणया यू० जी० सी० निदेशाभिभावितेन श्री गौरीशंकरेण चेयं वेदगीता सम्पादयितुमारब्धा। स्वयं च तेन झज्जर नगरमुपगम्य मत्सन्निधौ १९६३ मितेऽब्दे अक्तूबर मासस्य षड्विंशे दिने एतद् ग्रन्थ सम्पादनविषये परामर्शः विहितः। मया चायं भूमिकाभागः आत्मजीवन यात्रा तथा गीतानिर्माण समय-विचारश्च अलेखि। प्रार्थयेऽहं भगवन्तमीशानं यदेष ग्रन्थः सर्वसंस्कार संयुतः सम्पूर्णतां समुपेयात् इत्यहं भूयो भूयः आशासे कामये च यदियं वेदगीता मुद्रिता जनता जनार्दन-हिताय आविर्भूयात्।

अथ भूमिका पूर्वार्धः

भोः श्रीमन्महीमण्डलालङ्कृत सद्गुणगणाः! विद्वन्मणयः! महीयांसः! गरीयांसः! मल्लेखसरणिमनुसरन्तु कृपया दत्तावधानाः तत्र भवन्तः श्रीमन्तः! नाविदितमेतत् श्रीमतां यत् कृत्स्नजगत् प्रख्यातगुणा; आनन्दकन्द श्रीकृष्णचन्द्र मुखारविन्द प्रादुर्भूता त्रिस्रोतोवहेव परमपुनीता श्रीमद् भगवद्गीता सूर्यवत् स्वतः प्रकाशा स्वदिव्यगुणैः स्वयं देदीप्यमाना लोके विराजते। येषां विवेकबलं विधानां महति स्थले संचंक्रमणेन तत्तदर्थमलसंस्पर्शेन च नैर्मल्यं संलब्धम्। ते सर्वे तत्त्वज्ञानिनो न केवलमेतद्देशप्रसूताः भारतवर्षीयाः अपितु आङ्गल जर्मन फ्रैञ्च प्रभृति यूरोपदेशीयाः अपीमान गम्भीरविषयान् भगवद्गीतोपनिषदनुभवेनोररीकुर्वन्ति करिष्यन्ति च। एतद्व्यतिरिक्तो

न कोऽप्युपायान्तरः दरीदृश्यते। परन्त्वधुना प्रायः सकलपारलौकिकसाधक-क्रियापराङ्मुखाः भ्रमिता इव सर्वतश्चित्तवृत्तिचालनवल्गुभाः वर्तन्ते भूयांसो मनुष्याः। पादनिहितशृंखलाबन्धनमिव परंपरागतवैदिकपद्धतिं दुःखप्रदां जानन्तितराम्। मन्यन्ते च यथाभिलषिताचारव्यवहारप्रयोगाधिकरणमालानम्। तेऽपि वादविवादवैदुष्य-प्रदर्शनेऽशेषविषयसंशयसमुत्थापननदीष्णाः दरीदृश्यन्ते। सत्यान्वेषणे तेऽल्पमपि न प्रयतन्ते। यद्येवंविधाः मानवाः प्रत्यहं श्रीमद्भगवद्गीतावलोकनपराः भवेयुः तदा नूनमेव तन्मनः कर्माकर्मविकर्मविज्ञानबोधकं भविष्यति। भगवद्गीताऽध्ययनज-नितानन्दनीरधिवीचिः समन्ततः प्रसरतितराम्। सांप्रतमेतद्विवेचनीयम्। कानाम भगवद्-गीता। युद्धोपरतमर्जुनं प्रति श्रीकृष्णचन्द्रवचनामृतं सप्तशतश्लोकात्मकमुपलभ्य-मानं पुस्तकं श्रीमद्भगवद्गीतेत्युच्यते। उपदेशोऽयं न स्वतन्त्रः किन्तु उपनिषत्सा-र एव। यतः पुस्तकप्रत्यध्यायसमाप्तौ = "इति श्रीमद्भगवद्गीतासूपनिषत्सु" इति पाठः उपलभ्यते। तथा चान्यत्रापि = "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः। पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्" इति पाठादप्यनुमीयते यद् भगवद्गीता उपनिषद् एव। अथापि च "तं त्वौपनिषदं पुरुषं पृच्छामि" इति वचनाद् बुध्यते उपनिषत्प्रतिपाद्यः पुरुषः ब्रह्मैव। उपनिषदः ब्रह्म निरूपयन्ति, ब्रह्म च उपनिषद-माचष्टे। एवं च भगवद्गीता श्रीकृष्णचन्द्रं ब्रह्मस्वरूपमुद्बोधयति। श्रीकृष्णचन्द्रश्च भगवद्गीतां निर्वक्ति। ईशाद्युपनिषदः प्रायस्तया ऋगादिसंहिताचतुष्टयनिःसृताः प्रतीयन्ते। न हि प्रतीयन्तेऽपितु वेदमंत्रा एव तत्रोल्लिखिताः वर्तन्ते इति हृदि संकलय्य मया निरधारि ~~भेद~~ भगवद्गीता वेद एव उत वा केवलमुपनिषद्। अद्यावधि परिव्राजकाचार्यजगद्गुरुशंकराचार्यवाचस्पतिमिश्रप्रभृतिभिः विपश्चिद्भिः वेदान्तसूत्रभाष्यविवृत्यादिलेखनावसरे गीताप्रमाणमपि उपनिषत्त्वेन समग्राहि न तु वेदपाठत्वेन। एकदाहं अथर्ववेदाध्ययनम-ग्नः "इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि यैरेवाहं संसृजे घोरं तैरेव शान्तिरस्तु नः"। अथर्व० का० १९। ९। ५॥ इमं मंत्रमपीपठम्। तदा मच्चित्तवृत्तिः तूर्णमेव "ममैवांशो जीवलोके जीवभूतः सनातनः" भगवद्गीता १५। ७॥ उपर्यपतत्। व्यचारयम् = श्रीमद्भगवद्गीताश्लो-कतत्त्वानुन्वेषणं वेदसंहिताचतुष्टये यतः भगवद्गीतोपनिषद्। उपनिषदश्च वेदाः। न वेदव्यतिरिक्ताः उपनिषदो भवितुमर्हन्तीति मनसि निधाय दशवर्षं वेदचतुष्टय-स्वाध्याये व्यधायि। तत्र च श्रीकृष्णचन्द्रमुखारविन्दप्रोक्तसमग्रश्लोकमात्राणां पुष्टि-कारकाः तत्तदर्थप्रतिपादकाः। अहो सौभाग्यमेतत् यत् परब्रह्मकृपालवात् मत्कृत्यमेतत् १४ का० सं० १९९६ दिने समाप्तिं प्रापत्। यन्नाम मया वेदगीता इति अकारि। कृपाकृतार्थोऽस्मि॥

भूमिकायाः उत्तरार्धः

गीतायाः निर्मितौ विचारः

भोः भोः श्रीविद्वज्जनाः! भगवद्गीतास्वाध्यायरसिकाः! सर्वेषामेतद्विदितञ्चमस्ति। श्रीमद्भगवद्गीतोपदेशं श्रीकृष्णचन्द्रः अर्जुनं प्रति युद्धारम्भदिवसे ऽदात्। श्रीकृष्णचन्द्रेण प्रोच्यमानं यमुपदेशं हस्तिनापुरे राजप्रासादे उपविष्टं महाराजधृतराष्ट्रं प्रधानमंत्री संजयः श्रीवेदव्यासप्रदत्तदिव्ययौगिकशक्तिद्वारा युद्धस्थलोच्चारितान् शब्दान् दिव्यश्रवणशक्त्या श्रुत्वा अश्रावयत्। भारतसंग्रामसमाप्तौ श्रीमहर्षिवेदव्यासेन "जय" नामा ग्रन्थः व्यरचि। पुनश्च ईशादिदशोपनिषदाधारोपरि श्रीवेदव्यासः ब्रह्मसूत्रं वेदान्तदर्शनापरनामानं ग्रन्थं ग्रथितवान्। वीरार्जुनपौत्रे परीक्षितनाम्नि महाराजे तक्षकसर्पदंशनान्मुक्तिधाम गते सति तत्तनुजः महाराजः श्रीजनमेजयः सर्पान् हन्तुं सर्पयज्ञं व्यधात्। परीक्षितजनमेजयमध्यकाले सर्ववेदरहस्यज्ञाता वेदव्यासः वेदमंत्रतात्पर्यं हृदि विन्यस्य श्रीमद्भगवद्गीतां विरच्य जयनाम्नि महाभारते समयोजयत्। अद्य यावत् सा च महाभारतग्रंथांगभूता वर्तते। श्रीजनमेजयकृतसर्पयज्ञानन्तरं 'जय' नामा ग्रन्थः महाभारतस्वरूपं जग्राह। तत्र महाभारतग्रन्थे इत्थं स्वरूपा श्रीमद्भगवद्गीता रराजते। संप्रति प्रश्नोऽयमुद्भूते "किं पूर्वं व्यासेन ब्रह्मसूत्रमलेखि श्रीमद्भगवद्गीता वा? अत्रोच्यते = ब्रह्मसूत्रं (वेदान्तदर्शनम्) श्रीव्यासः पूर्वं जग्रंथ, पश्चाच्छ्रीमद्भगवद्गीतां च। यथा च = "ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः" गीता १३।४।। अतो ज्ञायते पूर्वं ब्रह्मसूत्रं परं भगवद्गीताश्लोकात्मिका व्यरचि। तां च महाभारताङ्गभूतत्वात् महाभारतग्रन्थे समयुंक्त। अधुना विचार्यते "महाभारतरचना कदाऽभूत्"। लोकमान्यश्रीबालगङ्गाधरतिलकसिद्धान्तस्त्वयमुपलभ्यते = "ई० पूर्व ४०० महाभारतग्रन्थे भगवद्गीता एवं स्वरूपाऽभूत्। परश्चेदं न निरणायि, इतः पूर्वं गीतारचनाकालः क आसीत्। तिलकमतमेतदवश्यमस्ति जयनामा ग्रन्थः ई० पू० ८०० वर्षं पुराऽऽसीत्। तत्र च गीताऽप्यासीत्। ब्राह्मणग्रन्थनिर्माणसमयः ई० पू० २५०० वर्षपूर्वमस्ति। उपनिषदां च १६०० ई० पूर्वादपि पूर्वतरमासीत्। भारतयुद्धकालश्च १४०० ई० पूर्वमनुभूयते। श्रीचिन्तामणिकथनमस्ति - "पाणिनिपिंगलाचार्यसमयः १००० वर्ष ई० पूर्वमस्ति। भगवद्गीतानिर्माणकालश्च १४०० ई० पूर्वम्। अतः स्पष्टतया प्रतीयते - अद्यतः ३५०० वर्षेभ्यः पूर्वं गीतानिर्माणकालः प्रतीयते। तदानीं महाभारतभगवद्गीते अविद्यताम्। श्रीज० स० करंदीकरमतानुसारेण महाभारतयुद्धं १९३१ ई० पूर्वमभूत् अर्थात् अद्यतः ४००० वर्षपूर्वं प्रतीयते। नागपुरवासि डा० दसरीनाम्नो निबन्धानुसारं भारतयुद्धं ११५७ ई० पूर्वं ५००० वर्षेभ्यः भूत्। महाभारतयुद्धसमाप्त्यनन्तरं महाभारतवेदान्तदर्शनि-

भगवद्गीता रचना उत्तरोत्तरकालेऽभूत्।

पुरातत्वविभागद्वारा मिश्रदेशभूमिखननात् निर्गतायां काष्ठमूर्तौ अङ्किताममतिप्राचीन-लिपिम् अतीव काठिन्येन बहुविधविचारानन्तरं समधीत्य कृतोऽनुवादः "नेशनलि॰ मिश्र मैगज़ीन (पत्रिका) सन् १९४१ अक्तूबर मासाङ्के भूमिनिःसृतमूर्त्यङ्कितायाः गूढ-लिप्याः इंग्लिश भाषायां मुद्रितः वर्तते, तत्रायमनुवादः "जीवभूतः सनातनः", "यच्चाप्युत्क्रामतीश्वरः"। अयमनुवादः भगवद्गीतायाः १५/७-८ श्लोकयोः भावानुरूपः अस्ति। इदमपि तत्र लिखितमस्ति। एतच्चित्रस्य निर्माणकालः ई॰पू॰ २७८॰ ईसापूर्व-वर्षं अस्ति। अतोऽद्य यावत् २७८०+१९५७ = ४७३७ वर्षाणि जायन्ते। अतोऽवबुध्यते ऽयतः ४७३७ वर्षपूर्वं भगवद्गीता इत्थंरूपेण उपातिष्ठत्।

श्रीमद् भगवद्गीतां पाणिनिपिंगलाचार्यजन्मतः पूर्वं श्रीवेदव्यासो निर्ममे-इति विचार्यते। पाणिनिः स्वरचितव्याकरणाष्टाध्याय्यां वैदिकलौकिकशब्दशुद्ध्यर्थं यान् नियमान् बबन्ध, पिंगलाचार्येण च स्वरचितपिंगलसूत्रे ये नियमाः नियतीकृताः, गीतायां तद्विरुद्धरूपाः आर्षशब्दाः दृश्यन्ते।

यथा च गीतायाम् =

| गीतायाम् | पाणिनिनियमानुरूपम् |
|---|---|
| १ निवसिष्यति = (१२/८) | निवत्स्यति |
| २ मा शुचः = (१६/५) | मा शोचः, मा शोचीः |
| ३ प्रियायार्हसि = (११/४४) | प्रियाया अर्हसि |
| ४ शक्य अहम् = (११/४८,५३) | शक्योऽहम् |
| ५ योगस्य जिज्ञासुः = (६/४४) | योगं जिज्ञासुः |
| ६ अस्य धर्मस्य अश्रद्दधानाः = (९/३) | इमं धर्मम् अश्रद्दधानाः |
| ७ संयमताम् = (१०/२९ | संयच्छताम् |
| ८ हे सखेति = (११/४१) | हे सख इति, हे सखयिति। |
| ९ सेनानीनाम् = (१०२४) | सेनान्याम् |
| १० आत्मविभूतयः = (१०/१६,१९) | आत्मविभूतीः |
| ११ अपनुद्यात् = (२/८) | अपनुदेत् |
| १२ अहं त्वा सर्वपापेभ्यः = (१८/ ) | अहं त्वां सर्वपापेभ्यः |

वेदब्राह्मणयोः 'त्वां' पदस्थाने 'त्वा' पदप्रयोगः दृश्यते। लौकिक-व्यवहारे 'त्वा' स्थाने 'त्वां' इति युज्यते।

धातुजन्यपदेष्वपि पाणिनियमः उल्लंघितः। बहुत्र परस्मैपदात्मनेपद प्रयोगेषु वैषम्यं दरीदृश्यते। अतः निश्चीयते यत् भगवद्गीता निर्मितिः पाणिनितः बहु पूर्वमासीत्। गीतालेखकः महाबुद्धिमान् पाणिनिनियमान् न अजानात् परं अतिप्राचीनव्याकरणनियमानन्वसरत्। पाणिनिकालस्तु १०००ई॰ पूर्ववर्षमस्ति। भगवद्गीतायां पिंगलाचार्यस्य छन्दोनियमानुल्लंघ्य

छन्दोरचना ऽवलोक्यते। अतो गीतानिर्मितिः पिंगलाचार्यादपि पूर्वतरा विद्यते। भगवद्गीतायां अनुष्टुप्, इन्द्रवज्रोपेन्द्रवज्रा (उपजाति) वंशस्थछन्दांसि सन्ति। अनुष्टुप्छन्दसः बाहुल्यं चास्ति। एषु छन्दःस्वपि श्रीपिंगलाचार्यनियमविरुद्धमाचरणमस्ति। यदा वैदिक छन्दःसु दृष्टिप्रक्षेपः विधीयते तदा ज्ञायते यत् गीता-निर्माणकर्त्रा अथर्ववेदस्य छन्दोरचनानुसृतिरकारि। यथा=पिंगलमतानुसारेण अनुष्टुप्छन्दसः प्रत्येकपादे द्वितीयः गणः सगणो रगणो वा भूयात्। पिंगलमतानुयायिषु वृत्तरत्नाकर श्रुतबोध छन्दोमञ्जर्यादि ग्रन्थेष्वपि अयमेव नियमः नियम्यते। यथा च = "पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम्"॥ यद्वा = श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्॥ इत्यादि। छन्दोविरुद्धा तालिकेयम् =

१ "मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्" (गीता ११।१)। अत्र प्रथमपादे नवाक्षराणि, पञ्चमवर्णो दीर्घः, षष्ठश्च लघुवर्णोऽस्ति, शेषेषु अष्टौ अष्टौ।

२ निम्नलिखितेषु अनुष्टुप्छन्दःसु पञ्चमो वर्णः दीर्घः षष्ठश्च लघुवर्णः = "धृष्टकेतुश्चेकितानः" (१।५,४३), (२।२६, ३२, ३६, ४३, ५६, ६१, ६३) तथा (३।१, ७, ८, ११, १९, २६, ३५, ३७) तथा (४।६), (६।२, ३१, ३६) तथा (७।९, २९, ३०), (८।१४, २४, २७), (९।१, २, ३, १०), (१०।६, ७), (१३।१७), (१४।९, १०, १७), (१५।२०), (१७।३, १०, ११, १९), (१८।३३, ४७, ४९, ७५)॥

भगवद्गीतायाः एषु सर्वेषु श्लोकेषु पञ्चमवर्णाः दीर्घाः, षष्ठाश्च ह्रस्वाः सन्ति। एषा रचना अथर्ववेदछन्दोऽनुसृतिं कुरुते, न तु पिंगलाचार्यानुसृतिम्। गीतायां येषु छन्दःसु षष्ठः वर्णः ह्रस्वोऽस्ति, तां तालिकामपि पश्यत —

"भीष्मद्रोणप्रमुखतः" (१।२५), (२।२, ६३), (३।७), (४।२, १३, ३८, ४०), (५।२), (६।१०, २७, ३६, ४२), (७।६, १४), (८।३), (९।१७), (१०।२६), (१२।९, २०), (१३।२३), (१७।१३, १९), (१८।२३, ३८, ४१, ४५, ५६, ६४) अत्र पिंगलमतानुसारेण षष्ठो वर्णः दीर्घः भवितव्यः। "तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्याः" अथ० ५।१४।६॥ चतुर्थे पादे सप्त वर्णाः सन्ति। "प्रतिहरणेन हरामसि" अथ० ५।१४।८॥ चतुर्थे पादे दश वर्णाः। "इष्वः ऋजीयः पततु द्यावापृथिवी तं प्रति" अथ० ५।१४ । अत्र प्रथमे द्वितीये पादे पञ्चमवर्णः दीर्घः। "सा तं मृगमिव गृह्णातु कृत्या कृत्याकृतं पुनः" - अत्र तृतीये पादे नव वर्णाः सन्ति। एवम्-अन्यत्रापि बहुविकारोऽस्ति। अन्यच्च = "श्रेयो भोक्तुं भैक्ष्यमपीह लोके" गी० २।५॥ अत्र प्रथमतृतीयचतुर्थपादेषु इन्द्रवज्रावृत्तम्, द्वितीयपादे तगणस्थाने भगणः प्रादायि। "न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः" (२।६) अत्र द्वयोः पादयोः वंशस्थवृत्तम्। "यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः संमुखे धार्तराष्ट्राः" । अत्र तृतीयचतुर्थपादयोः (एकादश वर्णाः) मिथोऽपि भिन्नं लक्षणम्। एवं (२।७), (८।१०, ११), (९।२०, २१), (११।१८, २२,

२३, २६, २७, ३२, ३५, ३७, ४१, ४६, ५०) इमे श्लोकाः भिन्नभिन्न लक्षणाः पिंगलानुरूपाः सन्ति। "न रूपमस्येह तथोपलभ्यते" (१५।३) प्रथमपादे वंशस्थवृत्तं शेषेषूपजाति वृत्तम्। अग्रे गीता (१५।२, ३) पद्येषु अपि अयमेव व्यवहारः। अतः इमं निर्णयमकार्पूर्वम्। भगवद्गीतानिर्माणकालः पाणिनिपिंगलनियमरचनापूर्वतरः सिध्यति। श्रीमद्भगवद्गीताछन्दः समन्वयः ऋक्सामाथर्वछन्दोभिः सह विधीयते यदा- तदा ज्ञायते भगवद्गीतारचनावसरे पाणिनि पिंगलसूत्राणि नोपातिष्ठन्। अतो गीतानिर्माणं आभ्यां बहुपूर्वतरमभूत्॥

गीतायाञ्च जैन बुद्धदर्शनयोः दिग्दर्शनमपि नास्ति। अतो जैन बुद्धमत-प्रचारात् पूर्वमेव गीतानिर्माणमजायत। परञ्च गीतायामनीश्वरवादस्य अर्थात् नास्तिकमतस्य वर्णनम्, आसुरीसम्पदासुरी जीववर्णनरूपेण उपलभ्यते। यथा = "द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च" (१६।६)" - "असत्यमप्रतिष्ठं ते-जगदाहुरनीश्वरम्"। अपरस्परसंभूतं किमन्यत्कामहैतुम्" (१६।८)। आभ्यां श्लोकाभ्यां अनीश्वरवादिनां नास्तिकानां विचारं गीताकारः स्वरचितगीतायां प्रादर्शयत्। य उल्लेखः निम्नलिखितमंत्रादुद्धृतः प्रतीयते :—

"प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति। नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभिष्टवाम॥ ऋ० ८।१००।३॥

प्र सु इति = हे मनुष्याः स्वोदरपालनायं केवलं अन्नं बलं च इच्छन्तः अर्थात् उदरंभरिणः सर्वे यूयं, अथवा वाजि इति संग्रामनाम, संसार-संग्राममिच्छन्तः, इन्द्राय = परमैश्वर्यसम्पन्नाय परमात्मने, सत्यं स्तोमं = सत्यं यथा स्यात्तथा स्तुतिं, सु-प्र-भरत = सम्यक्तया कुरुत। परन्तु आसुरीसम्पत्तयो नास्तिकाः एवं संगिरन्ते- यदि सत्यमस्ति = सत्यस्वरूपेण यदि परमात्माऽस्ति तदा तं-स्तवाम, परञ्च नेम इन्द्रः = प्रसिद्धः यशस्वी परमात्मा त्वः कश्चिदेकः न अस्ति = न विद्यते। यतः क ईं ददर्श = कः मनुष्यः प्रत्यक्षरूपेण एनं परमात्मानं अपश्यत् अर्थात् केनापि संमुखस्थः ईश्वरः दैहिकचक्षुषा न दृष्टः। अतः स्त्रीपुरुषसंयोगात् उत्पन्नमिदं जगत् अस्ति, वयमीश्वरसत्तारहितं जगत् मन्यामहे। अतः कम् अभिस्तवाम = कस्य ओंकारनाम्नः परमात्मनः स्तुतिं कुर्मः। जगतः स्वामी परमेश्वर इति प्रवादमात्रम्। एतेन वेदमंत्रमात्रेण अनीश्वरवादिमतमुपलक्ष्यीकृत्य गीतायां परमात्मसिद्धिः जगदधिष्ठातृत्वेन संवर्ण्य गीताकृता गीतायां स्पष्टीकृता। निष्कर्षोऽयम् = महाभारत युद्धानन्तरं वेदोपनिषद् ब्रह्मसूत्र (वेदान्तदर्शन) समाश्रयात् पद्यात्मकां भगवद्गीतां श्री-वेदव्यासः संकलितवान्। परञ्च साम्प्रदायिकशेषोपनिषद्रचनातः पूर्वमेव तद्रचना सिध्यति। अधितः ५००० वर्षपूर्वं वा ४५०० वर्षपूर्वं प्रत्यक्षरूपेण वेदमंत्रार्थसम्बद्धायाः गीतायाः निर्माणकालः सिध्यति।

गीतानिर्माता श्री वेदव्यासः वेदार्थानां पूर्णपरिज्ञाता सन् वेदपरम्परासम्ब-

न्धं परिपूर्णतया भगवद्गीतायां स्थापयितुमैच्छत्। गीताप्राचीनतासंसिद्धौ इदमेव कारणमस्तीति दिक्।

निवेदनम् :— "स्खलनं मनुष्यधर्मः"।

वेदव्याख्यामयीं गीतां दृष्ट्वा हृष्यन्तु सज्जनाः।
अट्टहासं विधायापि निन्दन्तु दुर्जना भृशम्॥१॥

लेखक-जीवन यात्रा

अथतः २०० वर्षपूर्वं सिन्धुनदीपूर्वतटस्थ "लैया" ग्रामवासिनोऽस्मद्यजमानाः सुसम्मानपूर्वकं मूलत्राणनगरात् मत्पूर्वजान् लैयाग्रामे आनयन्—गृहदानादिभिः अवासयँश्च। मद्वंश्याः सारस्वतब्राह्मण भारद्वाज गोत्र यजुर्वेद माध्यन्दिनीशाखाऽनुयायिनः आसन्। तत्र ते काष्ठपालोपाह्वयेन प्रासिध्यन्। तद्वंशीयस्य मत्पितामहस्य श्री पं० मंघालालस्य त्रयः सूनवोऽजायन्त। तन्मध्ये मत्पिता कनिष्ठ आसीत् तस्य च पूर्णब्रह्मचर्यपालकस्य सदाचारिणः सज्जनमान्यस्य श्री "टाल्याराम" इति नाम प्रसिद्धिमगच्छत्। तस्य च पं० दयालुचन्द्रः जगन्नाथः रोशनलालश्च इति त्रयस्तनूजाः उदपद्यन्त। तन्मध्ये मम ज्येष्ठभ्राता पं० दयालुचन्द्रशर्मा पञ्चाङ्गकर्ता पूर्णज्योतिर्विद् श्रीमद्भागवत भूषणोपाधिमान् कविः २०१७ तमे वैक्रमे वर्षे अशीतिवर्षायुषि वैकुण्ठं जगाम। कनिष्ठभ्राता पं० रोशनलालशर्मा रमलशास्त्रज्ञः २२ वर्षायुषि स्वर्गे इन्द्रसभ्योऽभवत्।

सन् ई० १८८८ अक्तूबर विंशतितमदिवसे जातस्य मे प्रारम्भिकी अंग्रेज़ी-उर्दूशिक्षा म्युनिसिपैलिटी मिडलस्कूले आरभत। षष्ठश्रेणीं गतस्य मम मनः तच्छिक्षातः उपारमत। तत्र कारणमिदमासीत् :— सन् १८९९ तमे वर्षे जण्डियाला-जि० जालंधरवास्तव्य श्री पं० साधुरामशर्मा अष्टोत्तरशतसोमयाजी पञ्चनदे-प्रसृतस्य महामारीरोगस्य निवारणाय सोमयागसम्पादनार्थं लैया-ग्राममाजगाम। दृष्टतद्यज्ञविधिरहमिङ्ग्लिशोर्दू भाषापठनं विहाय संस्कृतभाषां पठेयम्" इति निश्चित्य मया परदिने मिडलस्कूलपाठविधिं परित्यज्य सन् १८९९ मार्चमासि श्रीरघुनाथमन्दिर पाठशालायामध्ययनमारब्धम्। तत्र च सारस्वतव्याकरणं समाप्य स्वभ्रातुः पं० दयालुचन्द्रशर्मणः पार्श्वे तथा षट्शास्त्रि श्री वल्लभसंप्रदाय वैष्णव भूषणस्य चरणयोः काव्यत्रयी मुहूर्तचिन्तामणि नीलकण्ठ्यादिग्रन्थान् पाठविधौ पूर्णतया समाप्तवानहम्। पुनश्च "कहरोड़" ग्राम तहसील "लैया" वास्तव्य श्री पं० जेसूलाल जी सकाशात् छन्दःशास्त्र काव्यदीपिकादिग्रन्थाः मयाऽधीताः। सर्वेषां तेषां धन्यवादः विधीयते यैरहं सुज्ञः कृतः। सन् १९०२—१९०८ यावत् चिन्योट जि० झंग-वास्तव्य श्री पं० गणेशदत्त जी शास्त्री पार्श्वतः प्राज्ञविशारद शास्त्रि परीक्षा-नियताः ग्रन्थाः पठिताः। सन् १९०९ तमे वर्षे उच्चगुलेमाम जि० झंगवासिनः

काश्यधीतदर्शनशास्त्रस्य श्री० पं० भगवानदासस्य चरणे आश्रित्य न्याय-वैशेषिक सांख्ययोगदर्शनस्याध्ययनं मया अकारि। स्वजीवनयात्रायां वारद्वयं मृत्युमुखात् परमात्मकृपयाऽहं सुरक्षितोऽभवम्। सन् ई० १९०५ जौलाई मासि एकदा नद्यां स्नातुं गतस्य ममोपरि मकरेणाक्रमणमकारि। सलिलस्याधिक-सञ्चालनं दृष्ट्वाऽहं नद्याः निःसृत्य नद्युच्चकूलं समाजगाम, मकरश्च पुनः सलिले प्रविवेश। अहं सुरक्षितोऽभवम्। सन् १९१६तमे वर्षे सिन्धुनदी-तारकाग्निपोत (स्टीमर) तले गच्छन्तं मां पोतस्थयात्रिणः मम सहायकाः सन्तः मृत्युमुखान्मामक्षन्। सन् १९१४-१७ गुरुकुल हजूरीबाग मुलताननगरे नवमदशमश्रेण्यध्यापको भूत्वा तत्रस्थान् धर्मदेव, धर्मवीर, आत्मदेव धर्मभान्वादि सुज्ञछात्रान् न्यायदर्शनोपनिषत्काव्यादिग्रंथान् संपाठ्य विमुक्तोऽभवम्। येषु मुख्यः विद्यार्थी विद्यालंकार विद्यामार्तण्ड विद्यावाचस्पतिः पं० धर्मदेवः दिल्ल्यां प्रादेशिककार्यप्रतिनिधिसभायां मंत्री विद्यते। सन् ई० १९१७-२१ जूनमासं यावत् शुजाबाद जि० मुलतान संस्कृतपाठशालायां मुख्याध्यापको भूत्वा विशारदशास्त्रिश्रेण्यौ अपाठयम्। ततो निःसृतः मुख्यः विद्यार्थी विद्या-वागीश विद्यानिधि प्रिंसिपल संस्कृतहिन्दीमहाविद्यालय दरीबाकलाँ देहली ६ भागस्थः श्री पं० दीनानाथ शास्त्री पूर्णशास्त्रज्ञः सकलशास्त्रनिष्णातः विराजते। सन् १९२०तमे वर्षे मल्लिखितन्यायदर्शनोपर्यैकं निबन्धं उपलक्ष्य निखिल-भारत संघ कलकत्तास्थसभ्यविद्वद्भिः न्यायभूषणोपाधिः प्रादायि। गुरुकुलपाठनावस्थायां वैदिकस्वाध्यायानुरक्तः "अथर्ववेदे" = "इमानि यानि पंचेन्द्रियाणि मनःषष्ठानि मे हृदि। ब्रह्मणा संशितानि —" अथ० १९।९।५ इमं मन्त्रं अपठम् तदैव मम मनः = "ममैवांशो जीवलोके जीवभूतः सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।" भगवद्गीता १५।७ इति श्लोकं व्यचारयत्। "गीता वेदादाविर्भूता" इति निर्णीय गीतामाश्रित्य वेदस्वाध्यायः आरब्धः। या वेदगीता स्वाध्यायफलरूपा विदुषां समक्षे विद्वद्वराणां कर-कमले विराजते। शुजाबादीय पाठशालाकार्यानेहसि वैशेषिकदर्शन-प्रशस्तपादभाष्योपरि न्यायकन्दली रहस्यव्याख्यामलिखम्। कापिलसूत्रोपरि संस्कृतभाष्यं च तत्रैव "अद्वैतरहस्य" नामा २०० पद्यात्मको ग्रन्थोऽपि मयाऽलेखि। यश्च केनापि विदुषा स्वाध्यायार्थं गृहीतः पुनर्न प्रादायि, अतः स लुप्त एव। परञ्च न्यायकन्दलीरहस्यग्रन्थोऽद्यापि चण्डीगढ़ यूनिवर्सिटी पुस्तकालये विद्यते। वासिष्ठर्षेः वैदिकचरित्रमपि २०११तमे वर्षे वैक्रमे हिन्दीभाषायां लिखितः मुद्रापितश्च। सन् १९२२तमे वर्षे ओ० टी० परीक्षायां प्रथमभवनात् विना प्रार्थनापत्रं सैण्ट्रल मौडल स्कूल लवपुरे संस्कृताध्यापकः नियतीभूय तत्रापाठयम्। सन् १९२३-२५ मार्च यावत् गव० हा० स्कूल सरगोधानगरे प्रेषितः

सन् १९२५-१९४३ यावत् गव० हा० स्कूल डेरा गाज़ीखां नगरे मया कार्यं व्यधायि। अन्तिमे १९४३तमे वर्षे पाठनविधिविमुक्तोऽहं १९४६ यावत् खलैया ग्रामे संस्कृतहिन्दीमहाविद्यालये कतिपयाः कन्याः प्राज्ञविशारद-शास्त्रिभूषणपरीक्षार्णवपारं कारिताः। एतत्कार्यविधानमध्यकाले अर्थात् सन् १९१९ तः १९३८ यावत् "वेदगीता" ग्रंथः संस्कृते लेखि।

संस्कृत वेदगीतायाः "अष्टादशश्लोकी गीता भागः पुरा ~~सन् १९४०तमे वर्षे अयोध्या साप्ताहिक संस्कृतपत्रे~~ जयपुरीय संस्कृतरत्नाकर मासिकपत्र मुद्रितोऽभवत्। सन् १९४०तमे वर्षे ~~श्री पं० श्रीपाद सातवलेकरः वैदिकधर्म पत्रसम्पादकः~~ अयोध्या साप्ताहिक संस्कृतपत्रे मल्लिखिताः विविधाः संस्कृतलेखाः मुद्रिताः अभूवन्। तान् दृष्ट्वा तत्संचालकैः श्री पं० श्रीपाद सातवलेकरः "वैदिक धर्म" पत्र सम्पादकः पत्रद्वारा मामसूचयत् — "वेदगीताभाष्यं हिन्दीभाषायां भूयात्" - अनेन बहूनां जिज्ञासूनां श्रेयो भविष्यति" इति। तदनुमत्या संस्कृत-भाष्यं हिन्दीभाषायामनूदितम्। द्वितीयाध्यायादारभ्य अष्टादशाध्यायं यावत् हिन्दीभाषाभाष्यं मुद्रितमस्ति। सा प्रतिलिपिः भ०पा श्वे वर्तते। समयानुकूलं प्राप्तावसरोऽहं वैदिकविचारधारणात्मकान् भिन्नभिन्नलेखान् अद्यापि भिन्नपत्रेषु प्रेषयामि, ते च तत्र मुद्र्यन्ते। वेदगीतालिखनसमये यदा कस्यचिन्मंत्रस्यार्थः भावश्च मद्बुद्धौ न समागच्छत् तदा एकान्तवासी भूत्वाऽहं कियत्समयं यावत् परमात्मध्याने मनः संयोज्य मंत्रार्थं व्यचारयम्। तद्ध्यानावसरे मन्त्रार्थः स्फुटोऽभवत् इति मेऽनुभवो जातः। तदानीमेव पार्श्वस्थपत्रोपरि तमर्थमलिखम्।

आधुनिककार्यं मे इदमस्ति "वेदमंत्रेषु अनुप्रासयमकोपमाद्यलंकार दर्शनं किंविधं स्यात्। साहित्यदर्पण काव्यप्रकाशादि ग्रंथतुलना वेदमंत्रैः यदा पूर्तिं गमिष्यति, तदा "वैदिक साहित्यालंकारमंजूषा" नामकः ग्रन्थः आख्यातिमास्यति। अधुनेयदायुषि वैदिकस्वाध्यायः प्रातः सायं संध्या गायत्री जपनं च मे कर्मास्ति। येन देहे स्वास्थ्यं मनसि शान्तिश्च जाजायते। इत्यलं बहुना।

विदुषां वशंवदः
(ह०) जगन्नाथ शास्त्री (लैयावासी)
मकान १३५०, महल्ला टीला
झज्जर (जि० रोहतक)
(पंजाब)
26.10.1963

I The Veda-Gita Text.

अथ श्रीमद्भगवद्गीतायाः प्रथमोऽध्यायः

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः। मामकाः पाण्डवाश्चैव किमकुर्वत संजय॥१

संजय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा। आचार्यमुपसंगम्य राजा वचनमब्रवीत्॥२॥
पश्यैतां पाण्डुपुत्राणामाचार्य! महतींच चमूम्। व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥३॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि। युयुधानो विराटश्च द्रुपदश्च महारथः॥४॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्। पुरुजित्कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः॥५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्। सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥६॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम। नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते॥७
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः। अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च॥८
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः। नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः॥९॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्। पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्॥१०॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः। भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि॥११॥
तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः। सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान्॥
ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः। सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ। माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः। पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः। नकुलः सहदेवश्च सुघोषमणिपुष्पकौ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः। धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते। सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक्पृथक्॥१८
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्। नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः। प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः॥२०
हृषीकेशं तदा वाक्यमिदमाह महीपते।

अर्जुन उवाच — सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत॥२१
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्। कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे॥२२
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः। धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः॥२३

संजय उवाच — एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्॥२४
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्। उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति॥२५
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्। आचार्यान् मातुलान् भ्रातॄन्पुत्रान् —
— पौत्रान् सखींस्तथा॥२६
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि। तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्॥२७
कृपया परयाविष्टो विषीदन्निदमब्रवीत्। —

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति । वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते । न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥
निमित्तानि च पश्यामि विपरीतानि केशव । न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१
न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च । किंनो राज्येन गोविन्द किं भोगै र्जीवितेन वा ॥३
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च । त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि
आचार्याः पितरः पुत्रास्तथैव च पितामहाः । मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ३
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन । अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥३५॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन । पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् । स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः । कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् । कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः । धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥
अधर्माभिभवात्कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसंकरः ॥४
संकरो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः । उत्सद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन । नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् । यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः । धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥
संजय उवाच — एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥

टिप्पणी — एतस्मिन् प्रथमाध्यायेऽर्जुनस्य युद्धवैमुख्यं, क्लीवता धर्मभीरुता च श्रीव्यासेन प्रादर्शि । तत्र को हेतुः धर्मभीरुतायाः ?

उत्तरम् — महाभारतोद्योगपर्वणः विंशतितमाध्यायादारभ्य द्वात्रिंशत्तमाध्याय – समाप्तिपर्यन्तं धृतराष्ट्रषड्यंत्ररचना प्रत्यक्षरूपेण फलिता प्रतीयते । पुरापि दुर्योधने नृपे सति धार्तराष्ट्राणां चित्ते विचारोऽयं समुत्पन्नः — "राज्यसिंहासनमन्ततो गत्वा पाण्डवाः प्राप्स्यन्तीति, येन केन प्रकारेण राज्यमस्माकं भूयात्" । तदानीं सभायां राज्यनियमशोधकः राज्यनीतिपरिज्ञाता च श्रीकणिकाचार्यः धृतराष्ट्रस्याग्रे स्वसम्मतिं प्रददौ — "पाण्डवाः पीडितव्याः सदैव । तद्धेतोः पाण्डवाः स्वयमेव राज्यं त्यक्ष्यन्तीति मे मतिः" । दुर्योधनप्रभृतयः कौरवाः श्रीकणिकाचार्यप्रोक्तविचारं यथार्थरूपेण सम्पादयितुं विषप्रदानसलिलमग्नतालाक्षागृहादिविविधपीडनैः पाण्डवान् अपीडयन् । परन्तु भीष्मद्रोणविदुरश्रीकृष्णप्रभृतयो महात्मानो भद्रपुरुषाः

I



पाण्डवानां सहायका अभूवन्। अत एव मृत्युमुखाद्विमुक्तास्ते अनेकधा पीडापीडिता अपि राज्ये स्वाधिकारं कौरवान् अयाचन्त। गृहीतराज्यान् तानपि द्यूतक्रीडया पराजित्य आद्वादशवर्षं दुर्योधनः प्रवासितवान्। ततोऽपि मुक्तास्ते यदा स्वार्ध-राज्यं न प्राप्नुवन् विना युद्धं —तदा धृतराष्ट्रः "स्वपुत्रहस्ते राज्यं स्यादिति" निश्चित्य स्वप्रधानमन्त्रिणं सञ्जयं पाण्डवानां प्रबोधाय प्रैषयत्। "तेभ्यो धर्मोपदेशं देहि, संजय! येनोपदेशेन राज्यपराङ्मुखीभूय वने नदीतीरे वा गच्छेयुः, राज्यञ्च मद्वंशे तिष्ठेदिति"। सञ्जयोऽपि पाण्डवान् प्रति गत्वा धर्मोपदेशं चकार। इति उद्योगपर्वणि २०—३२ अध्यायं यावदस्ति। तत्संक्षेपो लिख्यते :=

"हे पाण्डव! युष्मत्पितृव्यो धृतराष्ट्रः भवद्धितं सदा ईहते। कदापि तु वचनं दुर्योधनो न मन्यते, स्वसंकल्पे स दृढो वर्तते। अतो धृतराष्ट्रो मनसि क्लिश्यति। यूयं तन्मनसः सुसंकल्पं पश्यत। स चाहर्निशं युष्मत्कल्याणाय प्रवर्तते। परं युष्माभिः किं चिन्तितम्? भवादृशाः धर्मात्मानो विवेकिनश्च सात्विका युध्यन्तामिति महान् शोकावसरः। इदमेवाश्चर्यं मे हृदि। इति तु पिशिताशनानां कर्म। त्वादृश-जनयोग्यमिदं न। सकलाः कौरवापराधाः क्षन्तव्या इति मे मतिः। यतो यूयं महान्तः, धर्मज्ञाः, सात्विकगुणवन्तः परदोषान् विगणय्य उपकारकर्तारः शान्तिस्थापकाश्च

धेवें ! दृश्यन्ते। एवंभूता यूयं स्वभ्रातॄन्, पुत्रान्, पौत्रान्, गुरून्, कृपाचार्यादिब्राह्मणान् वा हनिष्यथ- इति महापापमुच्यते जनैः। यूयञ्च नरकाधिकारिणो भविष्यथ। गोत्र-हत्या- महापापान्तरे आयाति। एतत्तु समग्रं दुष्कर्म केवलं क्षणभंगुर दुःखस्वरूपासार संसारीय-राज्यनिमित्तं केवलं लौकिकराज्यप्राप्तये सज्जनानामाप्तपुरुषाणां महानुभावानां वधं करिष्यथ- इति तु महदाश्चर्यमेव। गुरुजनभ्रातृपितृव्यगोत्रवधजन्यपापार्जनं किं युष्माकं धर्मात्मनां धर्मपालनस्य परिपाक एषोऽस्ति। एतद्विनश्वरं जगत्, विनश्वराः भोगाः, सायं भुक्तं प्रातर्विष्ठारूपेण बहिरायाति, प्रातर्भुक्तं सायमायाति बहिः। भोज-नादिस्निग्धद्रव्यैः पुष्टे देहे किमु नित्यता स्थास्यति। युद्धविजयोत्पन्नमेतद्राज्यं किं युष्मत्पार्श्वे सदा स्थास्यति। स्वसम्बन्धिवधद्वारा सिञ्चिताः संसारोपभोगाः रुधिरोपभोगाः रुधिरस्वरूपाः भवद्भ्य आनन्ददायका भविष्यन्ति किमु? कदापि आनन्दकरा न भविष्यन्ति। क्षणभंगुरभोगान् भोक्तुं बहुतरजनवधं विधाय धार्मिकाः यूयं प्रवृत्ता भवत इत्यतीवाश्चर्यघटनैषा प्रतीयते। किं यूयं स्वभ्रातॄन् हत्वा चिरकालं जीविष्यथ? इत्यपि न। इत्यप्यहं जानामि। युष्माकं मनसि मृत्युभयमपि नास्ति। किन्तु यूयं परलोक (मुक्ति-स्वर्ग) प्राप्तिकर्म न कृत्वा वधिककर्मविधानेन स्वस्वार्थं नरकं साधयत, इति युष्मदर्थे न शोभनम्। वधकर्मापेक्षया भैक्ष्यवृत्तिरत्युत्तमा क्रियेत, यतश्च धर्मः परिपाल्येत। अशाश्वतस्य मायिक-संसारस्य क्षणभंगुर राज्यभोगनिमित्तं लोभपाशेन बद्धाः यूयं सर्वे भयावहे

कर्मणि ?। क्रूरतरे संसारे प्रवृत्ताः स्थ। यथैतत्कर्म इह निन्द्यते, तथैव परलोकबाधकं निन्दनीयं चास्ति। अत एतस्मात् घोरकर्मणो निवर्तध्वम्। —

क्षत्रियाणां धर्मकर्मणी दुष्टे दृश्येते। क्षात्रधर्मः पापस्वरूपः। अत इमं धर्मं विहाय वनवासिनो भूत्वा तपस्यथ। तपश्चर्यात्मिकं पुण्यं कर्म कृत्वा मुक्तेः शाश्वतं फलं प्राप्नुथ। एतेन भ्रात्रादिवधात्मकघोरयुद्धकरणेन युष्माकमस्मिन् लोके निन्दा भविष्यति, परलोकप्राप्तौ (मुक्तिप्राप्तौ) च बाधा भविष्यति। अत एतस्माद् युद्धान्निवर्तध्वम् - इति मेऽन्तिमः उपदेशः सिद्धान्तश्च। संजयो युद्धनिवृत्त्यै भीरुतोत्पादकमेवंविधमुपदेशं पाण्डवेभ्यः प्रददौ। अर्जुनचित्ते अस्योपदेशस्य प्रभावः पूर्णतया स्थिरोऽभवत्। अतः शस्त्रास्त्रविद्यापरिज्ञाता युद्धवीरोऽप्यर्जुनः कुरुक्षेत्रयुद्धस्थले उभयोः सेनयोः स्वभ्रातॄन्, गुरून्, पितामहादिपूज्यान् सम्बन्धिनश्च विलोक्य चिन्तयामास। 'इमे जनाः मरिष्यन्ति, एतांश्चाहं हनिष्यामि' इति ज्ञात्वा स्वगाण्डीवं त्यक्त्वा रथोपस्थ उपाविशत्। क्लीबतां गतः स एवार्जुनः श्रीकृष्णचन्द्रप्रोक्तं भगवद्गीतां श्रुत्वा कर्मठो बभूव, उक्तवांश्च = "नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव" इति। संजयप्रदत्तोपदेशप्रभावः अर्जुनोपरि प्राप्तो न वा इति ज्ञातुं धृतराष्ट्रः सञ्जयं पप्रच्छ = "धर्मक्षेत्रे कुरुक्षेत्रे समवेताः युयुत्सवः। मामकाः पाण्डवाश्चैव किमकुर्वत संजय"। पूर्वमेवायं प्रश्नोऽकारि। यदन्ते संजय उवाच = "एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत्। विसृज्य सशरं चापं शोकसंविग्नमानसः"। इति वचनं श्रुत्वा धृतराष्ट्रः हृदि जहर्ष। तस्य हर्षश्च अर्जुने युद्धे प्रवृत्ते सति ग्लानिं ययौ।

भगवद्गीतायाः द्वितीयोऽध्यायः

संजय उवाच

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्। विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥

"सोऽहं भगवः शोचामि, तं मा भगवाञ्छोकस्य पारं तारयतु" इत्युक्तिमनुसृत्य पितामहस्वजनगुरुब्राह्मणवधजन्यदुःखेन शोचन्तं शरणागतं मुमुक्षुमर्जुनमुद्दिश्य श्रीकृष्णः गुरुरूपः बोधयेत् - इति हृदि विन्यस्य धृतराष्ट्रं प्रति संजय उवाच =

तमिति = मधुसूदनः - मधुनामकमसुरं सूदयतीति मधुसूदनः, यद्वा सर्वेषां प्राणिप्राणिनां देहेषु मधुरप्रियत्वात् मधुः अहङ्कारः तमात्मप्रकाशेन सूदयतीति मधुसूदनः, यद्वा 'इयं पृथिवी सर्वेषां भूतानां मधु' इत्युक्तेः मधुः स्वरूपानन्दः तं स्वापरोक्षवतां सूदयति स्फोरयतीति मधुसूदनः श्रीकृष्णः कृपयाविष्टम् - 'मदीयाः एते भ्रातृपुत्रादयो युद्धे म्रियन्ते' इति मरिष्यमाणेषु स्वजनेषु कृपया दयया आविष्टं लिप्तम्, अत एव विषीदन्तं दुःखमनुभवन्तम् - अतः अश्रुपूर्णाकुलेक्षणम् - अश्रुभिः पूर्णम् अथ व्याकुलञ्च ईक्षणं नेत्रं यस्य तथाभूतम्। तथा पूर्वभूमिकारीत्या तमर्जुनं दृष्ट्वा अवलोक्य इदं वक्ष्यमाणं वाक्यं वचनसमूहमुवाच कथयामास। यथा च गौतमः प्राह = 'दया सर्वभूतेषु क्षान्तिरनसूया शुचिरनायासो माङ्गल्यमकार्पण्यमस्पृहा च' इत्यष्टौ आत्मगुणाः। अत्र कृपापदं क्षान्त्यादीनामुपलक्षणम्।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

कुत इति = हे अर्जुन! अर्जुनशब्दः शुभ्रवाचकः। हे सात्त्विकगुणसम्पन्न! शुद्ध-स्वभाव! विषमे - एतस्यां युद्धोत्पन्नायां संकटावस्थायां शत्रुभिर्हन्तुं प्रवृत्तसमये च इदं कश्मलं गुरून्, पितामहान्, भ्रातॄन्, पुत्रान्, स्वजनांश्च न हन्तुमिच्छामि- इति - चित्तव्यामोहः कुतः कस्माद्धेतोः त्वा- त्वां समुपस्थितं प्राप्तम् कालदोषात् कर्मदोषाद्वा। हे पार्थ! वीरायाः पृथायाः पुत्र! अनार्यजुष्टम् आर्यशिक्षाशून्यैः अवीरैः पामरैः सेवितम्। अस्वर्ग्यम् - स्वर्गप्राप्तिप्रतिबन्धकं दुर्गतिकरणञ्च, अकीर्तिकरम् - इहलोकेऽप्ययशसः प्रदम्, इदं क्लैब्यं शूराणामयोग्यं कातर्यं नपुंसकत्वं मा स्म गमः = त्वं मा प्राप्नुहि= सेवस्व इति यावत्। त्वयि राजनीतिज्ञे रणशूरे शूरकुलोत्पन्ने एतत् न उपपद्यते=एतत् क्लैब्यं न युज्यते। हे परंतप! परान् शत्रून् तापयतीति परंतपः - तत्संबुद्धौ हे परंतप! हे शत्रुमर्दन! क्षुद्रं निकृष्टत्वापादकं हृदयदौर्बल्यं मनसो - दुर्बलतां मनसः कालुष्यमिति यावत्, त्यक्त्वा विहाय उत्तिष्ठ युद्धाय सज्जो भव॥ २.३॥

अर्जुन उवाच = कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

श्रीकृष्णप्रोक्तां सूक्तिं श्रुत्वा गुर्वादीनां हिंसाजन्यदोषदुःखमसहमान अर्जुन उवाच = कथमिति = हे मधुसूदन! हे श्रीकृष्ण! हे अरिसूदन! भक्तानां कामक्रोधादीन् अरीन् सूदयतीति अरिसूदनः, तत्संबुद्धौ हे अरिसूदन! अहं पौत्रः शिष्यश्च सन् संख्ये युधि भीष्मं कुलगुणवृद्धं पितामहं भीष्मं, द्रोणञ्च=विद्यागुरुं द्रोणं च इषुभिः बाणैः कथं केन प्रकारेण प्रतियोत्स्यामि प्रतिपक्षीभूय युद्धं विधास्यामि। तौ द्वावेव पूजार्हौ= यौ हि पितृवत् गुरुरूपवत् पूजायोग्यौ, तौ वाचापि न युद्धार्हौ, अतस्तावेव बाणैर्मर्मभेदिभिः न युद्धार्हाविति ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

युद्धात्पुरा युद्धनिवृत्तये संजयोपदिष्टं क्षात्रविरुद्धं वाक्यवृन्दं मनसि स्मरन् 'क्षत्रियाणं युद्धं श्रेयस्करमपि कथं त्यक्तुं शक्यते' इत्युद्दिश्य अर्जुनः प्राह =
गुरूनिति = महानुभावान् महान् अत्युत्कृष्टः अनुभावः धर्मविषयको बोधः येषां तान् महानुभावान् धार्मिककृत्यसंबन्धेऽधिकानुभवशालिनः गुरून् भीष्मद्रोण-कृपाचार्यादीन् अहत्वा न मारयित्वा इह लोके अस्मिन् विनश्वरे असारे संसारे भैक्ष्यं भिक्षोपार्जितमन्नं भोक्तुं भक्षयितुं श्रेयस्करं मदर्थं श्रेयः युद्धवत् श्रेयः कल्याण-करं भविष्यति। " अकृत्वा परसन्तापं अगत्वा खलमन्दिरम्। अक्लेशयित्वा चात्मानं यदल्पमपि तद् बहु"। इति धर्मशास्त्रप्रसिद्धं वचनमेव 'हि' शब्दस्यार्थः इति।

अर्थकामान् — अत्र कामशब्दो ज्ञानार्थकः। अर्थान् = धर्मार्थकाममोक्ष पुरुषार्थान् शिष्येभ्यः कामयन्ति बोधयन्ति इत्यर्थकामांस्तान् धर्मोपदेष्टॄन् गुरून् हत्वा विनाश्य इह एव अस्मिन्नेव मर्त्यलोके रुधिरप्रदिग्धान् रक्तधारासिञ्चितान् रुधिरमयान् भोगान् = भुज्यन्ते इति भोगाः विषयाः तान् नरकप्राप्तिकरान् भुञ्जीय अहमनुभवेयम्। अतो गुर्वादिहिंसाशून्यं भिक्षाशनं अतीव श्रेयस्करं जानामि ॥५॥

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

युद्धे जयो भविष्यति वा न वा इति मनसि संशयं परिकल्प्य अर्जुनः कथयति = न चेति = हे कृष्ण! अस्माकं धर्मात्मनां कृते भिक्षाशनं युद्धं वा गरीयः श्रेयस्करं भविष्यति, द्वयोः कतरत् किं नु वा श्रेयः एतत् न विद्मः न जानीमः। गुरुहिंसादुष्कीर्ति-लब्धाप्रतिष्ठादिदोषरहितत्वात् भैक्ष्याशनमेव श्रेष्ठमुत वा क्षात्रधर्मत्वात् युद्धमेव श्रेष्ठमित्यद्वयं न विद्मः इति चकारार्थः। युद्धे वयं जयेम यदि वा यद्वा ते धार्तराष्ट्राः नोऽस्मान् जयेयुः अस्मदुपरि विजयं प्राप्नुयुरित्यपि न विद्मः। यान् धार्तराष्ट्रान् दुर्योधनादिभ्रातॄन् एव हत्वा मारयित्वा न जिजीविषामः जीवितुं न इच्छामः त एव धृतराष्ट्रस्य पुत्राः पौत्राश्च प्रमुखे संग्राममुखे स्थिताः तिष्ठन्ति। अतोऽनर्थहेतोर्युद्धात् भिक्षोपार्जितान्नभक्षणमेव अस्माकं श्रेयस्करं भविष्यति इति भावः ॥६॥

अस्याध्यायस्य सप्तमश्लोकादारभ्य गीतावेदार्थबोधिनी तथा वेदगीताभाष्यम् इति टीकाद्वयमारभ्यम् :—

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे सुदर्शनम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

कार्पण्येति = बृहदा० ३।८।१० "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति-स कृपणः", "कृपणो योऽविजितेन्द्रियः", "अतत्त्वज्ञः कृपणः" तस्य भावः कार्पण्यम् - अज्ञत्वं कातरत्वं वा। तमःप्रधानत्वात् वस्तुस्वरूपं दूषयतीति दोषः तेनोपहतः तिरोहितः। स्वस्य अविक्रियस्य आत्मनः भावः सत्ता यस्य स कार्पण्यदोषोपहतस्वभावः। धर्मसंमूढचेताः = धार्यते पाल्यमानः पुमान् अनेनेति धर्मः, तस्मिन् ज्ञानात्मके धर्मे संमूढम् अप्रविष्टम् चेतो मनो यस्य तथाभूतः अहम् अर्जुनः त्वां परमेश्वरं कृष्णस्वरूपं पृच्छामि। महर्षिभिः श्रुतिस्मृत्याधारतः यन्निश्चितं निर्णीतं श्रेयः स्यात् श्रेयःसाधकं शोकविध्वंसकं तत् मे ब्रूहि वद। अहं ते तव शिष्यः धर्मजिज्ञासुः शिष्यभावं गतः त्वं जगदीश्वरः प्रपन्नं शरणं गतं मुमुक्षुं मां शाधि शिक्षस्व बोधयेति यावत् ॥७॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥

इन्द्रस्य गृहोऽसि। तं त्वा प्रपद्ये तं त्वा प्रविशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मेऽस्ति तेन ॥ अथर्व० ५।६।११ ॥

इन्द्रस्येति = इदि ऐश्वर्ये, ऐश्वर्योपेतः इन्द्रः आत्मा इन्द्रत्वप्रापकात् कर्मणः इन्द्रो जज्ञे — इन्द्रशब्दः स्वकारणभूते कर्मणि उपचर्यते इन्द्रस्य कर्मणः गृहोऽसि उत्पत्तिस्थानमसि। अतः मत्कार्पण्यादिदूषितकर्मज्ञाताऽसि। इन्द्रस्य च मायासम्बन्धः श्रुत्यन्तरे प्रसिद्धः। "मायाभिरिन्द्र मायिनम्"[1] ऋ० १।११।७॥ अतः मायिनः कपटिनः जीवस्य गृहोऽसि स्थानमसि। अतोऽपि मत्कार्पण्यदोषस्य ज्ञाताऽसि। अतः तं त्वां प्रपद्ये। तच्छब्दस्य दूरस्थे प्रयोगः। युष्मच्छब्दस्य च संमुखस्थे प्रयोगः। अतस्तं परमात्मस्वरूपं त्वां संमुखस्थं श्रीकृष्णचन्द्रं प्रपद्ये शरणं प्राप्नोमि। तथा च तं परमात्मस्वरूपं त्वां संमुखस्थं श्रीकृष्णचन्द्रं प्रविशामि, अर्थात् त्वत्स्वरूपप्रतिपादनरूपं श्रेयः प्रविशामि स्वश्रेयस्त्वं त्वत्तः स्वस्मिन् प्रवेशयामि। भवांश्च सर्वतनूः सर्वेषां तनूः शरीरं कारणभूतं सर्वोत्पत्तिस्थानं सर्वशरीराभिमानी विराडात्मको भवति। सर्वगुः सर्वत्र गमनशीलः, सर्वात्मा सर्वेषां जीवानाम् आत्मा मनः सर्वत्रान्तर्यामितया स्थितः सर्वपूरुषः सर्वेषां जीवानां पुरि शरीरे शेते इति सर्वपूरुषः सच्चिदानन्दस्वरूपः। यत् मे सह असि = यत् यस्मात् कारणात् ईदृग्विशेषणविशिष्टः परमात्मा मे सह मया सह मे संमुखस्थोऽसि तेन हेतुना तं त्वां प्रपद्ये शरणं प्रपन्नोऽस्मि॥१०॥

अशोच्यानिति = हे अर्जुन! त्वम् अशोच्यान् शोचितुमनर्हान् भीष्मादीन् अन्वशोचः, एतानुद्दिश्य शोकं कृतवानसि। च = अपि च प्रज्ञावादान् सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्रज्ञाः पण्डिताः तेषां वादाः आवादाः तान् प्रज्ञावादान् भाषसे वदसि। पण्डिताः पण्डा निश्चयात्मिका बुद्धिः तया इताः युक्ताः पण्डिताः निश्चयात्मकबुद्धयः विद्वांसः गतासून् मृतान् अगतासून् जीवितान् पुत्रादीन् च न अनुशोचन्ति शोकं न कुर्वन्ति॥११॥

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः॥११॥

प्र यदित्था परावतः शोचिर्न मानमस्यथ। कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः। ऋ० १।३९।१॥

प्र यदिति = हे धूतयः! हे कम्पनशीलाः जीवाः! 'धूञ् कम्पने' 'स्त्रियां क्तिन्' इति क्तिन् प्रत्ययः। हे मरुतः! हे मृतप्रायाः जीवाः! म्रियन्ते प्राणिनः एभिः इति मरुतः यद्वा महत् रवन्ति वदन्ति इति मरुतः स्तोतारः! प्राणात्मकस्य वायोः शरीरात् निर्गमने सति प्राणिनां मृतिः प्रसिद्धैव। अथवा म्रियन्ते इति मरुतः भीरव इति यावत्। यत् यदा मानं माननीयं युष्मद्बलं शोचिः न = तेज इव। नकारः उपरिष्टात्वादुपमार्थीयः, परावतः दूरात्, "आरे परावतः" इति दूरनामसु पाठात्। इत्था इत्थंप्रकारेण युद्धस्थलात् प्र + अस्यथ = प्राप्ताः विचारज्ञानादिभिः युक्ता अपि पाण्डित्याद्दूरं प्रक्षिप्ता इति। यथा युष्मद्बलं दूरं गतं तथा तेजोऽपि। इत्था इत्यत्र "था हेतौ च छन्दसि" (पा० ५।३।२६) इतीदंशब्दात् प्रकारवचने



1 See also Geeta "ये यथा मां प्रपद्यन्ते" 4/11, Compare Rigveda 10/148/2 and 1-80-7

था प्रत्ययः। अतः कस्य पुरुषस्य क्रत्वा कर्मणा "क्रतुरिति कर्मनाम सु पठितम्। कस्य पुरुषस्य च वपसा स्तुतिलक्षणेन संकल्पेन कं पुरुष-मुद्दिश्य किंवा पाण्डित्यलक्षणमुद्दिश्य यांथ संसारयात्रां कुरुथ॥११॥

न त्वेवेति = अहं तत्पदार्थः परमात्मा त्वत्संमुखस्थः श्रीकृष्णः जातु=कदाचित् न आसम् अभूवम् इति न। न त्वं त्वंपदलक्ष्यार्थः अर्जुनः न आसीरिति न। इमे जनाधिपाः संमुखे दृश्यमानाः जनाधिपाः न आसन् इत्यपि न। इमेऽपि पूर्वमासन् इति भावः। सर्वे वयं जीवाः अतः परं एतज्जन्मानन्तरं न भविष्यामः- अतः परमस्माकं सर्वेषां जन्म न भविष्यति इति न एव। एतेन जीवस्य देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च सूचितं भवति।

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्॥१२॥

प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति।
अद एकेन गच्छत्यद एकेन गच्छतीहैकेन निषेवते। अथ० ११।८।३३

प्रथमेनेति = पूर्वस्मिन् प्रकरणे जीवात्मा सूक्ष्मशरीरेण भोगायतनं स्थूलशरीरं प्रविश्य इन्द्रियैः पुण्यापुण्यात्मकानि कर्माणि अनुष्ठाय तत्फलोपभोगार्थं मरणानन्तरं भिन्नभिन्नदेहान् प्राप्नोति- तदत्र वर्ण्यते। प्रथमेन प्रथम भाविना मुख्यतमेन स्थूलशरीरेण प्रमारेण प्रमृतेन "हेतौ तृतीया"। भोगायतनस्य शरीरस्य तदारम्भककर्मक्षयेण त्यागहेतोः। स जीवात्मा त्रेधा त्रिप्रकारं स्वर्गनरक-मर्त्यलोकम् अर्थात् "ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" (गी० १४।१८) इति भगवद्गीतोक्त-सत्वरजस्तमोगुणप्रधानत्वेन त्रेधा त्रिप्रकारकं जन्म विष्वङ् सर्वतः नानायोनिं वा विगच्छन्ति विविधेन प्रकारेण कर्मफलानुकूलं प्रयाति। एकेन कर्मणा- अर्थात् सत्वगुणप्रधानेन पुण्येन अदः विप्रकृष्टं स्वर्गं सुखावहं जन्म गच्छति। एकेन कर्मणा अर्थात् रजोगुणप्रधानेन सुखदुःखावहं मध्यमं जन्म गच्छति एकेन कर्मणा तमोगुणप्रधानेन इहास्मिन्नेव भूलोके तिर्यगादीनि तमोगुण-प्रधानानि जन्मानि निषेवते प्राप्नोति। यथा च श्रूयते=(प्रश्न उप० ३।७) "पुण्येन पुण्यंलोकं नयति पापेन पापम् उभाभ्यामेव मनुष्यलोकमिति"। अथापि च= "नित्यो नित्यानां चेतनश्चेतनानां बहूनां यो विदधाति कामान्" श्वेताश्व० ५।१३॥

देहिन इति = अस्मिन् देहे देहिनः देहोपाधिमतः आत्मनः कौमारं कुमारस्य इदं कौमारं वपुरिति शेषः। बाल्यावस्था इत्यर्थः। यौवनं यूनः इदं यौवनं युवावस्था। जरा वृद्धावस्था यथा येन प्रकारेणायाति। कौमारं विमुञ्चतः यौवनं, यौवनं जहतः जरठं वपुरायाति। तथैव एतत् स्थूलं देहं त्यजतः -

देहान्तरं — अन्यो देहः देहान्तरः तमायाति । अविनश्यत स्वात्मनः धीरो विद्वान् तत्र तत्तत्कर्मणि न मुह्यति मोहं न प्राप्नोति ॥१३॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम।
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥ ऋ० १।२४।१॥

कस्येति — वयं जीवाः अमृतानां मरणधर्मरहितानां "देवाः विद्वांसः" "देवाः इन्द्रियाणि" तेषां मध्ये कतमस्य किंजातीयस्य कस्य देवस्य चारु मनोहरं नाम मनामहे उच्चारयामः। को देवः मां मुमूर्षुं पुनरपि मह्यै महत्यै अदितये अखण्डनीयाय परमेश्वराय दात् दद्यात्। तेन दानेन अहम् अमृतः सन् पुनः द्वितीयस्मिन् जन्मनि पितरं जनकं मातरं जननीं दृशेयं पश्येयम्। एतद्वचनं श्रुत्यन्तरेऽपि प्रतिपादि, यथा — "अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम। स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च"। ऋ० १।२४।२॥ "पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च। पुनरग्नयो धिष्ण्या यथास्थामकल्पयन्तामिहैव"। अथ० ७।६७।१॥

मात्रेति — मीयन्ते आभिर्विषया इति मात्राः इन्द्रियाणि, मात्राभिः इन्द्रियैः स्पृश्यन्ते गृह्यन्ते इति स्पर्शाः शब्दादयः भोग्यपदार्थाः शीतोष्णसुखदुःखदाः शीतोष्णवत् सुखदुःखदायकाः, यथा शीतोष्णे अनुकूले सुखदे भवतः ते एव प्रतिकूले सती दुःखं यच्छतः अर्थात् यथा शीतर्तौ शीतं दुःखदायि भवति, ग्रीष्मे तदेव सुखदायि भवति, एवमुष्णकाले उष्णता दुःखदायिनी भवति, शीतकाले च सैव सुखदायिनी भवति। तथैव शब्दादयो विषया अपि अनुकूलाः सन्तः सुखं यच्छन्ति, प्रतिकूलाः सन्तः दुःखं ददति। आगमापायिनः — आगमः उत्पत्तिः, अपायः नाशः, तद्वन्तः, अतोऽनित्याः तज्जन्यसुखदुःखादयः क्षणकालावस्थायिनः सन्ति। हे भारत! भाः ज्योतिर्ज्ञानं वा तत्र रमते इति भरतः तत्संबुद्धौ हे भारत! हे ब्रह्मनिष्ठ! हे कौन्तेय! हे अर्जुन! त्वं तान् विषयान् तत्संयोगवियोगान् च तितिक्षस्व सहस्व ॥१४॥

मात्रास्पर्शास्तु कौन्तेय! शीतोष्णसुखदुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

[2] अति निहो अति स्रिधोऽत्यचित्तीरति द्विषः। विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दाः ॥ अथ० २।६।५॥

अतीति — हे अग्ने! हे धनंजय! अग्नेरपरपर्यायः धनंजयः। "अग्निरपि रुद्र उच्यते" इति निरुक्तोक्तेः। "रुद्रः राजा भवति" अर्जुनोऽपि राजसुतत्वात् राजा एव, अतोऽत्र अग्नि शब्देन धनंजयस्य अर्थात् अर्जुनस्य ग्रहणम्। त्वं निहः — निहन्तॄन् विषयजान् सुखदुःखादिदोषान् "हन्तेः क्विपि टिलोपश्छान्दसः"।



[2] See also यजुर्वेद 27/6

यद्वा निकृष्टान् = श्वशूकरादियोनिप्राप्तिरूपान् नीचगतीः "ओहाङ् गतौ" क्लिबन्तात् शसि "आतो धातोः" इत्याकारलोपः, तान् अतितर = अतिशयेन पारं कुरु। स्रधः = स्रेधतिः शोषणकर्मा छान्दसः, ततः क्विप्। देहशोषकान् रोगान् तथा अचित्तीः अशोभनबुद्धीः पापप्रवणाः तथा द्विषः द्वेष्टॄन् विषयजान् शत्रून् अतितर अतिक्रमस्व। त्वं विश्वा विश्वानि सर्वाणि दुरिता दुर्गतानि पापपुण्यरूपान् सुखदुःखदोषान् अतितर पारं कुरु। अथ अनन्तरं सुखदुःखादिविषयतरणानन्तरम् अस्मभ्यं मदर्थं भगवदर्थं सहवीरं कुलाचारसहितं रयिं ज्ञानप्रवाहं वेगं वा दाः देहि। "तेन सहेति तुल्ययोगे" इति तुल्यक्रियायोगे बहुव्रीहौ "वोपसर्जनस्य सहस्य सः" समासो विकल्पः तेन 'सहवीरम्' इति सिद्धम्॥५॥

तुलना — गीतायां अनित्यसुखदुःखादिविषयाणां परित्यागः ब्रह्मप्राप्तये सुखदुःखादि द्वन्द्वसहनं कथितम्। वेदेऽपि तिर्यग्योनिप्राप्तिनिवृत्तये दुर्विचाराणां विषयाणां च परित्यागः भगवतः चरणकमलोपलब्धये च ज्ञानोपलब्धिरुपदिष्टा।

यमिति = हे पुरुषर्षभ! पुरुषेषु नरेषु ऋषभः श्रेष्ठः = पुरुषर्षभः, तत्संबुद्धौ हे पुरुषर्षभ! हे पुरुषश्रेष्ठ! हे अर्जुन! धीरं विषयग्रहणेभ्यो धियं बुद्धिं राति निगृह्णाति इति धीरः सदात्मनिष्ठः तथाभूतम्। समदुःखसुखं समे दुःखसुखे यस्य तं सुखदुःखयोरेकसममिति भावः। तथाविधं यं पुरुषं एते शीतोष्णादयः विषयाः न व्यथयन्ति न बाधन्ते स्वस्थितितो न चालयन्ति स एव पुरुषः अमृतत्वाय मुक्तये कल्पते योग्यो भवति।१५।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते॥१५॥

न यं जरन्ति शरदो न मासा न द्याव इन्द्रमवकर्षयन्ति। वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमाना॥ ऋ० ६।२४।७॥

न यमिति — यम् इन्द्रं जीवात्मानं शरदः संवत्सराः वर्षमात्रजन्यशीतोष्णजन्यसुखदुःखादयः न जरन्ति न जरयन्ति नापक्षीणयन्ति तथा मासाः शुक्लकृष्णात्मकसुखदुःखपक्षद्वयरूपाः न जरन्ति, तथा द्यावः दिवसाः शोभना अशोभना वा न अवकर्षयन्ति न क्षीणं कुर्वन्ति, अस्य समदुःखसुखस्य वृद्धस्य ज्ञानेन धीरतया च वृद्धरूपस्य शरीरं स्तोमेभिः स्तोत्रैः स्तुतिजन्यसुखैः शस्यमाना स्तूयमाना सती, तथा उक्थैः शस्त्रैश्च शस्यमाना क्रियमाना चित् एव वर्धतां प्रवृद्धा भवतु — अर्थात् समदुःखसुखः पुरुषः अमृतत्वाय कल्पते।१५॥

यथा कठोप० अ० २ वल्ली ५, मंत्रः ११ = "ओं सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ तुलना = गीतायां शीतोष्णद्वन्द्वादि परित्यागः, सुखदुःखसमता ज्ञानं मुक्तिहेतुरिति कथितम्। वेदेऽपि ऋतुजन्य मासजन्य दुर्दिनादि-

जन्य सुखदुःखपरिहार एव अमृतत्वकारणमुक्तम्॥
नासत इति = असतो देहाद्यनित्यपदार्थस्य भावः सत्ता नित्यता इति यावत्, न विद्यते न वर्तते। तथा सतः नित्यपदार्थस्य एकरसस्य अभावः अविद्यमानता न विद्यते। अनयोः उभयोः द्वयोः सदसतोः अन्तः तत्वं निश्चयो वा, तत्वदर्शिभिः तत्वं सर्वाधिष्ठानभूतस्य ब्रह्मणो याथात्म्यम् अबाधितस्वरूपं सत्यज्ञानानन्दात्मकं यत् तदेव द्रष्टुं शीलं स्वभावो येषां ते तत्वदर्शिनः तैः तत्वदर्शिभिः दृष्ट आलोकित॥ २६

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः॥१६॥

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते।
तयोर्यत्सत्यं यतरदृजीयस्तदित् सोमोऽवति हन्त्यासत्॥ ऋ० ७।१०४।१२॥
अथ० ८।४।१२॥

सुविज्ञानमिति = चिकितुषे विदुषे तत्वदर्शिने जनाय पुरुषाय इदं सुविज्ञानं विज्ञातुं सुशकं भवति। सत् नित्यं किम्, असत् अनित्यं किमस्ति। सत् असत् इति वचसी वचने पस्पृधाते मिथः स्पर्धेते। यत् सत् तत् असत् न भवितुमर्हति, यत् असत् तत् सत् भवितुं नार्हति। तयोः सदसतोः मध्ये यत् सत्यं सत्स्वरूपं यतरत् यावन्मात्रं ऋजीयः ऋजुतमम् अकुटिलम्। तदित् तदेव सत्सरूपं सोमः सौम्यगुणविशिष्टः, यद्वा सोमः अमृतस्वरूपः नित्य एव अवति पुरुषं रक्षति। असत् उक्तलक्षणं देहाद्यसत्पदार्थः आ समन्तात् हानिं पुरुषं हन्ति हिनस्ति नाशयति, सत्याद्दूरीकरोतीति भावः॥१२॥
अविनाशीति = येन अतिसूक्ष्मेण विभुना सदात्मकेन इदं परिदृश्यमानं सर्वं जगत् ततम् अन्तर्बहिश्च व्याप्तं भवति। तत् सच्छब्दवाच्यवस्तु अविनाशि विनाशरहितम्। कश्चित् कोऽपि पुरुषः अव्ययस्य न व्येति इति अव्ययम्। तस्यैतस्य अव्ययस्य विनाशं विनाशभावं कर्तुं न अर्हति॥१७॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥१७॥

असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितम्। भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितम्। तवेद् विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन्॥ अथ० १७।१।१९॥

असतीति = असत्पदार्थे ब्रह्मादिस्तम्बपर्यन्ते ब्रह्माण्डे देहे वा सत् ब्रह्म जीवो वा "सदेव सोम्येदमग्र आसीत्" छान्दो० उ० ६।२।१॥ "सत्यं ज्ञानमनन्तं ब्रह्म" तै० आ० ८।१॥ इत्यादिवचनैः असच्छब्देन ब्रह्मव्यतिरिक्तः पदार्थोऽभिधीयते। असद्भिन्नं सत् ब्रह्म जीवो वा भवति। प्रतिष्ठितम् आश्रितम्। देहः आत्मनो निवासस्थानं गृहं वा अतः "असति सत् प्रतिष्ठितम्" इत्युक्तम्। सति नित्ये आत्मनि भूतं भूतकालावच्छिन्नं पृथिव्यादि भूतपञ्चकं सकलसृष्ट्युपादानं भूतं-

अव्यक्तं प्रतिष्ठितम् । तत् आश्रित्य सर्वमुत्पद्यते इत्यर्थः । यथा च – "आत्मनः आकाशः संभूतः" तै॰ आ॰ ८।१॥ भूतं भूतपञ्चकं सर्वभूते भूतपञ्चके प्रतिष्ठितं नियतं वर्तते । कारणव्यतिरेकेण पृथगवस्थानाभावात् । एवमात्मनः नित्यत्वं सिद्धं, कार्यभूतस्य देहादिपदार्थस्य अनित्यत्वमुक्तम् । अतस्तमात्मानं विनाशयितुं कोऽपि नार्हति । हे विष्णो ! हे विष्णवंशरूप जीवात्मन् ! तव देहादिस्थस्य आत्मनः इत एव वीर्याणि चिच्छक्तिजन्यवीर्याणि बहुधा बहुप्रकाराणि सन्ति, न तु देहादिपदार्थस्य सन्ति, यतस्त्वमेव ब्रह्मांशः, ब्रह्मांशत्वात्तव वीर्याणि अनन्तानि । त्वं नित्यात्मा नः संसारस्थान् जीवान् अस्मान् विश्वरूपैः विश्वस्य स्वरूपैः पशुभिः पश्यतीति पशुः जीवः तैः पशुभिः जीवात्मभिः पृणीहि पूरय परिपूर्णं कुरु । एकात्मज्ञानेन सर्वात्मज्ञानं पूरय । तथा मा मां देहत्यागानन्तरं परमे निरतिशये व्योम्नि विशेषेण अवतीति व्योम तस्मिन् व्योम्नि मुक्तिपदे सुधायां सुष्ठु धीयते पीयते रसः वा धीयतेऽर्प्यते सर्वं सा सुधा तस्यां सुधायां मरणरहितायां पदव्यां धेहि स्थापय इति भावः ।९॥

अन्तवन्त इति = हे भारत ! भरतकुलोत्पन्न ! अर्जुन ! अप्रमेयस्य प्रमातुमशक्यस्य दुर्विज्ञेयस्येति भावः । अनाशिनः नाशरहितस्य नित्यस्य शरीरिणः ब्रह्मादिस्तम्बान्तानि शरीराणि उपलब्धिस्थानत्वेन अस्य सन्ति इतिशरीरी सर्वप्राणिशरीरोपाधिकः तस्य आत्मनः इमे देहाः अन्तवन्तः अन्तोऽवसानम् अदर्शनम् तद्वन्तः जन्मादिमत्वेन प्रतीतिमात्रत्वेन च अनित्यसत्ताकाः इति यावत् उक्ताः कथिताः तस्मात् कारणात् युध्यस्व युद्धं कुरु, तव युद्धकरणे न कोऽपि दोषः ।१८॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत ॥१८॥

अयं होता प्रथमः पश्यतेमम् इदं ज्योतिरमृतं मर्त्येषु । अयं स जज्ञे ध्रुव आनिषत्तोऽमर्त्यस्तन्वा३ वर्धमानः ॥ ऋ॰ ६।९।४॥

यद्वा = "अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु" ऋ॰ १०।७९।१

अयमिति = अयम् आत्मा प्रथमः अनादिः नित्य इत्यर्थः । होता हवनकर्ता यद्वा इन्द्रियाणामाह्वाता अर्थात् इन्द्रियाणां नियामकः अस्ति । इमम् आत्मानं देहे पश्यत अविनाशिनं विलोकयत । अयमात्मा मर्त्येषु मरणधर्मात्मकेषु देहेषु इदं ज्योतिः ज्योतीरूपमिदं तत्त्वममृतं मरणधर्मरहितं नित्यमस्ति । अयमात्मा ध्रुवः स्थिररूपः नित्यस्वरूपः जज्ञे देहे प्रादुर्भूतः तन्वा सह देहेन सह वर्धमानः वृद्धिं प्राप्नुवन् "अणोरणीयान् महतो महीयान्" इत्युक्तेः मशकहस्त्यादिदेहानुरूपं प्रकटीभवन् अमर्त्यः स्वयं मरणधर्मरहितः अमर इत्यर्थः आनिषत्तः सर्वतो निषण्णः इति ।४।

अपश्यमिति = मर्त्यासु मरणधर्मवतीसु विक्षु प्रजासु अस्य महतः –

अमर्त्यस्य मरणधर्मरहितस्य आत्मनः महित्वं महत्त्वमपश्यम् पश्यामि।१।

य इति = य एनम् आत्मानं हन्तारं नाशकं वेत्ति जानाति, यः पुरुषः च एनम् आत्मानं हतं हननक्रियाविषयभूतं मन्यते जानाति, उभौ तौ पुरुषौ आत्मानं न विजानीतः। यथाभूतम् आत्मतत्वं साक्षान्न विदितवन्तौ। यतोऽयमात्मा न स्वयं यं कञ्चन हन्ति न च येन केनापि हन्यते॥१९॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥१९॥

सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः।
न वै तत्र म्रियन्ते नो यन्त्यधमं तमः। अथ० ८।२।२४

स इति = हे अरिष्ट! रिष्टं रेषो हिंसा सा यस्य नास्ति स अरिष्टः, तत्संबुद्धौ हे अरिष्ट! निरस्तहिंस! हे मृत्युकर्तृकहिंसारहित! हे नित्यात्मन्! स हतघातकक्रियारहितस्त्वं न मरिष्यसि मृत्युं न प्राप्स्यसि वा न मरिष्यसि न मारयिष्यसि कमपि। द्वितीयं 'मरिष्यसि' पदं ण्यन्त-लुप्तमेव। अतो मा बिभेः मरिष्यामीति भीतिं मा प्राप्नुहि। न कश्चिदात्मा केनचिद्धन्यते न कञ्चिद्धन्ति नित्यत्वात्। तत्र आत्मतत्वसाक्षात्कारे वै शब्दः प्रसिद्धौ। न म्रियन्ते आत्मानः न प्राणान् त्यजन्ति। न अधमं तमः = तमःस्वरूपं घातककर्मात्मकं पापं यन्ति प्राप्नुवन्ति॥२४॥

न जायत इति = न जायते इत्यजः। स्वयं जननरहितोऽयमात्मा कदाचित् न जायते नोत्पद्यते। अनेन भावविकारो निरस्तः। अयमात्मा च कदाचित् न म्रियते नाशक्रियां नाप्नोति, इत्यनेन विनश्यतीति षष्ठो विकारो निरस्तः। अयमात्मा भूत्वा जननक्रियां प्राप्य भूयः पुनः भविता अस्तित्ववान् न भवति इत्यनेन 'जायते' इति द्वितीयो विकारः निरस्तः। ~~शाश्वतः अयमात्मा शश्वद् भवतीति शाश्वतः इत्यनेन 'अपक्षीयते'~~ अयमात्मा नित्यः एकरूपः इति 'विपरिणमते' इति तृतीयो विकारः निरस्तः। शाश्वतः = अयमात्मा शश्वद् भवतीति शाश्वतः इत्यनेन 'अपक्षीयते' इति क्षयलक्षणः पञ्चमो विकारः निरस्तः। पुराणः अयमात्मा पुरापि अधुनापि च सर्वदा नवत्वात् पुराणः इत्यनेन वृद्धिलक्षणः चतुर्थो विकारो निरस्तः। अस्मिन् शरीरे खड्गादिना हन्यमाने छिद्यमाने सति अपि आत्मा निर्विकारत्वात् स्वयं घटे म्रियमाने घटाकाशवत् न हन्यते हननक्रियाया विषयो न भवति। "अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा"॥२०॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥२०॥

न सञ्जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति। नास्य राय उपदस्यन्ति नोत यऋषिं वा यं राजानं वा सुषूदथ॥ ऋ० ५।५४।७॥

न स इति = हे मरुतः! हे महात्मानः! हे तत्त्वज्ञाः! यं ऋषिं देहादिगतं राजानं स्वभासा प्रकाशमानं आत्मानं सुषूदथ सत्कर्मसु प्रेरयथ। स आत्मा न जीयते वयोहानिं न प्राप्नोति न विनश्यतीति भावः। स आत्मा न हन्यते हननक्रियाविषयो न भवति। न स्रेधति = अयमात्मा न क्षीयते। "स्रेधतिः शोषणकर्मा"। अयमात्मा न व्यथते न पीड्यते केनचिदपि। अयमात्मा न रिष्यति न हिंस्यते हन्यते इति यावत्। अत्र हिंसाबाधामात्रं ज्ञेयम्। अस्य आत्मनः रायः ज्ञानशक्तयः न उपदस्यन्ति न उपक्षीयन्ते। ऊतयः = ऊतिः रक्षा इत्युच्यते। "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति निपात्यते। न उपदस्यन्ति न उपक्षीयन्ते ज्ञानबलेन तस्य आत्मनः संसारात् रक्षा भवति। एतदेव मन्त्रान्तरेऽपि प्रतिपादितमस्ति —

"अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति। देवस्य पश्य काव्यं न ममार न जीर्यति"। अथ० १०।८।३२॥

अन्तीति = हे मुमुक्षो! अयमविवेकी जनः अन्ति सन्तं समीपे वर्तमानं देहं न जहाति न त्यजति। देहमेवात्मानं मन्यते। अन्ति समीपे सन्तं हृदयस्थम् आत्मानं न पश्यति नावलोकयति नाभिजानाति। देवस्य स्वभासा दीप्यमानस्य आत्मनः काव्यं क्रान्तदर्शित्वं ज्ञानघनं पश्य अवलोकय। न जीर्यति = अयमात्मा जर्जरत्वं न याति, न ममार = देहे विनष्टेऽपि न म्रियते, स सदा नित्यः अजरोऽमरोऽस्तीति।

वेदेति = हे पार्थ! हे पृथायाः पुत्र! अर्जुन! यः पुरुषः एनम् आत्मानं अविनाशिनं विनाशः — प्रमाणेन रज्जुसर्पादेरिव सत्ताबाधः रूपगुणादिभिः परिच्छेदः, तदभावोऽस्यास्तीति अविनाशी परिपूर्णः तम् अजं जन्मादिशून्यम् अव्ययं सर्वविकारशून्यं वेद जानाति। स पुरुषः सर्वात्मभावंगतः विद्वान् कथं केन प्रकारेण कं पुरुषं हन्ति हननक्रियां करोति, कं पुरुषं घातयति = हननक्रियां प्रवर्तयति। २१।

वेदाविनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुषः पार्थ! कं घातयति हन्ति कम्। २१॥

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि। होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै॥ ऋ० ४।२।१॥

य इति = योऽग्निः जीवात्मा, देवः ज्ञानेन दीप्यमानः, मर्त्येषु मरणधर्मपदार्थेषु देहादिषु अमृतः मरणधर्मरहितः। ऋतावा सत्यवान् सत्यस्वरूपः नित्य इत्यर्थः। देवेषु अरतिः = देवेषु इन्द्रियेषु तद्विषयेषु रतिरहितः निःस्नेह इति यावत्। यद्वा देवेषु विद्वत्सु अरतिः अभिगन्ता विद्वत्संगमनशीलः। अरतिः = ऋ गतौ, "वहिवस्यर्तिभ्यश्च" इत्यनेन अतिप्रत्ययः। निधायि = निहित इति जानाति। स च होता भक्षयिता, "हु = दानादनयोः"।

यजिष्ठः भगवत्पूजकः। महा स्वकीयेन तेजसा शुच ध्यै दीपितुं निधायि स्थापितः। स च समदुःखसुखत्वात् देदीप्यमान आस्ते। "शुच् दीप्तौ" - तुमर्थे कध्ये प्रत्ययः। किञ्च स पुरुषः इव्यैः हवनसाधनवस्तुभिः मनुषः मनुष्यमात्रस्य ईरयध्यै स्वर्गं प्रति प्रेरणाय निधायि उन्नत्यै - स्थापितः ॥२॥

वासांसीति = यथा येन प्रकारेण नरः मनुष्यः जीर्णानि खण्डितानि वासांसि वस्त्राणि विहाय त्यक्त्वा अपराणि तद्भिन्नानि नवानि नूतनानि वस्त्राणि गृह्णाति परिदधाति तथा तेनैव प्रकारेण देही देहोऽस्यास्तीति देही जीवात्मा स्वयमविकारात्मना स्थितः जीर्णानि कालकर्मवशात् त्याज्यतां प्राप्तानि शरीराणि विहाय त्यक्त्वा अन्यानि नामरूपजातिगुणविशेषैः पूर्व - विलक्षणानि संयाति प्राप्नोति न तु स्वयं विकृतो भवति। २२-

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥

'अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आपस्त्यानाम्। जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ऋ० १।१६४।३०॥

यद्वा = 'स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः। अरुषो जातः पद इळायाः पुरोहितो राजन् यक्षीह देवान्। ऋ०-१०।१।६॥

अनच्छय इति = पस्त्यानां प्राणिशरीराणां मध्ये अनत् प्राणं धारयन् तुरगातु प्रचलन् जीवं जीवनशक्तियुतम् एजत् चालयन् परं ध्रुवः स्थिरः रश्मिर्गुणैर्युक्त आत्मा आशये वसति। अयं जीवात्मा मर्त्येन सयोनिः मर्त्य - शरीरेण सह समाने योनौ उत्पन्नोऽपि अमर्त्यः मरणधर्मरहितः नित्य इत्यर्थः। अयमात्मा मृतस्य मृतप्राणिनः जीवः आत्मा स्वधाभिः मृत्योरनन्तरं निजधारक - शक्तिभिः सह चरति अपरस्मिन् देहे परिभ्रमति। १६४॥

इदं मंत्रं श्रीसायणाचार्य एवं व्याचख्ये = अनेन देहस्य असारता - जीवस्य नित्यत्वञ्च प्रतिपाद्यते। इदं शरीरं जीवावस्थायाम् अनत् - प्राणनं कुर्वत् जीवं जीवनवत् तुरगातु स्वव्यापाराय तूर्णगमनं सत् ध्रुवं अविचलितं सत् पस्त्यानां गृहाणां मध्ये अथैतेषु आशेते च स्थाणु - वत्तिष्ठति। आकारः पूर्णो वा जीवस्य वैलक्षण्यमाह - मृतस्य शरीरस्य सम्बन्धी जीवः मर्त्येन मरणधर्मकेण शरीरेण सयोनिः पूर्वं समानोत्पत्ति - स्थानः, यद्यपि जीवस्य जन्म नास्ति तथापि वपुषस्तत्सद्भावात् तत्सम्ब - न्धेनोपचर्यते। तदेवाह - अमर्त्यः अमरणस्वभावः। "जीवापेतं वाव - किलेदं म्रियते" इति श्रुतेः। उक्तस्वभावो जीवः स्वधाभिश्चरति पुत्रैः - स्वधाकारपूर्वकं दत्तैरन्नैश्चरति वर्तते इत्यर्थः।

स तु इति = हे राजन्! स अग्निः जीवात्मा वस्त्राणि पुरातनानि

वासांसीव पुरातनानि वासांसि आच्छादकानि जीर्णानि शरीराणि दूरीकृत्य अथ पुनः पृथिव्याः नाभा = नाभौ मर्त्यलोके पेशलानि नूतनानि मनोहराणि वस्त्राणि जीवावरणानि शरीराणि वसानः धारयन् इडायाः पदे उत्तरवेद्यां उत्तरजन्मनि — "एतद्वा इडायास्पदं यदुत्तरवेदी नाभिः" तै॰ सं॰ ५। ४। ८॥ जातः समुत्पन्नः अरुषः स्वशुभकर्मभिः आरोचमानः पुरोहितः स्वकर्मफलोपभोगाय अग्रे स्थापितः सन् इह अस्मिन् जन्मनि देवान् इन्द्रियाणि यक्षि पूजयति सेवते।

नूतनः मंत्रः = "आदह स्वधामनु पुनर्गर्भत्वमेरिरे। दधाना नाम यज्ञियम् ॥ अथ॰ २०। ४०। ३॥ ऋ॰ १। ६। ४॥

आदह इति = आत् पूर्वशरीरत्यागादनन्तरम् अह = अपि स्वधाम् = अनु = स्वशरीरधारणसामर्थ्यानुसारं यज्ञियं नाम = आत्मानुरूपं स्वरूपं दधानाः धारयन्तः पुनः भूयः गर्भत्वम् = गर्भे शरीरे प्राप्नुवन्ति अर्थात् पुनर्जन्म गृह्णन्ति ॥

अथापि च = "देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान॥" साम॰ ३। २॥

देवस्य कालस्वरूपस्य जीवस्य महत्वेनार्पितं काव्यं सामर्थ्यं पश्य। यः जीवः जरां प्राप्तः ह्यः गतदिने ममार म्रियेत स एव जीवः अद्य परेद्युः समान सम्यग् जीवति पुनर्जन्मान्तरे प्रादुर्भवति इत्यर्थः।

नैनमिति = शस्त्राणि = शस्यन्ते छिद्यन्ते पदार्थाः एभिः इति शस्त्राणि अस्त्रादयः देहवत् एनम् आत्मानं न छिन्दन्ति अवयवविश्लेषं न कुर्वन्ति। पावकः अग्निः अपि देहवत् एनम् आत्मानं न दहति दहनक्रियाया अविषयत्वात् भस्मीकर्तुं न शक्नोति। आपः जलम् अपि एनम् आत्मानं देहवत् न क्लेदयन्ति आर्द्रताम् आपाद्य सावयवस्येव निरवयवस्यात्मनः शैथिल्यं सम्पादयितुं न शक्नुवन्ति। मारुतः वायुरपि एनम् आत्मानं न शोषयति शोषणक्रियायाः अगोचरत्वात् एनं शुष्कीकर्तुं शोषयितुं न शक्नोति ॥२३॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति। विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आगत। ऋ॰ १०। ७७। ४॥

युष्माकमिति = हे मरुतः! हे जीवात्मानः! युष्माकं बुध्ने संघातात्मके देहे अयमात्मा न विथुर्यति न व्यथते। अयमात्मा मही महत्वात् मही इत्युच्यते, महीव पृथिव्यादिवस्तुवत् न श्रथर्यति न विशीर्णो भवति। यज्ञः "यज्ञो वै विष्णुः" विष्णोरंशः, यद्वा ईश्वरपूजकोऽयमात्मा विश्वप्सुः विश्वरूपः अयमात्मा वो युष्माकं आत्मानात्मविवेकवताम् अर्वाक् अभिमुखं सु सुष्ठु गच्छति, अतः यूयं प्रयस्वन्तः प्रयत्नशीलाः परिष्कर्तारः इव सत्राचः सहचिन्तकाः आगत आगच्छत, यद्वा सत्रं यज्ञं "यज्ञो विष्णुः" तमञ्चन्तीति सत्राचः विष्णुप्राप्तिचिन्तासक्ताः आगत संसारे आगच्छन्ति

यथा आगत आगच्छत परस्परं संगता भवत।
एतद् भावार्थसूचकः मंत्रः = "न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः। (यत्रासते सुकृतो यत्र ते ययुः तत्र त्वा देवः सविता दधातु)। यजु० २३।१६॥ यजु० २५।४४ A॥ ऋ० १।१६२।२१ A॥
अच्छेद्य इति = सनातनः सदातनः सदाभवनशीलः अत एव नित्यः, नित्यत्वादेव सर्वगतः परिपूर्णः। अतः स्थाणुः स्थिरस्वभावः अत एव अचलः अयमात्मा अच्छेद्यः छेत्तुमशक्यः, अदाह्यः दग्धुमशक्यः, अक्लेद्यः क्लेदयितुमशक्यः, अशोष्यः शोषयितुमशक्यः एव भवति।२४॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।२४॥

पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थु भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः॥ अथ० ९।९।११॥ ऋ० १।१६४।१३॥ निरु० ४।२७॥
पञ्चारे इति = पंचारे पंच ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि पंचभूतानि च अराः चक्राणि यस्मिन् तस्मिन् पंचारे पंचेन्द्रियचक्रवति चक्रे परिवर्तनशीले देहे परिवर्तमाने पुनरावर्तमाने सति तस्मिन् देहचक्रे विश्वा विश्वानि भुवनानि भूतजातानि प्राणिमात्राणि आतस्थुः तिष्ठन्ति वर्तन्ते इत्यर्थः। तस्य चक्रस्य मध्ये वर्तमानः अयमात्मा अक्षः अविनाशी भूरिभारः सकलदेहवहनेन प्रभूतभारोऽपि न तप्यते दाहक्लेशादिभिः न पीड्यते। अपि चायमात्मा सनादेव सनातन एव, अत एव सनाभिः समाननाभिः सर्वैकरूपनाभिः न शीर्यते न भिद्यते। यथा च लोके रथाक्षाः भारेण भग्नाः भवन्ति अक्षघातेन नाभिः विकृता भवति तद्वत् अयमात्मा देहचक्रे छिद्यमाने क्लिद्यमाने दह्यमाने सत्यपि न छिद्यते, न क्लिद्यते, न दह्यते, अतोऽयमात्मा नित्यः देहश्चानित्यः।२३॥
अव्यक्त इति = अव्यक्तं व्यज्यते इति व्यक्तं शरीरं तद्भिन्नमव्यक्तं सूक्ष्मतरम्। अतोऽयमात्माऽचिन्त्यः इन्द्रियागोचरः। अयमात्मा अविकार्यः निरवयवत्वात् विकृतेरविषयः उच्यते कथ्यते। यस्मादेवंविधः आत्माऽस्ति तस्मात् कारणात् त्वम् एनं यथोक्तलक्षणम् आत्मानं विदित्वा ज्ञात्वा नानुशोचितुमर्हसि, अहमेतेषां हन्ता, मया एते हन्यन्ते इति पूर्ववच्छोकं कर्तुं त्वं नार्हसीति भावः।२५।

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि॥२५॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति। भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुपगात्प्रष्टुमेतत् ॥ऋ० १।१६४।४॥ अथ० ९।९।४॥
क इति = प्रथमं मुख्यतमं अनादिभूतम् आत्मानं जायमानम् आविर्भवन्तं को ददर्श को द्रष्टुं शक्नुयात् तस्य अव्यक्तत्वात् कोऽपि तं द्रष्टुं न शक्नोति। यत् यस्मात् कारणात् अनस्थाः न तिष्ठतीति अस्थः, न अस्थः अनस्थाः नित्यः अविकार्योऽयमात्मा अस्थन्वन्तं शरीरं पृथिव्यादिसंघातात्मकं देहं बिभर्ति धारयति।

भूम्याः पार्थिवस्थूलशरीरस्य असुः प्राणः बलरूपत्वेन धारकः। असृक्=न - सृज्यते इतररागवत् संसृज्यते सहजत्वात्। न + सृज - क्विन् प्रत्ययः। देहादि रागरहितः आत्माजीवात्मा क्वस्वित् कुत्रास्ते, अतोऽचिन्त्योऽयम्। कः विद्विधः शिष्यः विद्वांसम् आत्मज्ञानिनम् अन्यं गुरुम् एतत् जीवात्मवैषयिकं प्रष्टुमुप - गात् - उपगच्छति॥४॥ "न तत्र चक्षुर्गच्छति न वाग्गच्छति नमनो न विद्मोन विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदिता - दधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे॥केनोप०खं०१।मं०३॥

अथेति = हे महाबाहो! हे अर्जुन! अथ अथवा एनम् उक्तमात्मानं नित्यजातं "यदा यदा देहोत्पत्तिस्तदा तदा देहेन सह सद्यः जायते, देहे मृते सति तेन सह म्रियेत एवंविधं नित्यजातं नित्यं मृतं मन्यसे तथापि तस्मिन् पक्षेऽपि "नाहो वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्" इति रीत्या शोचितुं नार्हसि॥२६॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो! नैवं शोचितुमर्हसि॥२६॥

अयं पन्थाः अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः॥ऋ०४।१८।१॥

अयमिति = अयं प्रत्यक्षेण उपलभ्यमानः पन्थाः योनिनिर्गमनरूपो मार्गः जन्म पुराणः अनादिः, अनुवित्तः सर्वैः जायमानैः लब्धः। यतः यस्मात् योनिमार्गात् विश्वे देवाः सर्वे विद्वांसः अविद्वांसः जीवात्मानः उदजायन्त उत्कर्षेण उत्पन्नाः भवन्ति। तस्मात् मार्गात् सर्वेषां प्राणि- नां सकृत् असकृत् वा जन्म आवश्यकमस्ति। अतश्चित् अस्मात् योनि - मार्गादेव प्रवृद्धः गर्भे संसारे वा प्रकर्षेण वृद्धिं गतः आ जनिषीष्ट आसमन्ता- त् उदपद्यत। अमुया रीत्या मातरं शोकमातरं, शोकमापकं ज्ञानं पत्तवे पत्तवे पतनाय मरणाय मा ~~कः~~ मा कुरु, अर्थात् जन्मानन्तरं मरण - मावश्यकमतः शोकः व्यर्थ एवेति दिक्॥१॥

~~जातस्येति = जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।~~

जातस्येति = हि यस्मात् कारणात् जातस्य उत्पन्नस्य पदार्थस्य मृत्युः मरणं ध्रुवः अनपायी आवश्यक इति यावत्। तथा मृतस्य पंचत्वं गतस्य पदार्थमात्रस्य जन्म पुनर्जननं ध्रुवं नियतम्। एवं जन्ममरणयोः मरण- जन्मनोः अहोरात्रयोरिव नियमः नियतः अपरिहार्यः परिहर्तुमशक्यः। तस्मात् कारणात् अपरिहार्ये दूरीभवितुमशक्येऽर्थे त्वं शोचितुं नार्हसि॥ २७

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥२७॥

मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम्। तस्मात् त्वां मृत्यो गो-

पते रुद्भरामि स मा बिभेः। अथ० ८।२।२३॥

यद्वा = यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया"। अथ० ३।११।८

मृत्युरिति = द्विपदां द्वौ पादौ येषां ते द्विपदः, तेषां द्विपदां मनुष्य पक्ष्यादीनां मृत्युः सर्वप्राण्यप्राणि संहर्ता ईशे ईष्टे स्वामी भवति। तथा चतुष्पदां गवाश्वादिप्राण्यप्राणिनां मृत्युः विनाशः ईशे ईष्टे स्वामी भवति। द्विपच्चतुष्पदां प्राणिनां स्थावरजंगमानां पदार्थानां च मृत्युरवश्यं भवतीति भावः। न हि मृत्युम् अपलपन् कश्चिदपि प्राणन् दृश्यते ऋते मुमुक्षोः। यस्मादेवमस्ति तस्मात् कारणात् त्वां जीवात्मानं गोपतेः गावः पशवोऽभिधीयन्ते। पशवो द्विपदश्चतुष्पदश्च। तेषामुभयेषां पतिः तादृशात् मृत्योः सकाशात् उद्भरामि उद्धरामि ज्ञानवीर्येण इत्यभिप्रायः। स त्वं मृत्युभीतः मृत्योः भयं प्राप्तः सन् मा बिभेः भीतिं माकार्षीः

य इति = यः मृत्युः जायमानं जन्म गृह्णन्तं त्वां त्वां प्राणिनं सुपाशया उत्तमेन पाशेन अभ्यधत्त सर्वतः बध्नाति। ८।

अव्यक्तादीनीति = नामरूपगुणादिभिर्न व्यज्यते इत्यव्यक्तम् अव्यक्तः आदिः येषां तानि अव्यक्तादीनि, भूतानि = भवन्तीति भूतानि शरीराणि। व्यक्तमध्यानि व्यक्तं व्यक्तता मध्ये येषां तानि व्यक्तमध्यानि देवतिर्यङ्मनुष्याः ब्राह्मणः क्षत्रिय इति इति मध्ये लब्धस्वरूपाणि भूतानि। अव्यक्तनिधनानि अव्यक्ते स्वाधिष्ठाने ब्रह्मणि निधनं लयो येषां तथाविधानि भूतानि भवन्ति। तत्र मिथ्याभूतेऽर्थे का परिदेवना कः परितापः अस्ति। २८॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ २८॥

तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः। यजुः १७।३०॥ ऋ० १०।८२।६॥

तमिदिति — आपः आदिसृष्टिभूताः पदार्थाः संसारावस्थां अप्राप्ताः पदार्थमात्राः तम् इत् तं परमात्मानमेव गर्भं सर्वलोकानामुत्पत्तिस्थानं प्रकृत्यारम्भं प्रथमं विस्तृतं दध्रे आश्रयत्वेन दध्रे दधिरे तिष्ठन्ति। यत्र परमेश्वरे देवाः दिव्यात्मानः सूर्यादय इति यावत्। समगच्छन्त = सम्यक् प्राप्नुवन्ति - सर्वे मध्यावस्थायां दृश्यमानाः स्वकारणे लयन्ति। विश्वे सर्वे पदार्थाः प्राणिनश्च अजस्य जन्मरहितस्य अनादेः ब्रह्मणः अव्यक्तस्य च नाभौ मध्ये अधिष्ठातृत्वेन सर्वोपरि विराजमानं एकं स्वयं सिद्धम् अर्पितं प्रापितं स्थितम्। यस्मिन् ब्रह्मणि विश्वानि अखिलानि भुवनानि लोकजातानि अधितस्थुः अधितिष्ठन्ति, सर्वे पदार्थाः ब्रह्मणि लीनत्वात् आदौ अव्यक्ताः ब्रह्मप्राप्तौ अपि अव्यक्ताः, मध्ये व्यक्ताः। तत्र का परिदेवना स्यादिति भावः।

आश्चर्यवदिति = बहुषु नरेषु कश्चित् नरः एनमात्मानं आश्चर्यवत् "लोके कर्तुमशक्यस्य कर्मणः करणमाश्चर्यम्" तद्वत् पश्यति निरीक्षते। तथैव अन्यः नरः पूर्वोक्तलक्षणविभिन्नः आश्चर्यवत् एव अद्भुतमिव वदति कथयति। अन्यः अपरः नरः पूर्वोक्तलक्षणविभिन्नः

आश्चर्यवदेव एनमात्मानं शृणोति। कश्चित् नरः श्रुत्वापि सहस्रधा श्रवणं कृत्वापि एनमात्मानं न वेद न जानाति ॥२९॥

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः।
तिस्रो वाचो निहिता अन्तरस्मिन् तासामेका विपपातानु घोषम् ॥अथर्व०॥४४।१

शिवा इति = हे मनुष्य! ते तव एका वार्ताः शिवाः कल्याणकारिण्यः, यथा 'शिव! शिव!' इत्याश्चर्यमय्यः सन्ति। ते तव जीवस्य एकाः वार्ताः अशिवाः अकल्याणकारिण्यः सन्ति। त्वं तस्य आत्मनः चेतनतां पश्यन्नपि आश्चर्यवत् वदसि। तथा च त्वं सर्वाः वार्ताः सुमनस्यमानः सुमन इव आचरन् "आचारार्थे कर्तुः क्यङ्" कल्याणाकल्याणकर्तृवाक्य-श्रवणेऽपि सौमनस्यं प्राप्नुवन् बिभर्षि धारयसि अर्थात् आश्चर्यवत् शृणोषि। तिस्रः वाचः वाण्यः दर्शनकथनश्रवणरूपाः इति यावत्। अस्मिन् पुरुषे अन्तः देहमध्ये निहिताः अवस्थिताः भवन्ति। तासां शिवाशिवानां वाणीनां मध्ये एका वार्ता ज्ञानरूपा घोषं सहस्रधा-श्रवणजन्यं शब्दं अनु विपपात विरुद्धाः पतिताः अर्थात् सहस्रधा श्रवणं कृत्वापि एन-मात्मानं नैव जानाति। तथा च = "उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न-शृणोत्येनाम्। उतो त्वस्मै तन्वं१ विसस्रे जायेव पत्य उशती सुवासाः ॥ऋ०१०।७१।४॥

उत इति = त्वः एकः कश्चित् वाचं वक्तारं आत्मानं पश्यन् उत मनसा पर्यालो-चयन्नपि न ददर्श जीवात्मनः तत्त्वं न पश्यति। त्वः कश्चिदेकः एनां जीवात्मनः वहनधावनभाषणश्रवणादिशक्तिं शृण्वन् कर्णाभ्यां शृण्वन्नपि न शृणोति न आकर्णयति त्वस्मै उत कस्मैचित् तत्त्वजिज्ञासवे पुरुषाय हस्तामलकवत् तत्त्वं स्वनिस्तृतशरीरा-शयं विसस्रे प्रकाशयति। जायेव = यथा सुवासाः शोभनवस्त्रा उशती पतिं कामयमाना जाया भार्या निजभर्तारमभिगच्छति ॥४॥

देहीति = हे भारत! हे अर्जुन! देही उपलब्धिस्थानत्वेन सर्वे देहाः अस्य सन्तीति देही सर्वदेहोपाधिमान् अयमात्मा सर्वस्य ब्रह्मादिस्तम्ब-पर्यन्तस्य प्राण्यप्राणिजातस्य देहे वध्यमानेऽपि नित्यं सर्वदा स्वयमव-ध्यः अहिंस्य एव भवति। तस्मात् आत्मनोऽविनश्वरत्वविज्ञानात् सर्वा-णि भीष्मादिसर्वाणि भूतानि शरीराणि 'एते म्रियन्ते' इति त्वं शोचितुं नार्हसि। एतेषु हन्यमानेषु आत्मा न नश्यति इत्यात्मनः नित्यत्व-ज्ञातृत्वमुद्दिश्य शोकं मोहं च कर्तुं नार्हसि इत्यर्थः ॥३०॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि। न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ऋ०१।८१।५॥

आ पप्राविति = हे इन्द्र! हे आत्मन्! त्वं स्वव्याप्त्या पार्थिवं

पृथिव्याः सम्बन्धि रजः रजत्यस्मिन् इन्द्रिययूथमिति रजः लोकः, "लोकाः रजांसीत्युच्यते"। पार्थिवं लोकं देहम् आपप्रौ आपूरयसि आपूरितवानसि। देहस्य स्वामी इन्द्रः आत्मा इति भावः। तथा दिवि अन्तरिक्षे हृदयाकाशे रोचना रोचमानानि स्थानानि बद्बधे बबंध स्थापितवानसि इति भावः। बद्बधे = बन्ध बन्धने, लिटि व्यत्ययेन हलादिशेषाभावः। हे आत्मन्! त्वावान् त्वत्सदृशः "युष्मदस्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्" इति वतुप्। "आ सर्वनाम्नः" इत्यात्वम्। अन्यः कश्चन कोऽपि पदार्थः न जातः न उत्पन्नः अतः त्वमजोऽसि तथा न जनिष्यसे उत्पत्स्यमानोऽपि नास्ति। यदात्मनो मृत्युर्नास्ति तदा उत्पत्तिः कथं स्यात् इति भावः। तादृशः त्वं विश्वं सर्वं रक्षितव्यं जगत् अति ववक्षिथ अतिशयेन वोढुं इच्छसि सर्वेषां देहानां वाहकोऽसि। अतोऽयमात्मा अजः, नित्य एवमात्मा इति बोद्धव्यम्॥५॥

स्वधर्ममिति = "युद्धं स्वधर्मो नृपतेः" इत्यादिशास्त्रोक्तं क्षत्रियस्य कर्तव्यत्वेन विहितं धर्मं च तु अवेक्ष्य स्वबुद्ध्या विचार्य त्वं विकम्पितुं स्वधर्माद्विचलितुं नार्हसि स्वधर्मं त्यक्तुं नार्हसि इति भावः। धर्म्यात् धर्मशास्त्रात् आगतं धर्म्यं कर्तव्यत्वेन विहितं तस्मात् युद्धात् अन्यत् अपरं श्रेयः कल्याणकरं साधनं यद्वा श्रेयः कल्याणं न विद्यते नास्ति॥ ३१॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥३१॥

युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः। व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान॥ ऋ० ७।२०।३॥

युध्म इति = युध्मः योद्धा क्षत्रियः अनर्वा युद्धेषु अपराङ्मुखः खजकृत् युद्धकृत् "खल खजे" इति युद्धनामसु पाठात्। समद्वा समत् कलहः तद्वान् इत्यत्र समच्छब्दात् मतुप् प्रत्ययः। शूरः शौर्योपेतः जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनाम् अभिभविता। अषाळ्हः = स्वयं केनापि अनभिभूतः। स्वोजाः सुबलः, ईम् = अयम् इन्द्रः आत्मा क्षत्रियात्मा इति भावः। पृतनाः शत्रूणां सेनाः व्यास = विक्षिपति पराभवति इति भावः। अधा = अपि च शत्रूयन्तं शात्रवमाचरन्तं विश्वं सर्वं शत्रुमण्डलं जघान हन्ति।

एतदर्थप्रतिपादकः मन्त्रः = "ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन्" ... "व्रतेन स्थो ध्रुवक्षेमा धर्मणा यातयज्जना। नि बर्हिषि सदतं सोमपीतये" ऋ० ५।७२।२॥

व्रतेनेति = क्षत्रियाणां तथा कृष्ण समरे देहपातनम्। अधर्मः क्षत्रियस्यैष शय्यायां मरणं भवेत्॥२॥ विसृजन् श्लेष्ममूत्राणि कृपणं परिदेवनम्॥ महाभा० शान्तिपर्व ९७।२३॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति। क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः॥ महाभा० शान्तिपर्व ९७।२४॥

"न गृहे मरणं तात क्षत्रियाणां प्रशस्यते। शौण्डीर्याणामशौण्डीर्यमधर्म्यं कृपणं च तत्॥ महा० शान्ति० ९७।२५॥ संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम्। न निवर्तेत संग्रामात् क्षात्रं धर्ममनुस्मरन्॥ धर्मलाभोऽर्थलाभश्च यशोलाभस्तथैव च। यः शूरो वध्यते युद्धे विमर्दन् परवाहिनीम्॥ "यां यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणो यत्र न वै प्रयान्ति। क्षणेन तामेव गतिं प्रयान्ति महाहवे स्वं तनुं संत्यजन्तः"॥

यदृच्छयेति = हे पार्थ! हे पृथायाः पुत्र! हे अर्जुन! यदृच्छया यत्नं बिना अकस्मादेवेति यावत्। उपपन्नम् = प्राप्तम्। अपावृतम् = उद्घाटितकपाटं स्वर्गद्वारं स्वर्गप्राप्तिद्वारभूतं ईदृशं युद्धं सुखिनः पुण्यात्मानः धन्या इति यावत्। क्षत्रियाः क्षात्रधर्मोपपन्नाः पुण्येन लभन्ते॥३२॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।

सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम्॥३२॥

ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः। ये वा सहस्रदक्षिणा-स्तांश्चिदेवापि गच्छतात्॥ अथ० १८।२।१७॥ ऋ० १०।१५४।३॥ तैत्ति० आर० ६।३।१॥ ये इति = प्रधनेषु प्रकीर्णानि अस्मिन् धनानि भवन्ति इति प्रधनाः संग्रामाः तेषु प्रधनेषु संग्रामेषु शूरासः शौर्यवन्तः योद्धारः ये युध्यन्ते शत्रुभिः सह युद्धं कुर्वन्ति शत्रून् संप्रहरन्तीति भावः। ये च शूराः क्षत्रियाः तनूत्यजः तत्र युद्धे स्वशरीराणां त्यक्तारो भवन्ति। ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः, तान् सर्वान् एव हे शूर क्षत्रिय! त्वमपि गच्छतात् गच्छ। येषु उत्तमेषु लोकेषु ते निवसन्ति तान् लोकान् त्वं प्राप्नुहि इत्यर्थः॥ "यं यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणो वा च यथैव यान्ति। क्षणेन यान्त्येव हि तत्र धीराः प्राणान् सुयुद्धेन परित्यजन्तः"॥ पराशरस्मृतिः ३।३६॥

अथ चेदिति = अथ अधुना युद्धसन्नाहसमनन्तरं त्वम् इमं धर्म्यं धर्मत्वेन दृष्टं धर्मादनपेतमित्यर्थः संग्रामं न करिष्यसि चेत् ततः तदकरणेन स्वधर्मं ~~धर्मत्वेन दृष्टं धर्मादनपेतमित्यर्थः~~ स्वस्य धर्मं कीर्तिं यशः हित्वा त्यक्त्वा पापम् अवाप्स्यसि ननु संन्यासफलमिति भावः॥३३॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।

ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥३३॥

वि दुर्गा विद्विषः पुरो घ्नन्ति राजान एषाम्। नयन्ति दुरिता तिरः। ऋ० १।४१।३॥ वि दुर्गा इति = राजानः क्षत्रियाः एषां युद्धस्थ सेनापतीनां पुरः पुरस्तात् दुर्गा दुर्गाणि कठोराणि शस्त्राणि विघ्नन्ति विशेषेण नाशयन्ति, तथा द्विषः शत्रून् अपि विघ्नन्ति विशेषेण नाशयन्ति। तथा दुरिता दुरितानि स्वधर्मपरित्यागापकीर्तिरूपाणि दुरितानि दुर्गमनानि अस्त्राणि क्लेशान् वा तिरो नयन्ति विनाशं प्रापयन्ति। एवंभूत-युद्धाकरणे स्वधर्मपरित्यागजनितापकीर्तिर्भवतीति भावः। दुर्गा = दुःखेन गच्छन्त्यत्र

दुर्गाणि – "सुदुरोरधिकरणे" इति गमेर्डप्रत्ययः। 'श्रोश्छन्दसि बहुलम्'
इति शेर्लोपः। पुरः पूर्वशब्दात् सप्तम्यर्थे "पूर्वाऽधरावराणाम्" इत्यसि –
प्रत्ययः तत्संनियोगे पूर्वशब्दस्य पुरादेशश्च। घ्नन्ति = हन्तेरदादित्वाच्छपो लुक्।
"गमहन" इत्यादिना उपधालोपः "हो हन्तेः" पाणि० ७।३।५४॥ इति घत्वम्।
अकीर्तिमिति = भूतानि सर्वत्र सर्वजनाः ते तव अव्ययां चिरकालस्थायिनीम् अकीर्तिं स्वधर्म-
त्यागजनितापयशः कथयिष्यन्ति। संभावितस्य सर्वत्र सर्वैः जनैः ईडितस्य अकीर्तिः
अपयशः च तु मरणात् मृत्योः अतिरिच्यते अधिका भवति ॥३४॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिः मरणादतिरिच्यते ॥३४॥

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु। मायेत्सा ते यानि युद्धान्या-
हुर्नाद्य शत्रुं ननु पुरा विवित्से ॥ ऋ० १०।५४।२॥ शतप० ११।६।१।१०॥

यदचर इति = हे इन्द्र! हे क्षत्रियात्मन्! तन्वा स्वशूरतामयेन शरीरेण वावृधानः
कीर्त्यादिभिः वृद्धिं प्राप्नुवन् जनेषु प्राणिषु बलानि स्वसामर्थ्यानि प्रब्रुवाणः प्रकर्षेण
कथयन् यत् संग्रामं अचरः त्वं कृतवान्। ते तव सा कीर्तिः माया इत् वृथा एव, किञ्च यानि
युद्धानि शत्रुभिः सह कृतानि युद्धानि आहुः ब्रुवते पुराविदः राजानः तानि अपि माया एव वृथैव।
यतः संप्रति युद्धे भवान् युद्धं न कुरुते। अद्य इदानीं शत्रुं हन्तव्यं शत्रुं न विवित्से न ज्ञातु-
मिच्छसि। ननु इति प्रश्ने। किं पुरा पूर्वस्मिन् काले शत्रुम् अलभथाः तदपि नेत्यर्थः। यतः
संप्रति युद्धात् उपरमसेऽतः पूर्वोपार्जिता कीर्तिरपि नंक्ष्यतीति शेयम् ।२।
भयादिति = महारथाः द्रुपदभगदत्तादयः शूराः भयात् भयेन हेतुना रणात् युद्धात्
उपरतं दूरीभूतं त्वां मंस्यन्ते निश्चेष्यन्ति। येषां महारथानां त्वं बहुमतः शौर्यादिभि-
र्गुणैरुत्कृष्टः इति बहुमानं गमितः 'रणभयात् पलायते' इति लाघवं लघुत्वं अवमतिं
यास्यसि प्राप्स्यसि ॥३५॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै। उदस्तभ्नाः पृथिवीं द्याम-
भीके भ्रातुः पुत्रान् मघवन् तित्विषाणः ॥ ऋ० १०।५५।१॥

दूरे इति = हे मघवन्! हे बलवन्! मघमिति धननाम। हे धनबल! हे क्षत्रियात्मन्!
यत् यदा भीते भीतानि 'वचनव्यत्ययः' भययुतानि सर्वाणि भूतजातानि त्वत्तो निक-
न्दानि वयोधै स्वायुषः रक्षणाय जीवनधारणाय वा त्वा त्वां क्षत्रियात्मानं अह्वये-
ताम् आह्वयन्ति। तदानीं त्वं तेनैव शरीरेण अभीके 'अभीकमिति' स्वसमीपे एव
पृथिवीं द्यां पृथिवीवासिनः जीवान् अन्तरिक्षवासिनः वायुयानस्थान् जीवांश्च भ्रातुः पुत्रान्
सर्वजीवाः आत्मत्वेन तव भ्रातर एव सन्ति अतः सर्वान् भ्रातुः पुत्रान् स्वजीवान् तित्वि-
षाणः दीपयन् उत्सुकान् कुर्वन् उत ऊर्ध्वं सर्वानूर्ध्वत्वेन अस्तभ्नाः स्तम्भितवान्
असि। संप्रति तत् ते नाम पराचैः "त्वं भीतोऽसि, अतः रणात् उपरतः" इति त्वत्तः

II



पराङ्मुखैः योद्धृभिः गुह्यं गुप्तं केनचिदप्यप्रकाशनीयमिति विचार्य दूरे विप्रकृष्टे भविष्यति। कस्यापि मुखे तव नाम कीर्तित्वेन ख्यापनीयं न भविष्यति॥३५॥

अवाच्यवादानिति = अहिताः दुर्योधनकर्णादयः शत्रवः तव सामर्थ्यं पौरुषं बलं वा निन्दन्तः रणात् पलायितवन्तः तव शौर्यं किमिति कुत्सयन्तः सन्तः अवाच्यवादान् वक्तुमनर्हान् अवाच्यान् वादान् धिक्शब्दपूर्वकान् बहून् अनेकधा दूषणशब्दान् इतो वदिष्यन्ति। ततः मर्मघातिभ्यो दूषणवचनेभ्यः दुःखतरं क्षत्रियस्य अभिमानिनः शूरस्य किं नु किमस्ति। ३६।

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्॥ ३६॥

या शशाप शपनेन याऽघं मूरमादधे। या रसस्य हरणाय जातमारेभे तोकमत्तु सा॥ अथ० १।२८।३॥

या इति = या क्षत्रियजनता त्वां शपनेन नाशहेतुभूतेन परुषवाक्येन अवाच्यवादेनेति भावः। शशाप शापं अवाच्यवादं कृतवती। शपनेन = शप आक्रोशे, करणे ल्युट्। या क्षत्रियजनता मूरं त्वदीयं मूर्च्छाकरम् अघं पलायनरूपं पापं, मूरं मूर्च्छा मोहसमुच्छ्राययोः, 'क्विप् च' इति क्विप्। 'राल्लोपः' इति छकारस्य लोपः। आदधे परिजग्राह। याऽपरा क्षत्रियजनता जातम् उत्पन्नं त्वदुत्पन्नं बलं रसस्य शरीरगतस्य बलतत्त्वस्य हरणाय पानकरणाय विनाशनायेति भावः। आरेभे उपचक्रमे। सा सकला क्षत्रियजनता तोकम् = अपत्यं स्वोत्पन्नं बलापत्यं अत्तु भक्षयतु न च त्वत्सामर्थ्यमिति भावः।

हतो वेति = युद्धे कर्णादिभिः हतः त्वं स्वर्गं प्राप्स्यसि। जित्वा शत्रून् विजित्य वा महीं निष्कण्टकं महीराज्यं भोक्ष्यसे। यस्मात् उभयथा [illegible] युद्धं सफलमेव, तस्मात् कारणात् युद्धाय एव कृतनिश्चयः सन् हे कौन्तेय! हे अर्जुन! उत्तिष्ठ सन्नद्धो भव। ३७।

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयः॥ ३७॥

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्॥ ऋ० ४।४।५॥ यजु० १३।१३॥

ऊर्ध्व इति = हे अग्ने! हे राजन्! ऊर्ध्वो भव शत्रुहननार्थम् उद्युक्तो भव, ऊर्ध्वः तिष्ठ इत्यर्थः। स्थित्वा प्रतिविध्य हन्तृन् शत्रून् प्रति ताडय युद्धात् शान्तो मा भव। अध्यस्मत् अस्मत्तोऽपि अधिकं दैव्यानि दिव्यकर्माणि दिव्यतेजांसि वा आविष्कृणुष्व आविष्कुरु प्रकाशीकुरुष्व इत्यर्थः। यातुजूनां यातयितुं प्राणिनः क्लेशयितुं जवं जवनं कुर्वन्ति। तेषां यातुधानानां जवनप्रधानानां शत्रूणां स्थिराणि स्थिराणि दृढानि शस्त्राणि अवतनुहि अवतारय विनाशय इति भावः। जामिः बन्धुः अजामिः बन्धुव्यतिरिक्तः तथाभूतान् भ्रातृन् शत्रून् ~~प्रमृणीहि अहितान् प्रहतोऽस्यमित्र~~ बन्धुभिन्नान् शत्रून् च प्रमृणीहि प्रमारय।

मृङ् प्राणत्यागे। यद्वा जामिं यः प्रहृतः तम् अजामिं पूर्वमपहृतः
तमेवंभूतान् शत्रून् प्रमृणीहि जहि। प्रहृतोऽयमित्युपेक्षां मा कृथाः।
यातुजूनाम् = जु गतौ, "क्विब्वचि" इत्यादिना क्विप् दीर्घौ। आभि
छन्दसो नुम्। तथा च = "अभिवृत्य सपत्नान् अभि या नो अरातयः अभि-
पृतन्यन्तं तिष्ठाभि यो नो इरस्यति" । ऋ० १०।१७४।२॥
अभिवृत्येति = पुरोहितः राजानमुपदिशति = याः यावन्मात्राः नः अस्माकं
राज्यस्य अरातयः कुटिलाः शत्रवः उत्थिताः सन्ति तान् सपत्नान् युद्धे
उपस्थितान् सकलान् शत्रून् अभिवृत्य पराभूय अभितिष्ठ* युद्धाय संमुखे
तिष्ठ, भयं मा कुरु॥२॥
सुखदुःखे इति = लाभजययोः फलं सुखम्। अलाभस्य अजयस्य च फलं दुःखम्
ते लाभजयजन्यसुखालाभाजयजन्यदुःखे समे तुल्ये कृत्वा समबुद्धिः
भूत्वा स्थितः, ततस्तदनन्तरं युद्धाय स्वधर्मानुष्ठानाय युज्यस्व यतस्व।
एवं प्रकारेण त्वं पापं न अवाप्स्यसि॥३८॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥३८॥

शेरभक[1] शेरभ[2] पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः। यस्य स्थ
तमत्त यो वः प्राहैत् तमत्त स्वा मांसान्यत्त[3]॥ अथ० २।२४।१॥
शेरभक इति = हे शेरभक! स्वाश्रितानां सुखस्य प्रापक! हे शेरभ! हे -
सर्वेषां हिंसक! वः युष्मदीयः यातवः राक्षसीयानां विचाराः पुनः यन्तु भूयः भूयः
निःसरन्तु अपगच्छन्तु इत्यर्थः। त्वयि तज्जन्यं दुःखं मा भवतु। तथा हेतिः हनन-
साधनं युष्मदीयं आयुधजातं पुनर्यन्तु स्वक्षत्रियधर्मपरिपालनाय प्रतिनिवर्तताम्।
त्वद्युद्धविचाराः पुनरागच्छन्तु। आयुधादिघातजन्यपापेभ्यस्तव निवृत्ति -
रस्तु इति भावः। किमीदिनः = किमिदानीं वर्तते, किमिदं किमिदं वा इति किमीदिनः
अनुचराः त्वदनुगमनशालिनः सदसद्विचाराः सुखदुःखादिरूपाः पुनर्यन्तु प्रतिनिवर्तन्ताम्।
यस्य स्थ = यस्य कर्तव्यस्य सुखदुःखरूपस्य समीपे स्थ भवथ तं विचारम् अत्त =
भक्षयत विनाशयतेति भावः। यः सुखदुःखमयविचारः वः युष्माकं पार्श्वे प्राहैत् =
शत्रुभिः प्रेषितः तं भयात्मकं विचारमपि अत्त भक्षयत विनाशयत दूरीकुरुत इति भावः।
स्वा = स्वानि स्वकीयानि मांसानि सुखदुःखस्वरूपमांसानि अत्त भक्षयत अर्थात् सुखदुःखयोः
समो भूत्वा स्वकर्तव्याय युद्धाय आत्मानं युज्यस्व ततः क्षत्रियधर्मत्वात् पापरहितोऽसि
त्वमिति भावः।

---

(१) शेरभक = शेते रमते भजते कते शयनारंभभजनगत्यर्थकधातूनामादीन्
वर्णानादाय शेरभकः सिध्यति।
(२) शेरभ = शॄ हिंसायाम्, भा दीप्तौ धातुभ्यां शेरभशब्दसिद्धिः।
(३) मांसानि = मांसं माननं वा मानसं वा मनो ऽस्मिन् सीदतीति।

* संमुखे स्थितो भव। यः शत्रुः नः अस्माभिः सह युद्धं
अस्मान् दुरःस्यति = दुष्टतया व्यवहारं करोति,
पृतन्यन्तं महतीं सेनामादाय आक्रमणं करोति तम् अभितिष्ठ —

II



एषा ते इति = सांख्ये सम्यक् ख्यायते पठ्यते इति संख्या पराविद्या। तया संख्यया यत् प्रतिपाद्यते इति सांख्यम् निर्विशेषं सदसद्विवेचनं तस्मिन् सांख्ये या बुद्धिः ज्ञानम् अभिहिता — "न जायते म्रियते वा कदाचित्" इत्यादिनाऽऽत्मानं विषयीकृत्य पूर्वं यत् ज्ञानं ते तुभ्यम् उपदिष्टम्, सा एषा बुद्धिः योगे कर्तव्यकर्मयोगे इमां वक्ष्यमाण-लक्षणां बुद्धिं शृणु आकर्णय। हे पार्थ! हे अर्जुन! यया बुद्ध्या युक्तः समन्वितः त्वं कर्मबन्धं "जन्ममृत्युजरादिभिः पुनः पुनः पुरुषं बध्नाति योजयतीति बन्धः, कर्मैव बन्धः कर्मबन्धः" तं प्रहास्यसि सकलकर्मभ्यो निष्क्रान्तो भविष्यसि।३९।

एषा तेऽभिहिता सांख्ये बुद्धियोगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि।३९॥

महो अर्णः सरस्वती प्रचेतयति केतुना। धियो विश्वा विराजति। निरु० ११।२७॥
ऋ० १।३।१२॥ यजु० २०।८६॥

महः इति = सरस्वती सदसद्विवेचनात्मिका एषा ज्ञानमयी वाक् — "वाग्घि सरस्वती यत् सारस्वतं शंसति, वाचमेवास्य तत् संस्करोति" इति ऐतरेयब्राह्मणे ३ प०१ अ० २ खण्डे। केतुना कर्मणा प्रवाहरूपेण विज्ञानेन वा महः महत् * अर्णः "ऋच्छतीति अर्णः" ऋ गतौ इत्यत्र असुन् प्रत्ययः। गतिः ज्ञानं भवति। अतः महत् ज्ञानं प्रचेतयति प्रज्ञापयति आविष्करोति सर्वभावेनेति भावः। एषा बुद्धिः विश्वाः सर्वाः धियः प्रज्ञानानि विराजति = विशेषेण दीपयति। एतद्विषयप्रतिपादको मन्त्रान्तरोऽप्यस्ति :—

"उ३पो२षु१ शृ२णु३ही२ गि३रो२ म२घ३वन् मा१तथा२ इव। क३दा२ नः२ सू३नृ१ता२वतः३ क२र३ इ२द३ र्थ२ या२स३ इ२द्यो३जा२ न्वि२न्द्र३ ते३ ह१री२" । साम० ४१६। ऋ० १।८२।१॥

उपोषु इति = पुरोहितोक्तिरियम् = हे मघवन्! धनिक क्षत्रियवीर! गिरः मदुक्ताः वीरोचितोपदेशात्मिकाः स्वक्षत्रियधर्मपालयित्रीः वाणीः उपो = स्वमनः मत्संनिधौ संस्थापय। सु शृणुहि = सम्यक्तया आकर्णय। अतथा इव पूर्वतः विपरीतः अर्थात् कातरः मा = मा भूः। नः अस्मान् सूनृतावतः = स्वमनोहरवीरात्मकवाणीयुतान् कदा करः करिष्यसि अर्थात् अहं युद्धे संनद्धो भूत्वा शत्रून् संहत्य पुनरेष्यामि इति मत्संनिधौ वाचं कदा वदिष्यसि। अर्थयासे इत् = मदुक्ताः वाणीः त्वं स्वीकरोषि एव, अतः हे इन्द्र! क्षत्रियवीर! ते तव हरी = स्वरथ हयौ नु = शीघ्रं इत् = एव योजय = युद्धं गन्तुं संयोजय। शृणुहि = श्रु श्रवणे। "उतश्च प्रत्ययाच्छन्दसि वा वचनम्" इति वचनात् "उतश्च प्रत्ययात्" इति हेः लुगभावः। अतथा = तथेवाचरति "तथाति सर्वप्रातिपदिकेभ्यः इत्येके" इति क्विप्। "तथेतर प्रत्ययः"। न तथा इव = अतथा इव। करः = डुकृञ् करणे। लुङि "कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः। अर्थयासे = अर्थ याच्ञायाम्। चुरादिरात्मनेपदी। लेट्याडागमः। योजा = युजिर् योगे, एयन्ताल्लोटि "छन्दस्युभयथा" इति शप्। आर्धधातुकत्वात् "णेरनिटि"

* महत् इति तकारस्य व्यत्ययेन सकारः।
मह [illegible]

इति णिलोपः। "द्व्यचोऽतस्तिङः" इति संहितायां दीर्घत्वम्।

नेहाभिक्रमेति = इह कर्मयोगे अभिक्रमनाशः, अभिक्रमः उपक्रमः कर्मणः आरम्भः तस्य नाशो नास्ति। कृष्यादौ आरब्धे सति बीजं क्वचित् फलति, क्वचिच्च न फलति, न तथेदम्, किन्तु नियमफलवद् भवति। प्रत्यवायः = संध्यादिनित्यकर्माकरणात् यत्पापं भवति स च प्रत्यवायः। परन्तु स च प्रत्यवायोऽत्र कर्मयोगे नैव भवति। अस्य भवत्या क्रियमाणस्य धर्मस्य कर्मयोगस्य स्वल्पमपि स्वल्पमात्रमपि महतो भयात् जन्ममरणदुःखभयात् त्रायते रक्षति ॥४०।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०

इयमेषाममृतानां गीः सर्वताता ये कृपणन्त रत्नम्। धियं च यज्ञं च साधन्तस्ते नो धान्तु वसव्य१मसामि ॥ ऋ० १०।७४।३॥

इयमिति = इयं सरणिः अयं कर्मयोगमार्गः एषां अमृतानां विदुषां जीवानां गीः वाक् वचनमिति यावत् अस्तीति शेषः। ये जनाः पूर्वोक्तं विद्वद्वचनं सर्वताता सर्वतातौ कर्मयज्ञे रत्नं यज्ञरत्नं कृपणन्त प्रयच्छन्ति। अर्थात् च धियं ज्ञानलक्षणं बुद्धिं यज्ञं च कर्मयज्ञं च साधन्तः साधुवन्तः कर्मयोगकर्तारः वसव्यं वसुसमूहं असामि वा नः अस्मदर्थे भगवदर्थे असामि बहु यथा स्यात्तथा धान्तु = धारयन्तु। इमं व्यवसायात्मिकेति = हे कुरुनन्दन! हे अर्जुन! ईश्वर एवास्माकं परा गतिः, इति व्यवस्थितः व्यवसायः निश्चयो यस्यां सा व्यवसायात्मिका वस्तुतत्त्वनिश्चयवती ईश्वराश्रया बुद्धिः इह मोक्षैकप्रयोजने एकैव बहिरन्तरतः सदैकरूपैव भवति। अव्यवसायिनां विवेकबुद्धिरहितानां व्यवस्थाशून्यानामेव कामिनां बुद्धयः बहुशाखाः बहुप्रकाराः, अत एव अनन्ताः भवन्तीति श्रेयस् ॥४१॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

अनुमतिः सर्वमिदं बभूव यत् तिष्ठति चरति यदु च विश्वमेजति। तस्यास्ते देवि सुमतौ स्याम अनुमते अनु हि मंससे नः ॥६॥ अथ० ७।६।२०॥

अनुमतिरिति = यत् जगत् तिष्ठति वृक्षगुल्मादिस्थावररूपेण वर्तते। यत् जगत् चरति मनुष्यपश्वादिचररूपेण वर्तते। उ = च अपि च यत् विश्वं सर्वं जगत् एजति व्यवसायात्मिकया बुद्ध्या चेष्टते। इदं सर्वं अनुमतिः परिपूर्णः ईश्वरः एक एव इति सर्वैः स्वीकृतः मतिः बुद्धिः एका एवास्ति। हे देवि! व्यवसायात्मिकप्रकाशस्वरूपबुद्धे! तस्याः ते व्यवसायात्मिकायाः एव ते तव सुमतौ एकस्यामेव व्यवसायात्मिकायां बुद्धौ स्याम भवेम। अव्यवसायात्मिकायां बुद्धौ मा भवेम। हे अनुमते! हे सर्वस्वीकृते व्यवसायात्मिके बुद्धे! हि यस्मात् कारणात् नः अस्मान् व्यवसायात्मिकबुद्धिधारकान् अनुमंससे अनुमन्यसे — "मन्यतेः पञ्चमलकारे "सिप् बहुलं लेटि" इति सिप्। अव्यवसायात्मिकबुद्धिमन्तः —

पुरुषा: ~~व्रत~~: विमुखा: वर्तन्ते ।६।

यामिमामिति = हे पार्थ! हे अर्जुन! उच्यन्ते इति वादा: वाक्यानि। वेदस्य वादा: इति वेदवादा: तेषु अर्थवादादिकाव्येषु रता: निरता: तत्रैव तात्पर्यवन्त: इत्यर्थ:। नान्यदस्तीति वादिन:। कर्म तत्फलेभ्य: साधनसाध्येभ्योऽन्यदपि कर्मफलप्रदाता ईश्वरो वा मोक्षो वा किञ्चिन्नास्तीति प्रपूर्व्यो वक्तार: वदनशीला: अविपश्चित: वेदानामुपक्रमोपसंहारयो: तात्पर्यानभिज्ञा: बहिर्मुखा: मीमांसका: पुष्पितां पुष्पै: मल्लिकालतावत् "अपाम सोममममृता अभूम" "दक्षिणावन्तोऽमृतत्वं भजन्ते" इत्याद्यर्थवाद-लक्षणै: फलशून्यै: रञ्जयन्तीम् इमां वाचं प्रवदन्ति ॥४२॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चित:।
वेदवादरता: पार्थ! नान्यदस्तीति वादिन: ॥४२॥

अदान्यान् त्सोमपान् मन्यमानो यज्ञस्य विद्वान्त्समये न धीर:। यदेनश्चकृवान् बद्ध एष तं विश्वकर्मन् प्रमुञ्चा स्वस्तये ॥३॥ अथ० २।३५।३॥

अदान्यानिति = यज्ञस्य "क्रियाग्रहणं कर्तव्यम्" इति कर्मण: संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। यज्ञस्य = यज्ञमित्यर्थ:। यज्ञं वैदिकसकामक्रियाकलापं विद्वान् जानन् धीर: धियं वेदार्थवादात्मिकां बुद्धिं राति ददाति इति धीर: = वेदार्थवादबुद्ध्युपदेष्टा सोमपान् सोमयागानुष्ठायिन: पण्डितान् अपि अदान्यान् सकामकर्मजालबद्धत्वेन अज्ञत्वारोपणेन च दानायोग्यान् ब्रह्मज्ञानदानायोग्यान् मन्यमान: स्वीकुर्वन् । तत्र दृष्टान्त: = समये न धीर:। समयन्ति संगच्छन्ते योद्धारोऽत्र इति समय: संग्राम:। तत्र धीर: इव, 'नकार: उपमार्थीय: उपरितनत्वात्'। यत् 'एन:' = आ समन्तात् इन: ईश्वर: कर्मफलप्रद: नास्ति। कर्माणि एव सुगतिं प्रयच्छन्ति इति, इत्यादि सकामकर्म मोहजालात्मकेन वेदार्थवादेन बद्ध: बन्धनं प्राप्त: एष: एन: एतद्विधं केवलं कर्म एव 'ईश्वर: नास्तीत्येवंविधं पापं चकृवान् करोति। हे विश्वकर्मन्! विश्वं कर्म करणीयं यस्य स तादृशरूप परमात्मन्! तं सकामकर्मप्रतिपादकं वेदवादरतम् अज्ञानिनं पुरुषं स्वस्तये तत्कल्याणाय प्रमुञ्च तस्मात् पापात् प्रमोचय ॥३॥

कामात्मान इति = स्वर्गपरा: स्वर्गसुखोपभोग एव परो निरतिशय: पुरुषार्थ: इति निश्चयो येषां ते स्वर्गपरा:। भोगैश्वर्यगतिं प्रति भुज्यन्ते इति भोगा: दिव्या: स्रक्चन्दनादय:, तेषां समग्रभोगाय ऐश्वर्यं स्वामित्वं तस्य गति: प्राप्ति:, तां प्रति कामात्मान: = काम: इच्छावेग: बुद्धौ येषां ते कामात्मान: विषयभोगलम्पटा:, क्रियाविशेषबहुलाम् = क्रियाविशेषा: अग्निष्टोमातिरात्रादय: फलविशेषहेतवो बहुला बहवो यया प्रतिपाद्यन्ते सा क्रियाविशेषबहुला ताम्, अत एव जन्मकर्मफलप्रदां जन्मन: प्रतिपादितकर्मणां फलानि जन्मकर्मफलानि अनुष्ठातृभ्य: प्रददातीति जन्मकर्मफलप्रदां तां वाचं वदन्ति इति पूर्वेणान्वय:।४३

कामात्मान: स्वर्गपरा: जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥

यज्ञपतिमृषय एनसाहुर्निर्भक्तं प्रजा अनुतप्यमानम्। मथव्यान् स्तोकानप यान् रराध सं नष्टेभिः सृजतु विश्वकर्मा ॥ अथ० २।३५।२॥

यज्ञपतिमिति = ऋषयः अतीन्द्रियार्थदर्शिनः वेदस्य वास्तविकतत्वज्ञातारः तत्वज्ञानिन इति यावत्। यज्ञपतिं ज्योतिष्टोमातिरात्रादियज्ञानां पालकं यजमानम्। एनसा = 'इत्थंभावे तृतीया' एनसा युक्तम् एनस्विनं पापकर्तारमाहुः कथयन्ति। यतस्ते सर्वे सकामकर्मकर्तृत्वेन विषयभोगलम्पटा वर्तन्ते। प्रजाः अस्य यागवैकल्य-निमित्तेन एनसा परितप्यमानाः प्रजाः निर्भक्तं निर्भोगं दौर्गत्ययुक्तं परमात्म-भक्तिभावशून्यम्। अनुतप्यमानम् = जगति भूयो भूयो जन्ममरणभावेन दुःखिनं यज्ञपतिं सकामयज्ञकर्तारं यजमानम् एनसा = एनसा युक्तमाहुः। अथ च मथव्यान् मन्थनयोग्यान् परमात्मविज्ञानलवान् यान् [illegible] स्तोकान् स्तोकमात्रानपि अपरराद्ध = अपराद्धवान् = सेवितवान्। विश्वकर्मा विश्वमेव कर्म यस्य तथाभूतः विश्वकर्मा परमात्मा तेभिः स्तोकैः ज्ञानलवैः नः अस्मान् यज्ञपतिं संसृजतु संयोजयतु। येन यज्ञकर्ता सकामयज्ञान् त्यक्त्वा ज्ञानयज्ञं कुर्यात् येन मुक्तो भवेत् - इत्यर्थः ॥२॥

भोगैश्वर्येति = तया कर्मकाण्डलक्षणया वाचा अपहृतचेतसाम् अपहृतं तिरोभावितं चेतः कार्याकार्यविवेकज्ञानं येषां तेऽपहृतचेतसः विषयैः भ्रान्तबुद्धयः तेषां भोगैश्वर्यप्रसक्तानां भोग्यपदार्थजन्यसुखलम्पटानां समाधौ समाधीयते पुरुषो विषयेषु अनेन इति समाधिः यद्वा वासनात्मना जगत् सर्वं समाधीयते पुरुषेण अस्मिन्निति समाधिः अन्तःकरणं तस्मिन् समाधौ व्यवसायात्मिका निश्चयात्मिका बुद्धिः कर्मयोगबुद्धिः न विधीयते न - प्रवेश्यते ॥४४॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः। या तेषां भवया दुरिष्टिः स्विष्टिं नस्तां कृणवद् विश्वकर्मा॥ अथ० २।३५।१॥

ये इति = ये वयं वसूनि लौकिकभोग्यपदार्थान् भक्षयन्तः अयागार्थेन व्ययेन नाशयन्तः न आनृधुः = समृद्धा न अभूम। यद्वा ये वयं "भक्षयन्तो न" उपमार्थीयः नकारः। लौकिकभोग्यपदार्थान् अदन्त इव आनृधुः वर्धितवन्तः। लौकिकपदार्थविषयभोगेन वृद्धाः स्म, न तु अलौकिकपरमात्मज्ञानतत्वेनेति। "ऋधु वृद्धौ" अस्मात् लिटि द्विवचने "अत आदेः" इत्यभ्यासदीर्घत्वे "तस्मान्नुड् द्विहलः" इत्यत्र ऋकारैकदेशस्य रेफस्य हल्ग्रहणेन ग्रहणात् द्विहल्त्वेन नुडागमः। धिष्ण्याः = धिष्ण्येषु स्थानेषु स्थिताः अग्नयः आहव-नीयाद्याः अन्तःकरणशुद्धिपूर्वकपरमपदप्राप्तिकारकाः यान् सकामकर्मकर्तॄन् भोगविषय-लम्पटान् उद्दिश्य अन्वतप्यन्त अनुतापं कुर्वन्ति। यागादौ सकामकर्मकर्तृत्वेन यागवैकल्यात् तेषां धनवतां जन्म व्यर्थम्, अहो शोच्या एते इति। एवम् अयष्टारः -

दुरिष्टारश्च, तेषां द्विविधानां अस्माकं या अवया अवयजनं यागानुष्ठानं दुरिष्टिः दुर्यागश्च स्वर्गादिकामनया यज्ञविधानम् अस्ति। विश्वकर्मा परमात्मा ताम् अनिष्ट दुरिष्टिदोषपरिहारार्थं कृतां स्विष्टिं शोभनाम् इष्टिं परमात्मतत्त्वविवेकयज्ञं नः अस्मदर्थं कृणवत् करोतु। अवया: "अवे: यज:" इति ण्विनि कृते "अवयाःश्वेतवाः" इति निपातितः।

**त्रैगुण्येति** = सत्वरजस्तमांसि इति त्रिविधा: गुणा: रागद्वेषलोभमोहादयः, तेषां तत्कार्याणां तत्फलानां च समाहार स्त्रैगुण्यं संसारः। स एव विषयो गोचरो येषां ते त्रैगुण्यविषयाः वेदा इत्युच्यन्ते। हे अर्जुन! त्वं निस्त्रैगुण्यः त्रिगुणातीतः प्ररोचनश्रुतिभ्यः निष्क्रान्तो भव। **निर्द्वन्द्वः** = द्वन्द्वे नामरूपे सुखदुःखे, रागद्वेषौ तन्निर्गतो भव। नित्यसत्वस्थ: सतो भाव: सत्वं "सदेव सोम्येदमग्र आसीत्", "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्युक्तेः सत्वं ब्रह्म ब्रह्मस्वरूपं नित्यं, नित्यं यत्सत्वं तस्मिन्नेव तिष्ठतीति नित्यसत्वस्थ:। एवंविधस्त्वं भव। आत्मवान्=आत्मब्रह्माकारबुद्धिः, सदा सैवास्यास्तीति आत्मवान् भव ॥४५॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

तिस्रो देष्ट्राय निर्ऋती रुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः। तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥ ऋ० १०।११४।२ ॥

तिस्र इति = निर्ऋतीः निःशेषेण ऋच्छन्ति गच्छन्ति प्रतिजीवं प्रतिवस्तु वा इति निर्ऋतीः गुणाः, यद्वा नियता ऋतिः घृणा संसारविरक्तानां यत्र सा निर्ऋतिः। ताः तिस्रः सृष्टिस्थिति-संहृतीः = सृष्टिः रजोगुणस्य, स्थितिः सत्वगुणस्य, संहृतिः तमोगुणस्य ज्ञात्री अस्ति। देष्ट्राय: = अतः सत्वरजस्तमांसि आत्मनः कर्मभोगदानाय उपासते ये जीवा इति शेषः। ते पुरुषाः दीर्घश्रुतः = संसारे दीर्घकालं यावत् परेषां वचनानि श्रृण्वन्तः मन्तव्य द्रष्टव्यादि पदार्थं जानन्तः ईश्वरस्य वास्तविकतत्त्वज्ञानादि रूपमजानन्तः इत्यर्थः। अत एव वह्नयः गुणमय्याः संसारवासनायाः वोढारः विजानन्ति विगततत्त्वविज्ञाना भवन्ति। कवयः क्रान्तदर्शिनः तत्त्वज्ञानिनः तासां सृष्ट्यादीनां गुणसंहृतीनां वा निदानं वास्तविककारणं निर्गुणब्रह्मतत्त्वस्वरूपञ्च निचिक्युः नितरां चिन्वन्ति जानन्ति। परेषु उत्कृष्टेषु गुह्येषु गोपनीयेषु कर्मसु व्रतेषु यमनियमादिव्रतेषु या: प्रवृत्तयः सन्ति तासां निदानं निचिक्युः जानन्ति। निचिक्युः = "चिञ् चयने", लिटि "विभाषाचेः" इत्यभ्यासादुत्तरस्य कवर्गादेशः। यद्वा = चायतेः लिटि "चायः की" इति छन्दसि कीत्यादेशः ॥२॥

यावानिति = यावान् यावत्परिमाणकः अर्थः प्रयोजनं सर्वतः संप्लुतोदके अभितः गतिशीलं उदकं यत्र, यद्वा सर्वतः संप्लुतं परिपूर्णम् उदकं यत्र, सर्वतः संप्लुतोदके अक्षीणजले इत्यर्थः। एवंविधे उदपाने "उदमुदकं पिबन्ति अस्मिन् इति उदपानं जलाशयः तस्मिन्तिष्ठति। विजानतः विज्ञानिनः ब्राह्मणस्य ब्रह्मविदः यतः सर्वेषु वेदेषु ऋग्यादि चतुर्षु वेदेषु तावान् तावत्परिमाणकः अर्थः प्रयोजनं भवति। तथापि मुमुक्षुनिमित्ते मोक्षोपयोगिवचनानि उपादेयानि भवन्त्येव ॥४६॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥४६॥

वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥ यजु० १९।७८॥

वेदेनेति = प्रजापतिः प्रजायाः पतिः "प्रकर्षेण जायते भीतः अस्यामिति प्रजा" तस्याः पतिः प्रजापतिः जीवात्मा ऋतेन सत्येन वेदेन ऋग्गादिवेदचतुष्टयेन सुतासुतौ प्रेरिताप्रेरितौ धर्माधर्मौ रूपौ सत्यानृतस्वरूपे व्यपिबत् विशेषेण गृह्णाति। तथा वेदेन ऋग्गादिवेदचतुष्टयहेतुभूतेन। इन्द्रस्य आत्मनः सत्यं सत्यधर्माद्याचरणं अन्धसः ज्ञानात्मकस्य अन्नादेः विपानं विविधपाननिमित्तं शुक्रं ब्रह्मात्मकं बलं सत्वगुणो वा इन्द्रियम् - इन्द्रः आत्मा स येन ईयते नीयते इतीन्द्रियं चक्षुरादिकं ज्ञानकर्मसाधनम् इदं जलम् "इदमित्युदकनाम" निघ० १।१२॥ पयः दुग्धं तद्‌गुणं वा अमृतं मुक्तिं अमृतपदमिति वाच्यम् "वेदैश्च सर्वै रहमेव वेद्यः" इति। मधु माधुर्यादिगुणोपेतं विज्ञानञ्च व्यपिबत् गृह्णीयात्॥ ७८॥

कर्मणीति = ते तव अर्जुनस्य श्रुतिस्मृतिविहिते नित्ये नैमित्तिके च कर्मणि एव अधिकारः अस्ति योग्यता अस्ति नान्यत्र कर्मसंन्यासे। तत्फलेषु कदाचन मा तेऽधिकारः। कर्मफलहेतुः = कर्मणां फलेषु अपेक्षितेषु सत्सु स्वर्गकामी स्वर्गफलहेतुरिव त्वमेतत्कर्मफलहेतुः मा भूः। कर्मफलेषु अपेक्षावान् मा भव इत्यर्थः। अकर्मणि = अकर्म कर्मव्यतिरेकः क्रियात्याग इति यावत्। तस्मिन् कर्मणि ते तव संगः मनः सक्तिः माऽस्तु अकरणे प्रत्यवायः तेन नरको दुर्गतिश्च स्यात्॥४७॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूः मा ते संगोऽस्त्वकर्मणि॥४७॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ यजु० ४०।२॥

कुर्वन्नेवेति = नरः इह अस्मिन् जगति कर्माणि नित्यनैमित्तिकनिष्कामकर्माणि कुर्वन् एव विद्वान् एव शतं समाः इत्युपलक्षणार्थं यावदायुःपर्यवसानमित्यर्थः। जिजीविषेत् = जीवनमिच्छेत्। एवमुक्तप्रकारेण मुक्तिनिमित्तं निष्कामकर्मकरणेन त्वयि नरे पुरुषे कर्म - नित्यनैमित्तिकस्वाभाविकधर्मः न लिप्यते - त्वयि कर्मजन्यबन्धनं कदापि न भविष्यति। इतः एवंविधप्रकारात् अन्यथा प्रकारान्तरं नास्ति। अतः कर्मफलं विहाय भगवदर्पणं कर्मकरणं सर्वथा श्रेयस्करम् न तु क्रियात्यागः श्रेयस्करो भवति॥२॥

योगस्थ इति = हे धनञ्जय! हे अर्जुन! "निर्दोषं हि समं ब्रह्म" समस्य भावः समत्वम् तदेव ज्ञानेन युज्यते प्राप्यते इति योगः इत्युच्यते इति कथ्यते। योगस्थः योगे ब्रह्मणि तिष्ठतीति योगस्थः मोक्षैककामः सन् त्वं संगं "एतैः कर्मभिः मम दुरितक्षयोऽस्तु इत्यादि संगः कामः तं त्यक्त्वा सिद्ध्यसिद्ध्योः कार्यफलप्राप्तिः सिद्धिः कार्यफलाप्राप्तिः असिद्धिः तयोः समः हर्षविषादशून्यो भूत्वा कर्माणि क्लेशात्मकानि अपि विहिता -

नीति कुरु विधेहि ॥४८॥

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ ऋ० १०।७१।२॥

सक्तुमिवेति = यत्र यस्मिन् काले धीराः धीमन्तः विवेकिनः पुरुषाः तितउना = शूर्पेण सक्तुमिव धान्यविशेषमिव पुनन्तः शोधयन्तः भ्रष्टयवान् पृथक् कुर्वन्तः एवं निष्कामकर्म द्वारा कर्मफलसंगं पृथक् कुर्वन्तः ज्ञानिनः जनाः मनसा शुद्धसंकल्पेन प्रज्ञया वा वाचं वाक्कर्माणि अक्रत कुर्वन्ति। अत्र एतस्मिन् समये सखायः समानख्यानाः शास्त्रप्रतिपादितसमत्वविषयज्ञानाः सख्यानि तेषु भवानि ज्ञानानि कर्माणि वा जानते जानन्ति। यद्वा सखायः = वाचा मिथः बद्धसख्याः सर्वैः समं समत्वमापन्नाः सख्यानि समत्ववाक्ययुक्तान् अभ्युदयान् लभन्ते इत्यर्थः। तस्मात् एषां समत्वयोगे विचरतां जनानां वाचि वाक्शक्तौ भद्रा कल्याणस्वरूपा लक्ष्मीः सम्पत् निहिता स्थिताऽस्ति।२।

दूरेणेति = हे धनंजय! हे अर्जुन! बुद्धियोगात् निष्कामकर्मयोगात् ज्ञानयोगादिति यावत्। कर्म सकामकर्म दूरेण अत्यर्थं हि निश्चयेन अवरं निकृष्टमस्ति। फलहेतवः कर्मजन्यफलस्य स्वर्गस्य सुखस्य वा ऐहिकस्य हेतवः कर्मफलप्रार्थिनः कामिनः ये सन्ति ते एव कृपणाः अधमाः नीचाः सन्ति। तस्मात् बुद्धौ सांख्यबुद्धौ चित्तप्रसादासादितज्ञानसंयोगे एव शरणं वासं मनसा अन्विच्छ तत्रैव मनः स्थापय ॥४९॥ "सर्वान् जनपदान् जित्वा वित्तमाश्रित्य केवलम्। मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्" ॥ महाभा० पर्व ४। अध्या० ४२ श्लो० १३॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥ ऋ० १०।७१।६॥ ऐत० आ० ३।१०॥ तैत्ति० आ० १,३,१,२,२५,१॥

य इति = यः पुरुषः सचिविदम् = योऽध्येता स वेदस्य सखा तं वेदाभ्यासिनं वेत्ति इति सचिवित् तं सचिविदं वेदाभ्यासिनं ज्ञानिनं सखायं सखिभूतं वेदं वा वेदप्रतिपादितं ज्ञानं तित्याज तत्याज, सकामकर्म विधत्ते, निष्कामकर्म त्यजतीत्यर्थः। तस्य पुरुषस्य वाचि लौकिक्यां शास्त्रीयायां वाण्यामपि भागः भजनीयः कश्चित् अर्थः नास्ति। ईम् अयं लौकिकोपभोगलोलुपः पुरुषः यत् वेदव्यतिरिक्तं लौकिकं कर्म शृणोति सुखसाधनभूतं श्रवणं कुरुते, तद् अलकम् अलीकं व्यर्थमेव शृणोति। हि यस्मात् कारणात् सुकृतस्य सुकर्मणः ज्ञानमार्गस्य पन्थाम् पन्थानं न प्रवेद। फलहेतुत्वेन कृपणत्वात् श्रद्धाराहित्याच्च ज्ञानानुष्ठानमार्गं न जानाति तस्मात्

तस्य वेदादि सच्छास्त्र श्रवणमपि व्यर्थमेव ।ह। "को दरिद्रः विशालतृष्णः" स्वा० शंकराचार्यः। "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति, स कृपणोऽथ यो वा एतदक्षरं विदित्वा अस्माल्लोकात् स स ब्राह्मणः॥ बृह० उप० ब्रा० ८ श्रु० १०॥

बुद्धियुक्त इति = बुद्धियुक्तः बुद्ध्या निष्कामकर्मबुद्ध्या यद्वा ज्ञानबुद्ध्या युक्तः मिलितः निष्कामकर्मणां कर्त्ता इत्यर्थः। उभे सुकृतदुष्कृते नानायोनि संस्कारजन्य-पुण्यपापे जहाति परित्यजति। तस्मात् कारणात् त्वं योगाय निष्कामकर्मयोगाय ज्ञानयोगाय वा युज्यस्व। अतः कर्मसु पुण्यपापमयात्मिकेषु कर्मसु निवर्तितेषु सत्सु योगः ज्ञानयोग एव कौशलं कुशलमेव कौशलं नैपुण्यं ज्ञानकुशलैरिष्टं परमं साधनं तस्मात् योगाय युज्यस्व॥५०॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्॥५०॥

य इमे उभे अहनी पुर एत्यप्रयुच्छन्। स्वाधीर्देवः सविता।
ऋ० ५।८२।८॥

य इति = यः सविता कर्मयोगस्य ज्ञानयोगस्य वा उत्पादकः जीवः स्वाधीः = (स्व + आ + धीः = सु + आ + धीः) सुबुद्धियुक्तः सर्वतः समतायां प्राप्तबुद्धियोगः अथवा भगवच्चरणारविन्द प्राप्त्यै निष्कामकर्मकर्ता अत एव सुबुद्धियुक्तः सुकर्मा वा ज्ञानयोगेन प्रकाशमानः सन् इमे उभे अहनी रात्र्यहनी शुक्लकृष्णे पुण्यपापे सुकृतदुष्कृते पुरः पुरस्तात् आगमन समये अप्रयुच्छन् अगृह्णन् अथवा पुण्यपापयोः ग्रहणविमोचने प्रमादमकुर्वन् एति संसारयात्रायां गच्छति स एव कुशलः पुरुषः॥ह॥ "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति"। मुं० उप० खं० ३ श्रु० ३॥

कर्मजमिति = बुद्धियुक्ताः बुद्धिः सांख्यबुद्धिः ब्रह्मात्मैकत्व ज्ञानं तया युक्ताः तन्निष्ठा सम्पन्नाः ज्ञानयोगनिष्ठा इत्यर्थः। हि = खलु, मनीषिणः = मनसः ईषा मनीषा, मनीषा अस्यास्तीति मनीषी ते मनीषिणः विद्वांसः, कर्मजं कर्मभ्यो जातं नानायोनि प्रापकं फलं जन्मादि लक्षणं त्यक्त्वा विहाय जन्मबन्धविनिर्मुक्ताः जन्मना बन्धः सम्बन्धो यस्य स जन्मबन्धः देहः उत्तरकालभावी वर्तमानश्च तेन विनिर्मुक्ताः कारणाभावाद् भाविदेहसम्बन्धरहिताः सन्तः अनामयम् आध्यात्मिकादि सर्वोपद्रवरहितम् अखण्डानन्दैकरसं पदं = पद्यते ज्ञानेन प्राप्यते इति पदं परं ब्रह्म गच्छन्ति प्राप्नुवन्ति॥५१॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥५१॥

आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन्। तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमा क्रमतां तृतीयम्॥ अथ० ९।५।१॥

आनयेति — हे परमात्मन्! एतं निष्कामकर्मकर्तारं जनं आनय स्वसमीपं

आनयप्रापय । हे जीवात्मन् ! आरभस्व = निष्कामकर्मणाम् आरम्भं कुरु । यतः अजः जीवात्मा प्रजानन् निष्कामकर्ममार्गं जानानः सुकृतां लोकं मुक्तात्मनां धाम अपि = एव गच्छतु प्राप्नोतु । यतः मार्गे मुक्तिप्राप्तये बहुधा बहुप्रकाराणि स्वर्गादि विनश्वरलोकप्राप्तिकराणि महान्ति तमांसि अधिकतरान्धकारमयानि सकामकर्माणि तीर्त्वा उल्लंघ्य तृतीयं नाकं आनन्दमयं परं ब्रह्म धाम गच्छतु प्राप्नोतु । क्रमताम् = "क्रमु पादविक्षेपे" गच्छतु । श्रुत्यन्तरेऽप्यस्ति = "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" ऋ० १।२२।२०॥ अथ० ७।२६।७॥ तद्दिति = सूरयः ज्ञानिनः दिवि आकाशे आततं विस्तृतं चक्षुः इव प्रतिरोधकवस्त्वभावे चक्षुर्दृष्टिरिव विष्णोः परमात्मनः तत् परमं पदं मुक्तिधाम सदा ज्ञानदृष्ट्या सर्वदा पश्यन्ति निरीक्षन्ते ॥ "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि" तैति० उप० श्रु० २०॥

यदेति = यदा यस्मिन् काले ते तव बुद्धिः मनीषा मोहकलिलं मोहो विचित्तता विषयजातं पदार्थपरिज्ञानं तदेव कलिलं कालुष्यं विवेकबुद्धेः आवरणं व्यतितरिष्यति त्यक्ष्यति तदा तस्मिन्नेव काले श्रोतव्यस्य श्रोतुमर्हस्य श्रुतस्य आकर्णितस्य, द्रष्टव्यस्य दृष्टस्य च, ज्ञातव्यस्य ज्ञातस्य च, ग्राह्यस्य गृहीतस्य च वस्तुनः मिथ्यात्वमेव विज्ञाय निर्वेदं वैराग्यं सर्वत्रालंबुद्धिलक्षणं गन्तासि प्राप्स्यसि ॥५२॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

यदि स्थ तमसावृता जालेनाभिहिता इव । सर्वाः संलुप्येतः कृत्वा पुनः कर्त्रे प्रहिण्मसि
अथ० १०।१।३०॥

यदीति = यदि चेत् यूयं जीवाः तमसा अज्ञानेन आवृताः मिलिताः आच्छादिताः इति यावत् । जालेन मोहकलिलेन अभिहिता इव बद्धा इव स्थ । यदि भवन्तः अज्ञानमोहजालसमावृताः सन्ति, तदा सर्वाः जन्मकर्मफलप्रदात्रीः कृत्याः कर्माणि संलुप्य संविनाश्य इतः अस्मात् मर्त्यलोकात् पुनः भूयः यूयं कर्त्रे जगत्कर्तारं स्वामिनं परमेश्वरं प्रहिण्मसि-प्राप्स्यथ । प्रहिण्मसि इत्यत्र लकारस्य वचनस्य च व्यत्ययोऽस्ति ॥३॥ "यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ् वा उदङ् वा अधराङ् वा प्रत्यङ् वा प्रध्मायीत - अभिनद्धाक्षः आनीतः, अभिनद्धाक्षः विसृष्टः" । छान्दो० उप० खं० १४ अध्या० ६ श्रु० १॥

श्रुतिविप्रतिपन्नेति = यदा यस्मिन् काले श्रुतिविप्रतिपन्ना कर्मज्ञानोपासनाप्रतिपादिकाः याः श्रुतयः सन्ति ताभिः विप्रतिपन्ना संशयाविष्टा बहुविक्षेपवती ते बुद्धिः निश्चला निर्विशेषा भूत्वा समाधौ = समाधीयते चित्तं अस्मिन् इति समाधिः परं ब्रह्म, तस्मिन् तदाकारेणैव अचला अनिक्रिया सती स्थास्यति स्थितिं प्राप्स्यति तदा तस्मिन् काले योगं प्रज्ञास्थैर्यलक्षणं अवाप्स्यसि लप्स्यसे ॥५३॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व। संवेशने तन्वा३ चारुरेधि प्रियो देवानां परमे जनित्रे। अथ० १८।३।७॥ साम० ६५॥ ऋ० १०।५६।१॥

इदमिति — हे जीवात्मन्! ते तव इदं कर्म योगात्मकं कर्म एकं जगति विद्यते। तथा ऊ = अन्यदपि (पर: अग्ने:) ते तव एकं ज्ञानात्मकं कर्म तेन ब्रह्मज्ञानेन तृतीयेन ज्योतिषा परेशोपासनाऽखण्डाकारात्मनाऽपरेण तृतीयेन तेजसा संविशस्व परब्रह्मणि प्रवेशं कुरु। तन्वा: संवेशने तस्मिन् ब्रह्मणि अखण्डाकारैकबुद्ध्या संप्रविश्य "योऽहं सोऽसौ, योऽसौ सोऽहम्", "योऽसावादित्ये पुरुष: सोऽसावहम्, ओं खंब्रह्म"। यजु० ४०।१७। इति चारु: देवानां प्रिय:, यद्वा देवानां द्योतमानानां सर्वेषां पदार्थानां परमे उत्तमे जनित्रे जनके एधि वृद्धिं प्राप्नुहि। सामवेदे तु = "संवेशनस्तन्वे ३" इति पाठेऽर्थोऽयमेव। "तृतीयेन ज्योतिषा स्वात्मानं संविशस्व संयोजय। यत: सूर्यगतचैतन्यात्मगतचैतन्ययो: कोऽपि भेदो नास्ति। अत: तन्वे अस्मिन्नेव देहे परब्रह्मतत्त्वज्ञानाभ्यासानन्तरं "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इत्युक्ते: पुन: शरीरग्रहणनिमित्ते चारु: सुन्दरकल्याणमयो भूत्वा प्रिय: परमात्मप्रिय: सन् यद्वा ब्रह्मणा सह प्रीतिं कुर्वन् देवानां परमे अत्युत्कृष्टे जनित्रे उत्पादके परब्रह्मणि संवेशन: सम्यक्तया प्रवेशं कुर्वन्नेधि भव। अथर्ववेदे = "संवेशने तन्वा३ चारुरेधि प्रियो देवानां परमे सधस्थे" इति पाठे तु अयमर्थ: = तृतीये ज्योतिषि परब्रह्मणि संवेशने सम्यक्तया प्रविष्टे सति परमे अत्युत्तमे सधस्थे मुक्तपुरुषाणां निवासस्थाने अर्थात् मुक्तिधाम्नि देवानां प्रिय: बुद्धिमतां ज्ञानिनां प्रिय: सन् तन्वा निष्कामकर्मद्वारा अनेन वर्तमानदेहद्वारैव एधि उन्नतिं प्राप्नुहि॥१॥ "यथा नद्य: स्यन्दमाना: समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्त: परात्परं पुरुषमुपैति दिव्यम्॥" मुण्ड० उप० खं० २ श्रु० ८२॥ "यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥" कैवल्योप० श्रु० १६॥

स्थितेति = अर्जुन उवाच — हे केशव! हे कृष्ण! समाधिस्थस्य स्थितप्रज्ञस्य स्थितबुद्धे: का भाषा किंनाम, स्थितधी: निश्चलबुद्धि: किं प्रभाषेत किं वदेत किं कथम् आसीत स्थितिं कुर्यात किं कथं व्रजेत प्रचलेत। श्रीभगवानुवाच = प्रजहातीति = हे पार्थ! हे अर्जुन! मुमुक्षु: जन: समाधौ वर्तमान: मनोगतान् "मनसैवानुद्रष्टव्यम्" इत्यात्मस्वरूपप्रकाशनैककारणे मनसि स्थितान् विषयान् सर्वान् सकलान् कामयन्तीति कामा: विषयोपभोगेच्छा:, तान् यदा यस्मिन् काले समाधिसिद्धावस्थायां प्रजहाति नि:शेषं परित्यजति। आत्मने स्वस्वरूपे क्रीडन् आत्मना स्वस्वरूपेणैव तुष्ट: स्वात्मानन्दरससन्तुष्ट: भवति स: स्थितप्रज्ञ: "अयं स्थिरबुद्धि:" इति पण्डितै: उच्यते कथ्यते॥

अर्जुन उवाच = स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधी: किं प्रभाषेत किमासीत व्रजेत किम्॥५४॥

श्रीभगवानुवाच = प्रजहाति यदा कामान् सर्वान् पार्थ! मनोगतान्।
आत्मन्येवात्मना तुष्ट: स्थितप्रज्ञस्तदोच्यते॥५५॥

अङ्गान्यात्मन् भिषजा तदश्विनात्मानमङ्गैः समधात् सरस्वती।
इन्द्रस्य रूपं शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः॥ यजु० १९।९३॥

अङ्गानीति = हे मनुष्याः! अंगानि योगांगानि आत्मन् आत्मनि भिषजा सद्वैद्यवद्रूग्णौ तत् तौ अश्विना अश्विनौ सिद्धसाधकौ योगाभ्यासरतौ आत्मानं स्वस्वरूपं अंगैः योगांगैः समधात् समाधानं कुरुतः, सर्वत्र वचनव्यत्ययः। सरस्वती = इत्यत्रापि लिङ्गव्यत्ययः। सरस्वान् आत्मरसज्ञाता। इन्द्रस्य परमैश्वर्यसम्पन्नस्य परमेश्वरस्य रूपं शतमानं शतम् असंख्यातं मानं यस्य तत्। यद्वा "बहु प्रतिमानम्" आयुः जीवनं मुक्तिं चन्द्रेण अत्यानन्देन ज्योतिः — प्रकाशं परब्रह्मस्वरूपप्राप्तिप्रकाशम् अमृतम् अविनाशि परमधाम दधानाः धारयन्तः निष्कलेशाः भूत्वा सततं सुखिनो भवन्तीति।१९।९३॥ तथा च = "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। बृहदा० अध्या० ४। ब्रा० ४। श्रु० ७

दुःखेष्विति = दुःखेषु दुःखप्रापकेषु ज्वरशूलादिषु स्वयमुद्विग्नमनाः अनुद्विग्नं = "किं करोमि क्व गच्छामीति विक्षेपव्यथाविधुरं मनो यस्य सोऽनुद्विग्नमनाः तथा सुखेषु सुखप्रापकेषु मिष्टान्नरसादिषु स्वयं प्राप्तेषु विगतस्पृहः विगता विशिष्य निर्गता स्पृहा रसनादीन्द्रियलौल्यं यस्य स विगतस्पृहः वीतरागभयक्रोधः = उपकारिणि रागः प्रीतिः अपकारिणि क्रोधः = ~~मुनिः श्रुतं दृष्टं स्पृष्टं सर्वं प्रत्यक्षदृष्ट्या~~ आसन्ने मरणहेतौ भयम् एतत् त्रयं स्वात्मनिष्ठया वीतं = न प्राप्तं येन स वीतरागभयक्रोधः मुनिः श्रुतं दृष्टं स्पृष्टं सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव मनुते पश्यति जानाति स मुनिः ब्रह्मनिष्ठः यः स स्थितधीः स्थितप्रज्ञः सिद्ध इत्युच्यते कथ्यते॥५६॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥५६॥

येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम्। वनेमा ते अभिष्टिभिः॥
यजु० १५।४०॥

येनेति = हे जीवात्मन्! येन जीवात्मना सुखदुःखरागभयक्रोधादिसमताप्रतापेन यद्वा सुखदुःखादिसमत्वमनसा समत्सु = समत् संग्रामनाम, तेषु संग्रामादिदुःखेषु हर्षादिषु च सुखदुःखरागभयक्रोधादिसंग्रामेषु सासहः अत्यन्तसहनशीलतां प्राप्तः सुखदुःखादिसमः सत्वं भूरि अत्यर्थं शर्धताम् = प्राकृतिकबलं दर्शयितां तेषां जीवात्मनां स्थिरा स्थिरभूतानि सुखदुःखरागद्वेषादीनि अवतनुहि मा प्रसारय तानि विनाशय इत्यर्थः। ते तव अभिष्टिभिः रागभयक्रोधादिभिः इच्छाभिः वीतरागक्रोधादिभिः इच्छाभिः वनेम = तेऽपि सेवनाम् अर्थात् तेऽपि स्थितधियो भवन्तु॥४०॥

य इति = यः पुरुषः सर्वत्र सर्वस्मिन् वस्तुनि तत्तत्प्राप्य शुभं प्रियं सुखं अशुभं — अप्रियं दुःखं लब्ध्वा अनभिस्नेहः स्नेहरहितः रागविरहितः सन् न अभिनन्दति न — प्रसीदति न द्वेष्टि न द्वेषं कुरुते, तस्य पुरुषस्य प्रज्ञा बुद्धि प्रतिष्ठिता स्थिरा भवति। ॥५७॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः। यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः॥ ऐत॰ आर॰ १।१९।४४॥ ऋ॰ १०।७१।१॥

बृहस्पत इति = हे बृहस्पते! हे अन्तरात्मन्। प्रथमम् उत्पत्त्यनन्तरमेव इतरवागुच्चारणात् प्रागेव नामधेयम् "ओम्" इतिनाम दधानाः धारणं कुर्वन्तः उच्चारयन्तः इत्यर्थः। यत् ये पुमांसः अग्रं मुख्यं वाचः वाणीः प्रैरत प्रेरितवन्तः उच्चारयन्ति नान्यद्वचनमिति भावः। तथा एषां वीतरागभयक्रोधानां सर्वत्रानभिस्नेहानां श्रेष्ठं प्रशस्यतमं यत् अरिप्रं = पापरहितं शुद्धमित्यर्थः; जीवनमासीत् = अस्ति विद्यते, एषां प्रतिष्ठितबुद्धीनां तत् ज्ञानं हर्षद्वेषरहित जीवनं वा गुहा = गुहायां हृदयाकाशे निहितं गोप्यं सर्वत्राप्रकाश्यमित्यर्थः। प्रेणा प्रेम्णा स्नेहेन आविः = आविर्भवति ॥१॥ तथा च = "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"। बृहदा॰ उप॰ अध्या॰ ४ ब्रा॰ ३ कं॰ २१॥

यदेति = अयं ज्ञाननिष्ठायां प्रवृत्तः यतिः यदा यस्मिन् काले यथा कूर्मः कच्छपः अंगानि स्वावयवान् परेभ्यो भयात् सर्वशः सर्वाणि स्वस्मिन् उपसंहरते उपसंहारं करोति, तद्वत् इन्द्रियार्थेभ्यः तत्तद्विषयेभ्यः समाधिविघ्नभयात् इन्द्रियाणि वागादीनि चक्षुरादीनि च सर्वाणि यदा स्वस्मिन् उपसंहरते तदा तस्य यतेः प्रज्ञा बुद्धिः प्रतिष्ठिता भवति ॥५८॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः। अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः॥ यजु॰ २९।४३॥ ऋ॰ ६।७५।६॥ तैत्ति॰ सं॰ ४।६।६।२॥ निरु॰ ९।१६॥

रथे इति = सुषारथिः सु सम्यक् सारथिः बुद्धिः यस्य तथाभूतः सुशिक्षितः स्थिरबुद्धिः रथस्य देहस्य नेता ज्ञानवान् पुरुषः रथे देहे तिष्ठन् वर्तमानः पुरः पुरतोऽवस्थितान् वाजिनः वेगवतः अश्वभयानि इन्द्रियाणि यत्र यत्र यस्मिन् यस्मिन् सकामकर्मणि निष्कामकर्मणि वा कामयते अभिलषति तत्र तत्र स्वस्वान्तर्मुखानि नयति प्रापयति अर्थात् स्थितप्रज्ञः इन्द्रियाणि स्वायत्तानि कूर्मोऽङ्गानीव धारयति न तु स्वयं तदनुचरः भवति। अभीशूनां = अभीशवः अभ्यश्नुवते, अभीशूनां महाप्रग्रहाणां इन्द्रियाणामित्यर्थः। महिमानं महत्त्वं पनायत स्तुत। यतः तानि पराञ्चि अपि अन्तर्मुखानि ज्ञानिनः बलादभूवन्। रश्मयः इन्द्रियाणि विवेकसारथिना प्रगृहीताः अर्थात् यानि इन्द्रियाणि देहे व्याप्य वर्तमानानि सन्ति ते इन्द्रियरश्मयः पश्चात् देहे विद्यमानान् अश्वान् "इन्द्रियाणि मनः सारथि मनोऽनुकूलं ज्ञानिजनमनोऽनुकूलम् अनुयच्छन्ति अनुगम्य गृह्णन्ति। यथा च कठोपनिषदि = "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥३॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ का॰ कठोप॰ १।३।३।४॥

"यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थानम् एकीभूतः प्रज्ञानघनः एवानन्दमयो ह्यानन्दभुक्" ॥ माण्डू० उप० श्रु० ५॥

विषया इति = निराहारस्य = आह्रियन्ते विषया यैस्ते आहाराः इन्द्रियाणि निय-मार्थं तेभ्यो निर्गतो यः स निराहारः इन्द्रियनिग्रहवान् तापस इत्यर्थः। तस्य देहिनः जीवा-त्मनः विषयाः रसादयः सर्वे रसवर्जं तत्तत्सूक्ष्ममात्रं विहाय विनिवर्तन्ते विशिष्य निवृत्ताः भवन्ति। अस्य निग्रहवतः रसोऽपि तत्तन्मात्रापि परं परमात्मानं दृष्ट्वा साक्षात्कारं कृत्वा निवर्तते निर्गच्छति ॥५९॥

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः। सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन् देवहूतिषु ॥७॥ ऋ० ७।८३।७॥

दशेति = हे इन्द्रावरुणा! हे इन्द्रावरुणौ! हे इन्द्र जीवात्मन्! हे वरुण! वृणुते ज्ञानाज्ञा-नादिकमिति वरुणः श्रेष्ठतरो वा तत्संबुद्धौ हे वरुण! हे श्रेष्ठात्मन्! राजानः स्वस्ववृत्या प्रकाशमानानि अयज्यवः = अयजनशीलानि परमात्मभक्तिविमुखकर्तॄणि दश-दशेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मिलित्वा दश भवन्ति। स्वस्व-विषयग्रहणाय द्योतमानानि दशेन्द्रियाणि समिताः = सुसंगतानि युगपदेव परस्परं समवेतानि सुदासं सुष्ठु दासः सुदासः यथार्थपरमात्मभक्तः तं ज्ञानिनं परमात्मनः अनन्यभक्तं न युयुधुः न संप्रजह्रुः तं प्रहर्तुं न शेकुः। अत एव अद्मसदाम् = अ-द्मनि अन्ने हविषि सीदतीति अद्मसत् ते अद्मसदः ऋत्विजः ~~"अन्नं वै ब्रह्म"~~ तेषाम् अद्मसदां ब्रह्मविदाम्, "अन्नं वै ब्रह्म" हविर्युक्तान्नादिदातॄणां नृणां मनुष्याणां यज्ञस्य नेतॄणां ऋत्विजां विवेकिनामिति भावः। उपस्तुतिः = स्तुतिकरणं परमात्मभक्तिः सत्या सफलाऽ-भवत्। अपि च एषां इन्द्रियनिग्रहवतां देवहूतिषु देवाः इन्द्रियाणि आहूयन्ते येषु इति देवहूतयः तेषु देवहूतिषु ब्रह्मयज्ञेषु अभवन् भवन्ति। इन्द्रियनिग्रहद्वारा परं दृष्ट्वा तदनुग्रहात् प्रादुर्भवन्ति ॥७॥ तथा च = "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" ॥ बृह० उप० अध्या० ४ ब्रा० ४ श्रु० १२॥

यतत इति = हे कौन्तेय! हे कुन्तीसुत अर्जुन! हि यस्मात् कारणात् यततः समा-धिना ब्रह्मप्राप्तिसिद्ध्ये प्रयत्नं कुर्वतः विपश्चितः विशेषेण पातीति विपा = वाक् विपो वाचः चिनोतीति विपश्चित् "ह्रस्वस्य पिति कृति तुक्" इति तुक्प्रत्ययः। तस्य विपश्चितः मायिकं असत् जानतः पुरुषस्य मनः मनुते अनेनेति मनः चित्तं प्रमाथीनि प्रमथितुं विषयदर्शनमात्रेण व्याकुलीकर्तुं शीलं येषां तानि प्रमाथीनि इन्द्रियाणि रागादिदोष-ग्रस्तानि प्रसभं बलात्कारेण अस्य पश्यतः सतः विवेकयुक्तमपि मनः हरन्ति गृहीत्वा विष-येषु पातयन्ति ॥६०॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या। व्यानोदानौ वाङ् मनस्ते वा आकूतिमावहन्॥४॥ अथ० ११।८।४॥

प्राणापानाविति = प्राणः हृदयस्थनासाग्रवर्ती मुख्यवायुः। अपानः अधोवायुः। "अधो नयत्यपानस्तु आहारं च नृणां पुनः" चक्षुः दर्शनसाधनमिन्द्रियम्। श्रोत्रं शब्दग्रहणसाधनमिन्द्रियम्। अक्षितिश्च अक्षीयमाणा ज्ञानशक्तिः। ज्ञानशक्तिर्हि आत्मस्वरूपत्वेन नित्यत्वात् न कदाचित् क्षीयते। क्षितिश्च = क्षीयमाणा निवासहेतुभूता वा क्रियाशक्तिः। क्रियाशक्तिस्तु अपवर्गसमये लिङ्गशरीरेण सह निवर्तते इति। एवं या द्विविधा शक्तिरस्ति। व्यानोदानौ = व्यानः अन्नरसं सर्वासु नाडीषु विविधं अनिति प्रेरयति इति व्यानः। उत् ऊर्ध्वं अनिति उद्‌गारादिव्यापारं करोति इति उदानः। वाक् वदनसाधनम् इन्द्रियम्। मनः सर्वेन्द्रियानुग्राहकं सुखादिज्ञानसाधनम् अन्तःकरणम्। ते एते प्राणापानादयः दश देवाः वै = निश्चयेन आकूतिं पुरुषकृतं संकल्पं आवहन् आभिमुख्येन प्रापयन्ति। अर्थात् एते दशैव पुरुषस्य सांसारिकमनोरथं निष्पादयन्ति न तु पारलौकिकम्॥४॥

तानीति = तानि रागद्वेषरहितानि सर्वाणि वागादीनि इन्द्रियाणि संयम्य तेषु प्रवृत्तिं निरुध्य तत्तद् गोलकेषु स्थापयित्वा इत्यर्थः, युक्तः योगेन समाहितचित्तः मत्परः मम भक्तितत्परः, यद्वा मम वचनरतः आसीत। एवं विहरतः यस्य यतेः इन्द्रियाणि विषयग्रहणवकाशतया नीरागाणि भूत्वा वशे वश्यानि भवन्ति। खलु तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता निश्चला भवति॥६१॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥६१॥

दश साकमजायन्त देवा देवेभ्यः पुरा। यो वै तान् विद्यात् प्रत्यक्षं स वा अद्य महद्वदेत्॥३॥ अथ० ११।८।३॥

दशेति = पुरा शरीरोत्पत्तिकाले देवाः दशसंख्याकानि चक्षुरादीनि इन्द्रियाणि देवाः दीव्यन्ति स्वस्वविषयं प्रकाशयन्ति इति देवाः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। देवेभ्यः देवैः 'विभक्तिव्यत्ययः'। स्वस्वसूक्ष्मतन्मात्राभिः साकं सह अजायन्त प्रादुरभवन्। यो वै खलु यतेन्द्रियः सन् तान् देवान् इन्द्रियाणि प्रत्यक्षं प्रत्यक्षपदार्थज्ञापकान् संसारस्थपदार्थावबोधकान् जानीयात्, न तु मुक्तिमार्गदर्शकान् जानीयात्। स वा = स च अद्य एतस्मिन् जन्मन्येव महत् देशकालकृतपरिच्छेदरहितं सर्वगतं ब्रह्म वदेत् वदति कथयति नान्यत् अर्थात् तस्य प्रज्ञा ब्रह्मणि प्रतिष्ठिता भवतीति भावः॥ यद्वा = दाशराज्ञे परियत्ताय विश्वतः सुदासं इन्द्रावरुणावशिक्षतम्। श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः॥८॥ ऋ० ७।८३।८॥

दाशराज्ञ इति = हे इन्द्रावरुणौ! हे ब्रह्मज्ञानिनौ! जीवात्मानौ! दाशराज्ञे = दशशब्दस्य छान्दसो दीर्घः विभक्तिव्यत्ययश्च। दशभिः कर्मज्ञानेन्द्रियैः राजभिः

प्रकाशमानैः शत्रुभूतैः विश्वतः सर्वतः परियत्ताय परिवेष्टिताय सुदासे सुष्ठुदासाय सुभक्ताय अशिक्षतम् शिक्षाम् अयच्छतम्। तदायत्तीकरणबलं प्रायच्छतमिति भावः। यत्र यस्योपदेशस्य प्रभावे श्वित्यंचः = श्वितं श्वैतं नैर्मल्यं अञ्चन्तो गच्छन्तः कपर्दिनः जटाधारिणः तपस्विन इत्यर्थः, धीवन्तः बुद्धिमन्तः कर्मभिः युक्ताः तृत्सवः संसारात्तरणेच्छवः मुमुक्षवः, नमसा हविर्लक्षणेन अन्नेन भगवत्प्रणामेन वा धिया भगवत्स्तुतिबुद्ध्या च असपन्त पर्यचरन्॥८॥ यथाचोपनिषत् = "यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥६॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तत्पदमवाप्नोति यस्माद् भूयो न जायते"॥ कठ उप० अध्या०१ वल्ली०३ श्लो०६, ८॥

ध्यायत इति = विषयान् शब्दादीन् ध्यायतः "इदं शोभनम्, इदमशोभनम्" इति चिन्तयतः पुंसः पुरुषस्य तेषु शोभनत्वभोग्यत्वाकारेण भावितेषु भोगेषु संगः प्रीतिः उपजायेत सद्यः उत्पद्यते। संगात् प्रीत्याः कामः भोगेच्छा संजायते सम्यक् उत्पद्यते। कामात् भोगेच्छायाः हननात् क्रोधः अभिजायते आविर्भवति॥६२॥ क्रोधात् संमोहः वैचित्यं कार्याकार्यविवेकशून्यता जायते। संमोहात् कार्याकार्यविवेकशून्यत्वात् स्मृतिविभ्रमः स्मृत्यनुदयः जायते। स्मृतिभ्रंशात् बुद्धिनाशः विवेचनात्मकबुद्धिविनाशः भवति। बुद्धिनाशात् विवेकबुद्धिविनाशात् विद्वान् स्वयमपि प्रणश्यति प्रकर्षेण नश्यति॥६३॥

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते॥६२॥
क्रोधाद् भवति संमोहः संमोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥६३॥

त्वया मन्यो सरथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन्। तिग्मेषव आयुधा संशिशानाः उप प्रयन्तु नरो अग्निरूपाः॥ ऋ०१०।८४।१॥ अथ०४।३१।१॥

त्वयेति = हे मन्यो! हे क्रोध! मन्युर्मन्यतेः कान्तिकर्मणः इति निरु०१०।२९॥ हे मरुत्वन्! हे मरुद्वेगयुक्त! कोपात्मक! जीवात्मन्! त्वया कुपितेन सरथं रथेन देहेन सहितं सरथं देहविशिष्टं आत्मानं आरुजन्तः पीडयन्तः। यास्कस्त्वाह = "सरथं समानं रथमारुह्य रुजन्त" इति निरु०१०।३०॥ रुजो भंगे तुदादित्वात् शः। हर्षमाणाः तव आश्रयात् क्रोधेन मे कार्यं भविष्यति इति अविकलाः हृष्यन्ति। हृषितासः रुषितासः कार्याभवनात् संजातरोषाः तिग्मेषवः तीक्ष्णाः इषवः वचनबाणाः येषाम्। आयुधा आयुधानि परहननाय संशिशानाः सम्यक् निश्यन्तस्तीक्ष्णीकुर्वन्तः नरः नेतारः विवेकव्यग्रगण्याः अपि अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणः, यद्वा अग्निवद् दुष्प्रधर्ष्याः उप प्रयन्तु उपगच्छन्तीति भावः॥१॥ यद्वा = अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः। तं त्वा मन्यो! अक्रतुर्जिहीळाहं स्वा तनूर्बलदावा न-

एहि ॥ ऋ० १०।८३।५॥ अथ० ४।३२।५॥

अभाग इति = हे प्रचेतः! हे प्रकर्षेण ज्ञातः विद्वन्! तविषस्य महतः तव क्रत्वा कर्मणा अभागः विवेकज्ञानभाग्यैः रहितः सन् अपपरेतोऽस्मि मोहादिनाऽपक्रम्य परागतोऽस्मि। पुरुषव्यत्ययः'। 'अपपरेतोऽसि = कामक्रोधकुसंगाभिभूतोऽसीत्यर्थः। हे मन्यो! हे क्रोध! अक्रतुः विवेकजन्यशुभकर्मवर्जितः, यक्ता कार्याकार्यविवेकशून्यः सन् अहं तं तथाविधं त्वां क्रोधं जिहीड = क्रोधितवान्। विवेकशून्ये मूढतमे पुरुषे तवाक्रमणमतिबलवत्तरं भवति इति भावः। हेडतिः क्रुध्यतिकर्मा। स्वा तनूः स्वस्यां तन्वां बलदावा बलस्य दाता सन् नः अस्माकं एहि समीपे आगच्छ। हे क्रोध! मा त्वं दूरीभव, येन मे विवेचनात्मकबुद्धिविनाशो मा अस्तु। बलदावा = डुदाञ् दाने, "आतो मनिन् क्वनिब्वनिपश्च" इति क्विप्॥७॥ यद्धु = यं विश्वेदेवाः स्मरमसिञ्चन्नप्स्वन्तः शोशुचानं सहाध्या। तं ते तपामि वरुणस्य धर्मणा॥

अथ० ६।१३२।२॥

यमिति = देवाः विद्वांसः शोशुचानं शोकस्य कारयितारं यं स्मरं कामं आध्या सह क्रोधमोहस्मृतिभ्रंशजनितव्यथाभिः सह अप्सु अन्तः जलस्थानेषु वीर्येषु रक्तेच असिञ्चत। वरुणस्य वरीतुं योग्यस्य शान्तिमयजलस्य धर्मणा धारकेण धर्मेण ते तव कामस्य तं दुःखात्मकं कामं तपामि॥

रागद्वेषेति = रागः स्नेहः, द्वेषः अप्रीतिः ताभ्यां वियुक्तैः रहितैः आत्मवश्यैः आत्मनः स्वस्य वश्यैः वशवर्तिभिः प्रसन्नैः इन्द्रियैः विषयान् अनिषिद्धान् अन्नरसादीन् प्राणत्राणमात्रपर्याप्तान् चरन् भुञ्जानः विधेयात्मा विधेयः इन्द्रियशुद्ध्या समाधिना च निर्मुक्तरागादिदोषतया स्वाधीनः आत्मा मनो यस्य स विधेयात्मा सन् प्रसादं चित्तस्य स्वास्थ्यम् अत्यन्तनिर्मलतां गच्छति,

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥६४॥

इन्द्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये। प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः॥७॥ ऋ० १०।९९।७॥

इन्द्रे इति = ये शशमानासः शंसमानाः स्तोतारः इन्द्रे आत्मनि मनसि वा भुजं पालनं रक्षणं वा आशत अवाप्नुवन्ति अर्थात् आत्मानम् इन्द्रियविषयेभ्यः रक्षन्ति। सूरः सर्वेन्द्रियग्रामस्य स्वेच्छया प्रेरकः विद्वान्। दृशीके केवलं शरीरयात्रायै सर्ववस्तुदर्शनं आशत प्राप्नोति। वृषणः ज्ञानामृतवर्षकः विधेयात्मा विद्वान् पौंस्ये = पौंस्यम् — अत्र विभक्तिव्यत्ययः। आत्मबलम् आशत प्राप्नोति। कारवः स्तोतारः विवेकिनः जनाः अस्य आत्मनः अर्हणा पूजनानि नु क्षिप्रं ततक्षिरे प्रकृष्टं कुर्वन्ति। ते स्तोतारः विवेकिनः ~~जनाः अस्य आत्मनः अर्हणा पूजनानि~~ पुरुषाः नृषदनेषु नरः सीदन्ति तिष्ठन्ति येषु तथाभूतेषु स्थानेषु अर्थात् ब्रह्मयज्ञेषु युजं सहायभूतं

वज्रं वज्रवत् कठोरमपि मनः आशत प्राप्नुवन्ति। मनोऽपि स्वायत्तीकुर्वन्ति। इत्यर्थः।
अपि च = "ओं पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते" कठोप० अध्या० २ वं० १ श्लो० २

प्रसादे इति = इन्द्रियशुद्ध्या प्रसादे चित्तस्वास्थ्ये सति अस्य विवेकिनः सर्वदुःखानां आध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखानां हानिः निवृत्तिः उपजायते उत्पद्यते। तत एव आशु शीघ्रं प्रसन्नचेतसः निर्मलमनसः तस्य बुद्धिः विवेचनात्मिका बुद्धिः पर्यवतिष्ठते प्रतिष्ठिता भवति ॥६५॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥

आयुषायुःकृतां जीवायुष्मान् जीव मा मृथाः। प्राणेनात्मन्वतां जीव मा मृत्योरुदगा वशम्। अथ० १९। २७। ८॥

आयुषेति = हे जीवात्मन्! त्वम् आयुष्कृतां "तपसा मनःस्थैर्यादिना दीर्घम् आयुः कुर्वन्ति सम्पादयन्तीति आयुष्कृतः चिरकालजीविनः तपस्विनः तेषामायुष्कृतां तपस्विनामायुषा "तेषां यादृगायुस्तादृशेन आयुषा" इत्यर्थः। जीव = सर्वदुःखविनाशपुरस्सरं प्रसन्नचेताः जीवितो भव। अतः आयुष्मान् दीर्घायुष्यो भव। जीव = प्रतिष्ठितबुद्धिः भूत्वा जीवितो भव। मा मृथाः = इन्द्रियानुचरो भूत्वा मृतिं मा प्राप्नुहि। आत्मन्वतां स्थिरेण आत्मना संसारे ये वर्तन्ते ते आत्मन्वानः तेषां आत्मन्वतां स्थिरात्मनां प्राणेन त्वं जीव। यथा स्थिरात्मानः इन्द्रियार्थालोलुपाः जीवन्ति तथा त्वमपि जीवजीवितो भव। मृत्योः रागद्वेषबद्धेन्द्रियविषयोपभोक्तृवन्मारकस्य देवस्य अन्तःकरणेन्द्रियस्य वशं अधीनं मा उदगाः मा उद्गच्छ मा प्राप्नुहीति यावत्। मृथाः = मृङ् प्राणत्यागे। माङि लुङ्, "ह्रस्वात् अंगात्" इति सिचो लोपः॥८॥

नास्तीति = अयुक्तस्य असमाहितचेतसः पुरुषस्य बुद्धिः विवेकबुद्धिः नास्ति। तथाऽयुक्तस्य समाधिसमुत्पन्नब्रह्मापरोक्षज्ञानशून्यस्य भावना निदिध्यासनरूपा चित्तवृत्तिरहितस्य शान्तिर्नास्ति। अशान्तस्य शान्तिरहितस्य सुखं नित्यं निरन्तरं ब्रह्मसुखं कस्मात् कारणात् भविष्यति ॥६६॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥

~~यन्मे छिद्रं मनसो यच्च वाचः सरस्वती मन्युमन्तं जगाम। विश्वै~~
यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु।
शं नो भवतु भुवनस्य यस्पतिः॥ यजु० अध्या० ३६। २॥
यद्वा = यन्मे छिद्रं मनसो यच्च वाचः सरस्वती मन्युमन्तं जगाम। विश्वैस्तद् देवैः सह संविदानः संदधातु बृहस्पतिः॥ अथ० १९। ४०। १॥
यद्वा = यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता स्यामिति। नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं-

स्यादेतत्तस्य तु नाशास्ति चिन्तनेः । बृह० उप० अध्या० २ ब्रा० ४ श्रु० २ ॥

यन्मे इति = मे असमाहितस्य मम चक्षुषः चक्षुरिन्द्रियस्य छिद्रम् = असमतादर्शन - दोषः अस्ति । हृदयस्य बुद्ध्याः, हृदयशब्देन बुद्धिः ग्राह्या, 'मनसः' शब्दस्य - भिन्नस्थितित्वात् । यत् छिद्रं ब्रह्मतत्वविवेचनात्मक शक्ति विरहितत्वदोषः अस्ति, अर्थात् असमाहितचेतोजन्यविवेकबुद्धिदोषोऽस्ति । वा यत् अतितृण्णम् = अतिहिंसितत्वदोषः । अतिव्याकुलत्वम् अस्थैर्यत्वम् इति भावः । बृहस्पतिः = बृहतो मन्त्रसमूहस्य वेदस्य पतिः पालयिता ईश्वरः, यद्वा बृहतः वृद्धतमस्य आकाशादेः पालयिता परमेश्वरः, मे मह्यं मयि वा तत् छिद्रं दधातु पुष्णातु पूरयतु अर्थात् सच्छिद्रः मयि मा भवतु । यः परमेश्वरः भुवनस्य समग्रसंसारस्य पतिः रक्षकः अस्ति स एव नः अस्मभ्यं मुमुक्षुजीवेभ्यः शम् शान्तिं कल्याणं वा भवतु 'भवतेर्लकारव्यत्ययः' 'भूङ् प्राप्तौ' इत्यस्य धातोः रूपं प्रापयति । अन्यथा अशान्तानामस्माकं मुक्तिसुखं कदापि न भविष्यति ।

यन्मे इति = मे असमाहितचित्तस्य मम मनसः चित्तस्य यत् छिद्रं दोषः अस्ति, यत् वाचः वाण्याः छिद्रं दोषः अस्ति, मे मम सरस्वती वाणी मन्युमन्तं कुपितं पुरुषं जगाम, तत् तं दोषं विश्वैर्देवैः सह समग्रैः विद्वद्भिः सह संविदानः विचारयन् बृहस्पतिः वेदवाक्पालयिता विद्वान् संदधातु [illegible] त्रुटिं व्यपोहयतु । यथा = "यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च । तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥१॥ इच्छोदयो यथा दुःखमिच्छाशान्तिः यथा सुखम् । तथा न नरकेष्वापि ब्रह्मलोकेऽनुभूयते ॥२॥ यावती यावती ज्योतीरिच्छोदेति यथा - यथा । तावती तावती दुःखबीजमुष्टिः प्ररोहति ॥३॥ इति योगवासिष्ठे ॥

इन्द्रियाणामिति = हि यस्मात् कारणात् इन्द्रियाणां वागादिदशेन्द्रियाणां स्वस्वविषयेषु चरतां सतां यत् लोकशास्त्रविषयकर्मवासनाभिः आविष्टं मनः अनुविधीयते स्वच्छन्दानुरूपं प्रवर्त्यते तत् एव स्वच्छन्दचारि मनः अम्भसि नदीजले वायुः नावमिव अस्य स्ववासनानुरूप प्रवर्तमानस्य विदुषः प्रज्ञाम् आत्मानात्मविवेकबुद्धिं हरति संहरति ॥६७॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

मनसा संकल्पयति तद् देवान् अपि गच्छति । ततो ह ब्रह्माणो वशामुप-प्रयन्ति याचितुम् ॥ अथ० १२ । ४ । ३१ ॥

यद्वा = मनसे चेतसे धिय आकूतय उत चित्तये । मत्यै श्रुताय चक्षसे विधेम हविषा वयम् । अथ० ६ । ४१ । १ ॥

मनसा इति = पुरुषः इन्द्रियविषयाधीनः सन् यदा मनसा स्वच्छन्दचारिणा मनसा संकल्पयति संकल्पं कुरुते तद् ध्यानं देवान् स्वस्वविषयैः प्रकाशमानानि चक्षुरादीन्द्रियाणि अपि गच्छति प्राप्नोति । ततः मनसः सर्वविध -

व्यवहारानन्तरं ब्रह्माणः ब्रह्मणा ब्रह्मज्ञानोपपन्नाः पुरुषाः तदेव मनः वशां वशं आनेतुं याच्ञां कर्तुं वशीकर्तुमित्यर्थः उपप्रयन्ति प्राप्नुवन्ति ॥३॥

मनसे इति = चेतसे सम्यग् ज्ञानसाधनाय मनसे, धिये ध्यानसाधनाय, आकूतये सदसद्विवेक संकल्पाय, उत = अपि च चित्तये यत्संबन्धात् पुरुषश्चेतन उच्यते सा चित्तिः अतीतादि विषयस्मृति हेतुः, मत्यै आगामिविषयज्ञान - जनन्यै, श्रुताय श्रवणजनितज्ञानाय, चक्षसे दर्शनाय चाक्षुषज्ञानाय एवंविध व्यापारहेतुभूताय मनसे हविषा हूयमानेन दीयमानेन वचनेन वा आत्मानात्मवि- वेकनिमित्ते हूयमानेन वचनेन इत्यर्थः, वयं मनोनिरोधकाः विधेम परिचरेम ॥४॥

तस्मादिति = हे महाबाहो हे अर्जुन! तस्मात् हेतोः यस्य पुरुषस्य इन्द्रियार्थेभ्यः शब्दादिभ्यः इन्द्रियाणि श्रोत्रादीनि सर्वशः निखिलप्रकारेण निगृहीतानि वशीभूतानि भवन्ति तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता भवति समाधिः भवति समाहिता भवतीत्यर्थः ॥ ६८

तस्मात् यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति । यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥१॥ साम० १८२६ ॥ ऋ० ५।४४।१४॥

तदुत्तरं द्वितीये मंत्रे = "अग्निर्जागार तमृचः कामयन्ते ऽग्निर्जागार तमु सामानि यन्ति । अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये ~~तमु सामानि यन्ति~~ न्योकाः । सामवेदे ॥२॥५॥ ऋ० ५।४४।१५॥

यदीति = यः पुरुषः स्थिरबुद्धिरिति यावत् जागार इन्द्रियार्थेभ्यः जागरूकः विनिद्र इत्यर्थः । स्वशरीरे वर्तेते तं पुरुषं ऋचः सर्वशास्त्रात्मिकाः सदसद्विवेकवत्यः बुद्धयः कामयन्ते अभिलषन्ति अर्थात् विवेचनात्मिका बुद्धिः तं आप्नोति । तमु = यः पुरुषः जागार - इन्द्रियनिग्रहणाय जागरणशीलः भवति तमेव पुरुषं सामानि सान्त्वनानि इन्द्रियार्थप्रवृत्ति- शान्तयः यन्ति प्राप्नुवन्ति । यो ज्ञानी जनः जागार = सर्वथा विषयाणां निग्रहणाय जागर्ति, अयं सोमः तं पुरुषं स्वकीयं मनः आह ब्रूते, मां स्वीकुरु, मां जानीहि इत्यर्थः । तत्र तादृशस्य सर्वथा जागरूकस्य प्रतिष्ठितबुद्धेर्वा सख्ये समानख्याने स्थिरकरणे न्योकः नियत- स्थानः अहमस्मि अहं भवामि ॥१॥

या निशेति = सर्वभूतानां पूर्वजन्मकर्मफलानुभूत्यै पुनः पुनर्भवन्ति जायन्ते इति भूतानि प्राणिनः तेषां सर्वेषां भूतानां या निशा रात्रिकालः लौकिकव्यवहारतो निवृत्तिकालः अस्ति, शं सुखं नितरां सुखरूपत्वात् निशा, तस्यां निशायां आत्मसुखरूपायां परस्यां देव- तायां संयमी = बहिः प्रवृत्तिनिवृत्तसर्वेन्द्रियः ब्रह्मवित् एकरस जागर्ति तत्रैव रमते इत्यर्थः । यस्यां अविद्यायां लौकिकव्यवहारप्रवृत्तौ भूतानि जीवाः "अहं मम इदमिष्टमिदमनिष्टमित्यादि व्यवहरन्ति । सा अविद्या लौकिकव्यवहारप्रवृत्तिः पश्यतः "द्रष्टारं दर्शनं दृश्यं च सर्वं प्रत्यग्दृष्ट्या ब्रह्मैवावलोकयतो मुनेः ब्रह्मनिष्ठस्य निशा शयनकालो भवति । यथा निशायां प्राणिनो न व्यवहरन्ति, तथा यमविद्यानिशायाम् अहं ममेति न व्यवहरन्ति ६९

II



या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥६९॥

ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् निपद्यते।
न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन॥ अथ० ११।४।२५॥

ऊर्ध्व इति = ऊर्ध्वः अविद्यातः उत्थितः संयमी ब्रह्मवित् सुप्तेषु लौकिकव्यवहारतः निवृत्तेषु जीवेषु सत्सु जागार जागर्ति ब्रह्मध्यानलग्नः सन् जागरणं करोति निद्रारहितो वर्तते इति भावः। ननु इति प्रश्ने। सुप्तः प्राणी ब्रह्मविमुखः लौकिकव्यवहारतो विमुखः सन् तिर्यङ् तिर्यगवस्थितः मूढावस्थामापन्नः निपद्यते निद्रापरवशः शेते मायावशो वा शेते। सुप्तेषु प्राणिषु निद्रापरवशेषु सत्सु मायापरवशेषु सत्सु वा अस्य संयमिनः ब्रह्मनिष्ठस्य पुरुषस्य सुप्तं स्वापं मोहं कश्चन कोऽपि संयमी पुरुषः ब्रह्मवित् यतिः न अनुशुश्राव अनु=पारम्पर्यक्रमेण श्रुतवान्॥२५॥ यथा चोपनिषत् = "ओं तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति"। प्रश्नोप० प्र०१। श्रु०१६॥

आपूर्यमाणमिति = आपः गंगासिन्ध्वादिमुखेभ्यः समागतानि जलानि आपूर्य गंगामहानद्यादिजलैः मेघजलैश्च समन्तात् आपूर्यमाणं स्वयमचलप्रतिष्ठम् = अचला चलवर्जिता वृद्धिक्षयशून्या प्रतिष्ठा जलस्थितिः मर्यादा यस्य सोऽचलप्रतिष्ठस्तं जलप्रवेशाप्रवेशकालेऽप्येकरूपेण वर्तमानमित्यर्थः। समुद्रं = समुनत्ति स्वकीयेन जलेन कृत्स्नं जगत् क्लेदयतीति समुद्रः तं समुद्रं यद्वत् शुक्लादिवर्ण मधुरादिरस-लघुत्वादिगुणविशेषं परित्यज्य समुद्रभावमेव यथा गच्छन्ति तद्वत् तेनैव प्रकारेण सर्वे कामाः भोग्यपदार्थाः भोग्यविशेषाः तैः सर्वतः आपूर्णम् अचलप्रतिष्ठं सदाकारतामापाद्य सदात्मनैव निश्चलीभूय प्रतिष्ठा स्थितिर्यस्य सोऽचलप्रतिष्ठः, ईदृशं यं ब्रह्मविदं यतिं सर्वे कामाः प्रविशन्ति स्वयं ब्रह्मभावमधिगच्छन्तीति भावः। स एव ब्रह्मविद् यतिः शान्तिम् अविद्याप्रपञ्चोपशमं लक्षणमाप्नोति, न तु कामकामी = कामान् विषयान् यः कामयते स कामकामी॥७०॥

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥७०॥

परा हि मे विमन्यवः पतन्ति वस्य इष्टये। वयो न वसतीरुप॥ ऋ०१।२५।४

यद्वा = ओं त्वां विशन्त्विन्दवः समुद्रमिव सिन्धवः। न त्वामिन्द्रातिरिच्यते॥
ऋ०८।९२।२२॥ साम० १९७। साम० १६६०॥

परेति = हे परमात्मन्! मे त्वद्भक्तस्य मुमुक्षोः मम विमन्यवः = "मन्युः" इति क्रोधनाम। विगतः मन्युः येषां ते विमन्यवः क्रोधरहिताः शान्ताः बुद्धयः कामा वा, वस्यः = इष्टये वसीयसः [illegible]येन वसुमतो जीवनस्य प्राप्तये "यथा शेषजीवनं शान्तात्मत्वात् शान्तिम[illegible] ब्रह्मप्राप्तिकरं भूयादेतत्संसिद्धये। परापतन्ति = पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति। भूयः मे कामाः मयि मा प्राप्नुवन्तु इति भावः। हीति निश्चये। वयः न = पक्षिण इव। वसतीः = निवासस्थानानि -

आप्नुवन्ति = प्राप्नुवन्ति। यथा पक्षिणः स्वमनःशान्तये स्वस्वाभाविक-
सुखप्राप्तये च स्वनिवासस्थानानि प्राप्नुवन्ति तथा विमन्यवः पुरुषा अपि
शान्तिं लभन्ते इति भावार्थः। वस्य इत्ये - "वसुमच्छब्दाद्विन्मतोर्लुक्" इति मतुपो
लुकि टिलोपः ईयसुनो यकारलोपश्छान्दसः। यद्वा = हे इन्द्र! हे जीवात्मन्!
इन्दवः = इन्दुः आत्मा, "इन्दुरादित्यः, इन्दुरात्मा" निरुक्त परिशिष्टाध्यायः २॥ इन्दवः =
आत्मसम्बन्धि स्रवन्तः कामाः त्वा त्वां मुमुक्षुं जीवात्मानं आविशन्तु स्वनामरूपं
विहाय लयं गच्छन्तु। समुद्रमिव सिन्धवः = समुद्द्रवन्ति एनम् आपः इति समुद्रः तं
समुद्रं, सिन्धवः = स्यन्दनशीलाः नद्यः आविशन्तु आविशन्ति सर्वतः प्रविशन्ति। यथा
नद्यः सर्वतः प्रतिनिवृत्य समुद्रं प्रविशन्ति तथा जीवात्मनः सर्वे कामाः यदा आत्मनि
प्रविशन्ति तदा हे इन्द्र! हे जीवात्मन्! त्वां कश्चिदपि संसारी पुरुषः नातिरिच्यते अधिक-
शान्तो न भवति। आत्मबलेन सामर्थ्यवान् त्वत्तो ऽधिकः कोऽपि नास्ति॥४॥ यथा चोप-
निषदि = "कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्याप्तकामस्य
कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः। मुण्डकोप॰ मु॰ ३ खं॰ २ मं॰ २॥ अथ च-
"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नाम-
रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"। मुण्डकोप॰ मुं॰ ३ खं॰ २ मं॰ ८॥
विहायेति = यः पुमान् = पुमर्थं अतिदुर्लभं मोक्षं महता प्रयत्नेन सम्पादयतीति
पुमान् पुरुषशब्दवाच्यो यो ब्रह्मवित् यतिः स्वयं निरहङ्कारः अहंता ममतादि रहितः -
अत एव निर्ममः, अत एव मम इदम्, तव इदम् इत्यादिव्यवहाररहितः। यद्वा निर्गतः
ममतासम्बन्धो यस्य स निर्ममः। अत एव निस्पृहः = विषयेभ्यो निर्गता स्पृहा
इच्छा यस्य स निस्पृहः अर्थात् लोकैषणा वित्तैषणा पुत्रैषणा रहितः सर्वान् कामान्
सर्वान् विषयान् अभिलाषान् वा विहाय त्यक्त्वा चरति पर्यटति। स एव पुरुषः
शान्तिम् आत्यन्तिक संसारोपलक्षणं विदेह मुक्तिम् अधिगच्छति॥७१॥

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति॥७१॥

अकामो धीरो अमृतः स्वयंभूः रसेन तृप्तो न कुतश्चनोनः। तमेव विद्वान्
न बिभाय मृत्योरात्मानं धीरमजरं युवानम्॥ अथ॰ १०।८।४४॥
अकाम इति = यः पुरुषः अकामः, कामः एषणा विषयाश्च - "लोकैषणा, वित्तैषणा
पुत्रैषणा, विषयाः नानाविधाः भोगाः। न सन्ति कामाः विषयाः एषणाः वा यस्य स
अकामः। अतः स एव धीरः = धियं राति यद्वा धियमीरयतीति धीरः बुद्धिसाक्षी,
अत एव अमृतः मरणरहितः विमुक्त इत्यर्थः। अतः स्वयंभूः = स्वयं आत्मना भवतीति
स्वयंभूः आत्मरमण इत्यर्थः। अत एव रसेन ब्रह्मानन्दरसेन तृप्तः तृप्तिं प्राप्तः परिपूर्ण
इत्यर्थः। अत एव न कुतश्च ऊनः कस्माच्चिदपि वस्तुनः ऊनः हीनः नास्ति। एवंविधः
अकामः पुरुषः तमेव आत्मानं धीरं बुद्धिसाक्षिणम् अजरं जरारहितं शैथिल्यादिकाव-
स्थाशून्यं युवानं श्रेष्ठं विद्वान् जानन् मृत्योः मरणात् विनाशादिति यावत्। न बिभाय =

II

न भयं प्राप्नोति ॥४४॥ यथा चोपनिषदि = "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" — छान्दो० उप० प्रपा०७। खं०२३ श्रु०१॥

एषेति = हे पार्थ! स्वस्वरूपं प्रकाश्य मुमुक्षुं संसारमृत्योः पातीति यः परमात्मा, तमेवार्थयते वाञ्छतीति पार्थः तस्य संबुद्धौ — हे पार्थ! हे मुमुक्षो! ब्राह्मी ब्रह्मप्रापिका ब्रह्मविषयिणी वा स्थितिः निष्ठा एषा मया प्रतिपादिता। एनां ब्रह्मनिष्ठां प्राप्य अनुष्ठाय न विमुह्यति विमोहाय न कल्पते। अन्तकालेऽपि मृत्यवस्थायामपि अस्यां ब्रह्मनिष्ठायां स्थित्वा ब्रह्मनिर्वाणं ब्रह्मगतिं यद्वा निर्वाणं निष्क्रियं नित्यानन्दैकरसं ब्रह्म ऋच्छति मुक्तिं गच्छतीत्यर्थः ।७२। इति श्री सारस्वतान्वय "लैया" ग्रामवास्तव्य न्यायभूषणजगन्नाथशास्त्रिकृतायां गीतावेदार्थबोधिन्यां द्वितीयोऽध्यायः ॥२॥

एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥

इति श्रीमद्भगवद्गीतायां विषादयोगो नाम द्वितीयोऽध्यायः समाप्तः ॥२॥

उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति। आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥ ऋ०१।११३।१६॥

उदीर्ध्वमिति = हे मनुष्याः! उदीर्ध्वं मोहनिद्रां परित्यज्य उत्तिष्ठत, संसारमोहविरहिताः ब्रह्मनिष्ठायै उत्तिष्ठत। नः अस्माकं जीवः जीवात्मा असुः ब्रह्मनिष्ठायां स्थितः "अस् सत्तायाम्" रूपम्। यद्वा शरीरस्य संसारयात्रार्थं प्रेरयिता आगात् आगतवान्। तमः अज्ञानं मोहो वा अपप्रागात् निरगच्छत्। मोहनिर्गमने सति भूयः मोहाय न कल्पते इति भावः। तदानीं ज्योतिः ब्रह्मप्रकाशः ब्रह्मानन्दज्योतिः आ+एति=एति आगच्छति। सूर्याय = सरति गच्छति इति सूर्यः। सुवति प्रेरयति तत्तद्व्यापारेषु कृत्स्नं जगत् इति सूर्यः परमेश्वरः। सर्वस्य प्राणिजातस्य प्रेरकः = "राजसूय सूर्य —" इत्यादिना क्यपि रूपं निपात्यते। तस्मै सूर्याय 'विभक्तिव्यत्ययः'। सूर्याय = सूर्यस्य जगत्प्रेरकस्य जगत्स्वामिनश्च पन्थां मार्गं मुक्तिधाम यातवे प्राप्तये आरैक् = विवृतीकरोति। तस्मिन् प्रदेशे अगन्म = गच्छाम। यत्र यस्मिन् धाम्नि आयुः जीवनं प्रतिरन्ते प्रवर्धयन्ति। अर्थात् मुक्तिधाम्नि स्थित्वा तत्रैव रमन्ते प्रतिक्षणं ब्रह्मानन्दं पिबन्तः स्वानन्दजीवनं वर्धयन्ति। यथा गौडपादीयकारिका = "स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्। अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते" ॥ प्र०३ श्लो० १२६

इति श्रीजगन्नाथशास्त्रिसंकलितायां वेदगीताटीकायां द्वितीयोऽध्यायः समाप्तः ॥२॥

(द्वितीयाध्यायसंक्षिप्तसारांशः) = "शरीरं नश्वरं ज्ञेयमात्मा नित्योऽमरोऽजरः। देहे नष्टे न नाशोऽस्य मोहोऽतोऽस्ति (अस्य) निरर्थकः ॥१॥ सांख्ययोगसमाधानं सात्वबुद्धिस्तथैव च। ज्ञानं तस्य फलं मोक्षः निष्कामकर्मशिक्षणम् ॥२॥ स्थिरप्रज्ञाफलं शान्तिरिमे सर्वे पृथक् पृथक्। द्वितीयेऽस्मिन् हि चाध्याये श्रीकृष्णेन निरूपिताः ॥३॥

अथ तृतीयोऽध्यायः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनोयातः कुरुक्षेत्रे युद्धजयम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात्॥२॥

ज्यायसीति = अर्जुन उवाच – हे जनार्दन! जनं जनं तत्कारणं अज्ञानञ्च एवसा- क्षात्कारेण अर्दयति हिनस्तीति जनार्दनः तत्संबुद्धौ हे जनार्दन! कर्मणः कर्मयोगात् बुद्धिः ज्ञानयोगः एव ज्यायसी श्रेष्ठा इति ते मता अभिमता चेत् यदि, तत् तस्मात् कारणात् किं किमर्थं माम् अर्जुनं जीवं वा घोरे हिंसात्मके कर्मणि नियोजयसि चोदयसि। हे केशव! केशौ ब्रह्मरुद्रौ अनुकम्पया वाति इति क: उ इति केशवः तत्संबुद्धौ हे केशव! हे कृष्ण!॥१॥

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव॥१॥

यच्चिद्धि ते पुरुषत्रा यविष्ठा चित्तिभिश्चकृमा कच्चिदागः।
कृधि ष्व१स्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने॥४॥
ऋ० ४।१२।४॥ तै०सं० ४,७,१५,२॥

यच्चिदिति = हे अग्ने! पापदहनशक्तिसम्पन्न! परमेश्वर! हे जनार्दन! हे यविष्ठ! हे अतिशयेन युवन्! हे अत्यन्तश्रेष्ठ! यत् चित् हि = यदेव हि ते तव पुरुषत्रा परिवारकेषु पुरुषेषु अचित्तिभिः = अहंता ममता मोह परिपूर्णैः अज्ञानैः कच्चित् कदाचित् किञ्चित् आगः अपराधं चकृम कुर्याम। अतः अस्मान् अज्ञानिनः अदितेः पृथिव्याः पृथिवीमात्रात् अनागान् पापरहितान् सु = अत्यन्तं कृधि कुरु। हे श्रेष्ठतम! अस्मान् घोरात् कर्मणः बहिर्निष्कास्य ज्ञानयोगे मां योजयस्वेति भावः। विष्वक् सर्वतो विद्यमानानि एनांसि मत्कृतक्रियमाणकरिष्यमाणपापानि विशिथः विश्लथय शिथिलीकुरु। अस्मात् घोरसंग्रामपापात् वियोजय॥४॥

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम॥२॥

त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः। पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः॥२॥ ऋ० ७।१००।२॥

त्वमिति = हे एवयावः! एवाः प्राप्याः कामाः तान् यावयति प्रापयति स्तोतृन् इति एवयावः तत्संबुद्धौ हे एवयावन्! हे परमात्मन्! हे विष्णो! हे सर्वव्यापक! परमेश्वर! त्वं परमात्मा विश्वजन्यां सर्वजनहितकारिणीम् अप्रयुतां व्यामिश्रावाक्यरहितां निर्दोषां सुमतिं ज्ञानकर्मणोः मध्ये यास्का सुमतिः सुबुद्धिः अस्ति तां सुमतिं सुज्ञानं दाः = मह्यं देहि। यथा येन प्रकारेण सुवितस्य = सुष्ठु प्राप्तव्यस्य भूरेः बहुलस्य अश्वावतः वेगवतः व्याप्तस्य चन्द्रस्य पुरूणां बहूनां चन्द्रस्य चन्द्रवद्धीतलकारकस्य आह्लादकस्येति भावः। रायः श्रेयोमयज्ञानधनस्य पुरुः बहुः पर्चः सम्पर्कः नः अस्मान् प्राप्नुयात्॥२॥

लोके इति = अस्मिन् लोके पुरा पूर्वकाले मया वेदरूपिणा द्विविधा द्विप्रकारा निष्ठा शास्त्रीयधर्मानुष्ठानं यथा स्यात्तथा स्थितिः प्रोक्ता कथिता। सांख्यानां =

वेदान्तैः सम्यक् ख्यायते इति सांख्यं निर्विशेषं परं ब्रह्म। तदेव ये विदुः ते सांख्याः ब्रह्मविदः तेषां सांख्यानां ब्रह्मज्ञानिनां ज्ञानयोगेन निष्ठा नैश्चल्येन स्थितिः प्रोक्ता। योगिनां कर्मयोगिनां गृहिणां कर्मयोगेन "युज्यतेऽभ्युदयोऽनेनेति योगः" कर्म एव योगः कर्मयोगः तेन कर्मयोगेन निष्ठा नियमस्थितिः प्रोक्ता॥२॥

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥३॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे॥ ऋ० १०।७१।७॥

अक्षण्वन्त इति = अक्षण्वन्तः अक्षिमन्तः इन्द्रियानुवर्तिनः कर्मयोगिन इत्यर्थः। कर्णवन्तः = कर्णे निकृत्तद्वाराः गर्भावस्थायामेव केनापि निर्मितबिलाः। कर्णवन्तः श्रोत्रेन्द्रियेण उपदेशकस्य गुरोः शब्दस्य श्रोतारः अर्थात् ज्ञानिनः, इति द्विविधा निष्ठा दृश्यते लोके। एवंविधाः इमे कर्मयोगिनः ज्ञानयोगिनश्च सखायः समानज्ञानाः सन्तोऽपि मनोजवेषु = मनसा गम्यन्ते इति मनोजवाः प्रज्ञादयः तेषु असमाः अतुल्याः बभूवुः भवन्ति। ज्ञानयोगमार्गः अन्यः, कर्मयोगमार्गः अन्यः। तेषु मध्ये त्वे एके पुरुषाः आदघ्नासः ~~आस्यप्रमाणो~~-दकाः ह्रदा इव = आस्यशब्दस्य पृषोदरादित्वात् आकारादेशः। आस्यदघ्नाः = आस्यप्रमाणोदकाः ह्रदा इव। यथा मुखप्रमाणमात्रे ह्रदे स्नानादिना कार्यं मध्यमतया प्रचलति एवं मध्यमज्ञानेन मध्यमं ज्ञानमुपजायते, तेन कृत्यं भवति। एवं त्वे = एके उपकक्षासः कक्षसमीपप्रमाणोदकाः ह्रदा इव अल्पोदका इत्यर्थः। यथा कक्षमात्रोदके ह्रदे स्नानाय कष्टं भवति एवमत्यल्पज्ञानेनापि कष्टं भवति। त्वे एके स्नात्वाः ~~स्नानार्हाः अक्षोभ्योदकाः ह्रदा इव पूर्णज्ञानिनः~~ स्नातेः कृत्यार्थे त्वन् प्रत्ययः। स च "अर्हे कृत्यतृचश्च" इत्यर्हार्थे च भवति। त्वे एके स्नात्वाः स्नानार्हाः अक्षोभ्योदकाः ह्रदा इव पूर्णज्ञानिनः ज्ञानयोगेन पूर्णकर्मयोगिनः कर्मयोगेन ददृश्रे = दृश्यन्ते। एषा महाप्रज्ञा स्थिरा बुद्धिर्वा कथ्यते॥३॥

न कर्मणामिति कर्मणां नित्यानां श्रौतादीनां अनारम्भात् नैष्कर्म्यं निष्कर्मतां पुरुषः न अश्नुते न प्राप्नोति। कर्मणि क्लेशभूयिष्ठत्वबुद्ध्या अलसत्वेन वाऽऽपातवैराग्यात् शिखायज्ञोपवीतत्यागमात्रात् एव सिद्धिं नैष्कर्म्यसिद्धिं विदेहमुक्तिं वा न समधिगच्छति॥४॥

न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति॥४॥

~~अक्रन् कर्म कृत्वा स्तं प्रेत सचाभुवः।~~

~~अक्रन् कर्म कर्म~~ अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वा स्तं प्रेत सचाभुवः॥ यजु० ३।४७॥

अक्रन्निति = ये मयोभुवा मय इति सुखनाम, मयेन सुखेन या भावयति इति मयोभुवा सुखमंगलकारिण्या वाचा वेदमंत्रेण शुद्धया वाण्या शुद्धेन मनसा च सह कर्मानारम्भकर्मसंन्यासपरित्यक्तया वाच्या इत्यर्थः। सचाभुवः = सहायकरूपाः

कर्मयोगेन सहभवनशीलः इत्यर्थः। कर्मकृतः कर्माणि लौकिकवैदिकानि कर्माणि कुर्वन्तीति कर्मकृतः। कर्म=स्वस्ववर्णानुकूलं वेदविहितं कर्तव्यं कर्म आकुर्वन् कुर्वन्ति। ते वेदोक्तकर्मकर्तारः देवेभ्यः ईश्वरार्थं कर्म यथाविधि नित्यनैमित्तिकं कर्म कृत्वा अनुष्ठाय अस्तं सुखमयं गृहं शान्तिधामेति भावः, प्रेत प्राप्नुवन्ति ॥४८॥

न हीति = अत्र लोके जातु कदाचित् अपि कश्चित् यो वा को वापि प्राणी क्षणं क्षणार्धमपि अकर्मकृत् किमपि कर्म अकुर्वन् न तिष्ठति। विना सुषुप्तिं सर्वदा कायिकं वाचिकं मानसिकं चाक्षुरादिकं वा कर्म कुर्वन्नेव तिष्ठति, न तु मौनं तिष्ठतीत्यर्थः। हि यस्मात् कारणात् सर्वोऽपि प्राणिवर्गः प्रकृतिजैः सत्वरजस्तमोगुणात्मिका मूलप्रकृतिः तस्याः सकाशात् जाताः प्रकृतिजाः तैः प्रकृतिजैः गुणैः द्रव्यगुणकर्म-जातिरागद्वेषादिभिः गुणैः अन्तःप्रेर्यमाणः अवशः अस्वतंत्रः बहिरङ्गः नाना-व्यापाररूपं कर्म कार्यते ॥५॥

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैः गुणैः ॥५॥

देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः ॥ अथ० ६।२३।२॥

देवस्येति = सवितुः जगतः उत्पादकस्य देवस्य प्रकाशमानस्य परमेश्वरस्य सवे सृष्टौ मानुषाः = मानुषशब्दः जीवमात्रोपलक्षकः सर्वे जीवाः कर्म कार्यं कृण्वन्तु कुर्वन्तु॥ तथा च बृह० उप० अध्या० ३ ब्रा० २ श्रु० ३, ४, ५, ६, ८ = "वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति। जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतः चक्षुषा हि रूपाणि पश्यति। श्रोत्रं जिह्वया हि रसान् विजानाति। चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतः चक्षुषा हि रूपाणि पश्यति। श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति। हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति"। अर्थस्तु सुगम एव।

कर्मेन्द्रियाणीति = विमूढात्मा विमूढः कार्याकार्यविवेकरहितः आत्मा मनो यस्य स विमूढात्मा सन् कर्मेन्द्रियाणि हस्तपादादिपंचकर्मेन्द्रियाणि संयम्य संनिरुध्य चक्षुषी निमील्य इन्द्रियार्थान् अन्तः इन्द्रियविषयान् मनसा स्मरन् चिन्तयन् यः आस्ते 'ब्रह्मवित् अहमेव कर्मसंन्यासेन कृतार्थोऽस्मि' इति स मिथ्याचारः असदाचारः कपटचरित्रः आत्मवंचकः विद्वद्भिः उच्यते कथ्यते ॥६॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥६॥

एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः। अव्यो वारं विधावति॥ साम० १२८०। ऋ० ९।२८।१॥

एष इति = एषः मूढः जीवात्मा वाजी वागादिकर्मेन्द्रियैः हेतुभिः गमनशीलः नृभिः नेतृभिः चक्षुरादिभिरिन्द्रियैः हितः धृतः पोषित इत्यर्थः। विश्ववित् = विश्वेषां इन्द्रियार्थानां वेत्ता। मनसस्पतिः = मनसः अन्तःकरणस्य अन्तर्विचारस्य पतिः पालयिता सन् अव्यम् अविनश्वरं

वारं मुहुं जगति मुहुर्मुहुः जन्ममरणयुद्धं विधावति विविधप्रकारं गच्छति। अन्वय
अव्ययम्=अविसम्बन्धि वारं क्रमे गडुरिकाप्रवाहमित्यर्थः विधावति विविधं गच्छति
तथा चोपनिषद् = छान्दो० उप० अध्या० ५ खं० १० श्रु० ७ = "य इह कपूय चरणा-
भ्यासो ह यत्ते, कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा"॥

य इति = यः तु अनालब्धः इन्द्रियाणि चक्षुरादीनि इन्द्रियाणि रागद्वेषादिदोषाणां
गोचराणि न भवेयुः यथा तथा मनसा नियम्य संनिरुध्य कर्मेन्द्रियैः वागादीन्द्रि-
यैः कर्मयोगं श्रौतं स्मार्तं वा आरभते, श्रद्धया चित्तशुद्धयै करोति स विशिष्यते सः
संन्यासापेक्षया श्रेष्ठ इत्यर्थः॥७॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन!
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥७॥

अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सचाभुवः॥
यजु० ३।४७॥

अक्रन्निति = ये पुरुषाः मयोभुवा, मय इति सुखनाम। मयः सुखं भावयतीति
मयोभूः तया मयोभुवा सुखमंगलकारिण्या वाचा वागादीन्द्रियेण सह सचाभुवः =
'सचा सहेत्यर्थः' सचा सह भवन्तीति सचाभुवः कर्मेन्द्रियैः श्रौतं स्मार्तं धर्मं सहैव
कुर्वन्तः कर्मकृतः सुखमयानि कर्माणि कुर्वन्ति ते कर्मकृतः कर्म श्रौतं स्मार्तं वा कर्म
अक्रन् कुर्वन्ति। ते एतत् कृत्वा देवेभ्यः देवाः प्रकाशमानानि इन्द्रियाणि तदर्थाय कर्म
क्रियमाणं कर्म कृत्वा अनुष्ठाय अस्तम् असक्तत्वेन सुखमयं गृहं प्रेत प्राप्नुवन्ति।३।४७॥
यथा चोपनिषद् = कठोप० अध्या० २ वल्ली २ श्रु० ११ = "ओं सूर्यो यथा सर्वलोकस्य
चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः"॥

नियतमिति = हि यस्मात् कारणात् अकर्मणः सर्वकर्मपरित्यागात् कर्म क्रिय-
माणं कर्म ज्यायः श्रेष्ठम् अतः त्वं नियतं विध्युक्तं कर्म नित्यं वा नैमित्तिकं वा
ईश्वरप्रीत्यर्थं चित्तशुद्ध्यर्थं च कुरु। अकर्मणः नियतकर्मकर्तृत्व शून्यस्य ते तव
शरीरयात्रा देहजीवननिर्वाहः न प्रसिद्ध्येत् प्रकर्षेण सिद्धिं न प्राप्नुयात्॥८॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः॥८॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति
न कर्म लिप्यते नरे। यजु० ४०।२॥

कुर्वन्नेवेति = इह अस्मिन् जन्मनि संसारे वा कर्माणि शास्त्रोक्तनित्यनैमित्तिककर्माणि
कुर्वन् शतं समाः शतवर्षपर्यन्तं यावदायुरिति भावः। जिजीविषेत् जीवितुमिच्छेत्
एवं निष्कामकर्मानुष्ठानेन त्वयि मुमुक्षौ नरे मनुष्ये कर्म कृतकर्मफलं जन्मादिरूप
त्वेन निष्पन्नं न लिप्यते न बन्धनहेतुत्वेन भवति। इतः उक्तप्रकारात् भिन्नः
मार्गः अन्यथा मुक्तिर्नास्ति। ४०।२॥ यथा गोभिलगृह्यसूत्रे = "अथ य इमां संध्यां
नोपासते नाचष्टे न सजयति, ये तु उपासते श्रोत्रियाः भवन्ति - इत्युपनीता ऋद्धेदन
भोजन भेदन मैथुन स्वप्न स्वाध्यायानाचरन्ति ये संध्याकाले - ते श्वशूकरशृगाल-

गर्दभ सर्प योनिष्वभि संपद्यमानास्तमो भिरसंपद्यन्ते । तस्मात् सायं प्रातः संध्यामुपासीत"॥

यज्ञार्थादिति = "यज्ञो वै विष्णुः" इत्युक्तेः यज्ञस्य श्रीविष्णोः अर्थं निमित्तं यत्कर्म क्रियते वैदिकं तद्यज्ञार्थं तस्मात् यज्ञार्थात् कर्मणः ईश्वर प्रीति हेतोः कर्मणः अन्यत्र भिन्ने काम्यादौ कर्मणि अयं लोकः अधिकारी ब्राह्मणादिः कर्मबन्धनः कर्मैव बन्धनं जन्मादेः निबन्धनं हेतुर्यस्य स कर्मबन्धनो भवति । तदर्थं तत्कृते तस्य ईश्वरस्य प्रीत्यर्थं त्वं मुक्तसंगः फलाभिसन्धि रहितः भूत्वा विहितं कर्म समाचर सम्यक्तया कुरु॥६

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।

तदर्थं कर्म कौन्तेय! मुक्तसंगः समाचर॥ ९॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ यजु० ३१ । १६ ॥ ऋ० १ । १६४ । ५० । ऋ० १० । ९० । १६

यज्ञेनेति = देवाः कर्मणा देवत्वं प्राप्ताः पुरुषाः यज्ञेन ज्ञानयज्ञेन यज्ञं "यज्ञो वै विष्णुः" यजु० २२ । २० ॥ तं यज्ञं विष्णुं परमात्मानं अयजन्त अनुष्ठानाय संयोजितवन्तः । "यजिरत्र संगतीकरणवाची" । तानि धर्माणि अग्निसाधनानि कर्माणि यद्वा नित्यनैमित्तिक धर्मकर्माणि प्रथमानि– 'प्रथम इति मुख्यनाम' । प्रतमानि प्रकृष्टतमानि फलप्रसवसमर्थानि आसन् सन्ति । ते देवाः निष्कामकर्मकर्तारः विद्वांसः ह = खलु । महिमानः नित्यकर्मकर्तृत्वेन महत्वयुक्ताः नाकं = कं सुखं, न कम् = अकम् दुःखं तत् अत्र नास्ति इति नाकः । "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत्पदं स्वःपदास्पदम्" इत्युक्तेः नित्यसुखस्वरूपं "यद् गत्वा न निवर्तन्ते तद्धाम परमं मम" – भग० गीता १५ । ६ ॥ इति भगवता प्रोक्तं स्थानं मुक्तिधाम सचन्ति प्राप्नुवन्ति । यत्र यस्मिन् नाके पूर्वे पुरातनाः साध्याः = विराडुपास्तिसाधकाः देवाः । यद्वा = "प्राणाभिमानिनो देवाः साध्या इत्युच्यन्ते" यद्वा = साध्याः अहंग्रहोपासकाः, यद्वा = साध्यं ज्ञानेन कर्मणा वा प्राप्यं वस्तु येषां ते देवाः साध्याः सन्ति निवसन्ति । तस्मात् इदानीमपि यज्ञाधिकारिभिः एवं कर्तव्यमित्यर्थः ॥ यथा च = कठोप० अध्या० २ वल्ली १ श्लो० २ = "पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते"॥

सहयज्ञा इति = पुरा सृष्ट्यादौ प्रजापतिः परमात्मा सहयज्ञाः श्रुत्युक्तैः यज्ञैः सह प्रजाः ब्राह्मणादि वर्णान् सृष्ट्वा रचयित्वा ताः प्रजाः लोकान् उवाच उपदिदेश– यूयम् अनेन यज्ञेन श्रौतेन स्मार्तेन वा प्रसविष्यध्वम् उत्पादयध्वम् । एषः यज्ञः वो युष्माकं इष्टकामधुक् इष्टान् इच्छाविषयभूतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक् अस्तु भवतु ॥ १० ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।

अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

यत्पुरुषेण हविषा देवाः यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ यजु० ३१ । १४ ॥
यद्वा = यज्ञो बभूव स आबभूव स प्रजज्ञे स उ वावृधे पुनः । स देवानामधिपतिर्बभूव सो अस्मासु द्रविणमादधातु ॥ अथ० ७ । ५ । २ ॥

यत्पुरुषेणेति = यत् यस्मात् कारणात् हविषा = हविर्भूतेन ग्राह्येण पुरुषेण परमात्मना देवाः विद्वांसः ज्ञानिनः यज्ञं अतन्वत विस्तारितवन्तः। तथा योगिनोऽपि पुरुषेण परमात्मना एव अमृतभूतेन दीपितेन आत्मना आत्मयज्ञं समृध्दिकृतवन्तः। अस्य यज्ञस्य वसन्तः आज्यं घृतमासीत् अस्ति। ग्रीष्मः इध्मः = प्रकाशकं काष्ठम् आसीत् अस्ति। शरत् हविः = हवनीयं वस्तु आसीत् अस्ति। तथा वसन्तशब्देन सात्विको गुण उच्यते, ग्रीष्मशब्देन राजसो गुणः, शरच्छब्देन तामसो गुणः। त्रयो हि गुणाः तत्रात्मयज्ञे योगिनो जुह्वति। ३१।१४"

ये द्वा = यज्ञः सृष्ट्यादौ प्रजोत्पत्त्या सहैव यज्ञः बभूव उत्पन्नः। स यज्ञः एव आ बभूव सर्वतः व्याप्तवान्। स यज्ञ एव देवानां विदुषां ज्ञानिनां वा अधिपतिः इष्टकामदातृत्वेन स्वामी बभूव भवति। स यज्ञ एव अस्मासु अस्माकं "अत्र विभक्तिव्यत्ययः" अस्माकं निमित्त द्रविणं भुक्तिमयं धनं आदधातु आ समन्तात् धारयति ॥२॥

देवानिति = अनेन यज्ञेन यूयं देवान् दीप्यमानान् इन्द्रादिदेवान् ज्ञानिनो वा भावयत = संभावयत हविर्भिः तर्पयत। अनेन संभाविताः तुष्टाः सन्तः ते देवाः वो युष्मान् भावयन्तु = वृष्ट्यादीष्टार्थ प्रदानेन अन्नादिभिर्वा संभावयन्तु वर्धयन्तु प्रीणयन्तु। एवं परस्परं भावयन्तः प्रीणयन्तः सन्तः देवानां प्रसत्त्या परं श्रेयः परमं कल्याणं अवाप्स्यथ लप्स्यध्वे ॥११॥

देवान् भावयतानेन ते देवाः भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥

भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम्। भूम्यां मनुष्या जीवन्ति स्वधयाऽन्नेन मर्त्याः॥ अथ० १२।१।२२॥

भूम्यामिति = मनुष्याः भूम्यां पृथिव्यां स्थित्वा अरंकृतं अलंकृतं सुशोभितं यज्ञं हव्यं घृतादि चरु पूजात्मकं देवेभ्यः ददति इन्द्रादिदेवेभ्यः यच्छन्ति। अत एव मर्त्याः मरणधर्माणः ते मनुष्याः भूम्यां पृथिव्यां स्वधया स्वधास्वरूपेण वृष्ट्याद्युत्पन्नेन अन्नेन जीवन्ति जीवनं धारयन्ति। यथा च = "यदहरेव जुहोति तदहः पुनर्मृत्युं जयति"। बृह० उप० अध्या० १ ब्रा० ५ श्रु० २॥ तथा चोपनिषद्व्याख्यानेऽप्युक्तम् = "देवानभाजयदिति हुतं च प्रहुतं च"॥

इष्टानिति = यज्ञभाविताः यज्ञैः श्रौतैः स्मार्तैः भाविताः संभाविताः सन्तुष्टाः देवाः वो युष्मभ्यं इष्टान् इच्छाविषयभूतान् भोगान् भोग्यपदार्थान् दास्यन्ते वितरिष्यन्ति। एवं तैर्देवैः दत्तान् पदार्थान् चरुपुरोडाशादिरूपेण एभ्यः देवेभ्यः अप्रदाय अदत्वा यः स्वशरीरमेव पोष्टुं भुंक्ते स स्तेनः देवादीनां चौरः शिष्टानां निन्द्यश्च भवति ॥१२॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तान् प्रदायैभ्यो यो भुंक्ते स्तेन एव सः॥१२॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः। अपास्मात् प्रेयान्न तदोको अस्ति पृणन्तं मन्यमरणं चिदिच्छेत् ॥ ऋ० १०।११७।४॥

न स इति = सः पुरुषः सखा समानख्यानः मित्र मिति यावत् न भवति किन्तु सखा चौर एव सः। सः सचाभुवे सर्वदा सहभवनशीलाय सचमानाय वर्षादिद्वारा सेवमानाय सख्ये मित्रस्वरूपाय देवाय पित्वः पितून् चरुपुरोडाशाद्यन्नानि-

न ददाति न प्रयच्छति स सुहृत् न भवतीत्यर्थः। अस्मात् अदातुः पुरुषात् स अपप्रेयात् अपगच्छेत्। यदि सर्वं परित्यज्य देवः पृणन्तं पुरोडाशादिकं हविः प्रयच्छन्तं अन्यं अपरं अरणम् अर्यं स्वामिनं यज्ञारणादिरहितं चित् एव इच्छेत् कामयेत ॥४॥ तथा च—
" यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च। अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति " मुण्ड० उप० मुण्डक १ खं० २ श्लो० २

यज्ञशिष्टेति — यज्ञशिष्टाशिनः पञ्च महायज्ञान् विधाय तच्छेषान्नभक्षणशीलाः पुरुषाः सन्तः सज्जनाः सर्वकिल्बिषैः सर्वपापैः मुच्यन्ते त्यज्यन्ते। पापपरित्यागात् चित्तनैर्मल्यं जायते, ततो ज्ञानमुत्पद्यते ततो मुक्तिर्भवति इति वदन्ति। पंचमहायज्ञान् अकुर्वाणाः पापाः पापाचारिणः ये पुरुषाः आत्मकारणात् स्वोदरपूर्तिहेतोः पचन्ति पाकं कुर्वन्ति देवपितृब्राह्मणेभ्योऽदत्वा स्वयमेव भुञ्जते ते तु अघम् अन्नरूपेण स्थितं पापमेव भुंजते भक्षयन्ति॥१३।

यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः।

भुञ्जते ते त्वघं पापाः ये पचन्त्यात्मकारणात् ॥१३॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥६॥ ऋ० १०।११७।६॥ तै० ब्रा० २।८।८।३॥ निरु० ७।३॥

यद्वा — स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय। अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ ऋ० १०।११७।३॥

मोघमिति — अप्रचेताः मूर्खः यद्वा दाने चेतो मनो यस्य न भवति स अप्रचेताः — अदाता, यद्वा पापः मोघं व्यर्थमेव अन्नं विन्दते लभते। इदं सत्यं यथार्थमेव ब्रवीमीति ईश्वरो वदति। न केवलं व्यर्थमपि तु तदन्नभक्षणं तस्य पुरुषस्य सः वधः मृत्युः इत् एवास्ति। यः पापः अर्यमणं नियामकादिदेवान् हविःप्रदानेन न पुष्यति न पोषयति, नो = नापि सखायं समानख्यानं अभ्यागतम् अतिथिं मित्रवर्गं च न पोषयति। अतएव केवलादी देवपितृब्राह्मणेभ्योऽदत्वा केवलमसाक्षिकम् अन्नं भुञ्जानः पुरुषः केवलाघो भवति केवलं पापवान् भवति अघमेव केवलं तस्य शिष्यते। " नैहिकं नामुष्मिकमिति तस्मात् यथाकथञ्चित् दातव्यमित्यभिप्रायः॥६

स इति = सः पुरुषः इत् = एव भोजः दानी अस्ति यः अन्नकामाय अन्नेच्छायै चरते विहरते कृशाय दरिद्रतया दुर्बलाय गृहवे गृहमागताय जनाय किमपि भोजनं ददाति दानं करोति। अतिथियज्ञे यामा गन्तारो देवाः अत्र अस्मै दानिपुरुषाय अरम् अलं भवति। उत = च अपरीषु अपरेषु पुरुषेष्वपि सखायं कृणुते विधत्ते। गृहवे = गृहे मृगय्वादित्वात् कु प्रत्ययः। यामहूतौ = यातेः = " अर्तिस्तुसुहुसृ " — इत्यादिना मन् प्रत्ययः। ते आहूयन्ते ऽत्र इति यामहूतिः यज्ञः॥ तथा च = उप० बृह० अध्या० १ ब्रा० ५ श्रु० २ = " यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत् पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत् "।

अन्नादिति = अन्नात् स्त्रीपुंसाभ्यां भक्षितात् अन्नात् शुक्रशोणितरूपेण परिणतात् भूतानि प्राणिनः भवन्ति उत्पद्यन्ते। पर्जन्यात् मेघात् अन्नसंभवः व्रीहियवादि-

रूपान्नस्य संभवः प्रादुर्भावः उत्पत्तिः भवति। यज्ञात् यथाशास्त्रं अग्नौ हवन-करणात् पर्जन्यः तर्पयिता चासौ जन्यश्चेति पर्जन्यः "तृपेः किचि प्रत्यये आद्यन्तयोः वर्णविपर्ययः। यद्वा जनेभ्यो हितः जन्यः, कालेकाले प्रवर्षणेन तर्पयिता सन् जनानां हितकारी भवति। यद्वा काले काले प्रवर्षणार्थं रसान् प्रार्जयतीति पर्जन्यः मेघः वृष्टिरिति यावत्, भवति। यज्ञः जगज्जीवनहेतुर्यो यज्ञः स तु कर्मसमुद्भवः। याज्ञिकैः होममंत्रादिक्रिया वैदिकी कर्मेत्युच्यते, तस्मात् सम्यगुद्भवः यस्य स कर्मसमुद्भवः अपूर्वो यज्ञः ॥१४॥

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥

"यज्ञो इन्द्रमवर्धयत् यद्भूमिं व्यवर्तयत। चक्राणः ओपशं दिवि ॥ अथ० २०।२७।५॥ साम० १२१। साम० १६३९॥

यद्वा = "यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः। अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥ ऋ० १।७९।३॥

यज्ञ इति = यज्ञः अस्माभिः अनुष्ठीयमानं हवीरूपं कर्म इन्द्रं मेघं अवर्धयत् हविषा अभिवृद्धिम् अकरोत्। कदा इत्युक्ते:- यदा यदा दिवि अन्तरिक्षे मेघः ओपशं सर्वतः उपशयानं चक्राणः कुर्वन् भूमिं पृथिवीं व्यवर्तयत् विवृतां वृष्ट्युदकेन सस्यादिसमृद्ध्या भूमिं पुष्टामकरोत्। अथ० २०।५॥

यदीमृतस्येति = यत् यदा ईम् अयं पर्जन्यः ऋतस्य उदकस्य पयसा पयोवत् सारभूतेन रसेन पियानः पृथिवीं आप्याययन् कुर्वन् जगतः तृप्तिं कुर्वाणः इति यावत् ऋतस्य वृष्टिजलस्य रजिष्ठैः ऋजुतमैः पथिभिः मार्गैः नयन् पृथिव्यां प्रापयन् अर्यमा आदित्यः "अर्यमा आदित्यो भवति" निरु० २।१३॥ मित्रः वर्षाकारकत्वेन जगतः मित्रभूतः सन् वरुणः सर्वश्रेष्ठः सर्वैः वरणीयो वा परिज्मा = परितः गन्ता वायुः उपरस्य मेघस्य योनौ वृष्ट्युदकोत्पत्तिस्थाने त्वचं वृष्ट्युदकस्याच्छादकं प्रदेशं पृंचन्ति संयोजयन्ति। पियानः = "स्फायी ओप्यायी = वृद्धौ" "बहुलं छन्दसि" इति शपो लुक्। धातोर्व्यत्ययेन पीभावः। रजिष्ठैः = ऋजुशब्दात् इष्ठनि "विभाषर्जोश्छन्दसि" पा० ६।४।१६२ इति ऋकारस्य रत्वम्। "टेः" इति टेर्लोपः। पृंचन्ति = पृची संपर्के, रौधादिकः ॥३॥ यथा च = तै० उप० अनु० २ श्रु० २६ = "अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः। अथैनदपि यन्त्यतः अन्नं हि भूतानां ज्येष्ठम्" तथा च मनुरप्याह = "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥ मनु० अध्या० ३ श्लो० ७६॥

कर्मेति = कर्म हवीरूपं यज्ञात्मकं कर्म ब्रह्मोद्भवं ब्रह्म वेदः ऋगादिः तस्मादुत्पन्नं विद्धि जानीहि। ब्रह्म वेदः अक्षरसमुद्भवं सर्वजगत्कारणात् अक्षरात् परमात्मनः सकाशात् निःश्वासरूपेण समुद्भवं आविर्भूतं विद्धि जानीहि। तस्मात् कारणात् सर्वगतं सर्वार्थप्रकाशकत्वेन सर्वस्थितं यद्वा ब्रह्मरूपतया सर्वत्र स्थितं ब्रह्म वेदः ईश्वरो वा नित्यं यज्ञे ब्राह्मणादिभिरनुष्ठेये कर्मणि नित्यं नियमेन प्रतिष्ठितम् ॥१५॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।

तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥

तस्मात् यज्ञात् सर्वहुत: ऋच: सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ यजु० ३१।७। ऋ० १०।९०।९। अथ० १९।६।१३॥

तस्मादिति = तस्मात् यज्ञात् यज्ञस्वरूपात् वेदात् यज्ञकर्मप्रतिपादकमन्त्रसमूह: अजायत उदपद्यत। तस्मात् सर्वहुत: सर्व: सर्वाङ्ग: सन् सर्वै: हूयते। यद्वा = यस्मै सर्वे लोका: पूज्यान् देयान् पदार्थान् जुह्वति स सर्वहुत: तस्मात् सर्वहुत: परमेश्वरात् ऋच: ऋग्वेद: सामानि गीतात्मकसामवेद: जज्ञिरे प्रादुर्भूतानि। तस्मात् ब्रह्मण: छन्द: छन्दांसि = अथर्ववेद मन्त्रा: जज्ञिरे प्रादुर्भूतानि उत्पन्ना:। तस्मात् ब्रह्मण: यजु: यजुर्वेद: अजायत। अत: स च सर्वहुत् ब्रह्म परमात्मा वेदचतुष्टयात्मकज्ञानं सर्वत्र सर्वेषु यज्ञेषु प्रतिष्ठितं भवति॥१३॥ वेदमाहात्म्यं वेदेनैव प्रत्यपादि।

"पावमानी: स्वस्त्ययनी सुदुघा हि घृतश्चुत: ... गच्छति नान्दनम्। पुण्यांश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति"। साम० १३०३॥

पावमानीरिति = पावमानी: पूयमानसोमयज्ञसम्बन्धिन्य: ऋच: स्वस्त्ययनी: कल्याणफलस्य प्रापयित्र्य: सन्ति वेदोद्भवत्वात् सन्ति, ताभि: ऋग्भि: नान्दनम् आनन्दकारकम् अक्षरं ब्रह्म गच्छति प्राप्नोति। अत: तत्र यज्ञात्मके ब्रह्मानन्दे वसन् पुण्यान् पवित्रान् भक्षान् भक्षणीयान् कर्मोद्भवान् भोग्यान् भक्षयति भुङ्क्ते। पुन: अमृतत्वं च यज्ञामृतत्वं च गच्छति प्राप्नोति ॥५॥ यथा चोपनिषदि = "यथार्द्रेन्धनाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेद: सामवेदोऽथर्वाङ्गिरस:"। बृह० उप० अध्या० ४ ब्रा० ५ श्रु० ११॥

एवमिति = एवं प्रवर्तितं चक्रं य: संसारी जीव: एवम् इत्थम् ईश्वरप्रवर्तितं चक्रं इह लोके नानुवर्तयति नानुतिष्ठति। हे पार्थ! हे अर्जुन! स इन्द्रियाराम: इन्द्रियार्थेषु एव अजस्रम् आरमतीति इन्द्रियाराम: विषयभोगलम्पट: सन् अतएव अघायु: आयुष: फलम् अघमेव यस्य सोऽघायुर्भूत्वा मोघं व्यर्थं निष्फलमेव जीवति ॥१६॥

"एवं प्रवर्तितं चक्रं नानुवर्तयतीह य:।

अघायुरिन्द्रियारामो मोघं पार्थ स जीवति"॥१६॥

"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्" ऋ० १०।७१।६॥ ऐत० आर० ३॥११॥ तैति० आर० १, ३, १(२, १५१)।

यद्वा = इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरास:। त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञय: ॥९॥ ऋ० १०।७१।९॥

य इति = य: कर्माधिकारी पुमान् सचिविदं सचिशब्द: सखिवाची य: वेदार्थं याथातथ्येन विधत्ते स वेदस्य सखा। तादृशं वेदार्थं शिरोधार्यत्वेन कुर्वाणं वेत्तीति

सञ्चिवित् । तम् अभिज्ञं सखायं स्वार्थबोधनेन उपकारित्वात् सखिभूतं वेदाज्ञाप्रवर्तितं चक्रं तित्याज त्यजति । वर्तमाने लिट् । आलस्यत्वेन संसार-मोहपरत्वेन वा परित्यजति । तस्य पुंसः वाचि सर्वस्यां लौकिक्यां वैदिक्यां वाचि अपि भागः भजनीयः कश्चिदर्थः नास्ति न विद्यते । ईम् अयं पुरुषः लोके यत् वेदव्यतिरिक्तं शृणोति तत् अलकम् अलीकम् व्यर्थमेव शृणोति । हि यस्मात् कारणात् सुकृतस्य पुण्यस्य पन्थां मार्गं न प्रवेद अज्ञानाहितत्वात् कर्मानुष्ठानमार्गं न जानाति, तस्मात् तदीयश्रवणमपि व्यर्थमेव ॥६॥

इमे इति = ये इमे लौकिकाः संसारासक्ताः पुरुषाः न अर्वाक् पंचमहायज्ञं न चरन्ति न कुर्वन्ति ये परः देवाभिपूजकं यज्ञात्मकं चक्रं न चरन्ति न कुर्वन्ति, ते ब्राह्मणासः वेदतत्त्वज्ञातारः न सन्ति । न च सुतेकरासः सोमादियज्ञसम्पादकाः सन्ति । ते अप्रजज्ञयः शास्त्रतत्त्वानभिज्ञाः एते वाचं लौकिकीं वाणीम् अभिपद्य प्राप्य पापया इन्द्रियारामया क्रीडया सिरीस्तंत्रं स्वव्यर्थजीवनं तन्वते विस्तारयन्ति ॥९॥ यथा चोपनिषद्यप्युक्तम् = "अथो ऽयं वा आत्मा सर्वेषां भूतानां लोकः, स यज्जुहोति, यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत् पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान् वासयते यदेतेभ्योऽशनं तेन मनुष्याणामथ यत् पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांस्यापि पीलिकाभ्य उपजीवन्ति, तेन तेषां लोकम्" बृह० उप० अध्या० १ ब्रा० ४ श्रु० १४॥

य इति = यः तु मानवः बहिरन्तश्च सर्वत्र ब्रह्मैव भापयति ग्राहयतीति, यद्वा मानं प्रत्यग्दर्शनं तदेव सर्वदा भाति भजति इति मानवो ब्रह्मवित् यतिः आत्मरतिः आत्मनि आत्मज्ञाने एव रतिः अन्तःकरणं रमणं क्रीडा यस्य स आत्मरतिः एव भवेत् । किं चात्मतृप्तश्च आत्मानन्दैकरसेन तृप्तश्च - आत्मप्राप्त्यैव सर्वत्र प्राप्ताऽलंबुद्धिर्यस्य स आत्मतृप्तश्च भवेत् । आत्मन्येव सन्तुष्टः चिदानन्दैकरसे ब्रह्मणि एव सन्तुष्टः । तस्य महात्मनः आत्मारामस्य कृतकृत्यस्य मानवस्य कार्यं कर्तव्यं कर्म न विद्यते न अस्ति - पर्याप्तकामत्वेन प्राप्तव्याभावात् ॥१७॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥१७॥

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य । वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्रववाचास्मै ॥४॥ ऋ० १।६७।७॥

य ईमिति = यः पुमान् ईम् एनम् आत्मानं गुहा गुहायां हृदये भवन्तं वर्तमानं चिकेत जानाति, सदा सर्वत्र विद्यमानं हृदयस्थमेव आत्मानं जानाति अर्थात् यः सर्वदा आत्मरतिरेवास्ति, यश्च ऋतस्य सत्यस्वरूपस्यात्मनः, यद्वा ऋतस्य यज्ञस्य विष्णोरिति यावत् धारा धारामिति विभक्तिव्यत्ययः । धारां धारयितारं एनमात्मानं आससाद प्राप्नोति उपास्ते इत्यर्थः । आत्मतृप्तः यः पुमान् आस्ते, ये च ऋता = ऋतानि सत्यानि आत्मनः यज्ञान् वा सपन्तः समवयन्तः समवेतं कुर्वन्तः सर्वान् आत्मनः आत्मनि एव स्पृशन्तः

पुरुषाः बिभृतानि = स्तुतीर्ध्वनिं कुर्वन्तीत्यर्थः। आदित्=सर्वात्मस्तुत्यनन्तरम् एव अस्मै पुंसे वसूनि सर्वकसयोग्यस्थानानि सर्वधनानि वा प्रवाच प्रकथयति परमेश्वरः। आत्मवत् सर्वभूतानि पश्यतः यतः संसारस्य सर्वाणि वस्तूनि आत्मवत् एव भवन्ति न च तस्य शेषकार्यं विद्यते ॥४॥ यथा चोपनिषद् = छान्दो० प्रपा०७ खं०२। श्रु०२ = "आत्मैवाधस्तात् आत्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणतः आत्मोत्तरतः आत्मैवेदं सर्वमिति, स वा एष एवं पश्यन्नेवं मन्वानः एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति॥ तथा च—" यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति॥ मुण्डको पं० मु०३ खं०१, श्रु०३॥

नैवेति = तस्य "अहमेवेदं सर्वम्" इत्यात्मविदः यतः कृतेन अनुष्ठितेन कर्मणा व्याप्तव्योऽर्थः कश्चिदपि नैवास्ति। आत्मतत्त्वात् पूर्वोक्तलक्षणस्य तस्य आत्मविदः अकृतेन विहितानाचरणेन कश्चन अनर्थः इह लोके न संभवति। उक्तलक्षणस्यात्मविदः सर्वभूतेषु सकलप्राणिमात्रेषु "ब्राह्मणो वान्यो वा कश्चिदपि अर्थव्यपाश्रयः॥ किञ्चित्कार्यमुक्तलक्षणमुद्दिश्य क्रियया व्यपाश्रयः आश्रयणीयः नास्ति ॥१८॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥ यजु०४०।७॥

यस्मिन्निति = यस्मिन् अवस्थाविशेषे संसारात् वैराग्यविधायके संप्रज्ञाता संप्रज्ञातसमाधिसमये सर्वाणि भूतानि चेतनाचेतनानि आत्मा एवाभूत् संभवति। आत्मज्ञानिनः "न कृतेन नाकृतेन च प्रयोजनमस्ति, सर्वत्रैवात्मरूपत्वात्"। एकत्वमनुपश्यतः "आत्मैवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादि वाक्यविचारमवलोकयतः विजानतः तत्तदवस्थाविशेषे कृतचेतसः आत्मविदः यतः "संप्रति एतत्प्राप्तव्यमस्ति" इति कः मोहः न कश्चिदपीत्यभिप्रायः तथा एवंविधस्य यतः "संप्रति एतदनुष्ठानं न कृतमतः दोषो भविष्यतीति कः शोकः, न कोऽपि शोकः इत्यर्थः।७। यथा चोपनिषद्यप्युक्तम् = "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः"। माण्डू० उप० श्रु०७॥

तस्मादिति = हि यस्मात् कारणात् पुरुषः स्वयमसक्तः फलाकांक्षारहितः कर्म लौकिकं वैदिकं वा निष्कामकर्म आचरन् सम्यक् अनुतिष्ठन्नेव-

परं परमपुरुषार्थं मोक्षम् आप्नोति। तस्मात् कारणात् ~~पुरुषः~~ त्वमसक्तः
~~फलाकांक्षः~~ त्वमपि असक्तः कर्मफलसंगरहितः सन् सततं नित्यं कार्यं कर्तव्यं
नित्यं नैमित्तिकं च कर्म समाचर, श्रद्धाभक्तिभ्यां ईश्वरार्पणबुद्ध्या
सम्यक् कुरु। कर्मणैव हि चित्तशुद्धिं प्राप्य ज्ञानं तज्जन्यं मोक्षं च प्राप्स्य-
सीत्यर्थः ॥१९॥

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥१९॥

विद्यां च विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ यजु० ४०।१४॥

विद्यामिति = यः आत्मज्ञानी पुरुषः वेदतत्त्वज्ञाता वा कर्मफलाभिसन्धिरहितः
वा ~~विद्या~~ विद्यां आत्मज्ञानं अविद्यां च करणीयं वैदिकं कर्म च उभयं = "कर्मणा
अन्तःकरणस्य शुद्धिः, ज्ञानेन च मोक्षः" इत्युभयं सह एकीभूतं कर्मकाण्डं ज्ञानका-
ण्डस्य गुणभूतम्। अथ कर्मकाण्डं ज्ञानकाण्डं च एकीकृत्य वेद जानाति। स मुमुक्षुः
अविद्यया कर्मानुष्ठानेन मृत्युं जन्ममरणरूपप्रवाहं तीर्त्वा उत्तीर्य कृतकृत्यो भूत्वा
विद्यया ब्रह्मपरिज्ञानेन अमृतत्वं मरणधर्मरहितत्वं मोक्षम् अश्नुते प्राप्नोति।
कर्मणेति = जनकादयः अश्वपतिभगीरथप्रभृतयः कर्मठाः
मानवाः कर्मणा एव श्रौतस्मार्तकर्मानुष्ठानेनैव संसिद्धिं मुक्तिसिद्धिं आस्थि-
ताः प्राप्ताः। अतः त्वमपि लोकसंग्रहं लोकाः पामराः जनाः तेषां संग्रहः स-
त्कर्ममार्गप्रदर्शनेन तारणम् उन्मार्गात् निवारणं च पश्यन् मया क्रिय-
माणं कर्म लोकोपकाराय भवतीति अवलोकयन्नपि कर्म कर्तुमर्हसि ॥२०॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥२०॥

विष्टी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः। सौध-
न्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥ऋ०१।११०।४॥ नि० ११-
१६॥
अथवा = "इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे। सौ-
धन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया" ॥ ऋ० ३।६०।३
विष्टी इति = वाघतः ऋत्विग् नामैतत्। वाघतः ऋत्विजः वैदिकयज्ञानुष्ठातारः
सौधन्वनाः सुधन्वनः आंगिरसस्य पुत्राः यथा यास्केनापि एवं प्रत्यपादि =
"सुधन्वनः आंगिरसस्य त्रयः पुत्राः बभूवुः। ऋभुर्विभ्वावाज इति प्रथमो-
त्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेनेति" नि० ११।१६॥
ऋभवः = उरु ~~भासमानाः~~ कर्मानुष्ठानेन अतितेजस्विनः यद्वा ऋतेन सत्येन य-
ज्ञेन वा भान्तीति ऋभवः। यद्वा = ऋतेन यज्ञेन सत्येन वा भवन्तीति। यद्वा ऐति-
हासिकपक्षे = ऋभवः सुधन्वनः राज्ञः पुत्राः। यथा यास्केन निरुक्ते प्रत्यपादि।
"ऋभवः उरु ~~भान्तीति~~ भान्तीति वा" । नि० ११।१५। मर्तासः सन्तः ऋण-

धर्माणः मनुष्याः सन्तः मरणधर्माणः मनुष्याः सन्तः शमी = कर्माणि = "शमीति कर्मनाम । तरणित्वेन क्षिप्रत्वेन सततमित्यर्थः। तरणिः इति क्षिप्रनाम। विष्ट्वी = कृत्वा। विष्ट्वी यद्यपि कर्मनाम तथापि अत्र क्रियापरम् = कृत्वा इत्यर्थः। अमृतत्वम् = अमृतभावम् अमरणधर्माणं मोक्षम् आनशुः आनशिरे = प्राप्तवन्तः।" ऋभवो वै देवेषु तपसा सोमपीथम् अभ्यजनयन्" इत्यादि - ऐत० ब्रा० ३।३०॥ सूरचक्षसः = सूरख्यानाः सूर्यविख्याताः सूर्यसमानदर्शनाः सूर्यसमानप्रज्ञाः वा सन्तः ते ऋभवः कर्मानुष्ठातारः संवत्सरे संवत्सरावयवभूते वसन्तादिकालिकयज्ञे धीतिभिः कर्मभिः कर्मानुष्ठानैः इति भावः। समपृच्यन्त समयुज्यन्त। अत्र निरुक्तम् = "कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे, सौधन्वना ऋभवः सूरख्यानाः वा सूरप्रज्ञाः वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः। ऋभुर्विभ्वा वाज इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः। निरु० ११।१६।४॥

यद् यदिति = श्रेष्ठः श्रौतस्मार्तधर्मानुष्ठाता सदाचारसंपन्नः पुमान् यत् यत् श्रौतं स्मार्तं वा कर्म आचरति नियमेन अनुतिष्ठति, तद् दृष्ट्वा इतरः अन्यः सर्वसाधारणः जनोऽपि तत् तत् कर्म एव आचरति। सः पूर्वः श्रेष्ठः यत् शास्त्रं स्वयं प्रमाणं कुरुते "इदमेव प्रमाणम्" इति व्यवहरति, लोकः मूढजनोऽपि तदेव तेन प्रमाणीकृतं शास्त्रम् अनुवर्तते। तदेव शास्त्रं स्वयं प्रमाणं करोति। श्रेष्ठानुसारी भवति पामरः। २१॥

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१॥

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ ऋ० ८।१००।११॥
नूतन मंत्रः = अनाप्ताः ये वः प्रथमा यानि कर्माणि चक्रिरे। वीरान् नो अत्र मा दभन् तद् व एतत् पुरो दधे" ॥अथ० ४।७।७॥ अथ० ५।६।२॥

देवीमिति = देवा यज्ञानुष्ठानेन द्योतमानाः विद्वांसः यां देवीं वेदप्रमाणेनोद्भासमानां वाचं वेदशास्त्रोक्तिम् अजनयन्त जनयन्ति वदन्ति कुर्वन्तीति वा, विश्वरूपाः सर्वस्वरूपाः पशवः पशुवन्मूढाः जनाः तामेव विद्वत्प्रमाणीकृतां वाचं वदन्ति उच्चारयन्ति, तच्छास्त्रोक्तं कर्मैव प्रमाणं मन्यन्ते नान्यदिति। सा वैदिकी श्रेष्ठपुरुषाचरिता च वाक् मन्द्रा हर्षयित्री नोऽस्मभ्यं इषम् इष्यमाणम् पयोघृतादिरूपमन्नं वा सदाचारसम्पत्तिरूपमन्नं वा दुहाना क्षरन्ती धेनुः तर्पयित्री चिन्तामणिरूपा कामधेनुः सुष्टुता अस्माभिः सम्यक्कृतया सेविता वा अस्मान् मूढान् पामरान् जनान् उपैतु उपगच्छतु। यास्कः प्राह = "देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च। सा नो मदनान्नं च रसं च दुहाना -

धेनुर्वीक् अस्मानुपैतु सुष्टुतेति"।२१।२१॥

अनाप्ता इति = ये प्रथमा: पूर्वकालोत्पन्ना: अनाप्ता: न आप्ता: ये तथाविधा: अर्थात् सर्वश्रेष्ठा: ज्ञानिन: वा युष्मदागामिजनानां निमित्ते यानि यादृशानि कर्माणि चक्रिरे अकुर्वन्। यूयं तद्विरुद्धं कार्यं विधाय न: अस्माकं भाविन: वीरान् वीरपुत्रान् मा दभन् मा नाशयत। ते विरुद्धकार्याणि कृत्वा न विनश्येयु:। अत: तत् एतत् कर्म व: युष्माकं पुरो सम्मुखे दधे धारयामि।

न मे इति = हे पार्थ! हे अर्जुन! पूर्णकामस्य मे मम कर्तव्यं यत्किंचित् कार्यमाप्तव्यमर्थमुद्दिश्य कर्तव्यं कर्म नास्ति। यत: त्रिषु लोकेषु त्रिषु भुवनेषु अनवाप्तम् अप्राप्तं सत् मम क्रियया आप्तव्यं वस्तु किञ्चिदपि न विद्यते। एवमाप्तकामोऽपि अहं कर्मणि लोकसंग्रहात्मके कर्मणि वर्ते एव। चकारोऽत्र निश्चयार्थ:॥२२॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥२२॥

नाहं तन्तुं न विजानाम्योतुं न यं वयन्ति समरेऽतमाना:। कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा॥ ऋ० ६।९।२॥

नाहमिति = अहं पूर्णकाम: परमेश्वर: तन्तुं स्वनिमित्तं कर्मतन्तुं ओतुं विस्तारयितुं न विजानामि नावबोधयामि। समरे संगमने देवयजने अतमाना: सततं चेष्टमाना: ऋत्विज: स्वनिमित्तं कर्मकरा: संसारिण: यं संसारबन्धनकरं कर्म वयन्ति उत्पादयन्ति, इह अस्मिन् लोके पर: परस्तात् बुद्धेरविषये वर्तमान: लोकसंग्रहार्थं वक्त्वानि परेभ्य: लोकेभ्य: वक्तव्यानि वचनानि अवरेण अर्वाचीनेन पित्रा उपदेशादिना पालकेन अनुशिष्ट: सन् पुत्र: = संसारबन्धनेभ्य: त्राता वदाति वदेत्। अत: न मे कर्म न च तत्फलेच्छा, पूर्णकामत्वात्। अत: लोकसंग्रहार्थं कर्म अवश्यमेव कर्तव्यमिति दिक्॥२॥

यदीति = अहं पूर्णकामोऽपि यदि चेत् अतन्द्रित: तन्द्रारहित: अप्रमत्त इति भाव:। जातु कदाचित् अपि कर्मणि वेदविहिते कर्मणि न वर्तेयं विहितकर्मा न स्याम् — माम् अकर्माणं दृष्ट्वा सर्वे अन्ये मनुष्या: अपि अकर्माणो भवेयु: इति। हि यस्मात् कारणात् सर्वे मनुष्या: "भगवान् अयं सर्वज्ञ:" इति बुद्ध्या मम वर्त्म मदीयं एव मार्गं अनुवर्तेरन् — अश्रेष्ठस्य श्रेष्ठानुसारित्वात्॥२३॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रित:।
मम वर्त्मानुवर्तन्ते मनुष्या: पार्थ! सर्वश:॥२३॥

यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा। य: पार्थिवानि विममे स एतशो रजांसि देव: सविता महित्वना॥ यजु० ११।६॥ ऋ० ५।८१।३॥ तैत्ति० सं० ४, १, १, २॥

यस्येति = अन्ये इत अपरे साधारणा: जीवा: एव तथा देवा: सदाचारेण प्रकाशमाना: विद्वांस: यस्य देवस्य कर्मानुष्ठानेन प्रकाशमानस्य विदुष: प्रयाणं

प्रगमं मार्गमित्यर्थः अनुययुः अनुगच्छन्ति । देवाः विद्वांसः यतयः देवस्य ज्ञानेन प्रकाशमानस्य श्रेष्ठस्य विदुषः महिमानं महत्त्वम् ओजसा पराक्रमेण तदनुसरणयुता भवन्ति । यः पूर्णकामः सविता सर्वजगदुत्पादकः परमेश्वरः पार्थिवानि रजांसि च लोकाः रजांस्युच्यन्ते" पृथिवीप्रभृतीन् लोकान् महित्वना स्वमहत्वेन विममे परिच्छिनत्ति । स देवः एतशः एतवर्णः सर्वजगत् इतः प्राप्तः सन् यद्वा = "एतशः एतस्मिन् स्थावरजंगमात्मके जगति प्राणभावेन शेते इति एतशः "एवंभूतः सन् राजते इति शेषः

उत्सीदेयुरिति = अहं पूर्णकामोऽपि सन् चेत् कर्म वेदविहितं कर्म न कुर्याम् न विदध्याम् तर्हि इमे लोकाः जीवाः पृथिव्यादिलोकाः उत्सीदेयुः विनश्येयुः । संकरस्य तत्तज्जातिभेदव्यवस्थापककर्माभावे सर्वैकरूप्यापत्तौ वर्णाः संकीर्यन्ते सोऽपि वर्णसंकरः तस्य वर्णसंकरस्य कर्ता विधाता अहमेव स्याम् । एवं सांकर्यसम्पादनेन इमाः सर्वाः प्रजाः उपहन्याम् सर्वासां प्रजानां दुर्गतिकर्ता च स्याम् । २४॥

उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४॥

भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे । ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥ अथ० १९।४१।१॥

भद्रमिति = अग्रे सृष्ट्यादौ ऋषयः अतीन्द्रियार्थद्रष्टारः भद्रं सांसारिकजीवानां कल्याणम् इच्छन्तः कामयमानाः स्वर्विदः स्वर्गप्राप्तिसाधनानां मुक्तिसुखप्राप्तिसाधनानां कर्मणां वा ज्ञातारः, तपः वैदिकं कर्म, दीक्षां गुरुदीक्षां उपनिषेदुः प्राप्तवन्तः । ततः गुरुदर्शितवैदिककर्मानु~~ष्ठानेन द्योतमानाः विद्वांसः~~ ष्ठानसामर्थ्यात् राष्ट्रं राज्यं ओजः च बलं च जातं निष्पन्नम् । देवाः लोकसंग्रहार्थं वैदिककर्मानुष्ठानेन द्योतमानाः विद्वांसः साधारणाय पुरुषाय अस्मै उपसंनमन्तु संयोजयन्तु ॥

सक्ता इति = हे भारत! हे अर्जुन! अविद्वांसः आत्मज्ञानरहिताः मूर्खाः मनुष्याः कर्मणि कर्मजन्यफले स्वर्गपुत्रधनादौ सक्ताः आसक्तिमन्तः भूत्वा यथाविहितं कर्म कुर्वन्ति । तथा तेनैव प्रकारेण वर्तमानः लोकसंग्रहे लोकाः यथा एतादृशं कर्म कुर्वन्तु इति संग्रहं चिकीर्षुः कर्तुमिच्छुः विद्वान् आत्मज्ञानी यतिः स्वयमसक्तः कर्तृत्वाभिनिवेशरहितः कर्मफले निःस्पृहो भूत्वा कर्म कुर्यात् ॥२५॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५॥

आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम् । मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥ ऋ० १।७२।९॥ तै० ब्रा० २,५,८,१०॥

आ ये इति = ये अविद्वांसः आत्मज्ञानरहिताः मूर्खाः मनुष्याः अमृतत्वाय कर्मजन्यफलाय स्वर्गपुत्रधनादये स्वर्गादिसुखप्राप्तये वा गातुं गमनाय उपायं कृण्वानासः कुर्वन्तः सन्ति विश्वा विश्वानि सर्वाणि स्वपत्यानि शोभनानि अपतनहेतुभूतानि स्वर्गादिसुखसाधनज्योतिष्टोमादीनि कर्माणि यथाविधि आतस्थुः आतिष्ठन्ति आस-

क्लिबेन कुर्वन्ति। महद्भिः कर्मानुष्ठानेन महानुभावैः विद्वद्भिः पुत्रैः पुरुजन्मतां त्रातृभिः निष्कामकर्मकर्तृभिः ब्रह्मज्ञानिभिः सहिता अदितिः अखण्डनीया माता पृथिवी धायसे धारणाय मह्ना स्वकीयेन महिम्ना वितस्थे विशेषेण तिष्ठति। हे अग्ने! यतस्त्वं वेः = निष्कामकर्मकर्तृभिः लोकसंग्रहार्थे अनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींषि अभक्षयः। वेः = "वी गतिप्रजननकान्त्यसनखादनेषु" लङि सिपि अदादित्वाच्छपो लुक्। "बहुलं छन्दस्यमाङ्योगेऽपि" इत्यडभावः। धायसे = "वहिहाधाञ्भ्यश्छन्दसि" इति दधातेर्भावे असुन्। णिदित्यनुवृत्तेः "आतो युक् चिण्कृतोः" इति युक्। कृण्वानासः — "कृवि हिंसाकरणयोश्च", व्यत्ययेनात्मनेपदम्। "धिन्विकृण्व्योरच्च" इत्युप्रत्ययः। तत्संनियोगेनाकारान्तादेशश्च। तस्यातो लोपे सति स्थानिवद्भावात् गुणाभावः। "आज्जसेरसुक्"। मह्ना = महिम्ना इत्यस्य वर्णलोपश्छान्दसः।

न बुद्धीति = विद्वान् ब्रह्मवेत्ता युक्तः आत्मनिष्ठः भूत्वा समाचरन् कालोचितं कर्म कुर्वन् कर्मसंगिनां कर्मफलाभिकांक्षिणाम् इत्यर्थः। अज्ञानां अनात्मविदां मूढानां वा बुद्धिभेदं "ज्योतिष्टोमादियज्ञेन स्वर्गसुखभोगेच्छया" या कामना सा बुद्धिः तस्यां भेदं चालनं न जनयेत् न उत्पादयेत्। परन्तु "अक्षय्यं वै चातुर्मास्ययाजिनः" इत्यादिफलसूचकैः वाक्यैः सर्वाणि नित्यनैमित्तिकवैदिककर्माणि जोषयेत् प्रीणयेत्। कर्मफलस्तवनेन कर्मविधातृकामिच्छामेव सम्पादयेदित्यर्थः। २६।

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन्॥ २६॥

संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन्। रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः॥ ऋ० १।७२।५॥

यद्वा = "शतहस्त समाहर सहस्रहस्त संकिर। कृतस्य कार्यस्य चेह स्फातिं समावह"। अथ० ३।२४।५॥

संजानाना इति = सकामनिष्कामकर्म सम्यक् जानन्तः एकचित्ताः सन्तः वा युक्ताः आत्मनिष्ठावन्तः इति भावः। उपसीदन् उपसीदन्ति कर्माणि कर्तुं प्राप्नुवन्ति। पत्नीवन्तः सपत्नीकाः सन्तः गृहस्थधर्माणः गार्हपत्यादीन् अग्नीन् नमस्यं नमस्कारार्हान् अभिज्ञु अभिगतजानु यथा स्यात्तथा नमस्यन् अपूजयन् नमस्कुर्वन्ति पूजयन्ति। लडर्थे लङ्। सखा सखायः वैदिककर्मकर्तॄणां मित्रभूताः सख्युः सकामकर्मकर्तुः अनभिज्ञस्य मूर्खस्य इति यावत्। मित्रस्य निमिषि दृष्टौ स्वाः तन्वः कर्मफलवासनारहितत्वेऽपि तन्निमित्ते स्वकीयानि शरीराणि रक्षमाणाः रक्षन्तः सन्तः अनशनादिरूपेण दीक्षानियमेन वा रिरिक्वांसः रिक्तीकुर्वन्तः शोषयन्तः कृण्वत कुर्वन्ति यागान् कुर्वन्तीत्यर्थः। "देवाः वै यज्ञमतन्वतेति श्रुतेः। नमस्यम् = "नमो वरिवश्चित्रङः" इति पूजार्थे क्यच्। रिरिक्वांसः = 'रिचिर् विरेचने'। लिटः क्वसु। निमिषि = मिष स्पर्धायाम् — अत्रोपसर्गबलाद्दर्शनार्थः॥

यद्वा = शतहस्तेति = हे शतहस्त! कर्मकरणे, शतशः हस्ताः यस्य

तथाभूत! मनुष्य! समाहर कर्मविधानम् एकत्रीकुरु हे सहस्रहस्त! कर्मकरणे सहस्राणि हस्ता यस्य तथाभूत! हे उधमिन्! संकिर = त्वं सम्यक्तया स्वकृत्यं विस्तारय। यद्वा – परेभ्यः दानं देहि। कृतस्य स्फेन कृतस्य कार्यस्य कर्मणः इह अस्मिन् संसारे स्फातिं वृद्धिं समावह कुरु॥

प्रकृतेरिति = प्रकृतेः प्रकृतिर्यथा आकाशादि महाभूतरूपेण परिणता तस्याः प्रकृतेः गुणैः गुणाः कार्यभूताः देहेन्द्रियादयः तैरेव गुणैः क्रियमाणानि सर्वशः सर्वाणि कार्याणि प्रति अहंकारविमूढात्मा देहेन्द्रियादिषु अहंकारेण विमोहितः अहं प्रत्ययार्थत्वेन अविदितः आत्मा येन सोऽहंकारविमूढात्मा अविद्वान् कर्ता स्प्रष्टाऽहं श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्ता, भोक्ताऽहमिति मन्यते। प्रारब्धकर्मवशात् देहेन्द्रियैः कृतदुष्टादुष्टकर्मसु मया पापपुण्ये कृते इति तत्क्रियायाः कर्तारमेव पश्यतीत्यर्थः। २७॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते॥ २७॥

मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्। अमन्तवो मान्त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि॥४॥ ऋ० १०।१२५।४॥ अथ० ४।३०।४॥ यद्वा: — नूतनः मंत्रः =

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः। वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे॥ अथ० १।१।१॥

मयेति = यो जीवः अन्नम् अत्ति स भोक्तृशक्तिरूपया प्रकृत्या पञ्चमहाभूतरूपेण परिणतया प्रकृत्या भक्षयति। यश्च विपश्यति आलोकयति, यश्च प्राणिति श्वासोच्छ्वासादिव्यापारं करोति। य ईम् = एवम् उक्तं शृणोति – सोऽपि मया दृष्ट्यादिशक्तिरूपया प्रकृत्या आलोकनादिकर्म करोति न च तदाऽऽत्मा करोति। ये एवंविधां मां प्रकृतिं न जानन्ति ते अमन्तवः अमन्यमानाः प्रकृतितत्त्वम् अजानन्तः उपक्षियन्ति उपक्षीणाः संसारे आसक्तिरहिताः भवन्ति मद्विषयज्ञानरहिता इत्यर्थः। हे श्रुत! विश्रुत! सखे! श्रुधि मया कर्तृत्वादिप्रतिपादकं वक्ष्यमाणं वचनं शृणु। श्रद्धितम् = श्रद्धया युक्तं श्रद्धायत्नेन लभ्यमित्यर्थः। ईदृशं कर्तृत्व भोक्तृत्व विवेकात्मकं वस्तुतत्त्वं ते तुभ्यं सत्पात्राय ऋषये वदामि उपदिशामि।४॥

यद्वा = ये इति = ये त्रिसप्ताः ३×७ = २१ पदार्थाः अर्थात् पंचमहाभूतानि तन्मात्राश्च, अहंकारश्च इति सप्त पदार्थाः। त्रिभिः सत्वरजस्तमोभिर्गुणैः गुणिताः एकविंशति संख्याकाः। यद्वा पंच भूतानि, पंच प्राणाः, पंच ज्ञानेन्द्रियाणि, पंच कर्मेन्द्रियाणि, अन्तः-

III



करणं च इत्येकविंशतिः पदार्थाः, विश्वा विश्वानि सर्वाणि रूपाणि चेतनाचेतनपदार्थान् बिभ्रतः धारयन्तः परियन्ति गतिं कुर्वन्ति। वाचस्पतिः आत्मा तेषामेकविंशतिपदार्थानां बला बलानि सामर्थ्यमिति यावत्, अद्य सदा मे मम तन्वः तनुमध्ये दधातु धारयति।

तत्त्वविदिति = हे महाबाहो! हे अर्जुन! गुणकर्मविभागयोः गुणाः दशेन्द्रियाणि बुद्धिः मनश्च। कर्माणि दर्शनवचनादानादिकाः क्रियाः चक्षुरादिदशेन्द्रियाणाम्, बुद्धेरीहक्रिया, संकल्पनक्रिया च मनसः। एवं गुणविभागः कर्मविभागश्च। तयोः गुणकर्मविभागयोः तत्त्ववित् आत्मनश्च तत्त्वं याथात्म्यं सम्यक् वेत्तीति तत्त्ववित् विद्वान् तु गुणाः चक्षुरादयः एव गुणेषु रूपादिषु वर्तन्ते। वागादयः वचनादानादिषु वर्तन्ते। बुद्धिः तेषां कर्मसु अहं कर्ता इत्यहं करोमि, अहं तु न शृणोमि, न पश्यामि, अहं तु नित्यः कूटस्थः चिदात्मना सर्वदा तिष्ठामीति मत्वा निश्चित्य तेषां कर्मसु न सज्जते, तत्र अहंताममतादिकं न करोतीत्यर्थः। २८।

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणाः गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥२८॥

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः। यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान् रयिं दयस्व। ऋ० १।६८।५॥

ऋतस्येति = विश्वे सर्वे चक्षुर्वागादीन्द्रियग्रामाः विश्वायुः सर्वायुर्यावत् अपांसि दर्शनवचनादानादीनि कर्माणि चक्रुः कुर्वन्ति। स्वयमेवेन्द्रियाणि कुर्वन्ति उत वा तेषां तद्भिन्नः कश्चिदन्यः कारयिता - इत्यत आह - ऋतस्य अविचलात्मनः कूटस्थस्य आत्मनः प्रेषाः प्रेषिताः दूतीरूपाः प्रकृतिः, तद्गुणाश्च ये। इन्द्रियाणि स्वस्वव्यापारं कुर्वन्ति। अथ ऋतस्य जीवात्मनः धीतिः धीयते पीयतेऽस्मिन् इति वा जीवात्मन एवं धीतिः भावना वागादिव्यवहारसाधा इति बोध्यम्। यः मूढः अनात्मज्ञः पुरुषः तुभ्यं जीवात्मने एतं दर्शनवागादानादिव्यवहारं दाशात् देयात्। यो वाऽन्यः पामरः जीवः ते तव शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासमिति इच्छति। उभयविधाय तस्मै जीवात्मने चिकित्वान् तत्कृतैर्ज्ञानं कर्मानुष्ठानं वा जानन् त्वं रयिं अनासक्तिरूपं ज्ञानं दयस्व देहि। दाशात् = 'दाशृ दाने'। शिक्षात् = 'शक्लृ शक्तौ' इच्छार्थे सन्। "सनि मीमाघुरभलभशक" इत्यकारस्येसादेशः। "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः। "स्कोः संयोगाद्योः" इतीसः सलोपः। चिकित्वान् = कित ज्ञाने। दयस्व = "दय दानगतिरक्षणहिंसादानेषु"॥

प्रकृतेरिति = प्रकृतेः मायायाः गुणसंमूढाः गुणैः सत्वरजस्तमोभिर्गुणैः तद्विकारैश्च मोहितचित्ताः ते मूढाः आत्मविवेक-

शून्याः प्रकृतेः पूर्वलक्षणायाः मायायाः गुणकर्मसु गुणेषु-चक्षुरादिषु कार्येषु दर्शनादिषु "अहं श्रोता, अहं द्रष्टा" इत्यात्मबुद्ध्या सज्जन्ते आभिनिवेशं कुर्वन्ति। कृत्स्नवित् ब्रह्मवेत्ता, अकृत्स्नविदः अज्ञान् आत्मविवेकशून्यान् मन्दान् पामरान् तान् न विचालयेत् कामनया कर्म न कर्तव्यम्। कर्मबन्धनकरम् इत्यादिवचनैः न विक्षेपयेत् इत्यर्थः।

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्॥ २९॥

(वेदमंत्रो न लभ्यते)

मयीति = लोकसंग्रहनिमित्तमुद्दिश्य कर्मकर्ता आत्मविवेकी त्वम् अध्यात्मचेतसा आत्मानमधिकृत्य प्रवृत्तम् अध्यात्मं चेतो ज्ञानम्। अध्यात्मं तच्चेतश्च तेनाध्यात्मचेतसा "ब्रह्मार्पणं ब्रह्महविः" इति वक्ष्यमाणलक्षणया प्रत्यग्दृष्ट्या सर्वं ब्रह्मैवेति दर्शनेन सर्वाणि नित्यनैमित्तिकानि कर्माणि मयि सर्वात्मनि ब्रह्मणि संन्यस्य संस्थाप्य निराशीः निराकांक्षः सन् निर्ममो भूत्वा वक्ष्यमाणेषु भ्रात्रादिषु ममत्वरहितो भूत्वा विगतज्वरः "एते मदीया हन्यन्ते" इति यो ज्वरः सन्तापः स विगतो यस्य स विगतज्वरः निःशोको भूत्वा युध्यस्व युद्धं कुरु लोकसंग्रहार्थं कर्म कुरु इत्यर्थः॥ ३०॥

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥ ३०॥

प्रमुञ्चन्तो भुवनस्य रेतो गातुं धत्त यजमानाय देवाः। उपाकृतं शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः॥ अथ० २।३४।२॥

प्रमुञ्चन्त इति = हे देवाः! हे ज्ञानिनः पुरुषाः! भुवनस्य उत्पन्नस्य देहस्य विश्वमात्रस्य वा रेतः मूलतत्त्वं कर्म वा तत्फलं वा प्रकृतितत्त्वं प्रमुञ्चन्तः मयि त्यागं कुर्वन्तः मयि अर्पयन्तो वा यजमानाय भगवत उपासकाय स्वात्मने गातुं ज्ञानमार्गं धत्त आश्रयत। यद् यदा स जीवः देवानामिन्द्रियाणां प्रियमभीष्टं पाथः मार्गं अस्थात् दृढरूपेण स्थितिं कुर्यात्, यद्वा यदा स मुमुक्षुः देवानां विदुषां ज्ञानिनां प्रियं पाथः मार्गं अस्थात् दृढरूपेण स्थितिं कुर्यात् तदा स एव उपाकृतं स्वसम्मुखे यथावसरं साधनैः संस्कृतं शशमानम् अस्त्रादिभिः काम्यमानं पाथः सांसारिकयुद्धमार्गं एतु प्राप्नोतु॥

ये इति = ये विवेकिनः मानवाः मनुष्याः इदं पूर्वोक्तलक्षणं मे मम ईश्वरस्य मतं शासनमनसूयन्तः असूयारहिताः श्रद्धावन्तः श्रद्धां भक्तिं च कुर्वन्तः सन्तः नित्यमनुतिष्ठन्ति सम्यक्तया कुर्वन्ति ते सत्त्वशुद्ध्या आत्मज्ञानं प्राप्य कर्मभिः पुण्यापुण्यैः लक्षणैः नानादुःखहेतुभिः संचितैः मुच्यन्ते॥ ३१॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥ ३१॥

III

८०

यः पावमानी रध्येत्यृषिभिः संभृतं रसम्। सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ साम० १२९९॥ ऋ० ९।६७।३२॥

य इति = यः विवेकी मानवः पावमानीः पवित्रकर्त्रीः ऋषिभिः ब्रह्मविद्भिः यतिभिः मंत्रद्रष्टृभिः संभृतं परिपालितं संपादितं रसम् उपदेशरसभूतम् सारमध्येति नित्यमधीते अनुतिष्ठति स जनः सर्वं पूतं पवित्रं मोक्षम् अश्नाति गृह्णाति प्राप्नोति इत्यर्थः। तच्च मोक्षपदं मातरिश्वना मातरि अन्तरिक्षे श्वसिति इति मातरिश्वा अन्तरिक्षवत् सर्वत्र व्याप्तत्वेन परमात्मना स्वदितं स्वादुकृतं अस्ति। स नरः तमेव अन्नं मोक्षमित्यर्थः अश्नाति॥१

ये त्विति = ये तु अविवेकिनः एतत् मदुक्तं मतं शासनम् अभ्यसूयन्तः अत्यन्तं दूषयन्तः सन्तः न अनुतिष्ठन्ति दुराग्रहेण मदनुशासनं न पालयन्ति, सर्वज्ञानविमूढान् ब्रह्मज्ञानशून्यान् अचेतसः अविवेकिनः तान् नष्टान् विनष्टपुण्यलोकान् विद्धि जानीहि ॥३२॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥३२॥

(वेदमन्त्रो न लभ्यते)

सदृशमिति = ज्ञानवानपि ब्रह्मज्ञानी ब्रह्मनिष्ठः यतिरपि स्वस्याः प्रकृतेः वासनायाः सदृशम् अनुरूपम् आहारादौ चेष्टते शरीरयात्रानिर्यापनहेतोः प्रकृतिर्दुर्निवारा। भूतानि सुखदुःखयोः अनुभूत्यै स्वस्वकर्मणा भवन्ति इति भूतानि सर्वे प्राणिनः स्वस्वजन्मानुरूपेण प्रकृतिं रागद्वेषादिगुणवतीं वासनात्मिकां यान्ति प्राप्नुवन्ति। निग्रहः = "वयं न किंचित्कुर्मः" इति निग्रहः तात्कालिकेन्द्रियनिरोधः किं करिष्यति॥३३॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥३३॥

आस्थानमस्य भूतस्य विदुष्टे वेधसो न वा॥ अथ० १।३२।२॥

आस्थानमिति = अस्य सर्वतः दृष्टिगोचरमागतस्य भूतस्य उत्पन्नभूतस्य प्राकृतस्य पदार्थमात्रस्य आस्थानम् आश्रयभूतां मूलप्रकृतिं तत् ते वेधसः बुद्धिमन्तः ज्ञानिनः विदुः जानन्ति न वा इत्यत्रेन्द्रियनिग्रहाभावात् संदेहः वर्तते।

इन्द्रियस्येति — इन्द्रियस्य अर्थे सर्वेषामिन्द्रियाणां विषये शब्दादौ रागद्वेषौ इष्टविषये रागः, अनिष्टविषये द्वेषः इत्थं व्यवस्थितौ। प्रतिविषयं नियमेन स्थितौ भवतः। तयोः रागद्वेषयोः वशम् अधीनतां न गच्छेत्। द्रव्यगुणादौ समीचीनत्वबुद्धिं न विदध्यात्। हि यस्मात् कारणात् तौ रागद्वेषौ अस्य धर्मरतस्य मोक्षमार्गस्य परिपन्थिनौ पथि चौरौ स्व स्तः॥३४॥

~~इन्द्रियस्ये~~ इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ॥३४॥

III



"यो नः पूषन्नघो वृको दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥१॥
" अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम् । दूरमधि स्रुतेरज ॥२॥

ऋ० १।४२।२-३ ॥

य इति = हे पूषन् ! हे देहपोषक ! जीवात्मन् ! यः रागद्वेषरूपः प्रतिपक्षी नः अस्मान् सन्मार्गं गन्तॄन् पुरुषान् आदिदेशति — अनेन रागद्वेषात्मकेन मार्गेण गन्तव्यम् — इत्येवमाज्ञापयति, स च प्रतिपक्षी अघः पापकर्मकारयिता अतः मुक्तिमार्गात् रोधकः, अत एव अहन्ता । अथ च वृकः = वर्कते इति वृकः तस्करः आत्मतत्त्वापहर्ता इत्यर्थः । अथ च दुःशेवः — दुष्टं शेवं यस्यासौ दुःशेवः, यद्वा दुःखेन सेव्यते इति दुःशेवः सेवितुं दुःशकः, यद्वा दुष्टसुखः । अतस्तं तादृशं प्रतिपक्षिणं पथः स्वमार्गात् अप — जहि स्म अवश्यम् अपाकुरु येन त्वं मुक्तो भूयाः इत्यर्थः । पूषा पोषयत् इति तै०ब्रा० ६।२।२॥

अपत्यमिति = त्यं तादृशं रागद्वेषौ मुषीवाणं तस्कररूपं "मुषीवेति तस्करनाम" "मुषीवान् मलिम्लुच" इति तन्नामसु पाठात् । हुरश्चितम् = हुरश्चिनोतीति हुरश्चित् ! "हुर्छा कौटिल्ये" कौटिल्यानां संचेतारं परिपन्थिनं पथि चौरं रागद्वेषात्मकं मुक्तिमार्गप्रतिबन्धकम् इत्यर्थः । स्नुतः स्वात्मज्ञानरतिमार्गात् अधि दूरम् अत्यन्त-दूरदेशं प्रति अपाज अपगमय दूरीकुरु इति भावः । परिपन्थिनम् — "छन्दसि — परिपन्थि परिपरिणौ पर्यवस्थातरि " पा० ५।२।८९। इति "शत्रावभिधेयः" इति प्रत्ययान्तो निपातितः ॥

श्रेयानिति = स्वनुष्ठितात् यथारीति सम्यक्तया नियमेन आचरितात् परधर्मात् विगुणः गुणादिभिः सम्यगनुष्ठानरहितोऽपि स्वधर्मः कर्तव्यत्वेन स्वस्य यः शास्त्रेण विहितः स एव स्वधर्मः पुरुषस्य श्रेयान् श्रेष्ठतरः । यथा स्नानजपाद्यपेक्षया ज्ञान — साधनैकप्रयोजनः सर्वकर्मसंन्यासः एव श्रेष्ठः धर्मः, तथा परधर्मकर्मसंन्यासा — पेक्षया ~~ज्ञानसाधनैकप्रयोजनः सर्वकर्मसंन्यास एव श्रेष्ठः धर्मः~~ अन्तःकरणशुद्ध्येक प्रयोजनः कर्मयोग एव श्रेष्ठः धर्मः । स्वधर्मे नियमानुकूलं चलतः नरस्य निधनं मरणं श्रेयः श्रेयसे भवति न तु कदाचिदनिष्टाय । परधर्मः यथाशास्त्रमनुष्ठितोऽपि पर — धर्मः भयावहः — भयं यमदूतेभ्यो नरकं चावहति सम्पादयति इति भयावहः — नरकादि — दुःखप्रवाहहेतुरेव भवतीत्यर्थः ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५॥

वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव । प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥१॥ ऋ० ७।२०।५॥

वृषेति = वृषा सेक्ता परमपिता परमात्मा वृषणं जगति लोकहित पुत्रैषणानां वर्षयितारं स्व — धर्मपालयितारं जीवात्मानं रणाय लोकयात्रायुद्धाय जजान जनयामास । जीवात्मानः स्वस्वधर्मे स्थित्वा जीवनयात्रां कुर्युः न तु परधर्मे रताः इत्यर्थः । अतः तमु = तमेव नर्यं नरेभ्यो हितं नारी कर्मफलप्रदात्री ब्रह्मशक्तिः तत्तत्कर्मफलानुरूपं स्वस्वधर्मा —

नुष्ठातारं ससुवं सुषुवे। अथ अपि च यः स्वधर्मस्थितः नरः नृम्यः नृणां सेनानीः सेनानां स्वधर्मानुकूलकर्मरूपसेनानां नेता सन् प्रास्ति प्रभवति, स एव जीवात्मा धृष्णुः परधर्मधर्षणशीलः गवेषणः इन्द्रियधर्माणां अन्वेष्टा सत्वः परधर्मप्रवृत्ति - कारकाणां लोभमोहादिशत्रूणां सादकः विनाशकः इत्यर्थः। इनः स्व सर्वेषामां स्वामी मुक्तिधामगामी भवति।

अर्जुन उवाच- अथेति = हे वार्ष्णेय! ब्रह्मानन्दामृतं वर्षतीति वृष्णिः ज्ञानं तेन वृष्णिना अवगम्यते इति वार्ष्णेयः परमात्मा, तत्सम्बुद्धौ हे वार्ष्णेय! हे वृष्णिकुलोत्पन्न! श्रीकृष्ण! बलात् बलात्कारेण नियोजितः प्रेष्य इव अयं पुरुषः केन प्रयुक्तः स्वयं पापसाध्यं फलम् अनिच्छन्नपि पापम् चरति पापं करोति॥३६॥ श्रीभगवानुवाच= काम इति = रजोगुणसमुद्भवः = रजसः गुणः रागः रञ्जनात्मिका सामान्या इच्छा एव कामम् उद्भावयति। इत्थं कामएव पुंसः संसारकारणं केनचित् स्वविषये प्रति - बद्धे क्रोधात्मना परिणमते। अतः क्रोधस्यापि एषः कामएव प्रवृत्तिहेतुरस्ति। एषः कामः एषः क्रोधः महाशनः = महत् अतीव अशनं उभयलक्षणं यस्य स महाशनः तत एव महापाप्मा = महान् पाप्मा दोषो यस्मात् पुरुषस्यायाति स महापाप्मा। यतः कामाविष्टः नरः स्वस्रादियोनिमगणयन् चण्डालादिधनमपि आददाति, तथा क्रुद्धः सन् गुरुमपि अवमनुते, गामपि च हन्ति अतः इह अस्मिन् संसारे एनं काममएव क्रोधमेव वैरिणं शत्रुं विद्धि जानीहि॥३६ - ३७॥

अर्जुन उवाच = "अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥३६॥

श्रीभगवानुवाच = " काम एषः क्रोध एषः रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥३७॥

उदस्य श्यावौ विथुरौ गृध्रौ द्यामिव पेततुः। उच्छोचन प्रशोचनावस्योच्छो - चनौ हृदः॥ अथ० ७।१००।१॥

उदस्येति = अस्य जीवात्मनः विथुरौ व्यथावर्धकौ गृध्रौ सांसारिकपदार्थेषु लोभ - मोहकारिणौ कामक्रोधौ श्यावौ श्यामवर्णौ गृध्रौ मांसलोलुपौ गृध्रपक्षिणौ इव द्याम् आकाशं हृदयाकाशं च उत्पततुः उद्गच्छतः। उच्छोचनप्रशोचनौ कामक्रोधौ दोषवत् शोकवर्धकौ देहशोषकौ च स्तः। इमौ कामक्रोधौ अस्य मुमुक्षोः जीवात्मनः हृदः मनसः उच्छोचनौ अत्यन्तं शोषकौ स्तः॥

धूमेनेति = यथा वह्निः स्वयंप्रकाशरूपोऽग्निः धूमेन अप्रकाशस्वरूपेण धूमेन आव्रियते आच्छाद्यते, यथा आदर्शः दर्पणं स्वमुखप्रतिबिम्बप्रदाता मलेन श्वासादिना आव्रियते, यथा गर्भः चेतनः शिशुः उल्बेन अचेतनेन जरायुणा आव्रियते तथा तेनैव प्रकारेण इदं पुरुषस्य ज्ञानं तेन कामेन क्रोधेन वा आवृतं तिरोहितम् अस्ति॥३८॥

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्॥३८॥

यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति ।
तद् दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ॥ अथ० ९।२।२॥

मन्त्रान्तरमप्यस्ति = "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।"
ऋ० १०॥१२९॥४॥

यन्मे इति = हे परमात्मन्! यत् मे मम मुमुक्षोः जीवस्य मनसः प्रियं नास्ति, यत् मे मम चक्षुषः नेत्रस्य तज्जन्य विषयस्य च प्रियं नास्ति। यत् यस्मात् कारणात् अयं कामः मे मम बभस्ति तिरस्कारं करोति। कश्चिदपि कामाश्रयं मां नाभिनन्दति, आनन्दपूर्वकं न सत्कुरुते। तत् कामजनितं दुष्वप्न्यं दुःस्वप्नोद्भवं दुःखं सपत्ने स्वशत्रौ कामे प्रति मुञ्चामि प्रेषयामि। अत एव अहं कामं स्तुत्वा स्तुतिं कृत्वा उद्भिदेयम् अस्मात् संसारात् उपरि तिष्ठामि॥ उप० = "कामः संकल्पः" बृह० उप० १।५।३॥ अथ च = "काम एव यस्यायतनम्" बृह० उप० ३।९।११॥ यद्वा च = "कामोऽकार्षीन्नाहं करोमि, कामः करोति कामः कर्ता, कामः कारयिता"। महानारा० उप० १८।२॥

आवृतमिति = हे कौन्तेय! हे कुन्तीपुत्र! हे अर्जुन! ज्ञानिनः विवेकिनः ज्ञानम् आत्मतत्त्वविवेकः अनलेन = न अलम् - अनलम्, अलंभावो यस्य नास्ति स अनलः तेन अनलेन दाहकेन दुष्पूरेण दुःखेन पूरयतीति दुष्पूरः तेन दुष्पूरेण नित्यवैरिणा नित्यशत्रुणा कामरूपेण काम्यते इति कामः विषयः तमेव सर्वत्र रूपयति गोचरयति इति कामरूपः तेन एतेन कामरूपेण आवृतम् आच्छादितम्।

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा।
कामरूपेण कौन्तेय! दुष्पूरेणानलेन च ॥ ३९॥

कामोऽजज्ञे प्रथमो नैनं देवा आपुः पितरो न मर्त्याः। ततस्त्वमसि ज्यायान् विश्वहा महान्तस्मै ते काम नम इत् कृणोमि। अथ० ९।२।१९, २३॥

काम इति = काम आकांक्षा अर्थात् पुत्रैषणादिका, प्रथमः सृष्टेः सर्वपदार्थेभ्यः पूर्वं संसारयात्राचालनाय जज्ञे प्रादुरभूत्। देवाः इन्द्रादयो देवाः पितरः अर्यमादयः पितरः मर्त्याः विद्वांसः मनुष्याः एनं कामं न आपुः न प्रापुः न स्वीकुर्वन्ति स्म। अतः देवानां पितृणां पितृत्वं मनुष्याणां मनुष्यत्वं तस्थौ। अन्यथा एतत्स्वीकरणेन सर्वे देवादयः स्वस्वपदच्युताः अधोऽधि[illegible] पतिष्यन्। हे काम! ततः तस्मात् कारणात् त्वं ज्यायान् कामक्रोधादिषु ज्येष्ठः असि। त्वं महान् विश्वहा जगद्विनाशकः असि। हे काम! अहं ते तुभ्यं कामाय इत् एव नमः नमस्कारं करोमि अर्थात् = अहं तुभ्यं दूरत एव नमस्कारं करोमि। अहं त्वां द्रष्टुमपि नेच्छामि। यथा च = "यः एव काममयः पुरुषः स एषः वदेव शाकल्य! तस्य का देवतेति? "स्त्रियः" इति होवाच" बृह० उप० अध्या० ३। ब्रा० ९। अ० ११॥

इन्द्रियाणीति = इन्द्रियाणि चक्षुरादीनि, मनः चित्तं, बुद्धिः ज्ञानम् अस्य कामस्य क्रोधस्य वा अधिष्ठानम् आश्रयः निवासस्थानम् उच्यते कथ्यते। एषः कामः क्रोधः वा एतैः इन्द्रियादिव्यापारैः ज्ञानं प्रत्यग्दृष्ट्या आवृत्य आच्छाद्य देहिनं जीवात्मानं विमोहयति "अहं भोक्ता" इत्यादिना विविधं भावयति ॥ ४०॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

अयमग्निरमुमुहद् यानि चित्तानि वो हृदि। वि वो धमत्वोकसः प्र वो धमतु सर्वतः॥ अथ० ३।२।२॥

अयमिति = हे मुमुक्षवः! वो युष्माकं हृदि मनसि बुद्धौ च यानि चित्तानि चेतनानि ज्ञानानि रूपादि विषयबोधकानि सन्ति तानि सर्वाणि ज्ञानानि, तथा अयं कामः अग्निः क्रोधश्च अमूमुहत् मोहयति आच्छादयतीत्यर्थः। अस्य कामस्य सर्वाणि इन्द्रियाणि मनो बुद्धिश्च अधिष्ठानानि सन्ति। अतः स कामः क्रोधः वो युष्मान् मुमुक्षून् ओकसः श्रेष्ठतत्त्वविवेचन भवनात् विधमतु विशेषेण निःसारयति। अथ च सर्वतः सर्वस्मादपि आत्मतत्त्वविवेकस्थानात् वो युष्मान् प्रधमतु प्रकर्षेण अपगमयति।

तस्मादिति = हे भरतर्षभ! हे भरतकुलश्रेष्ठ! अर्जुन! यस्मात् कामः क्रोधश्च तव परं शत्रुः तस्माद्धेतोः त्वम् आदौ आरम्भे इन्द्रियाणि चक्षुरादीनि इन्द्रियाणि तद्विषयान् च, ततो मनो बुद्धिश्च नियम्य विषयग्रहणात् विमुखानि कृत्वा ज्ञान-विज्ञाननाशनं, ज्ञानं वस्तुतत्त्वबोधः, विज्ञानं विषयव्यापृत वृत्ति जन्यम् "इदमेव अहम्" इति तयोः ज्ञानविज्ञानयोः नाशनं विध्वंसकं पाप्मानं एनं कामं क्रोधञ्च प्रजहि विनाशय।

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

अपहत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधता मतिम्। आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः॥ ऋ० १०।७६।४॥

अपहतेति = हे अद्रयः! हे अदरणशीलाः! मुमुक्षवः पुरुषाः यूयं भङ्गुरावतः भञ्ज-कर्मवतः तत्त्वज्ञानलब्धिविरोधकान् रक्षसः कामक्रोधप्रभृतिराक्षसान् शत्रून् अपहत विनाशयत। तथा निर्ऋतिं कामक्रोधा[illegible]लिकां। पापं स्कभायत-दूरे परिहरत अर्थात् कामक्रोधादिशत्रून् प्रजहीति भावः। अमतिं कामाविष्टां कुबुद्धिं सेधत निषेधत। किञ्च अतः नः = कामक्रोधावृतमनोभ्यः अस्मभ्यं सर्ववीरं सर्वैः वर-णीयं यद्वा यद्विवेकधनं प्राप्य सर्वे वीराः भवन्ति, अतः बहुवीरत्वापादकं रयिं ज्ञानम् आसुनोतन = आ समन्तात् ज्ञानाभिषवं कुरुत। तथा च देवाव्यं देवप्रीणनं परमात्मप्रसत्तिकारकं श्लोकं स्तुतिं भरत सम्पादयत॥४॥

इन्द्रियाणीति = इन्द्रियाणि पंच ज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि बाह्यस्थू-ले देहात् परात् उत्कृष्टतराणि अथवा भिन्नानि आहुः कथयन्ति। तथा इन्द्रियेभ्यः मनः सर्वविषयग्राहकत्वात् परम् उत्कृष्टं भिन्नं चास्ति। तथा च मनसोऽपि विवेचनात्मिका बुद्धिः परा अत्युत्कृष्टा अथवा भिन्ना चास्ति। बुद्ध्या मनस्तद्धर्माश्च प्रकाश्यन्ते। यः स्वयं सर्वत्र व्याप्य स्वशक्त्या बुद्ध्यादि स्थूलदेहान्तं यावत् प्रवर्तयन् तत्तद्धर्मतत्तद्गुणतत्तद्विकारांश्च साक्षात् जानाति प्रकाशयति च।

स एव आत्मा बुद्धेः परतः परः सर्वस्मादुत्कृष्टतमः भिन्नश्च प्रकाशते ॥४२॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।

मनसस्तु परा बुद्धिः यो बुद्धेः परतस्तु सः ॥४२॥

परो दिवा पर एना पृथिव्याः परो देवेभिरसुरैर्यदस्ति । कं स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त पूर्वे ॥ यजु० १७।२९॥ ऋ० १०।८२।५॥

तैत्ति० सं० ४, ६, २, २ ॥

यद्वा = साकंजानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति ।

तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥

ऋ० १।१६४।१५॥ अथ० ९।८।१६। तैत्ति० आ० १।३।१॥ निरु० १४।१९॥

परो दिवेति = यत् यः आत्मा एनाः अस्याः "विभक्तिव्यत्ययः" पृथिव्याः स्थूलदेहात् परः परस्तात् वर्तमानः अस्ति । देहात् परः भिन्नः सूक्ष्मश्चात्मा । यथा चोपनि० = "इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम् । सत्वादपि महानात्मा" । कठोप० वल्ली ६। श्रु० ७ ॥ अथ च = "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः" ॥ कठोप० वल्ली ३। श्रु० १० ॥ तथा च देवेभिः = देवेभ्यः "विभक्तिव्यत्ययः" इन्द्रियेभ्यः परः भिन्नः सूक्ष्मश्चास्ति । तथा असुरैः = असुरेभ्यः "विभक्तिव्यत्ययः" प्राणापानादिवायुभ्यः तथा स्पर्शादिविषयेभ्यः पंचतन्मात्राभ्यश्च अपि परः अत्युत्कृष्टः सूक्ष्मः भिन्नश्चास्ति । तथा च दिवा सर्वत्र प्रकाशमयविद्युदादिसूक्ष्माग्निभ्यः अपि परः अत्युत्कृष्टः सूक्ष्मः भिन्नश्चास्ति । यः आत्मा सर्वपदार्थेभ्यः सूक्ष्मः नित्यैकरसः वर्तते इति भावः । स्वित् इति वितर्के । कं पुनः गर्भं गर्भवत् सर्वस्य ग्राहकं तत्त्वम् आपः प्राणाः व्यापकरूपत्वेन प्रथमं प्रथितं दध्रे दधिरे धृतवत्यः । यत्र यस्मिन् आत्मतत्त्वे पूर्वे सृष्ट्यादौ उत्पन्नाः देवाः विद्वांसः समपश्यन्त संगताः भूत्वा पश्यन्ति ॥

साकमिति = साकंजानाम् = स्थूलदेहे सहोत्पन्नानां मध्यात् सप्तथं सप्तमं ब्रह्म जीवात्मानम् एकजं सर्वेभ्यः पृथगाविर्भूतम् आहुः कथयन्ति । षट् इत् = पंचेन्द्रियाणि षष्ठं मनश्च इति षडेव इन्द्रियाणि, यमाः परस्परं संयुक्ताः सन्ति । देवजाः = देवेभ्यः इन्द्रियेभ्यः जाताः उत्पन्नाः रूपरसगन्धस्पर्शशब्दसंकल्पाः विषयाः, ऋषयः संसारे यथाक्रमं गन्तारः सन्ति । तेषां षडिन्द्रियाणां धामशः स्थानक्रमशः इष्टानि अभिलषितानि विहितानि रूपादीनि निर्मितानि । स्थात्रे = नित्याय आत्मने रूपशः आकारेण विकृतानि रूपभेदेन विविधकृतियुक्तानि सर्वलोकाभिमतानि, धामशः = स्थाने विहितानि पृथक् स्थापितानि विकृतानि भूत्वा रेजन्ते कम्पन्ते, जगद्व्यवहाराय पुनः पुनरावर्तन्ते । सप्तथम् = "थट् छन्दसि" इति थट् ॥

एवमिति = हे महाबाहो ! हे अर्जुन ! बुद्धेः बुद्ध्यादेः सर्वदृश्यादृश्यपदार्थस्य परं विलक्षणं सूक्ष्मं वा आत्मानं आत्मना स्वस्वरूपेण बुद्ध्वा ज्ञात्वा आत्मनि एव आत्मबुद्धिं दृढां कृत्वा त्वं कामरूपं कामाश्रयभूतम् अन्तःकरणं आत्मना स्वस्वरूपेण -

संस्तभ्य संयोज्य दुरासदं दुर्जयं कामरूपं शत्रुं जहि विनाशय ॥४३॥

इति श्री सारस्वतान्वय 'लैया' ग्रामवास्तव्य न्यायभूषणोपपद जगन्नाथ शास्त्रि-कृतायां गीताबोधिन्यां तृतीयोऽध्यायः समाप्तः ॥३॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो ! कामरूपं दुरासदम् ॥४३॥

इति श्रीमद्भगवद्गीतायां तृतीयोऽध्यायः समाप्तः ॥३॥

एतानि सोम पवमानो अस्मयुः सत्यानि कृण्वन् द्रविणान्यर्षसि ।
जहि शत्रुमन्तिके दूरके च य उर्वीं गव्यूतिमभयं च नस्कृधि ॥५॥
ऋ० ९।७८।५॥

एतानीति = हे सोम! सौम्यगुणयुक्त शान्तात्मन् ! मुमुक्षो ! एतानि गो=इन्द्रियं, रथ = देहः, हिरण्य=मनः, इत्यादीनि द्रविणानि पदार्थाः सत्यानि = "ब्रह्मैवेदं सर्वं न तद्भिन्नं किञ्चिदपि" इति सत्यस्वरूपत्वेन आत्मस्वरूपं कृण्वन् कुर्वन् अत एव पवमानः पूयमानः। अस्मयुः अहमेव परं तत्त्वमिति स्वात्मप्रत्ययान्वेषकः त्वम् अर्षसि प्राप्नोषि। अत एव तं कामक्रोधात्मकं शत्रुं जहि विनाशय। यः अन्तिके समीपे दूरके अत्यन्तदूरे वर्तमानः आगन्तुकश्च कामरूपः शत्रुः वर्तते। तं कामरूपं शत्रुं जहि विध्वंसय। तथा अनेन हेतुना नः अस्माकं आत्मतत्त्वविवेकिनाम् उर्वीं विस्तीर्णां गव्यूतिं गोलोकधामात्मकं मुक्तिमार्गं अभयं भयरहितं यथा स्यात्तथा कृधि कुरु। कामपरित्यागेन मुक्तिमार्गप्राप्तिः स्पष्टतया प्रतीयते। यथा च = "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति"। केनोप० = खं० १, श्रु० २॥ अथ च = "अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति"॥ कठोप० अध्या० २। वल्ली ६। श्रु० ८॥ तथा च = "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"॥ कठोप० अ० २। व० ६। श्रु० १४॥

इति श्री सारस्वतान्वय लैया ग्रामवास्तव्य न्यायभूषणोपपद जगन्नाथ शास्त्रि-कृतायां वेदगीतार्थबोधिन्यां तृतीयोऽध्यायः समाप्तः ॥३॥

अथ चतुर्थोऽध्यायः

श्रीभगवानुवाच = इमामिति = अहं कृष्णस्वरूपः परमात्मेव अव्ययं व्ययरहितं इमं पूर्वा-
ध्याय प्रोक्तं योगं कर्मयोगं विवस्वते सूर्याय प्रोक्तवान् कथयामास। स विवस्वान्
स्वपुत्राय मनवे प्राह अकथयत्। मनुश्च स्वपुत्राय इक्ष्वाकवेऽब्रवीत् उपदिष्टवान्॥१
हे परन्तप! हे अर्जुन! एवं प्रोक्तविधिना परम्पराप्राप्तं विवस्वदाद्यसाधारणजनैः
यथाक्रमं प्रोक्तम् इमं ज्ञानकर्मयोगं राजर्षयः जनकादयः राजानः सनकादयः
ऋषयश्च विदुः अजानन्। एवं पूर्वकालप्रोक्तः स योगः कर्मयोगः महता कालेन
अतीव दीर्घसमयातिक्रमणेन उपदेशकजनाभावात् इह अस्मिन् लोके नष्टः
सम्प्रदायविच्छित्तिं प्राप्तः॥२॥

श्रीभगवानुवाच = "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥१॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परंतप"॥२॥

अहं सो अस्मि यः पुरा सुते वदामि कानिचित्। तं मा व्यन्त्याध्यो ३
वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी॥ ऋ०१।१०५।७॥

"यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे सुदर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो ज्ञेयः ब्रह्मप्रकीर्तनात्"॥२॥

अहमिति = हे मुमुक्षवः! पुरा सृष्ट्यादौ सुते त्वदमि अवणाय त्वज्ज्ञानपरि-
पक्वाय कानिचित् कतिपयानि ज्ञानकर्ममयानि स्तोत्राणि योऽहं परमात्मा वदामि अव-
दम्- स एवाहं अधुना इति शेषः, अस्मि न त्वन्यः कश्चित्। यः उपदेशः सृष्ट्यादौ दत्तः
बहुकालेऽतीते सति नष्टमेव तं योगमधुनापि उपदिशामि। तं तादृशं ज्ञानकर्मयोगम्
आध्यः आधीयते मनसि स्थाप्यते इत्याधिः। ते यथाऽधिकारिजनप्राप्त्यभावात्
ज्ञानविनाशस्वरूपाः व्याधयः दुःखानि व्यन्ति व्ययन्ति प्रापुवन्। वृको न तृष्णजं-
मृगम् = तृष्णजं जाततृष्णं पिपासन्तमुदकं प्रति गच्छन्तं मृगं वृकः अरण्यश्वा मार्ग-
मध्ये एव भक्षयति, एवं सृष्ट्यादौ मया प्रोक्तः ज्ञानकर्मयोगोऽपि महता कालवृकेण-
भक्षितः। हे रोदसी! रुणद्धि जरामृत्युशोकादीन् इति रोदसी, हे जरामृत्युशोकाद्य-
वरोधकौ स्त्रीपुंसौ! मे मम अस्य परमात्मनः इदं वचनं वित्तं जानीतम्। एतदेव मदु-
क्तं वचनं जानीहि इत्यर्थः॥२॥

तुलना = गीतायां "कर्मयोगः सृष्ट्यादौ विवस्वान् मन्विक्ष्वाकुराजर्षिद्वारा आयातः
द्वापरादौ अनश्यत्। स एव अद्य पुनः मया प्रोच्यते" इत्युक्तम्। वेदेऽपि ईश्वरः
उपदिशति = "अयं कर्मयोगः सृष्ट्यादौ मया ज्ञानयोगकर्मयोगप्रवृत्तये कति-
चिन्मार्गाः अभाणि ते मार्गाः कालचक्रेण मध्ये एव भक्ष्यन्ते। मया प्रका-

शान्तरेण ते मार्गाः कथ्यन्ते बोध्यन्ते च"।

स इति = यः योगः पुरा विवस्वते प्रोक्तः स एवायं योगः ज्ञानकर्मयोगः मया अद्य ते कर्तव्यमोकृत्वयोः मुह्यमानाय ते तुभ्यं प्रोक्तः। त्वं मे भक्तः असि, मदीयः भक्तः असि। अथ च सखा स्नेहसम्पन्नः सुहृदसि। एतद् उत्तमं सर्वोत्तमं ब्रह्मज्ञानप्राप्तिसाधनमेतत् एव रहस्यं गोपनीयमेवास्ति॥३॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥३॥

अयं पन्थाः अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे। अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः॥ ऋ० ४।१८।१॥

अयमिति = हे मुमुक्षो! हे जीवात्मन्! अयं पन्थाः प्रत्यक्षेणोपलभ्यमानः ज्ञानकर्मयोगमार्गः पुराणः सनातनः सृष्ट्यादौ विवस्वत्प्रभृतिभिः अनुवित्तः आनुपूर्व्येण सर्वैः जायमानैः लब्धः। यतः विवस्वन्मन्विक्ष्वाकुप्रभृतिभ्यः विश्वे सर्वे देवाः विद्वांसः मुमुक्षवः उदजायन्त उत्कृष्टाः भवन्ति मुक्त्यधिकारिणः जायन्ते इति भावः। अतः चित् अस्मादेव ज्ञानकर्मयोगमार्गात् प्रवृद्धः प्रकर्षेण वृद्धिं गतः आजनिषीष्ट आसमन्तात् जायताम्। अमुया अमुम् मातरं ज्ञानकर्मप्रमापकं जीवात्मानं पत्तवे विनाशाय मा कः मा करोतु॥१॥

तुलना = गीतायां सृष्ट्यादौ कर्मयोगमहत्वं प्राचीनं कथितं वेदेऽपि च अयं कर्मयोगपन्थाः पुराणः कथितः। एतदाधारतः विद्वांसः मुक्तिमार्गे प्रावर्तन्त। अहर्निशमुन्नतिं प्राप्य मुक्त्यधिकारिणः संजाताः। कश्चिदपि ना एतत्कर्मयोगान्न पतेत्॥

अपरमिति = भवतः कृष्णस्य तव जन्म अपरम् अर्वाचीनम्। विवस्वतः तु जन्म उत्पत्तिः परं प्राचीनं सृष्ट्यादौ एव। एवमुभयोः जन्मनि महति भेदे सति 'त्वम् आदौ विवस्वते इमं योगं प्रोक्तवान्' इति कथं केन प्रकारेण विजानीयाम् - अथवाऽन्यो वा विजानीयात्।४।

अर्जुन उवाच = "अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति॥४॥

कथा त एतदहमा चिकेतं गृत्सस्य पाकस्तवसो मनीषाम्। त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन् क्षेम्या धूः॥ ऋ० १०।२८।५॥

कथेति = हे मघवन्! मघः पूजा सास्ति अस्मिन्निति मघवान् पूजावान् तत्संबुद्धौ हे मघवन्! हे पूजावन्! हे सर्वधनेश्वर! वा, विद्वान् सर्वज्ञः त्वं ऋतुथा पुरा यथासमयं नोऽस्मान् मुमुक्षून् विवोचः उपदिष्टवान् इति, पाकः पक्तव्यप्रज्ञः अहं ते तव एवत् त्वदीयं एतद्वचनं कथा केन प्रकारेण अचिकेतम् आसमन्तात् जानामि। गृत्सस्य मेधाविनः तवसः वृद्धस्य पुरातनस्येति भावः। तव मनीषां स्तुतिबुद्धिं कथम् अचिकेतम् जानामि। त्वं तु संप्रति मम संमुखे उपस्थितोऽसि। पुरा कथम्

उपदिष्टवान् इति भावः। अतः ते तव अर्धं यं स्तुत्या अवयवम् एव करोमि।
सा स्तुतिः क्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्या धूः भारः अस्ति। यस्मात्
स्तुतिभागमपि अहम् अक्लेशेन कर्तुं न शक्नोमि मन्दबुद्धित्वात् तस्मात् त्वं
स्वयमेव मह्यं स्वसामर्थ्यं वक्तुमर्हसि॥

तुलना = गीतायामर्जुनः श्रीकृष्णमपृच्छत् अपरं भवतो जन्म परं जन्म विव-
स्वतः। भवान् तं कथमुपादिशत्। अयं संशयः अर्जुनेन उपस्थापितः। वेदेऽपि च
जीवात्मा परमात्मानं पृच्छति यत् सृष्ट्यादौ भवता वेदेन कर्मयोगः उपदिष्टः एतत् वयं
कथं विजानीमहे।

श्रीभगवानुवाच = बहूनीति = हे अर्जुन! मे मम अनन्तशक्तेः परमेश्वरस्य
देवतिर्यङ् मनुष्येषु तव च बहूनि जन्मानि व्यतीतानि अतिक्रान्तानि बहूनि
बहुसंख्याकानि सन्ति। तानि तव अन्येषां स्वस्य च जन्मानि अहं वेद जानामि।
हे परंतप! हे अर्जुन! त्वं तु तानि जन्मानि न वेत्थ न जानासि॥५॥

श्रीभगवानुवाच = बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप॥५॥

उदग्रभं परिपाणाद् यातुधानम् किमीदिनम्। तेनाहं सर्वं पश्या-
म्युत शूद्रमुतार्यम्॥ अथ० ४।२०।८॥

यद्वा = न कि हैषां जनूंषि वेद ते अङ्ग। विद्रे मिथः जनित्रम्॥
ऋ० ७।५६।२॥

यद्वा = रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप
ईयते युक्ता ह्यस्य हरयः शता दश॥ ऋ० ६।४७।१८॥ .

उदग्रभमिति = परिपाणात् जगतः परिरक्षणात् हेतोः किमीदिनम् "किमिदानीं
भक्षयेयम् किमिदानीं भक्षयेयम्" इति चरन्तं यातुधानं राक्षसं "जातावेकवचनम्"
राक्षसानित्यर्थः। उद् अग्रभम् = पुरा निगृहीतवानस्मि वशीकृतवानस्मि इत्यर्थः।
तेन जगत्परिरक्षणेन हेतुना अहं परमात्मा सर्वं प्रलयसमये राक्षसहननिमित्त
प्रादुर्भूतं स्वकीयं जन्म पश्यामि अवलोकयामि जानामि इत्यर्थः। उत अपि शूद्रम्
उत आर्यम्। शुचा द्रवतीति शूद्रः नीचः तं शूद्रं नीचजन्मानि, आर्यं सज्जन-
जन्मानि अहं पश्यामि न तु ते स्वयं पश्यन्ति इति।८।

यद्वा = न किरिति = हीति निश्चये। हे अङ्ग! हे प्रिय! मम परमात्मनः जनूंषि
अवतारात्मकानि जन्मानि न किः न कश्चिदपि वेद जानाति। ते सर्व जीवा-
त्मानः मिथः परस्परम् अन्योऽन्येषां वा जनित्रं जन्म न विद्रे न जानन्ति। हि निश्च-
येन एषां जीवात्मनां जनूंषि जन्मानि अहं तु वेद जानामि॥

अथर्वशिर उपनि० श्रु० ६ = "ओम् अस्मिन्निदं सर्वमोतप्रोतं यस्मादन्यन्न
परं किंच नास्ति, न तस्मात् पूर्वं तदस्ति न भूतं नोत भव्यं यदासीत्"॥६॥

अथर्वशिर उप० श्रु० १ = " अहमेकः प्रथममासं वर्तामि च भविष्यामि

IV



च नान्यः कश्चिन्मत्तो व्यतिरिक्तः॥

तुलना = गीतायां भगवान् स्वजन्मान्याह - "अहं जन्मानि वेद, न त्वम् - अल्पज्ञत्वात्"। वेदेऽपि च परमात्मा स्वस्वरूपं स्वावतारजन्मानि च वेद। जीवाः अल्पज्ञत्वात् स्वजन्मानि परजन्मानि च न विदुः इत्युक्तम्॥

अज इति = अजः न जायते इत्यजः। न तस्य कश्चिज्जनिता न चाधिपः" इत्युक्तेः जन्मरहितोऽपि सन् अव्ययात्मा अव्ययः नाशनक्रियायाः अविषयः अविषयः आत्मा स्वभावो यस्य सोऽव्ययात्मा नित्यः, "अजो नित्यः" इत्युक्तेः नित्यः सन् भूतानां ब्रह्मादीनां अन्येषां च भूतानां अहमेव ईश्वरो नियन्तापि सन् निर्विकार एव परमात्मा प्रकृतिं = कृतिः सृष्ट्यादिक्रिया यस्याः प्रभावात् मम सा प्रकृतिः त्रिगुणात्मिका देवी माया तां स्वां स्वकीयां प्रकृतिं अव्यक्तसंज्ञिकां मूलप्रकृतिं अधिष्ठाय आश्रयं कृत्वा यद्वा संप्रधर्ष्य "प्रकृतिः स्वात्मशक्त्या जीवात्मानं प्रधर्षयति। अहं तु प्रकृतिं प्रधर्षयामि, अतः अधिष्ठाय इत्युक्तम्। अतः अजत्वादिलक्षणः "अकर्मत्वेन जगद्विलक्षणः आत्ममायया आत्मशक्त्या मायायाः परमात्मनश्च अभेदोऽस्ति। यथा वह्नेस्तद्दहनशक्त्याश्चाभेदोऽस्ति तद्वदहं संभवामि जगति मनुष्यरूपेण भिन्नरूपेण वा प्रादुर्भवामि इति भावः॥६॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया॥६॥

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः। अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा॥ ऋ० ४।२६।१॥

यद्वा = उतामृतासुर्व्रत एमि कृण्वन्नसुरात्मा तन्वस्तत्सुमद्गुः॥ अथ० ५।१।७॥

अहमिति = अहं परमात्मा मनुः सृष्ट्यादौ धर्मशास्त्रराज्यमर्यादासंचालकत्वेन मनुः अंशावतारः अभवम्। तथा सूर्यः सर्वस्य प्रेरकः सविता विवस्वान् कर्मज्ञानोपदेष्टाऽहमभवम्। ऋषिः सर्वद्रष्टा: सर्वद्रष्टाऽपि अहं विप्रः मेधावी कक्षीवान् = कक्ष्या रज्जुः, कक्ष्या जगत्संचालकरूपा रज्जुः अस्य अस्तीति कक्षीवान् जगत्संचालनव्यग्रः अस्मि। अहमेव आर्जुनेयम् = आर्जुन्याः उषसः पुत्रं कुत्सं दिवं न्यृञ्जे = नितरां प्रसाधयामि स्वायत्तीकरोमि। अहं विशमधिपतिरहमेवास्मि। अहं कविः क्रान्तदर्शी, यद्वा कवतेः धातोः गत्यर्थस्य कविः = कवयति गच्छति असौ नित्यम्। अतः सर्वत्र गमनशीलोऽपि अहमेवास्मि। अत एव उशनाः = वश् कान्तौ, कनसि प्रत्ययः। शोभमानः अस्मि। हे जनाः! मां सर्वात्मकं सर्वगतं बहुवारम् आगतं मा = मां पश्यत अवलोकयत अनुभवत इत्यर्थः।

यद्वा = उतेति = अमृतासुः अमरप्राणः अजः अहं व्रतः दिव्यकर्ममयः सन् कर्माणि कृण्वन् एमि संसारे स्वशक्त्या प्राप्नोमि। तत तेन आत्मा असुः प्राणः तन्वः शरीरं सुमद्गुः = एते त्रयः दिव्यगुणवन्तः भवन्ति॥

तुलना = गीतायां आत्मा परमात्मा च अजः अव्ययः प्रकृत्यधिष्ठाता सन्

स्वदिव्यशक्त्या स्वदिव्यजन्म गृह्णाति यत् कर्माधीनं न भवतीत्युक्तम्। वेदेऽपि च अजः अव्ययः परमात्मा भवन्नपि दिव्यशरीरग्रहणेन प्राकट्यं गच्छति परं च स्वशक्त्या न च कर्मशक्त्या जन्मादत्ते।

यदेति = यदा यदा यस्मिन् समये धर्मस्य वेदविहितसद्धर्मस्य ग्लानिः विघ्नोत्पादकैः रक्षोभूतैः जनैः अत्यन्तविनाशः भवति हे भारत! हे अर्जुन! अधर्मस्य सर्वानर्थहेतोः पापस्य अभ्युत्थानमुदयः भवति, तदा तस्मिन् काले आत्मानं धर्माधर्मानुग्रहनिग्रहयोग्यं देहम् अहं सर्वनियन्ता ईश्वरः सृजामि रचयामि ॥७॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥

ऋग्वेदे मन्त्रो योनिं य आं बभूवा मृतासुर्वर्धमानः सुजन्मा। अदब्धासु भ्राजमानो हेव त्रितो धर्ता दाधार त्रीणि॥ अथ० ५।१।१॥

यद्वा = अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः। वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो विजघान संदिहः। ऋ०१।५१।९॥

अनुव्रतायेति = यः इन्द्रः परमात्मा अनुव्रताय अनुकूलं व्रतं कर्म यस्य तस्मै अनुकूलकर्मणे साधवे अपव्रतान् दुष्कर्मकर्तॄन् दुष्कृतः रन्धयन् हिंसयन् वशीकुर्वन् वा आभूभिः आभिमुख्येन भवन्तीति आभुवः स्तोतारः वैः आभूभिः स्तोतृभिः भक्तैः अनाभुवः निन्दकान् दुष्टान् श्नथयन् हिंसयन् वर्तते। वृद्धस्य धर्मवृद्धस्य चित् एव वर्धतः वर्धमानस्य द्याम् आकाशम् इनक्षतः व्याप्नुवतः परमात्मनः स्तवानः स्तुतिं कुर्वाणः वम्रः स्तोता संदिहः सम्यक्तया उपचयं गतः विजघान परिहृतानारायः सन् दुष्टसंगतिं परिहृतवान्। श्नथयन् = श्नथ् हिंसायाम्। णिचि घटादित्वात् मित्वे "मितां ह्रस्वः" इति ह्रस्वत्वम्। इनक्षतः = नक्ष् गतौ। इकारोपजनश्छान्दसः। यद्वा इनक्षतिर्गत्यर्थः। स्तवानः = "सम्यानच्स्तुवः" इति स्तौते बहुलवचनान्निरुपपदादप्यानच् प्रत्ययः। जघान = "अभ्यासाच्च" इत्यभ्यासादुत्तरस्य हन्तेर्हकारस्य कुत्वम्। संदिहः = "दिह उपचये"। "कृत्यल्युटो बहुलम्" इति बहुलवचनात् कर्मणि क्विप्।

तुलना = गीतायां धर्मह्रासाधर्मवृद्धिकाले परमात्मा संसारे स्वयं कस्मिंश्चिद्रूपे प्रकटीभवति इत्युक्तम्। वेदेऽपि च अजन्मा अदब्धासुः त्रैलोक्याधारः दिव्यजन्मा धर्मरक्षार्थं योनौ समागच्छति॥

परित्राणायेति = साधूनां सज्जनानां स्वधर्मपरायणानां च परित्राणाय रक्षणाय दुष्कृतां पापं कुर्वतां जगद्दूषकानां दुष्टानां विनाशाय समूलनाशाय धर्मसंस्थापनाय च धर्मस्य सतां अभ्युदयनिःश्रेयसहेतोः संस्थापनाय यथाशास्त्रमनुष्ठानाय युगे युगे सत्यत्रेताप्रभृतियुगे यद्वा समये समये स्वशक्त्या संभवामि अवतरामीत्यर्थः। साधूनां परित्राणं दुष्टानां हननं धर्मसंस्थापनं च एतत् त्रितयं अवतारप्रयोजनमिति॥ ८॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८॥

अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ। अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ॥ ऋ० १०।१२५।६॥ अथ० ४।३०।५॥

अहमिति = अहं विशुद्धसत्त्वः परमात्मा जगति साधुसंरक्षणाय दुष्टविनाशनाय धर्मसंस्थापनाय अवतीर्णः सन् रुद्राय क्रूराय घोररूपाय "रोदयमाणो द्रवतीति रुद्रः"। यद्वा शत्रून् साधून् असौ रोदयति दुःखयतीति रुद्रः, ब्रह्मद्विषे ब्राह्मणानां द्वेष्ट्रे, शरवे = हिंसकाय — शॄ हिंसायाम् ~~इत्येतेषु त्रिषु "क्रियाग्रहणं कर्तव्यम्"~~ शॄस्वृस्निहीत्यादिना उ प्रत्ययः। "उणादि" १।१०॥ रुद्राय, ब्रह्मद्विषे, शरवे, इत्येतेषु त्रिषु "क्रियाग्रहणं कर्तव्यम्" इति कर्मणः संप्रदानत्वात् चतुर्थी। रुद्रं ब्रह्मद्विषं शरुम्। हन्तवै = हन्तुं हिंसितुम्। "तुमर्थे सेसेन —" इति तवै प्रत्ययः। उ शब्दः पादपूरकः। धनुः चापं तत्तत्क्रूरताविनाशकम् अस्त्रं शस्त्रं वा। आतनोमि विस्तारयामि। अहमेव जनाय स्वभक्ताय समदम् = समानं माद्यन्ति अस्मिन्निति समत् संग्रामः तं समदं संग्रामं भक्तजनार्थं तच्छत्रुभिः सह कृणोमि करोमि। तथा द्यावापृथिवी दिवञ्च पृथिवीं च अन्तर्यामित्वेनापि अहमेव आविवेश प्रविष्टः भवामि। न त्ववतारत्वेन एकदेशीयो भवामि॥

तुलना = गीतायां परमात्मा साधुपरित्राणाय दुष्टविनाशाय धर्मसंस्थापनाय च यथासमयं ब्रह्मद्वेषि हिंसकदुष्टपुरुषसंहाराय धनुरातत्य युध्यति भक्तरक्षार्थं युध्यन्नपि सर्वत्र व्यापको भवति इत्युक्तम्।

जन्मेति — हे अर्जुन! यः मे मम दिव्यं "स्वयमेव स्वदीप्त्या दीव्यति प्रकाशते" इति दिव्यम्। अलौकिकप्रकाशमयं, यद्वा दिवः ब्रह्मणः स्वरूपं दिव्यम् अप्राकृतं जन्म, दिव्यम् अप्राकृतं कर्म, यद्वा लोकोत्तरं कर्म तत्त्वतः अध्यात्मदृष्ट्या वेत्ति विजानाति, स इमं प्राकृतं देहं शरीरं त्यक्त्वा पुनः जन्म पुनरुत्पत्तिं नैति न भूयो जायते किन्तु मां परब्रह्मस्वरूपं एति प्राप्नोति॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९॥

आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि। धास्युर्योनिं प्रथम आविवेशा यो वाचमनुदितां चिकेत ॥ अथ० ५।१।२॥

आ य इति = यः परमात्मा दिव्यदेहः दिव्यकर्मा प्रथमः अनादिः सन् धर्माणि दिव्यत्वेन शास्त्रविहितकर्मानुष्ठानजन्यानि सांसारिककर्माणि आससाद प्राप्नोति। ततो दिव्यजन्मादिषु कर्मधारणानन्तरं पुरूणि वपूंषि बहून् देहान् कृणुषे करोषि धारयसीत्यर्थः। प्रथमः अनादिः पुरातनः धास्युः जगत्पोषणेच्छुकः एषः परमात्मा पोषणहेतोः तत्र तत्र भूतेषु वर्तमानोऽपि सन् योनिं दिव्यं-

जन्म आविवेश प्रविशति। यः अनुदितां केनाप्यनुक्तां स्वतःसिद्धामिति भावः। वाचं वाणीं अग्निकेत जानाति। धास्युः = धाः धारणं पोषणं जगत इच्छति इति धास्युः, "छन्दसि परेऽच्छायामपि" इति क्यच्। "क्याच्छन्दसि" इति उ-प्रत्ययः॥

तुलना = गीतायां परमात्मनः दिव्यजन्म दिव्यकर्म देहं मानुषी देहात् भिन्नं जानन् मुक्तिं लभते इत्युक्तम्। वेदेऽपि च अनादिः परमात्मा लीलायै सांसारिक धर्मान् स्वीकरोति, अतः नानायोनौ प्रकटीभवन् दिव्यकर्मभिः दिव्यजन्म-गृह्णाति सर्वज्ञत्वात् वेदोपदेशं परान् प्रयच्छति।

वीतरागेति = उपकारि वस्तुषु रागः, सिंहाद्युपद्रवकारि शत्रुभ्यः भयम्। अनिष्ट कर्तृषु क्रोधः, सदसद्विवेक प्राप्त्या वीताः विशिष्य निर्गताः रागभय-क्रोधाः येषां ते वीतरागभयक्रोधाः। ज्ञानतपसा ज्ञानम् आत्मतत्त्वविवेक एव तपः = "मनसश्चेन्द्रियाणाञ्च ह्येकाग्र्यं परमं तपः" इति स्मरणात्। तेन ज्ञान-तपसा पूताः शुद्धाः सन्तः बहवः मुमुक्षवः माम् कृष्णस्वरूपं परं ब्रह्मैव उपाश्रिताः "सर्वं ब्रह्मैव" इति बहिरन्तः सर्वत्र प्रत्यग् दृष्ट्या पश्यन्तः सन्तः। मन्मयाः मदात्मना पूर्णाः भवन्तः मद्भावं देहपरित्यागानन्तरं विदेह मुक्तिं प्राप्ताः।१०।

वीतरागभयक्रोधाः मन्मयाः मामुपाश्रिताः।

बहवो ज्ञानतपसा पूताः मद्भावमागताः॥१०॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादोः स्वादीयः स्वादुना सृजा समदः सुमधु मधुनाऽभियोधीः॥ ऋ० १०।१२०।३॥ साम० १४८५ अथ० ५।२।३॥ अथ० २०।१०७।६॥ ऐत० आ० १।१२॥ तैत्ति० सं० ३, ५, ७, १२॥

त्वे इति = विश्वे सर्वे वीतरागभयक्रोधाः जनाः त्वे त्वयि परमात्मनि क्रतुं यथाविधि विहितं कर्म वृञ्जन्ति समापुवन्ति समर्पयन्तीत्यर्थः। सद्धा = वृञ्जन्ति = समापयन्ति। तथा च ब्राह्मणम् = " त्वयि इमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जन्ति"। यत् यस्मात् कारणात् एते जनाः तर्पकाः ज्ञानतपसा तृप्तिकारकाः जनाः केवलं वीतरागेण स्वशरीरेण भगवदुपासकाः सन्तः द्विः वीतरागभयत्वेन द्विर्भूत्वा त्रिः वीतरागभयक्रोधत्वेन त्रिर्भूत्वा भवन्ति - भवन्तमुपाश्रिताः सन्तः एते मुमुक्षवः पूताः भवन्ति। अतः हे जीवात्मन्! त्वं स्वादोः स्वादीयः प्रियात् प्रियतरम् आत्मानं मधु मधुरं सुमधुना मधुरतरेण परमात्मना अभियोधीः अभियोधय अभितः क्रीड। धातूनामनेकार्थत्वात् युध्यतिरत्र क्रीडार्थे वर्तते। त्वे = "सुपां सुलुक्" इति सप्तम्येकवचनस्य 'शे' इत्यादेशः। त्वे इति सिद्धम्॥ यथा ब्राह्मणग्रन्थे उक्तम् = "त्वयि इमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जन्ति"॥

तुलना = गीतायां रागभयक्रोधराहित्यम्, भगवच्छरणम्, भगवन्निमिलयः, ज्ञानतपसा पावित्र्यम्, एतानि मुक्तिद्वाराणि सन्ति। वेदेऽपि च रागभय-

क्रोधराहित्यम्, सर्वकर्मणां भगवदर्पणम् आत्मज्ञानसाधनमस्ति ॥

ये इति = ये जनाः यथा येन प्रकारेण व्यक्ताव्यक्तस्वरूपोपासनाप्रकारेण ज्ञानकर्मयोगप्रकारेण वा मां परमात्मानं प्रपद्यन्ते उपासते, अहं सर्वद्रष्टा सर्वसाक्षी सन् तान् तत्तत्साधननिष्ठान् तान् भक्तान् तथैव तन्निष्ठानुकूलेन तत्तद्रूपेणैव प्रत्यक्षीभूय भजामि अनुगृह्णामि । हे पार्थ ! हे अर्जुन ! मनुष्याः ब्राह्मणादयः मुमुक्षवः ते सर्वे मम परमेश्वरस्य वर्त्मकर्म मार्गं एव अनुवर्तन्ते विशेषतया कर्म एव कुर्वन्ति इति भावः ॥११॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥

मनीषिणः प्रभरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम् । इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥ ऋ० १०।१११।१ ॥

मनीषिण इति = हे मनीषिणः ! मनसः ईषा मनीषा, सा ऽस्यास्तीति मनीषी ते मनीषिणः तत्संबुद्धौ हे मनीषिणः ! हे मुमुक्षवः ! नृणां कर्मनेतॄणां सर्वेषां मनुष्याणां यथा यथा येन येन प्रकारेण ज्ञानप्रकारेण कर्मप्रकारेण वा मतयः परमात्मपूजने बुद्धयः सन्ति तथा तेन तेन प्रकारेण व्यक्ताव्यक्तरूपयोर्मध्ये व्यक्तरूपेण अव्यक्तरूपेण वा, यद्वा ज्ञानयोगप्रकारेण कर्मयोगप्रकारेण वा मनीषां परमात्मपूजनबुद्धिं प्रभरध्वम् प्रहरध्वम् = कुरुत । यद्बुद्ध्या भवन्तः परमेश्वरं पूजयिष्यन्ति तत्स्वरूपेण परमात्मा युष्मभ्यं तत्तत्फलं प्रदास्यतीत्यर्थः । हे मुमुक्षवः वयं कृतेभिः कृतैः सत्यैः यथार्थस्वरूपभूतैः परमात्मार्चनैः इन्द्रम् ऐश्वर्यवन्तं परमेश्वरं एरयामः = आ समन्तात् ईरयामः प्राप्नुमः । हि यस्मात् कारणात् स परमेश्वरः वीरः वरणीयः सर्वेभ्यो बलवत्तरो वा विदानः जानानः सर्वज्ञ इत्यर्थः । गिर्वणस्युः = स्तोतॄन् स्वसंनिधौ कामयमानः विराजते इति शेषः, अतः तं स्तुत ॥

तुलना = गीतायां 'ये लोकाः यथा मां भजन्ते अहं तान् तथैव भजामि' इत्युक्तम् । वेदेऽपि च मनुष्याः यथा मतयः मां प्रपद्यन्ते, मनुष्यः सत्कर्मणा सुमनसा परमात्मानं सेवेत । स च वरेण्यः सर्वज्ञः अस्तीत्युक्तम् ।

कांक्षन्त इति = कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥

तेऽविन्दन् मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम् । धातुर्द्युतानात् सवितुश्च विष्णोरा सूर्यादभरन् घर्ममेते ॥ ऋ० १०।१८१।३ ॥

ते इति = ते अन्तःकरणशुद्ध्यै यज्ञानुष्ठातारः दीध्यानाः कर्मसिद्ध्याकांक्षया दीप्यमानाः सन्तः स्कन्नं स्कन्दनीयं आसेचनीयं कर्मानुष्ठानसाधनं प्रथमं मुख्यं देवयानं देवानाम् आराधनया यानं प्राप्तिसाधनं यजुः यजुर्वेदमन्त्रद्वारा यागसाधनं घर्मम् = प्रवर्ग्यम् आज्यं हविः मनसा मनसे चतुर्थीस्थाने तृतीयाविभक्तिव्यत्ययः अन्तःकरणशुद्ध्यै अविन्दन् अलभन्त । एते कर्मणां सिद्धिं कांक्षन्तः मम वर्त्मानु-

वर्तमाना: ऋत्विज: द्युतानात् द्योतमानात् धातु: जगद्धारकात् जगत्पालकात् वा सवितु: जगदुत्पादकात् विष्णो: जगति व्यापनशीलात् सूर्यात् — सूर्य: = सरति गच्छति इति सूर्य:। यद्वा सुवति प्रेरयति तत्तद्व्यापारेषु कृत्स्नं जगत् इति सूर्य: तस्मात् सूर्यात् परमेश्वरात् सूर्यदेवाद्वा घर्म = यागसाधनं कर्मजन्यासिद्धि — कारकं आज्यम् अभरन् आहरन् गृहीतवन्त: इति भाव:॥

(तुलना = गीतायां कर्मसिद्धिं कांक्षन्त: पुरुषा: संसारे लौकिकवैदिककर्माणि विधाय तत्फलानि च भुञ्जते इत्युक्तम्। वेदेऽपि च मनसा यज्ञं कुर्वन्त: सर्वव्यापक-परमात्मन: तत्कृतयज्ञफलं लभन्ते इत्युक्तम्॥

चातुर्वर्ण्यमिति = गुणकर्मविभागश: गुणानां सत्वादीनां कर्मणां शमादीनां विभागेन चातुर्वर्ण्यं चत्वारो वर्णा: ब्राह्मणक्षत्रियवैश्यशूद्रा: एव चतुर्णां वर्णानां भाव: चातुर्वर्ण्यं चातुराश्रम्यञ्चेति शेष:। मया परमात्मना सृष्टं सर्गादौ निर्मितम्। तस्य चातुर्वर्ण्यस्य कर्तारं स्वस्वकर्मभि: निर्मातारं मां विद्धि जानीहि। त्वं मां तु अकर्तारं कर्तृत्वादिधर्मशून्यं विद्धि जानीहि। अर्थात् जीवकर्मासंभूतौ तत्फलजन्याघसंभवात् अव्ययं नाशरहितं नित्यशुद्धबुद्धमुक्तस्वभावं विजानीहि। १३।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश:।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥१३।

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्य: कृत:। ऊरू तदस्य यद्वैश्य: पद्भ्यां शूद्रो अजायत॥ यजु० ३१॥११॥

ब्राह्मण इति = अस्य विराड्रूपपरमात्मन: ब्राह्मण: ब्राह्मणवर्ण: मुखम् आसीत्। ब्राह्मणजातिविशिष्ट: पुरुष: अस्य मुखाद् उत्पन्न: इत्यर्थ:। योऽयं राजन्य: क्षत्रियजातिविशिष्ट:, स तस्य विराडात्मन: परमात्मन: बाहू कृत: बाहुत्वेन निष्पादित: बाहुभ्यामुत्पादित: इत्यर्थ:। तत् तदानीं अस्य प्रजापते: यत् यौ ऊरू तद्रूपो वैश्य उत्पन्न:, वैश्य: ऊरुभ्यामुत्पन्न इत्यर्थ:। पद्भ्यां पादाभ्यां शूद्र: शूद्रजातिविशिष्ट: पुरुष: अजायत उत्पन्न:। इत्थं च मुखादिभ्यो ब्राह्मणादीनाम् उत्पत्तिम् तैत्तिरीया: समामनन्ति = " स मुखतस्त्रिवृतं निरमिमीत राजन्यो मनुष्याणाम् इति, मध्यत: सप्तदशं निरमिमीत, वैश्यो मनुष्याणामिति, तत्र अन्नाद्यानाद् व्यसृज्यन्त एकविंशं निरमिमीत शूद्रो मनुष्याणाम्" इति, तै० सं० ७।१।१।५॥

तुलना = गीतायां चत्वारो वर्णा: स्वस्वपूर्वजन्मानुसारिभि: गुणकर्मभि: सृष्टा: न-च विना गुणकर्मणी तेषां जन्म करोमीत्युक्तम्। वेदेऽपि च ब्राह्मणादय: चत्वार: वर्णा: स्वस्वपूर्वजन्मानुसारिभि: गुणकर्मभि: उत्तममध्यमाधमा उक्ता इत्युक्तम्।

न मामिति = मे दिव्यदेहस्य दिव्यकर्मण: मम कर्मफलस्पृहा कर्मसु तेभ्य: उत्पन्नेषु फलेषु च स्पृहा इच्छा नास्ति। अत एव कर्माणि लोकसंग्रहनिमित्त कृतानि कर्माणि मां शुद्ध-स्वरूपं न लिम्पन्ति न स्पृशन्ति। य: मुमुक्षु: मां कर्मफलनि:स्पृहं असंगं परमात्मानं अभिजानाति सम्यगाभिमुख्येन अयमेवाहमस्मीति साक्षात् स्वात्मना वेत्ति स विद्वान्

लोकसंग्रहार्थं कृतैः कर्मभिः न बध्यते कृतकर्मजन्यफलैः देहं भूयो न लभते इति भावः।१४

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।

इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ यजु० ४०।२ ॥

कुर्वन्निति = निःस्पृहस्यापि योगिनः ज्ञाननिमित्त कर्मणि अधिकार इति सूच्यते अनेन मंत्रेण। इह संसारे कर्माणि लोकसंग्रहार्थं मुक्तिहेतुकानि वैदिककर्माणि कुर्वन् एव शतं समाः शतवर्षपर्यन्तं यावदायुः पर्यवसानं वा जिजीविषेत् — पथ्यहितमिति भक्षणेन जीवितुमिच्छेत्। एवं कर्मफलनिःस्पृहताचरणप्रकारेण त्वयि नरे तव मनुष्यस्य — "त्वयि नरे" इत्यत्र षष्ठीस्थाने विभक्तिव्यत्ययेन सप्तमी — मुक्तिरस्तीति शेषः। इतः अस्मात् प्रकारात् अन्यथा अन्यप्रकारेण तव मुक्तिर्नास्ति। एतदुक्तं भवति = यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति न तथा मुक्तौ इत्यर्थः। ननु कर्मणः फलेन भवितव्यम् — अथ कथं मुक्तिप्राप्तिरित्यत आह = 'न कर्म लिप्यते नरे' = न हि मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये संबध्यते, मुक्तिप्रदानेनोपक्षीणशक्तित्वात् ॥

तुलना = गीतायां निष्कामकर्मकर्तारं कर्माणि न बध्नन्ति एवं जानन् कर्मभिः न लिप्यते। वेदेऽपि चाजीवनं निष्कामकर्मानुष्ठाना शास्ति। यैः कर्मानुष्ठानैः मनुष्यः संसारबन्धने न समायाति मुक्तो भवति च।

एवमिति = पूर्वैः पूर्वोत्पन्नैः जनकादिभिः मुमुक्षुभिः मुक्तिमिच्छुभिः अपि एवमित्थमेव ज्ञात्वा बुद्ध्वा कर्म स्वहितार्थं लोकहितार्थं च कर्म नित्यं नैमित्तिकं कर्म कृतम् अनुष्ठितं यस्मात् — तस्माद्धेतोः त्वमपि पूर्वैः पूर्वजैः ज्ञानवृद्धैः पूर्वतरम् अनादिकालप्रवृत्तं कर्म लोकहितार्थं स्वहितार्थं च कुरु ॥१५॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।

कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत। पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ साम० १६७७ ॥

यद्वा = "देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः" ॥ अथ० ६।२३।३ ॥

अस्तावीति = हे जीवात्मानः! यूयं इन्द्राय परमैश्वर्यवतः परमात्मनः प्राप्तये पूर्व्यम् अनादित्वात् पूर्वस्मिन् काले भूतं मन्म मननीयं ब्रह्म स्तोत्रं वेदविहितं कर्म वा वोचत उच्चारयत। पूर्वीः पूर्वकालीनाः ऋतस्य यज्ञस्य बृहतीः बृहत्सामानि अनूषत पठत तथा स्तोतुः स्तुतिकर्तुः यजमानस्य कर्मकर्त्रीः बुद्धीः असृक्षत ईश्वरः सृजति।

यद्वा = देवस्येति = मानुषाः सवितुः जगदुत्पादकस्य देवस्य ज्योतिःस्वरूपस्य परमात्मनः सवे सृष्टौ कर्म नित्यं नैमित्तिकं कर्म कृण्वन्तु कुर्वन्तु।

तुलना = गीतायां मनुष्यः निष्कामकर्मणा मुक्तो भवति, यैः पूर्वे ऋषयः महर्षयश्च मुक्ता अभवन् इत्युक्तम्। वेदेऽपि च ईश्वरं स्तुहि, स्वाध्यायं कुरु, बृहत्साम-

गाय, एवत् कर्म कर्तुं परमात्मा बुद्धिमयच्छत्" इत्युक्तम्"

किं कर्मेति = कर्म वा स्वाविकं श्रुति प्रतिपादितं कर्म किम् ? श्रुत्यविहितं कर्म किम् ? यद्वा कर्मशब्देन किं गृह्यते, अकर्मशब्देन च किं गृह्यते इत्यत्र कवयः सर्वशास्त्रज्ञाः अपि मोहिताः मोहं गताः। तत् तस्मात् कारणात् ते कर्माकर्म विवेचनरहिताय तुभ्यं कर्म कर्मपदवाच्यं अकर्म पदवाच्यं च यद्वा किं करणीयं कर्म, किमकरणीयं च इति प्रवक्ष्यामि उपदेक्ष्यामि। यत् ज्ञात्वा ययोः तत्त्वं ज्ञात्वा अवबुध्य अशुभात् अकल्याणात् मोक्ष्यसे मुक्तिं प्राप्स्यसि॥१६॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्॥१६॥
(वेदमंत्रो न लभ्यते)

कर्मण इति = हे यतः कर्मणः शास्त्रानुष्ठेय वर्णाश्रमधर्मस्य तत्त्वमपि बोद्धव्यं ज्ञेयमस्ति। विकर्मणः बहुसम्बन्धवता विधिना विहितविपरीततया विधीयमानत्वात् विकर्म - प्रतिषिद्धं निन्दितं कर्म वा तस्य विकर्मणः तत्त्वमपि बोद्धव्यम् ज्ञातव्यमस्ति। कर्मणः कर्मविकर्माकर्मणाँ गतिः 'एवं कर्तव्यम्' इति कर्तव्यताज्ञानं गहना गंभीराऽस्ति। सद्गुरूपदेशं विना ज्ञातुं दुर्लभा इति॥१७॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः॥१७॥
(वेदमंत्रो न लभ्यते)

कर्मणीति = कर्मणि देहेन्द्रियैः लौकिको वैदिकश्च सर्वोऽपि व्यापारः कर्म तस्मिन् कर्मणि अकर्म कर्माकर्तृत्वं यः विद्वान् पश्येत् - तथैव अकर्मणि देहेन्द्रियव्यापारोपरत-दशायां कर्मक्रियां मेघगत्या चन्द्रः गतिमान् इव यः विद्वान् पश्येत् स मनुष्येषु बुद्धिमान् ज्ञानवान् अस्ति। स एव युक्तः योगी ब्रह्मनिष्ठः अस्ति। स च कृत्स्नकर्मकृत् = कृत्स्नानि सर्वाणि संचितानि प्रारब्धानि च कर्माणि नानायोनिप्रापकानि ज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्नकर्मकृत् अस्ति॥१८॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥१८॥
(वेद मंत्रो न लभ्यते)

यस्येति = यस्य मुमुक्षोः सर्वे समारम्भाः सम्यक् देहेन्द्रियादिभिः आरभ्यन्ते क्रियन्ते इति समारम्भाः देहेन्द्रियव्यापाराः कामसंकल्पवर्जिताः = कामः इच्छा संकल्पः सम्यक्त्वबुद्धिः ताभ्यां वर्जिताः रहिताः भवन्ति तं ब्रह्मवेत्तारं ज्ञानाग्निदग्धकर्माणं = ज्ञानं ब्रह्मतत्त्वविवेकः तदेव अग्निः तेन दग्धानि भस्मीभूतानि सर्वाणि संचित प्रारब्धानि कर्माणि यस्य तमेव जीवन्मुक्तं बुधाः शास्त्रज्ञाः पण्डितम् आहुः कथयन्ति। पण्डा कल्याणी सर्वत्र ब्रह्मावगाहिनी वृत्तिः साऽस्य जाता इति पण्डितः तमेव पण्डितं वदन्ति॥१९॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥१९॥

IV



इन्द्रे विश्वानि वीर्या कृतानि कर्त्वानि च । यमर्काः अध्वरं विदुः ।
ऋ० ८ । ६३ । ६ ॥

इन्द्रे इति = यस्य मुमुक्षोः विश्वानि सर्वाणि वीर्या वीर्याणि कामसंकल्पात्मककर्माणि कृतानि पूर्वसंचितकर्माणि कर्त्वानि च कर्तव्यानि अजन्यफलानि क्रियमाणकर्माणि इन्द्रे परमैश्वर्ययुक्ते परमात्मनि वर्तन्ते, ईदृशं यं ब्रह्मवेत्तारं पुरुषं अर्काः ब्रह्मस्तुतिकारकाः विद्वांसः अध्वरं हिंसारहितं शुद्धं पण्डितं विदुः जानन्ति ॥ यथा छान्दो० उप० प्रपा० ७ खं० ४, ५, ७, श्रु० १ = " संकल्पो वाव मनसो भूयान्, चित्तं वाव संकल्पाद् भूयः । ध्यानं वाव चित्ताद् भूयः, विज्ञानं वाव ध्यानाद् भूयः, विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च रसं चेमं च लोकममुं च विज्ञानेन विजानाति " तथा च = " तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते " इति छान्दो० ॥ अथ च = बृह० उप० अध्या० ४ ब्रा० ४ श्रु० २२ = " पापमकरवम्, इत्यतः कल्याणमकरवम् इत्युभे उ हैवैष एते तरति नैनं कृताऽकृते तपतः " ॥

तुलना = गीतायां आकांक्षापरित्यागेन निःसंकल्पेन च ज्ञानमुत्पद्यते आत्मवन्तं तत्त्वज्ञानिनं कथयन्तीत्युक्तम् । वेदेऽपि च कृतकर्तव्यकर्मणां ईश्वरार्पणम् । ईश्वरार्पककर्मकर्ता तत्त्वज्ञानी भवति, तं पुण्यपापे न तपत इत्युक्तम् " ।

· त्यक्त्वेति = नित्यतृप्तः ब्रह्मानन्दैकरसेन तृप्तिं गतः निराश्रयः निष्कामः । अत एव कर्मफलास्थां कर्मफलासंगं कर्माणि फलानि यच्छति कर्मफलो देहः । तत्र आ समन्तात् संगं कर्तृत्वभोक्तृत्वादिसंगं त्यक्त्वा विहाय कर्मणि शरीररक्षामात्रोचिते कर्मकरणे अभिप्रवृत्तः प्रवृत्तिं प्राप्तः स परेच्छया कुर्वन्नपि स्वेच्छया किञ्चित् कर्म न करोति अर्थात् स कर्मभिः न लिप्यते इति । २० ॥

त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥

( वेदमन्त्रो न लभ्येत )

निराशीरिति = निराशीः निर्गताः आशिषो विषयवत्यः कामनाः यस्मात् स निराशीः, विनष्टसर्वकाम इति भावः । त्यक्तसर्वपरिग्रहः त्यक्ताः कौपीनमात्रातिरिक्ताः सर्वे परिग्रहाः परिजनाः येन स त्यक्तसर्वपरिग्रहः योगनिष्ठातत्परः ब्रह्मवित् स्वयं यतचित्तात्मा यतौ विशुद्धौ मनोदेहौ येन स यतचित्तात्मा, यद्वा यतं स्थापितं चित्तम् आत्मनि एव येन स यतचित्तात्मा शारीरं शरीरस्थितिकारणं प्राणत्राणमात्रप्रयोजनं केवलं कर्म कुर्वन् अपि किल्बिषं पापं नाप्नोति न प्राप्नोति ॥ २१ ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

"अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषम्॥ यजु० १२।७९॥

"कृतस्य कार्य्यऽस्य चेह स्फातिं समावह"। अथ० ३।२४।५॥

अश्वत्थे इति = हे मुमुक्षवः जीवाः! वो युष्माकं अश्वत्थे = न श्वः चिरं तिष्ठतीति अश्वत्थः "स्थातेः क प्रत्ययः" अश्वत्थः चिरम् अस्थायिनि संसारे निषदनं अवस्थानमस्ति। तत्रापि वो युष्माकं पर्णे पर्णशीले पांचभौतिक शरीरे वसतिः वासः स्थितिरिति भावः कृता विहिता। तत्र गोभाजः शरीरस्थितिमात्र प्रयोजनाय इन्द्रियवृत्तिभजनशीलाः इत् एव किल इति निश्चये, असथ भवत। असथ इत्यत्र वचनव्यत्ययः। यत् येन हेतुना पूरुषं परमपूरुषं परमात्मानं सनवथ संसेवध्वम्॥

कृतस्येति = कृतस्य कर्तव्यस्य च कार्यस्य इह संसारे स्फातिं कर्मोन्नतिं समावह सम्यक्तया कुरु॥

तुलना = गीतायां कर्मफलासंगः, निराकांक्षः, ब्रह्मानन्दतृप्तः शरीरयात्रार्थे इन्द्रियद्वारा कर्मप्रवृत्तिकर्ता मुक्तो भवति एतदुक्तम्। वेदेऽपि च "संसारवृक्षस्य पत्रात्मके शरीरे जीवः वसति। तत्र उषित्वा शरीरयात्रार्थे इन्द्रियैः ~~[illegible] प्रवृत्तिकर्ता मुक्तो भवति~~ खादन-पानादि कर्मकरणं भगवद्भजनं च मुक्तिद्वारमस्ति" इत्युक्तम्।

यदृच्छेति = द्वन्द्वातीतः सुखदुःखादिद्वन्द्वेभ्यः विमुक्तः, विमत्सरः, परोत्कृष्टत्व महत्त्व-सहन विरहितः अत एव यदृच्छालाभसन्तुष्टः यदृच्छया अकस्मात् लाभेन सन्तुष्टः सिद्धौ कार्यसिद्धावपि कार्येऽनिष्पन्नेऽपि च समः तुल्यः - कार्यसिद्धौ न हृष्टः, कार्यासिद्धौ न दुःखितः - द्वयोः समः सन् कृत्वापि शरीरयात्रार्थे कर्म कृत्वापि न निबध्यते मुक्तः प्रतिबन्धं न प्राप्नोति॥२२॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥२२॥

"(वाजे वाजेऽवत वाजिनो नो धनेषु) विप्रा अमृता ऋतज्ञाः अस्य मध्वः पिबत। मादयध्वं तृप्ताः यात पथिभिर्देवयानैः॥" यजु० ९।१८॥

विप्रा इति = हे विप्राः! हे विशेषतया ब्रह्मज्ञानलाभेन सन्तुष्टाः! हे अमृताः! स्वस्व-रूपेण नाशरहिताः जीवात्मानः! यद्वा प्राप्तजीवन्मुक्तिसुखाः! अर्थात् हे सुख-दुःखादिद्वन्द्वशून्याः विमत्सराः ज्ञानिनः! हे ऋतज्ञाः! ऋतं सत्यं ब्रह्म जानन्तीति ऋतज्ञाः! हे ब्रह्मज्ञानिनः! यूयम् अस्य मध्वः अस्य मधुमयस्य ब्रह्मणः रसं पिबत = पानं कुरुत। मादयध्वम् = ब्रह्मज्ञानलाभेन हृष्यत। तृप्ताः = ब्रह्मज्ञानेन तृप्ताः सन्तः देवयानैः देवैः चालितैः धर्म्यैः पथिभिः मार्गैः यात गच्छत। अन्यः कोऽपि मार्गः युष्माकं कल्याणकरः नास्ति॥

तुलना = गीतायां यदृच्छालाभसन्तुष्टः, निर्द्वन्द्वः, विमत्सरः, सिद्ध्यसिद्धिसमभाव-स्थापकः संसारबन्धनात् विमुच्यते इत्युक्तम्। वेदेऽपि च ब्रह्मतत्त्वं जानन्, ब्रह्मामृत-रसं पिबन्, सुखदुःखादिद्वन्द्वशून्यः, परितुष्टः, निराकांक्षः सन् ब्रह्मपथे प्रचलेत्॥

गतसंगस्येति = मुक्तस्य सर्वत्रात्मबुद्ध्याऽहं ममाभिनिवेशरहितस्य अहंकारविमुक्तस्येति भाव:। गतसंगस्य = सज्जते पुमान् अनेन कर्मसु इति संग: काम:, स गतो दूरीभूतो यस्य तस्य गतसंगस्य कामनारहितस्य ज्ञानावस्थितचेतस:, यज्ञाय विष्णवे ब्रह्मार्पणबुद्ध्या लोकहिताय वा आचरत: कर्माणि कुर्वत: समग्रं कर्माकर्मादिलक्षणं सर्वं कर्म प्रविलीयते समूलं विनश्यति - न जन्मादिफलाय प्रभवतीत्यर्थ:॥ २३॥

गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतस:।
यज्ञायाचरत: कर्म समग्रं प्रविलीयते॥ २३॥

अपादु शिप्र्यन्धस: सुदक्षस्य प्रहोषिण:। इन्दोरिन्द्रो यवाशिर:। साम० ३४५॥ ऋ० ८।९२।४॥

अपादिति = शिप्री आत्मा "शिप्री सर्पति:" यद्वा शिप्रा: प्राणा: तद्वान्। "अत इनिठनौ" इति मत्वर्थीय: इनिप्रत्यय:। इन्द्र: ज्ञानैश्वर्यवान्, ज्ञानावस्थितचेता:। सुदक्षस्य सृष्ट्युत्पादने कुशलस्य। प्रहोषिण: = प्रकर्षेण सर्वेभ्य: जीवेभ्य: तत्कर्मानुसारं कर्मफलप्रदातु:, इन्दो: प्रकाशमानस्य ज्योति:स्वरूपस्य परमात्मन:, यवाशिर: सायुज्यमुक्तिमयपाकं अन्धस: अन्ध: आनन्दमयान्नं "अन्धस:" अन्ध: इति विभक्तिव्यत्यय:। अपात् = पिबति पालयति वा। उ इत्यवधारणे। यवाशिर: - यु मिश्रणामिश्रणयो:। श्रीङ् पाके। आङ्पूर्वस्य "अपस्पृधेथान् चु:" इत्यादिना धातो: शिरादेश:॥ यथा कठोप० अध्या० १ वल्ली० २ श्रु० २ = "ओं श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीर:। श्रेयो हि धीरोऽभिप्रेयसो वृणीते। प्रेयो मन्दो योगक्षेमाद् वृणीते"॥

तुलना = गीतायां कर्मफलासंग:, ज्ञानस्थिति:, यज्ञादिकर्मविधानम्। सुखदु:खादिद्वन्द्वशून्यता, कर्मणां विनाशका: एते सन्तीत्युक्तम्। वेदेऽपि च परमात्मप्रदत्तज्ञानरसपानं सांसारिककर्मफलविनाशहेतुरित्युक्तम्॥

ब्रह्मार्पणमिति = ब्रह्मवित् मुमुक्षु: अर्पणं हवि: अर्प्यतेऽनेनेति अर्पणम् "चमसस्रुक्" स्रुवादिकं सर्वं ब्रह्म एव पश्यति। ब्रह्मणा ब्रह्मरूपेण होमकर्त्रा ब्रह्माग्नौ ब्रह्मरूपे अग्नौ हुतं हवनक्रिया तदपि ब्रह्मैव पश्यति। ब्रह्मकर्मसमाधिना सर्वस्य ब्रह्ममात्रत्वदर्शनं यत् तद् ब्रह्मकर्म तस्मिन् ब्रह्मकर्मणि समाधि: चित्तस्य स्थापनं यस्य तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यं प्राप्तव्यम्॥ २४॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥ २४॥

ब्रह्म होता ब्रह्म यज्ञा: ब्रह्मणा स्वरवो मिता:। अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हवि:॥१॥ ब्रह्म स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्धिता। ब्रह्म यज्ञस्य तत्त्वं च ऋत्विजो ये हविष्कृत: शमिताय स्वाहा॥२॥ अथ० १९।४२।१,२॥

ब्रह्म होतेति = ब्रह्म जगदुत्पादनकारणं तत्त्वं होता हवनकर्ता एव कृत्स्नकार्यकारणप्रपञ्चस्य ब्रह्मात्मकत्वात् "ब्रह्मैवेदं सर्वम्" मुंड० उप० २।२।११

"तत् सृष्ट्वा तदेवानुप्राविशत्" इति = तै॰ आ॰ ८।६॥ इति श्रुतेः ब्रह्मव्यतिरिक्तस्य कस्यचिदभावात्। ब्रह्मणो होत्रादिरूपत्वम्। यज्ञाः ज्योतिष्टोमादयो यज्ञाः अपि ब्रह्मैव। "तस्मात् ऋचः सामयजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च" इति मुण्ड॰ २।१।६॥ श्रुतेः ब्रह्मैव यज्ञाः इत्युच्यन्ते। एवं ब्रह्मणैव स्वरवो मिताः = स्वराणां क्रुष्टादीनां सप्तानां उदात्तादीनां च वा मिताः यज्ञानुप्रविष्टत्वेन उद्गातृत्वं प्रापिताः। उद्गातृप्रभृतयोऽपि ब्रह्मैव। अध्वर्युः अध्वरमिच्छतीति अध्वर्युः यजुर्वेदज्ञः ऋत्विगपि ब्रह्मण एव जातः उत्पन्नः। प्रागुक्तरीत्या ब्रह्मणः सकाशात् उत्पत्तिरवगन्तव्या। तथा हविः यज्ञसाधनभूतं चरुपुरोडाशाज्यादिलक्षणं ब्रह्मणि अन्तर्हितम् इन्द्राद्युद्देशेन दत्तमपि ब्रह्मणि एवावतिष्ठते॥ घृतवतीः = घृतवत्यो होमार्थेन घृतेन पूर्णाः स्रुचः = होमसाधनभूताः चमसस्रुक्स्रुवादयोऽपि ब्रह्म। ब्रह्मणा एव वेदिः = हविरासादनसाधनाः ब्राह्मणाः एव उद्धृताः उद्धनन खननिर्माणैः सम्पादिता। यज्ञस्य ज्योतिष्टोमात्मकस्य यागस्य तत्त्वं पारमार्थिकं रूपं ब्रह्मैव – तत्रैव परिकल्पितत्वात् कृत्स्नप्रपञ्चस्य। यथा मृदुपादानभूताः शरावादयो मृदेव, एवं ब्रह्मोपादानभूताः तत्त्वतो ब्रह्मैवेत्यभिप्रायः। ये च हविष्कृतः हविष्कर्तारः ऋत्विजः अपि, शमिताय होत्रात्मना शं सुखम् इताय प्राप्ताय ब्रह्मणे यद्वा संमिताय इति पाठः। उक्तप्रकारेण होत्रात्मना संमिताय अभेदमापन्नाय ब्रह्मणे इत्यर्थः। स्वाहा स्वाहुतम् अस्तु॥२॥ बृह॰ उप॰ अ॰ ४ ब्रा॰ ४ श्रु॰ ५ = स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयश्च श्रोत्रमयः"। अथ च मुण्डक उप॰ २।२।४ = "ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्॥

तुलना = गीतायां यज्ञाङ्गाः यज्ञकर्माणि ब्रह्मैवेत्युक्तम्। वेदेऽपि च समग्रं प्रपञ्चमात्रं ब्रह्मैवेत्युक्तम्।

दैवमिति = देवान् उद्दिश्य प्रवृत्तो यज्ञः दैवः, तं दैवं यज्ञं श्रौतं वा स्मार्तं वा, अपरे मुक्तिकामा योगिनः कर्मयोगिनः गृहस्थाः पर्युपासते अनुतिष्ठन्ति। अपरे गृहस्थेभ्यो भिन्नाः संन्यासिनः ब्रह्माग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म" सच्चिदानन्दस्वरूपं ब्रह्म एव अग्निः अविद्यादिनाशकत्वात् अग्निरुच्यते। अतः तस्मिन् ब्रह्माग्नौ यज्ञं पामरैः विषयोपभोगैरिज्यते इति यज्ञः आत्मा सोपाधिकः तं यज्ञेनैव आत्मना निर्विशेषस्वरूपेण एव जुह्वति, ब्रह्म अभिन्नत्वेन अनुभवन्ति इत्यर्थः।

दैवमेवापरे यज्ञं योगिनः पर्युपासते।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्। शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम। निरु॰ १८।२२॥

हविर्भिरिति = एके कर्मयोगिनः पुरुषाः हविर्भिः चरुपुरोडाशादिहविर्भिः जुह्वतीति शेषः। एके पुरुषाः सवनेषु यज्ञेषु सोमान् अमृतवल्लीरसं सुन्वन्तः निष्पीडयन्तः शचीः इन्द्रा-

दिदेवानां शक्ती: स्तुत्वा तत्र देवान् मदन: हर्षयन्त: इत: मनुष्यलोकात् स्व: स्वर्गलोकं सवन्ते प्राप्नुवन्ति । केचित् पुरुषाश्च ज्ञानयोगिन: दक्षिणाभि: निष्कामदानेन संसारार्णवात् पारं गच्छन्ति । हे परमात्मन् ! जिह्मायन्त्य: कुटिलाचरणं कुर्वन्त्य: वयं नरकं नीचयो नीर्वा न पताम पतिता: न भवेम ।

तुलना = गीतायां कर्मयोगिन: ज्ञानयोगिन: यजन्ति इत्युक्तम् । वेदेऽपि न हविर्द्वारा यज्ञकर्तार: योगिनश्च देवान् यजन्ते, निष्काम दानकर्तार: ज्ञानयोगिन: संसारार्णव-पारं गच्छन्ति, अन्यथा नरकं पतन्तीत्युक्तम् ।

श्रोत्रादीनीति = अन्ये नैष्ठिक ब्रह्मचारिण: इन्द्रियाणि श्रोत्रादीनि वागादीनि च संयमाग्निषु इन्द्रियाणां तत्तद्विषयनिग्रहरूपाग्नौ जुह्वति, इन्द्रियनिग्रहरूपं यज्ञं कुर्वन्तीत्यर्थ: । अन्ये गृहस्था: मुमुक्षव: स्वस्ववर्णधर्मनिष्ठा: शब्दादि विषयान् यथार्हसमये इन्द्रियरूपाग्नौ जुह्वति, विषयानुभवनियम एव तेषां यज्ञ इत्यर्थ: ॥ २६ ॥

सर्वाणीति = अन्ये च ध्यानिन: पुरुषा: सर्वाणि सकलानि इन्द्रियकर्माणि प्राणकर्माणि च उच्छ्वासनिश्वासादीनि कर्माणि ज्ञानदीपिते ज्ञानेन प्रकाशिते आत्मसंयमयोगाग्नौ जुह्वति । प्राणेन्द्रियव्यापारं निरुध्य शुद्धात्मानमेव अनुभवन्ति ॥ २७ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

घृतस्य जूती: समना सदेवा: संवत्सरं हविषा वर्धयन्ती । श्रोत्रं चक्षु: प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चस: ॥ अथ० १९ । ५८ । १ ॥

यद्वा = अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिर: । यज्ञेषु य उ चायव: ॥ ऋ० ३।२४।४

घृतस्येति = घृतस्य दीप्तस्य परमात्मन: "घृ क्षरणदीप्त्यो:", जूती: ज्ञानं "सर्वेषां गत्यर्थानां ज्ञानार्थत्वात् जूतिशब्देन सर्वत्र प्रसृतं ज्ञानमुच्यते । यथा च "मतिर्मनीषा जूति: स्मृति: संकल्प: क्रतुरसु: कामो वश: इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति" ऐत० आ० २।६।१ ॥ अर्थात् घृतस्य जूति: परमात्मन: स्वरूपविषयं ज्ञानं समना: समानमनस्का: सर्वेषां प्राणिनां मनांसि यस्मिन् प्रज्ञाने समाश्रितानि । सदेवा = देवा: इन्द्रियाणि सर्वप्राणिसम्बन्धीनि तत्सहिता परमात्मविषया बुद्धि: संवत्सरं = संवसन्ति अत्र भूतानि इति संवत्सर: परमात्मा तं हविषा शब्दस्पर्शादिरूपप्रपञ्चेन हविषा वर्धयन्ती पुष्णन्ती भवति । वस्तुकृतपरिच्छेदपरिहार एव परमात्मन: पोष इत्यर्थ: । न: ज्ञानयज्ञप्रवर्तकानां अस्माकं श्रोत्रं चक्षु: प्राण: एतदुपलक्षणं ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च प्राण: शरीरधारको वायु:, अच्छिन्ना: = छेद: विनाश: तद्रहिता: परमात्मलीनत्वेन विनश्वरा मा भवेयुरिति । वयञ्च ब्रह्मज्ञानसंलग्ना: आयुष: जीवनस्य वर्चसस्तेजस: अच्छिन्ना: विनाशरहिता: भूयास्म । ब्रह्मज्ञानरतिं विना आयुर्व्यर्थमेव, अतोऽस्माकमायु: व्यर्थतां मा गच्छेत् ॥

IV



अग्ने इति = हे अग्ने! विश्वेभिः सर्वैः देवेभिः अग्निभिः इन्द्रियाग्निभिः त्वं गिरः वाणीः महय = सुपूजय। तथा चायवः यज्ञे पूजकाः ये सन्ति तानपि उन्नय॥ बृह० उप० अध्या० ४ ब्रा० ५ श्रु० ६ = "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्"॥ तथा च = बृह० उप० अ० ४ ब्रा० ५ श्रु० ७ = "ब्रह्म तं परादधाद्यो ऽन्यत्रात्मनो ब्रह्म वेद। देवास्तं परादुर्यो ऽन्यत्रात्मनो देवान् वेद"॥ बृह० ४।५।८ = "यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयात् ग्रहणाय दुन्दुभेः ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः॥

तुलना = गीतायां इन्द्रिय संयमः शब्दादि विषयाणामिन्द्रियेषु लयः इन्द्रियप्राणान् कर्माणि च ज्ञानाग्निलयः" इत्युक्तम्। वेदेऽपि च मनुष्यः ब्रह्मप्राप्ति-कारकं ज्ञानं वर्धयन् शरीरयात्रार्थं प्राणश्रोत्रादयः ब्रह्मध्याने सहायतां विदधति = इत्युक्तम्॥

द्रव्य यज्ञा इति = तथा अपरे केचन मुमुक्षवः जीवाः द्रव्ययज्ञाः सत्पात्रेषु सद्बुद्ध्या श्रद्धया च द्रव्यदानमस्माकं यज्ञ इति ये कुर्वन्ति ते द्रव्य यज्ञाः। केचन तपोयज्ञाः - ये चान्द्रायणोपवासादि रूपं यज्ञं कुर्वन्ति ते तपोयज्ञाः। तथाऽपरे आसन-प्राणायामादि योगाङ्गैः युक्ताः चित्तनिरोध रूपं यज्ञं कुर्वन्ति ते योगयज्ञाः सन्ति। तथा अपरे केचन स्वाध्याय ज्ञानयज्ञाः = द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यतेऽतः स्वाध्याययज्ञाः यतयः स्वस्वनियमे यत्नशीलाः संशितव्रताः = तत्र तत्र स्वनिष्ठायां संशितं अतितीक्ष्णं व्रतं नियमो येषां ते संशितव्रताः बहवः सन्तीति। २८।

अपाने इति = अपरे केचन मुमुक्षवः अपाने अपानवायौ प्राणं निश्वासहेतुं प्राणवायुं जुह्वति हवनं कुर्वन्ति। बहिस्तः प्राणवायुमाकृष्य अपानवायौ योजयन्ति अयं पूरकाख्यः प्राणायामः। तथा अपरे मुमुक्षवः प्राणे प्राणवायौ अपानं अपान-वायुं जुह्वति - रेचकप्राणायामं कुर्वन्तीत्यर्थः। प्राणापान गतीः रुद्ध्वा = वायोर्बहिर्गमनं प्राणः, वायोरन्तः प्रवेशः अपानम्, प्राणापानयोः गतीः मुखनासिकाभ्यां वायोर्निर्गमनप्रवेशौ त्रिकुटे निरुध्य प्राणायामं = कुंभक प्राणायामं कृत्वा प्राणायामपरायणाः प्राणायामकरणे तत्पराः भवन्ति॥२९॥

द्रव्य यज्ञास्तपो यज्ञाः योगयज्ञास्तथापरे।
स्वाध्याय ज्ञानयज्ञाश्च यतयः संशितव्रताः॥२८॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगतीः रुद्ध्वा प्राणायामपरायणाः॥२९॥

उपास्मान् प्राणो ह्वयतामुप वयं प्राणं हवामहे। वर्चो जग्राह पृथिव्यन्तरिक्षं वर्चः सोमो बृहस्पतिर्विधत्ता॥ अथ० १९। ५८। २॥

उपेति = प्राणः शरीरधारकः पंचवृत्तिकः वायुः अस्मान् मानसयज्ञप्रवर्तकान् उपह्वयताम् = अनुजानातु। वयं पूरककुंभकरेचकाख्य प्राणायाम परायणाः -

मुमुक्षवः प्राणं प्राणापानादि पंचविधं वायुम् उपह्वयामहे। स्वस्वशरीरे चिरकालावस्थानाय आकारयामस् प्रार्थयामहे इति भावः। पृथिवी पार्थिवः देहः अन्तरिक्षं सर्वविषयग्राहकं मनः च वर्चः प्राणायामशक्त्या स्वस्वधारकशक्तिमत्तेजः ओजो वा अस्मभ्यं दातुं जग्राह स्वीचकार। तथा च सोमः अन्तःकरणं बृहस्पतिः बुद्धिः विधर्ता विशेषेण धर्ता अहंकारः अस्मभ्यं दातुं वर्चः प्राणायामकरणेनैव तेजः अस्मभ्यं दातुं जग्राह स्वीचकार इति॥

तुलना = गीतायां बहुधा यज्ञव्रतादयः उक्ताः प्राणायामी व्रतीत्युच्यते। वेदेऽपि च प्राणः अपाने, अपानः प्राणे च समाविशतु, प्राणायामे प्रवृत्तिकरणेन शुभगतिं लभते॥

अपरे इति = अपरे केचित् यतयः नियताहाराः अतिस्वल्पाहाराः प्राणान् प्राणान्तर्वायून् प्राणेषु वायुभेदेषु जुह्वति। बस्तिधौत्यादिक्रियया अन्तःशोधनं कुर्वन्ति इत्यर्थः। सर्वेऽपि एते यज्ञविदः दैवादियज्ञानुष्ठातारः यज्ञक्षपितकल्मषाः यज्ञैः यज्ञानुष्ठानैः क्षपिताः नाशिताः कल्मषाः पापानि येषां ते यज्ञक्षपितकल्मषाः भवन्ति॥

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः॥३०॥

मुनयो वातरशनाः पिशंगा वसते मला। वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत। ऋ० १०।१३६।२॥

यद्वा = युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि। ऋग्वेद
अथ० २०।४७।१०। अथ० २०।६९।९॥ यजु० २३।५॥

मुनयः इति = वातरशनाः वातः वायुरेव रशना जिह्वा रसग्रहणशक्तिः येषां ते वातरशनाः वायुमात्रभक्षणशीलाः मुनयः अतीन्द्रियार्थदर्शिनः पिशंगा पिशंगानि कपिलवर्णानि मला मलिनानि वल्कलरूपाणि वासांसि वसते आच्छादयन्ति धारयन्ति। ते यत् यदा देवासः अल्पाहारादितपो महिम्ना दीप्यमानाः सन्तः अविक्षत ब्रह्मस्वरूपं प्राविशन्। तदा ते वातस्य वायोः ध्राजिं गतिं अनुयन्ति अनुगच्छन्ति अर्थात् प्राणोपासनया प्राणरूपिणः वायुभावं प्रपन्नाः वायुवत्सदागतयः भवन्तीत्यर्थः॥

युञ्जन्तीति = परितस्थुषः परितोऽवस्थितस्य लोकत्रयवर्तिनः यतेः। ब्रध्नं बध्नाति सर्वं जगत् इति ब्रध्नः "महो ब्रध्नः" इति पंचविंशति संख्याकेषु महन्नामसु पाठः। ब्रध्नं महान्तं अरुषं = रुष रिष हिंसार्थाः। रोषन्तीति रुषाः हिंसकाः। न सन्ति रुषाः यस्य असौ अरुषः तम् अरुषं अहिंसकम्। चरन्तम् = चरतीति चरन् वायुः "वायुर्वै चरन्" तै० ब्रा० ३।९।४।२॥ वायुं युञ्जन्ति स्वकीये शरीरे प्राणायामेन संबद्धं कुर्वन्ति। ते दिवि द्युस्थाने परब्रह्मलोके रोचना रोचमानाः नक्षत्रवत् रोचन्ते प्रकाशन्ते"॥

तुलना = गीतायां मिताहाराः पुरुषाः प्राणायामेन मुच्यन्ते। तपोव्रतादिविधा-

नेन पापेन क्षीणीभवन्ति अर्थात् प्राणायामाभ्यासतः सर्वपापविमुक्ताः सन्तः मुक्तिधाम्नि विराजन्ते॥

यज्ञशिष्टेति = यज्ञक्षपितकल्मषाः यतयः यज्ञशिष्टामृतभुजः यज्ञस्यानुष्ठानेन शिष्टः यज्ञशेषः यः अमृतः तं भुञ्जन्तीति यज्ञशिष्टामृतभुक् ते यज्ञशिष्टामृतभुजः सनातनं सदातनं नित्यं ब्रह्म यान्ति प्राप्नुवन्ति। हे कुरुसत्तम! हे कुरुश्रेष्ठ! अर्जुन! अयज्ञस्य देवादियज्ञेषु एकोऽपि यज्ञः न विद्यते यस्य स अयज्ञः तस्य अयज्ञस्य यज्ञकर्तृत्वरहितस्य अयं लोकः लोक्यते इति लोकः देहः नास्ति। तस्य एतन्मानवदेहग्रहणमपि व्यर्थम्। इतोऽन्यः लोकः शिवब्रह्मादिलोकः कुतः कस्मात् हेतोर्भवितुमर्हति॥३१॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥३१॥

पृथक् प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा। न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः। ऋ० १०।४४।६॥ अथ० २०।९४।६ निरु० ५।२५॥

यद्वा = अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः। भसन्नु ष प्र पूर्व्य इषं वुरीतावसे॥ ऋ० ६।१४।१॥

पूर्वार्धश्लोकार्थे मंत्रः = परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः। प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः॥ ऋ० १।३३।५॥

पृथगिति = हे जीवात्मन्! ते याज्ञिकाः जनाः पृथक् प्रायन् देवलोकान् पृथक् गच्छन्ति। ये प्रथमाः पूर्वे याज्ञिकाः जनाः देवहूतयः देवानाम् आह्वातारः दुष्टराः दुस्तराः अन्यैः दुस्तराणि श्रवस्यानि श्रवणीयानि यशांसि अकृण्वत अकुर्वत। अथ च ये तद्विमुखाः जनाः यज्ञियां यज्ञात्मिकां नावम् आरुहम् आरोढुं न शेकुः न शक्नुवन्ति ते केपयः कुत्सितपूयकर्माणः पापकर्माणो जनाः ईर्मा एव यज्ञेनैव न्यविशन्त नीचैराविशन्त- अधोगतिं प्राप्ता इत्यर्थः॥ तथा च यास्कः = "पृथक् प्रायन् पृथक् प्रयते प्रथमा देवहूतयो देवानां आह्वयन्ता अकुर्वत श्रवणीयानि दुरनुकराणि अन्यैः ये शक्नुवन्। यज्ञियां नावमारोढुं ईर्मैव ते न्यविशन्ते हैव ते न्यविशन्त ऋणेनैव ते न्यविशन्त अस्मिन्नेव लोके इति॥

यद्वा = अग्ना इति = यः मुमुक्षुः मर्त्यः मनुष्यः अग्ना अग्नौ अग्निविषयं दुवः परिचरणं हविः प्रक्षेपणं धियं कर्मोपासनाज्ञानं वा दैवयज्ञादिलक्षणं धीतिभिः स्तुतिभिः सार्धं जुजोष सेवते आचरति, स मर्त्यः पूर्व्यः आयुषाऽल्पीयानपि यद्वा सर्वेभ्यः पूर्वेभ्यः मुख्यः सन् नु क्षिप्रं प्रभसत् प्रभासते प्रकृष्टप्रकाशवान् भवति। जीवन्मुक्तावस्थायामपि अवसे स्वदेहरक्षायै इषमन्नं वुरीत = वृणीते संभजते शत्रुसकाशादपि लभते इत्यर्थः। पूर्वार्धश्लोकसंमतोऽयं मंत्रः॥ अपरार्धे च =

पराञ्चि इति = हे इन्द्र! हे जीवात्मन्! अयज्वानः यज्ञस्य अकर्तारः स्वयं याग कर्तृत्वरहिताः प्रत्युत अपरैः यज्वभिः यागानुष्ठातृभिः सह स्पर्धमानाः, स्पर्धां कुर्वन्तः सन्तः शीर्षा स्वकीयानि शिरांसि पराञ्चित् पराङ्मुखानि एव कृत्वा ववृजुः भजन्ति गच्छन्ति। हे उग्र! हे शौर्यवन्! परमात्मन्! हे हरिवः! हे पापहारिन्! जगदीश्वर! हे स्थातः! हे जगद् व्यापक! यत् यदा दिवः-अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः अर्थात् भूर्भुवः स्वर्लोकत्रयात् अव्रतान् यज्ञव्रतपालन रहितान् अधमः त्वं निःसार्य दूरीकुरु इत्यर्थः॥

अपरार्ध श्लोक संमतोऽयं मंत्रः।

तुलना = गीतायां यज्ञादानव्रतादिकर्तारः परमात्म चरण कमलेषु प्राप्नुवन्ति वेदेऽपि च यज्ञदानव्रतादिकर्तारः पुरुषाः सुखिनः मुख्याः शुद्धबुद्धयः भवन्ति। अयाज्ञिकाश्च याज्ञिकैः सह स्पर्धन्ते, नीचयोनौ च जन्म लभन्ते इत्युक्तम्॥

एवमिति = एवम् इत्थं बहुविधाः दैवयज्ञादिबहु प्रकाराः यज्ञाः ब्रह्मणो वेदस्य मुखे मुखद्वारा विततः विस्तृताः कथिता इत्यर्थः। तान् सर्वान् यज्ञान् कर्मजान् कर्मभ्यो जाताः कर्मजाः वागादीन्द्रियसंभवाः तान् कर्मजान् कर्माणि एव तान् सर्वान् विद्धि जानीहि। एवम् इत्थं ज्ञात्वा ज्ञानं प्राप्य संसारात् विमोक्ष्यसे - विमुक्तो भविष्यसि। ३२।

एवं बहुविधा यज्ञाः वितता ब्रह्मणो मुखे।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

ऐन्द्राग्नं पावमानं महानाम्नीर्महाव्रतम्। उच्छिष्टे यज्ञस्याङ्गान्यन्तर्गर्भ इव मातरि॥ अथ० ११।७।६ इतः आरभ्य १०-११ यावत् सर्वे मंत्राः यज्ञप्रतिपादकाः सन्ति

ऐन्द्राग्नमिति = इन्द्राग्न्योः स्तावकं इन्द्राग्ना नाम यज्ञः "इन्द्राग्नी आगतं सुतम्" इति तृचे ३।१२।१। गीयमानं साम, ऐन्द्राग्नं प्रातःसवने प्रयुज्यमानम्। पावमानं त्रिषु अपि सवनेषु सवनादौ गीयमानं पवमानसोमदेवताकं साम। महानाम्नीः महानाम्न्यः = "विदा मघवन् विदा गातुं अनुशंसिषो दिशः" ऐ० आ० ४।१॥ इत्याम्नाताः ऋचः। तत्र गीयमानं शाक्वरं साम अपि महानाम्नीशब्देन उच्यते। ताश्च द्वादशाह मध्यवर्तिनि दशरात्रे पंचमेऽहनि पृष्ठसामत्वेन विनियुक्ताः महाव्रतम् राजन गायत्र बृहद्रथन्तर भद्राख्यैः पंचभिः सामभिः क्रियमाणं स्तोत्रम्। एकाहोऽपि सोमयागः तद्वान् महाव्रतम् इत्याख्यायते। एवम् ऐन्द्राग्नादीनि यज्ञस्याङ्गानि उच्छिष्टे ब्रह्मणि वेदे वा "अथात आदेशो नेति नेति" बृह० २।३।६॥ "नेह नानास्ति किंचन" बृह० ४।४।१९॥ इत्येवं दृश्यप्रपंच निषेधात् ऊर्ध्वं तदवधित्वेन शिष्यते अवशिष्यते इत्युच्छिष्टं बाधावधित्वेन शिष्यमाणं परं ब्रह्म अस्मिन् उच्छिष्टे ब्रह्मणि वेदे वा अन्तःमध्ये मातरि गर्भ इव वर्तन्ते। यथा मातुरुदरमध्ये आश्रितः गर्भः पुष्यन् अभिवर्धते एवम् एतान्यपि कारणभूते ब्रह्मणि आश्रितत्वेन भाव्यमानानि अंगिनं यज्ञं फलसमृद्धं कुर्वन्तीत्यर्थः।

अपरे मंत्राः = राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः। अर्काश्वमेधावुच्छिष्टे जीव बर्हिर्मदिन्तम ॥७॥ अग्न्याधेयमथो दीक्षा कामप्रश्छन्दसा सह। उत्सन्नाः यज्ञाः सत्राण्युच्छिष्टेऽधि समाहिताः।८। अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः। दक्षिणेष्टं पूर्तं चोच्छिष्टेऽधि समाहिताः।९। एकरात्रो द्विरात्रः सद्यः क्रीः प्रक्रीरुक्थ्यः। ओतं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया।१०। चतूरात्रः पञ्चरात्रः षड्रात्रश्चोभयः सह। षोडशी सप्तरात्रश्चोच्छिष्टाज्जज्ञिरे सर्वे ये यज्ञा अमृते हिताः।११।

तुलना = गीतायां बहुधा यज्ञाः उपदिष्टाः ते कर्मजा इत्युक्तम्, येषामाचरणेन मनुष्यः संसारात् मुच्यते। वेदेऽपि च बहुधा यज्ञाः उक्ताः ते सर्वे वेदेभ्यः उत्पन्नाः सन्ति ॥

श्रेयान् इति = हे परंतप! हे अर्जुन! द्रव्यमंत्रतंत्रादिक्रियासमसाध्यात् यज्ञात् ज्ञानयज्ञः श्रेयान् श्रेष्ठः अस्ति। हे पार्थ! हे अर्जुन! सर्वं श्रौतस्मार्तलौकिकं कर्म अखिलं, खिलः शेषः स न विद्यते यत्र तदखिलं निःशेषं ज्ञाने ज्ञानयज्ञे परिसमाप्यते समापितं भवति। ज्ञाने प्राप्ते शतशो जन्मार्जितं गामि कर्म अखिलं ज्ञानशक्त्या सूर्यप्रभया तम इव निर्मूल्यते इत्यर्थः॥३३॥

श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परंतप!
सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते ॥३३॥

"यत् पुरुषेण हविषा यज्ञं देवा अतन्वत। अस्ति नु तस्मादोजीयो यद् विहव्येनेजिरे ॥ अथ० ७।५।४॥

यदिति = देवाः दीव्यन्तीति देवाः मुमुक्षवः यजमानाः पुरुषेण आत्मयज्ञेन हविषा यज्ञं होमसाधनमात्रं हवनीयं यद्वा यज्ञस्वरूपं प्रजापतिं अतन्वत विस्तारितवन्तः। एवं द्रव्यदैवादियज्ञात् ओजीयः अतिशयेन ओजस्वि सारवत् नु निश्चयेन अस्ति विद्यते। विहव्येन = हव्यं होतव्यं हविः विविधं द्रव्यमंत्रतंत्रादिना ईजिरे इष्टवन्तः स्वात्मानं परमात्माभेदेन साक्षात् कृतवन्तः इति यत् तद् ओजीयः। द्रव्ययज्ञ ज्ञानयज्ञयोः सार्वात्म्यलक्षणफलसाम्येऽपि पुरुषमेधस्वरूपद्रव्यादियज्ञफलस्य कर्मजन्यत्वेन विनाशित्वम्। ज्ञानयज्ञफलं तु न तथा, तस्मात् स्वर्गलोकब्रह्मादिलोकफलप्रापकात् पुरुषमेधस्वरूपद्रव्याद्यियज्ञफलस्य यज्ञात् अपि सर्वात्मकब्रह्मस्वरूपावाप्तिफलप्राप्तिको ज्ञानयज्ञः श्रेयान्। अयमेव भावोऽनेन मंत्रेणाभिधीयते॥

तुलना = गीतायां द्रव्ययज्ञात् ज्ञानयज्ञः श्रेयान् इत्युक्तम्। वेदेऽपि च पौर्णमासादिका बहुविधा यज्ञा उक्ताः परं सर्वेभ्यः ज्ञानयज्ञः उत्तमः इत्युक्तम्"

तद्विद्धीति = द्रव्ययज्ञाद्युत्कृष्टतरं मोक्षफलप्रदं तत् ज्ञानं गुरुभ्यः इति शेषः विद्धि जानीहि। ज्ञानिनः ज्ञानवन्तः तत्त्वदर्शिनः ब्रह्मजीवाभेदतत्त्वस्य द्रष्टारः ते गुरवः शमादिगुणवन्तः ते तुभ्यं प्रणिपातेन दण्डवत् साष्टांगनमस्कारेण, सेवया श्रद्धाभक्तियुतया शुश्रूषया, परिप्रश्नेन विनयपूर्वकप्रश्नेन ज्ञानं ब्रह्मजीवाभेदविवेकात्मकं तत्त्वम् उपदेक्ष्यन्ति दयया-

उपदेशं करिष्यन्ति इति "३४"

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः।३४"

"ब्राह्मणेभ्यो ऋषभं दत्वा वरीयः कृणुते मनः। पुष्टिं सो अघ्न्यानां स्वे गोष्ठेव पश्यते॥ अथ० ९।४।२९॥

ब्राह्मणेभ्य इति = तत्त्वदर्शी मुमुक्षुः ब्राह्मणेभ्यः ब्रह्मज्ञानविद्भ्यः गुरुभ्यः ऋषभं सर्वश्रेष्ठं विषयादिसत्कारं मनोयोगं दत्वा मनः स्वकीयं चित्तं वरीयः सर्वश्रेष्ठं शुद्धतरं ब्रह्मजीवतत्त्वतादात्म्यसंबन्धकारकं कृणुते विधत्ते। स गुरुभ्यः सज्ज्ञानोपदेशं श्रुत्वा अघ्न्यानां अहन्तव्यानां ब्रह्मप्राप्तिकर्तॄणां चेतसः वृत्तीनां पुष्टिं वृद्धिपूर्वकं पोषणं स्वे गोष्ठे स्वकीये गोष्ठे = गाव इन्द्रियाणि तद्वृत्तयश्च तिष्ठन्ति अत्र इति गोष्ठं मनः। "घञर्थे क विधानम् - षत्वञ्च"। तस्मिन् गोष्ठे मनसि अवपश्यते निरीक्षते॥

तुलना = गीतायां गुरुप्रणामेन सेवया प्रश्नैः च उपदेशः ग्रहीतव्यः इत्युक्तम्। वेदेऽपि च उपदेशसमये ब्रह्मजिज्ञासवः दत्तचित्ताः भवेयुः समाहितचित्तस्य वृत्तयः स्थिरीभवन्ति इत्युक्तम्॥

यज्ज्ञात्वेति = हे पाण्डव! हे अर्जुन! गुरुभिः उपदिष्टं यत् ज्ञानं ज्ञात्वा संप्राप्य एवम् इदानीमिव पुनः भूयः मोहम् "एते मम भ्रातरः पितृव्याः" "अहमेषां भ्रातृजः" इत्यादि किंकर्तव्यविमूढत्वं न यास्यसि न प्राप्स्यसि। येन प्राप्ततत्त्वविवेकेन भूतानि समग्रप्राणिनः अशेषेण संपूर्णरीत्या आत्मनि स्वे आत्मनि द्रक्ष्यसि अवलोकयिष्यसि। तथा च अथो अनन्तरं मयि ब्रह्मस्वरूपे मम देहे द्रक्ष्यसि।३५"

अपि चेदिति = सर्वेभ्यः त्रिलोकस्थेभ्यः पापेभ्यः महापातकोपपातकादिपापकर्तृभ्यः अपि चेत् यदि त्वं पापकृत्तमः सर्वेभ्योऽतिशयपापकर्ताऽसि। एवंविधे त्वयि सत्यपि सर्वं वृजिनं पापं ज्ञानप्लवेन एव पापार्णवं ज्ञानपोतेन संतरिष्यसि = पापसमुद्रतरणं प्राप्स्यसि "३६"

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।

येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥३५"

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।

सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि॥३६॥

" त्वं पुरूण्याभरा स्वश्व्या येभिर्मंसै निवचनानि शंसन्। सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य। ऋ० १०।११३।१०॥

त्वमिति = निवचनानि नितरां गुरूपदिष्टानि वाक्यानि शंसन् स्तुवन् त्वं स्वश्व्या स्वश्व्यानि ब्रह्मजीवाभेदतत्त्वविषयान् सम्यक्तया प्रवृत्तिशीलानि पुरूणि बहूनि ज्ञानानि गुरुसकाशात् आभर आहर गृहाण। येभिः यैः ज्ञानैः युक्तमिति शेषः, त्वाम् अहं मंसै = पूजायोग्यं मन्ये। मन्यतिः स्तुतिकर्मा।

सुगेभिः सुष्ठु गन्तव्यैः शानैः विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि नः मदुक्तं वचनं उर्विया उरुत्वेन बहुमानेन सु सुष्ठु विदो विद+उ= जानीहि एव।
तुलना= गीतायां गुरुज्ञानमहत्त्वम्। गुरुज्ञानेन भगवद्दर्शनम्। तेन ज्ञानेन पापतरस्यापि मुक्तिर्भवति-इत्युक्तम्। वेदेऽपि च गुरोः ज्ञानं लब्ध्वा मनुष्यः श्रेष्ठो भवति सर्वपापेभ्यः पारं याति-इत्युक्तम्॥

यथेति= हे अर्जुन! यथा येन प्रकारेण समिद्धः शुष्ककाष्ठप्रज्वलनैः प्रवृद्धः अग्निः एधांसि काष्ठानि क्षणेन भस्मसात् कुरुते भस्ममयं विधत्ते तथा तेनैव प्रकारेण ज्ञानाग्निः निरन्तरध्यानादिभिः प्रवृद्धः ज्ञानाग्निः सर्वकर्माणि भस्मसात् करोति क्षणादेव भस्ममयं करोति॥३७॥

यथैधांसि समिद्धोऽग्निः भस्मसात् कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा॥३७॥

"प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः। ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥" ऋ० १०।७९।३॥
नूतन मंत्रः= "हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्।
बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौदुच्च विद्वाँ अगायत्॥ अथ० २०।९१।३॥
प्रमातुरिति= यथा अयमग्निः मातुः पृथिव्याः भूमिमात्रायाः उर्वीः बह्वीः वीरुधः लताः काष्ठानीति यावत् इच्छन् भस्मसात्कर्तुकामः इति तथा प्रतरं प्रकृष्टतरं गुह्यं गोप्यं तेषामेधसां मूलमपि इच्छन् भस्मसात्कर्तुकामः प्रसर्पत् प्रसर्पति। कुमारो न कुमार इव यथा बालब्रह्मचारी व्रतज्ञानाग्निना सर्वकर्माणि दग्धुकामः गुरुं प्रसर्पत् प्रसर्पति। तथा च ससं न पक्वम्= पक्वं ससम् अन्नमिव शुचन्तं दीप्यमानं रिपः पार्थिवदेहस्य उपस्थे उत्संगे रिरिह्वांसं स्वादनम् अन्तः मनसि अविदत् विन्दति लभते इति।
हंसैरिति= बृहस्पतिः ज्ञानी जनः सखिभिः मित्रस्वरूपैः समानख्यानैः हंसैरिव परमहंसैरिव वावदद्भिः ज्ञानसंलापैः अश्ममयानि पाषाणवत्कठोराणि नहना नहनानि कर्मबन्धनानि व्यस्यन् विशेषरूपेण दूरीकुर्वन् अर्थात् कर्मबन्धनानि छिन्दन् गाः ज्ञानवाणीः अभिकनिक्रदत् साक्षात्करोति अर्थात् ब्रह्मज्ञानी जायते। अथ च विद्वान् स्वयं ज्ञानी भूत्वा प्र+अस्तौत् परमात्मानं स्तौति अगायत् च तद्गुणगानं च करोति॥
न हीति= हि यस्मात् कारणात् ज्ञानेन सदृशं ज्ञानेन तुल्यं पवित्रं पूतम् इह लोके शास्त्रे च न विद्यते नास्ति। तत् ज्ञानं कालेन महता कालेन योगसंसिद्धः कर्मयोगेन योग्यतामापन्नः स्वयमात्मनि स्वान्तःकरणे विन्दति लभते॥३८॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥३८॥

अयाविष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः। स प्रत्युदैद्धरुणं मध्वो अग्रं स्वया तन्वा तन्व मैरयत्॥ अथ० ५।१।२॥

अयेति = स हि घृणिः ज्ञानेन तेजस्वी सन् वराय श्रेष्ठाय परमात्मने उरुः प्रत्यगात्मभावेन विस्तीर्ण हृदयः गातुः ज्ञानमार्गे गच्छन् अया अनया विष्ठा = वि+स्था विशेषप्रकारया ज्ञानस्थित्या कर्वराणि कर्माणि जनयन् उत्पादयन् कुर्वन्निति भावः। स एव कर्मयोगी मध्वः माधुर्यस्य धरुणं धारकं अग्रं अग्रभागं प्रति अर्थात् मुक्तिं प्रति उदैत् उद्गच्छति। स च कर्मयोगी ज्ञानी स्वया स्वकीयया तन्वा सूक्ष्मशरीरेण तन्वं सुसूक्ष्मं परमात्मशरीरं प्रति ऐरयत् प्रेरयति॥ बृ० उप० ४।४।२२ = "एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एष सेतुर्विधारण एषां लोकानां संभेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा",
तुलना = गीतायां "ऋते ज्ञानान्न मुक्तिः" एतेन ज्ञानेन मनुष्यः मुक्तिं लभते इत्युक्तम्। वेदेऽपि च ज्ञानी मनुष्यः निष्काम कर्म कुरुते ज्ञानं लभते ततो मुक्तिम् इत्युक्तम्"

श्रद्धावानिति = श्रद्धावान् श्रुतिवाक्ये गुरुवचने च सत्यत्वबुद्धिः श्रद्धा तादृशी श्रद्धा यस्यास्तीति श्रद्धावान् संयतेन्द्रियः संयतानि तत्तद्विषयेषु अप्रवर्तितानि ज्ञानकर्मेन्द्रियाणि येन स संयतेन्द्रियः। तत्परः सर्वत्र ब्रह्माकारत्व संपादन परः ब्रह्मज्ञानं लभते प्राप्नोति। ज्ञानं ब्रह्मज्ञानं लब्ध्वा प्राप्य अचिरेण शीघ्रमेव परां निरतिशय सुखस्वरूपां शान्तिं मुक्तिं अधिगच्छति प्राप्नोति॥३९॥

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥३९"

"श्रद्धया सत्यमाप्यते" यजु० १९।३०॥ "श्रद्धा प्रतिष्ठा लोकस्य देवी" ऋ० १०।१५१। १-५ = श्रद्धादेवत्यं पञ्चर्चं सूक्तमिदम्"

श्रद्धयेति = श्रद्धया श्रुतिवाक्ये गुरुवाक्ये च सत्यत्वबुद्धिधारणेन सत्यं ब्रह्मज्ञानम् आप्यते प्राप्यते॥

श्रद्धेति = श्रद्धादेवी लोकस्य जगतः प्रतिष्ठा मानकारिणी।

यद्वा = "श्रद्धया देवो देवत्वमश्नुते"। तै० ब्रा० ३।१२।३॥

यद्वा = "श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्"। बृ० उप० ४।४॥

तुलना = गीतायाम् इन्द्रियसंयमेन गुरुशास्त्रवचनेषु श्रद्धया ज्ञानं लब्ध्वा मुक्तो भवतीत्युक्तम्। वेदेऽपि च श्रद्धया सत्यमाप्यते, नान्यः मार्ग इत्युक्तम्।

अज्ञश्चेति = अज्ञः आत्मतत्त्वानभिज्ञः अश्रद्दधानः गुरुवाक्ये शास्त्रवाक्ये च श्रद्धारहितः संशयात्मा - कर्मणा मुक्तिः ज्ञानेन वा मुक्तिः इति संशयः आत्मनि चित्ते यस्य सः संशयात्मा सम्यक् पठितशास्त्रोऽपि संशयग्रहग्रस्तः विनश्यति विनाशं प्राप्नोति। संशयात्मनः संशययुक्तस्य पुरुषस्य अयं लोकः - मृत्योरनन्तरं मानुषो लोकः अपि नास्ति, परः लोकः स्वर्गलोकोऽपि नास्ति। न च सुखं विषयजन्यं सुखमपि नास्ति। संशयात्मा नरलोकपरलोकयोः

सुखात् दूरीभवति इत्यर्थः।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥४०॥

"संशयविपरीतमिथ्याज्ञानानां यो हेतुः तेन नित्यनिवृत्तस्तन्नित्यबोधः तत्स्वयमेवावस्थितिः तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि" परमहंसोप० श्रु०२॥

संशयेति = संशयः कोटिद्वयावलम्बी प्रत्ययः "स्थाणुर्वा पुरुषो वा" इति संशयः, विपरीतं अतस्मिंस्तद्बुद्धिर्यथा शुक्तौ रजतमिति ज्ञानं विपरीतं मिथ्याज्ञानं - सदसद्भ्यामादिप्रकारैरनिर्वचनीयं तच्चाज्ञानं ज्ञाननिवर्त्यमिति मिथ्याज्ञानम्। तेषां यः हेतुः कारणम् अविद्या, अज्ञता, अश्रद्धा वा येन मनुष्यं संशयात्मानं कृत्वा हन्ति। अतः अयं पुरुषः त्रिषु लोकेषु सुखं न विन्दते। तेन संशयेन मिथ्याज्ञानेन वा विपरीतज्ञानेन वा नित्यनिवृत्तः नित्यविमुखः सन् नित्यबोधः नित्यज्ञानी इत्युच्यते। तत् स्वयमेवात्मानमेव अवस्थितिः आत्मावलम्बनम् आत्मज्ञानं वा कथ्यते। तं शान्तं रागद्वेषादिभिः शून्यं अचलं स्थिरबुद्धिं कथयन्ति। स पुरुषः एवं चिन्तयति = "अहम् अद्वयानन्दविज्ञानघन एव अस्मि॥

तुलना = गीतायाम् अज्ञः, अश्रद्दधानः संशयमारोहति ततो विनश्यति इत्युक्तम्। उपनिषदि अपि च - संशयविपरीतमिथ्याज्ञानानि विनाशकारणानि भवन्ति। एभिर्विहीनः मुक्तो भवतीत्युक्तम्॥

= "द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः। उप नो हरिभिः सुतम्" ऋ०८। ९३। ३२॥ सामवेद - १७९१॥

द्विता इति = यः इन्द्रः जीवात्मा द्विता = "भावत्वतलौ" इति तल् प्रत्ययः। द्वित्वम्, अज्ञता, अर्थात् परमात्मज्ञानशून्यता, ब्रह्मनिष्ठगुरौ वेदादिशास्त्रे श्रद्धाराहित्यमिति पापद्वयात्मकः, यद्वा कामक्रोध इति दोषद्वयधारकः, यद्वा द्विता = द्विधा देह आत्मा उत देहव्यतिरिक्त आत्मा इति संशययुक्तः नष्टो भवति। परं च स एव जीवः यदि वृत्रहन्तमः अतिशयेन अज्ञताऽश्रद्धे परित्यज्य अर्थात् अज्ञत्वमश्रद्धत्वं उभयं विहाय संशयात्मकं पापं विनाश्य शतक्रतुः शतशः निष्कामत्वेन परोपकारकर्मकर्त्ता भवति यदा, तदा स एव जीवः अज्ञतादिदोषरहितः सन् विदः = परमात्मानं सम्यक्तया जानाति परमात्मानं प्रार्थयति = हे भगवन्! हरिभिः = कामक्रोधसंशयनाशकर्त्रीभिः स्वशक्तिभिः नोऽस्माकं भक्तजनानां सुतं सोमं चन्द्रात्मकं मनः उप समीपं प्राप्नुहि। विद = विद् ज्ञाने (अदादिगण) कर्मणि विहितस्य 'त' प्रत्ययस्य 'लोपस्त आत्मनेपदेषु"। पाणि० ७।१।४१। इति लोपः॥

योगेति = हे धनञ्जय! हे अर्जुन! शरीरयात्रामात्रैकप्रयोजनानि देहचेष्टारूपाणि कर्माणि ज्ञानं संछिन्नसंशयं ज्ञानेन आत्मतत्त्वविवेकेन संछिन्नाः निःशेषं निर्मूलतां गताः संशयाः - ज्ञानेन मोक्षः, कर्मणा वा मोक्ष इत्यादि

संशया: सन्देहा: यस्य तं ज्ञानसंछिन्नसंशयम्। योगसंन्यस्तकर्माणं सर्वं ब्रह्मैव इति सर्वत्र ब्रह्ममात्रत्वदर्शनं योग: तेन संन्यस्तानि सम्यक् नितराम् अस्तानि ब्रह्मणि ब्रह्मात्मना लयं गतानि कर्माणि संचितानि आगामीनि च सर्वाणि यस्य तं योगसंन्यस्तकर्माणम् आत्मवन्तम् अप्रमत्तं ब्रह्मविदमिति यावत्। न निबध्नन्ति बन्धनाय न कल्पन्ते ॥४१॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥४१॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः।
कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात् स पितुष्पिता सत् ॥ ऋ० १।१६४।१६

स्त्रिय इति = स्त्रियः अज्ञानाच्छादिन्यः ब्रह्मज्ञानिन्यः याः सतीः सन्ति, तत्त्वज्ञाः ब्रह्मज्ञानिनः ये सन्ति इति भावः। तान् उ = तान् जीवान् एव पुंसः पुरुषान् मह्यं जिज्ञासवे आहुः प्रतिपादयन्ति, एषा ब्रह्मदृष्टिः तान् जीवान् लौकिकौ न बध्नाति। श्रूयते हि = "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" इत्यादि स्त्रीत्वं पुंस्त्वं च उभयमपि वस्तुतः नास्तीत्युक्तं भवति। इमं भावं अत्यन्तनिगूढं अक्षण्वान् ज्ञानदृष्टयुपेक्षयापि कश्चित् महान् पश्यत् जानाति। अन्धः — "अन्धः कस्मात्? = नास्मिन् ध्यानं भवति" निरु० ५।१॥ स्थूलदृष्टिः लौकिकः पुरुषः न विचेतत् न विचेतयति न जानाति। तत्त्वज्ञः ज्ञानी पुत्रः वयसा अल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात् – स ईम् = इमं भावं आचिकेत जानाति यः ज्ञानी ता तानि स्त्रीत्वपुंस्त्वादीनि एकेनैव भावेन विजानात् औपाधिकानि जानीयात्, स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य जनकस्य पिता असत् अस्ति। मन्त्रद्रष्टुरेव पितृत्वं तत्त्ववित् पितुः पिता सद्भिति किमाश्चर्यमित्यभिप्रायः॥

परमहंसोपनिषद्श्रुतिः — "न शीतं न ~~चोष्णं~~ न सुखं न दुःखं न मानावमाने च षडूर्मिवर्जं ~~[illegible]~~ वर्जम्। निन्दागर्व मत्सरदम्भ दर्पेच्छा द्वेष ~~सुख~~ दुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव ~~[illegible]~~ दृश्यते॥

तुलना = गीतायां निष्काम कर्मकर्तृन् ज्ञानिनः कर्माणि न बध्नन्ति इत्युक्तम्। वेदेऽपि च लोकाः स्त्रीपुंभेदं विहाय आत्मतत्त्वं ज्ञातुं शक्नुवन्ति, अल्पायुरपि ज्ञानेन वृद्धः वृद्धः जायते इत्युक्तम्॥

तस्मादिति = हे भारत! हे भरतकुलोत्पन्न अर्जुन! यस्मात् अज्ञानेन अयं जीवः कर्मज्ञानोभयभ्रष्टो भवति। तस्मात् कारणात् त्वं अज्ञानसंभूतम् "अयं हन्यते, अहं हन्ता" इत्यादि स्वरूपाज्ञानात् संभूतं प्रादुर्भूतं आत्मनः स्वस्य हृत्स्थं हृदयगतं "ज्ञानेन मोक्षः कर्मणा वा उभयतो वा" इति प्रकारकं एवं संशयं आत्मनाशकं सन्देहं ज्ञानासिना आत्मतत्त्वविवेकखड्गेन छित्वा भित्वा उत्तिष्ठ उत्थितो भव। उत्थाय च योगं कर्मयोगं आतिष्ठ समाचर, युध्यस्वेत्यर्थः ॥४२॥

इति श्री सारस्वतान्वयलैय्याग्रामवास्तव्य न्यायभूषणोपपद जगन्नाथशास्त्रिकृतायां गीतार्थबोधिन्यां चतुर्थोऽध्यायः ॥४॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत॥४२

इति श्रीमद्भगवद्गीतायां चतुर्थोऽध्यायः॥

"यूयं धूर्षु प्रयुजो न रश्मिभि ज्योतिष्मन्तो न भासा व्युष्टिषु। श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः॥" ऋ० १०।७७।५॥

यूयमिति = हे जीवात्मानः! यूयं धूर्षु प्रधानब्रह्मज्ञानभारेषु रश्मिभिः ज्ञानकिरणैः ज्ञानरज्जुभिः वा प्रयुजः न = बद्धा इव परिप्रुषः परितो गन्तारः स्थ। तथा भासा ज्ञानाग्नितेजसा ज्योतिष्मन्तः न = तेजस्वन्त इव भवथ। तथा व्युष्टिषु पदार्थविषयेषु श्येनासः न = शीघ्रगन्तार इव पराङ्मुखा भवथ। अथ च स्वयशसः रिशादसः रिषतां हिंसकानां इन्द्रियवृत्तीनां असितारः = दूरे प्रक्षेप्तारः। प्रवासो न = प्रवासिन इव पथिका इव प्रसितासः = ब्रह्मत्व प्राप्तये कर्मयोगानुष्ठानाय च प्रसिद्धयाना भवथ।

इति श्री जगन्नाथ शास्त्रि संकलितायां वेदगीताटीकायां चतुर्थोऽध्यायः समाप्तः।

तुलना = गीतायां ज्ञानासिना संशयं छित्वा कर्मयोगं कुरुत इत्युक्तं वेदेऽपि च ज्ञानेन प्रकाशमानाः कामक्रोधादिशत्रून् हत्वा संसारे पथिका इव स्वं जानीत कर्मयोगमाश्रयत च इत्युक्तम्"

अथ भगवद्गीता पञ्चमाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युदर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेद गीता पृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥२॥

अर्जुन उवाच = संन्यासमिति = हे कृष्ण! कर्मणामवश्यमनुष्ठेयानां कर्मणां संन्यासं त्यागं शंससि कथयसि, पुनः भूयः योगं "कुरु कर्मैव तस्मात्त्वम्" "योगमातिष्ठ" इति च कर्मयोगं शंससि कथयसि। एतयोः कर्मसंन्यासकर्मयोगयोः यत् श्रेयः सुष्ठु अस्ति एतयोः यदेकं प्रशस्ततरं सुनिश्चितं भवता सुनिश्चितं तत् मे ब्रूहि कथय॥१॥

संन्यासं कर्मणां कृष्ण! पुनर्योगं च शंससि।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्॥१॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः॥ यजु० ४०।२॥

कुर्वन्निति = इह अस्मिन् संसारे कर्माणि नित्यनैमित्तिककर्माणि कुर्वन् एव शतं समाः शतं वर्षाणि अधिकानि वा जिजीविषेत् जीवितुमिच्छेत्॥

संन्यास इति = संन्यासः ब्रह्मणि नित्यम् आसः स्थितिः यद्वा -

अथापि कर्मणां फलपरित्यागेन न्यासः स्थापनं संन्यासः कर्मयोगः
कर्मकर्तृत्वयोगः उभौ निःश्रेयसकरौ कल्याणकरौ यद्यपि स्तः तथापि
तयोः कर्मसंन्यासकर्मयोगयोः कर्मसंन्यासात् कर्मपरित्यागमात्रात् कर्म-
योगः श्रद्धया समनुष्ठीयमानः विशिष्यते विशेषत्वाय कल्पते ॥२॥

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥२॥

( वेदमंत्रो न लभ्यते )

ज्ञेय इति = यः स्वप्रतिकूलं कर्म न द्वेष्टि तत्र अप्रीतिं न कुरुते स्वानुकूलं
कर्म च न कांक्षति कर्मजं फलं नेच्छति, निर्द्वन्द्वः शीतोष्णसुखदुःखादिभ्यः
निर्गतः अस्ति स एव नित्यसंन्यासी नित्यं संन्यासोऽस्यैवेति ज्ञेयः ज्ञातव्यः
हे महाबाहो! हे अर्जुन! तस्मात् कर्मनिष्ठोऽपि सन् सुखम् अनायासेन बन्धा-
त् संसारात् प्रमुच्यते मुक्तो भवति ॥३॥

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वन्द्वो हि महाबाहो! सुखं बन्धात् प्रमुच्यते ॥३॥

"कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोग-
शोकाद्यैरभिहतेऽस्मिन् शरीरे किं कामोपभोगैः" मैत्रायण्युप० प्रपा १, मं० ३ ॥
" अन्धोदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं नो गतिः भगवंस्त्वं नो गतिः"।
मैत्रायण्युपनिषद् प्रपा १ मंत्रः ७ ॥

कामेति = कामक्रोधादिभिः ताडितेऽस्मिन् शरीरे कामस्य उपभोगैः किं भवति ?
अन्धेति = अहं संसारी जीवः अन्धोदपानस्थः अन्धकूपवासी भेक इव दर्दुर इव
अस्मिन् संसारे निमग्नोऽस्मि। हे भगवन्! त्वं परमात्मा एव नः अस्माकं गतिः शरणम्
असि। हे भगवन्! त्वं नः अस्माकं गतिः शरणम् असि।

सांख्ययोगाविति = बालाः विवेकशून्याः केचित् पण्डिताः सांख्ययोगौ, सांख्यं संख्या सम्य-
गात्मबुद्धिः तां वहतीति ज्ञानान्तरंगसाधनतया सांख्यः संन्यासः ज्ञानयोगः कर्मयोगः तौ
उभौ संन्यासयोगौ पृथक् साधनतः फलतश्च भिन्नं प्रवदन्ति। न तु पण्डिताः न तु ब्रह्मविदः
वदन्ति। उभयोर्मध्ये एकम् अपि ज्ञानयोगं कर्मयोगं वा सम्यक् समनुतिष्ठन् ब्रह्मवित्
मुमुक्षुः उभयोरपि मोक्षाख्यं फलं विन्दते प्राप्नोति ॥४॥

यत्सांख्यैरिति = सांख्यं ब्रह्म तद् ये विदुः ते सांख्याः तैः सांख्यैः ब्रह्मज्ञानिभिः
यत् स्थानं मुक्तिधाम प्राप्यते लभ्यते, योगैः फलाभिसन्धिरहितकर्मकर्तृभिः अपि
तद् स्थानं गम्यते प्राप्यते। यः सांख्यं ज्ञानयोगं कर्मयोगं च एकं एकस्वरूपमेव
पश्यति स एव पश्यति स एव सम्यग्दर्शी भवतीत्यर्थः ॥५॥ तथा चोपनिषद् =
"एकीभावेनात्माऽनन्यत्वेन ख्यायते प्रकाश्यते वस्तुरूपेऽनयेति संख्या,
स्थूलसूक्ष्मकारणप्रपञ्चस्य निखिलस्य प्रत्यगात्मनि प्रविलापने नोदिता चेतो-
वृत्तिः तत्साधनभूतो यः सांख्यः स संन्यासः" ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥५॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ यजु० ४०।१४॥

विद्यामिति = विद्यां ज्ञानयोगं अविद्यां कर्मयोगं यः ब्रह्मवित् यतिः उभयं ज्ञानयोगं कर्मयोगं मोक्षसाधनकरं सह युगपदेव वेद जानाति स अविद्यया कर्मयोगेन मृत्युं संसारे पुनः पुनरागतिं तीर्त्वा पारं कृत्वा विद्यया ज्ञानयोगेन अमृतं मोक्षं अश्नुते प्राप्नोति। ज्ञानकर्मयोगयोः ज्ञानसंन्यासयोश्च साध्यसाधनभावावगमात् ज्ञानफलं तत्फलमेवेति सांख्ययोगयोरेकमेव फलं मोक्ष इति पण्डिताः मन्यन्ते। तस्मात् कारकादेरेव भेदो न तु तयोः फलतो भेद इति सिद्धम्।

संन्यास इति = हे महाबाहो! हे अर्जुन! अयोगतः कर्मयोगस्य अकरणात् संन्यासः ज्ञाननिष्ठालक्षणः आप्तुं लब्धुं दुःखं दुर्घटम्। योगयुक्तः कर्मयोगेन युक्तः मुनिः गृही यतिर्वा ब्रह्म ब्रह्मस्वरूपावस्थानं चिरेण विलम्बेन न अधिगच्छति शीघ्रमेव ब्रह्मपदवीं मोक्षाख्यं धाम प्राप्नोति ॥६॥

संन्यासस्तु महाबाहो! दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ यजु० ४०।११

सम्भूतिमिति = समस्तस्य जगतः संभवैकहेतुं परं ब्रह्म विनाशं च विनाशिशरीरजन्यं विनश्वरकर्मयोगं च स योगी तदुभयं सह एकीभूतं वेद जानाति। विनाशेन विनाशिना कर्मानुष्ठानसाधनभूतेन विदेहस्वरूपेण शरीरेण मृत्युं तीर्त्वा विदेहमुक्तिं प्राप्य संभूत्या आत्मतत्त्वविवेकेन आत्मविज्ञानेनेति भावः। अमृतं अमरपदं ब्रह्म धाम अश्नुते प्राप्नोति।

योगयुक्त इति = योगयुक्तः योगेन कर्मयोगेन युक्तः कर्मयोगानुष्ठाता इत्यर्थः। विशुद्धात्मा = विशुद्धः रागद्वेषादिभ्यः विमुक्तः आत्मा मनो यस्य स विशुद्धात्मा विजितात्मा, विजितेन्द्रियः जितानि विषयग्रहणविमुखीकृतानि इन्द्रियाणि येन स जितेन्द्रियः इत्यर्थः। सर्वभूतात्मभूतात्मा - सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनां आत्मभूतः स्वरूपभूतः आत्मा प्रत्यग्लक्षणः स्वात्मा यस्य स सर्वभूतात्मभूतात्मा ब्रह्मवित् शरीरनिर्वाहनिमित्तं वैधम् अवैधं वा कर्म कुर्वन् अपि न लिप्यते कर्माकर्मोद्भवाभ्यां फलाभ्यां न श्लिष्यते इति ॥७॥

योगयुक्तः विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

"य आस्ते यश्च चरति यश्च पश्यति नो जनः। तेषां संहन्मो अक्षाणि यथेदं हर्म्यं तथा॥" ऋ० ७।५५।६॥ अथ० ४।५।५॥

य इति = हे जीवात्मन्! यः मुमुक्षुः कर्मयोगयुक्तः आस्ते, यश्च मुमुक्षुः शुद्धान्तःकरणः सन् चरति संसारे व्यवहरति, यश्च जनः मुमुक्षुः सर्वत्र ब्रह्मस्वरूपत्वेन व्यापकं नः अस्मान्, नः=माम् इत्यर्थे- इत्यत्र वचनव्यत्ययः। नः = मां पश्यति प्रत्यगात्मदृष्टित्वेन प्रवर्तते इति भावः। तेषां सर्वेषां अक्षाणि इन्द्रियाणि तद्वृत्तयश्च बहिस्तः संहन्मः 'संहतिर्निमीलनम्' निमीलयामि। तानीन्द्रियाणि संसारविषयाभिमुखानि न भवन्तीत्यर्थः। हर्म्यं यथा प्रासादादि स्थावरवस्तुवत् निश्चलं करोमि। ते जितेन्द्रियाः भूत्वा कर्म कुर्वन्तो ऽपि न लिप्यन्ते॥६॥

नैवेति = तत्त्ववित् आत्मतत्त्वज्ञः ब्रह्मवित् युक्तः निर्विकल्पसमाधियुक्तः सन् पश्यन् जगतः वस्तूनि बहिः पश्यन् शृण्वन् लोकानां वचांसि आकर्णयन्, स्पृशन् वस्तुनः शीतत्वमुष्णत्वं वा त्वचा जानन्, जिघ्रन् गन्धं घ्राणेन गृह्णन् सन्, अश्नन् भक्षयन्, गच्छन् पादाभ्यां चलन्, स्वपन् निद्रां कुर्वन्, श्वसन् उच्छ्वासं निश्वासं च कुर्वन्, प्रलपन् प्रलापं कुर्वन्, विसृजन् वस्तुजातं परित्यजन्, गृह्णन् वस्तुजातम् उत्थापयन्, उन्मिषन् उन्मेषं कुर्वन्, निमिषन् चक्षुषी निमीलयन्, इत्येतत्सर्वं कुर्वन्नपि इन्द्रियाणि चक्षुरादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि च इन्द्रियार्थेषु शब्दादिग्रहण- चलनादि विषयेषु वर्तन्ते। नाहं श्रोता, नाहं द्रष्टा, नाहं घ्राता इत्येवंविधां वृत्तिं सर्वदा धारयन् अहं किञ्चिदपि कर्म नैव करोमीत्येवं मन्येत स्वीकुर्यात्॥

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्श्वसन्॥८॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥९॥

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु। इन्द्र तानि त आ वृणे।
ऋ० ३।३७।९॥ अथ० २०।२०।२॥ अथ० २०।५७।५॥

इन्द्रियाणीति = हे शतक्रतो! शतशः क्रतवः कर्माणि यस्य स शतक्रतुः तत्सम्बुद्धौ हे शतक्रतो! हे बहुकर्मन्! जीवात्मन्! ते तव सम्बन्धीनि या यानि इन्द्रियाणि पंच ज्ञानेन्द्रियाणि पंच कर्मेन्द्रियाणि इन्द्रस्य लिङ्गानि इन्द्रदत्तानि वा वीर्याणि दर्शनश्रवणादिलक्षणानि पंचसु जनेषु मनुष्यपितृसुररक्षःसु निषादपञ्चमेषु चतुर्षु वर्णेषु वर्तन्ते। हे इन्द्र! हे जीवात्मन्! ते त्वत्सम्बन्धीनि तानि सर्वाणि इन्द्रियाणि तद्विषयाश्च आवृणे अहं परमेश्वरः संभजेय। अर्थात् सर्वाणि इन्द्रियाणि स्वस्वविषयेषु विचरन्ति, तानि त्वद्बाधकानि न भवेयुः॥९॥

ब्रह्मणीति = यः मुमुक्षुः संगं फलाकांक्षां त्यक्त्वा ब्रह्मणि सगुण-

ब्रह्मणि कर्माणि सर्वाणि नित्य नैमित्तिककर्माणि आधाय कर्तृत्वमोक्तृत्वा-
दिकं संस्थाप्य करोति, स भक्तोऽपि अम्भसा जलेन पद्मपत्रमिव पापेन
जन्मबन्धहेतुभूतेन पापजन्यफलेन न लिप्यते न श्लिष्यते ॥

ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ यजु० ४०।२॥

कुर्वन्निति = यः मुमुक्षुः इह संसारे कर्माणि सर्वाणि नित्यनैमित्तिककर्माणि ब्रह्म-
ण्याधाय कुर्वन् एव शतं समाः शतवर्षपर्यन्तं यावदायुःपर्यवसानं वा
जीवितुं जिजीविषेत् जीवितुमिच्छेत् । एवं ब्रह्मार्पणकर्मकरणेन त्वयि नरे =
तव मनुष्यस्य "विभक्तिव्यत्ययः" इतः अस्मात् प्रकारात् अन्यथा अन्यप्रकारेण
तव मुक्तिर्नास्ति । ब्रह्मार्पणक्रियमाणं कर्म नरे मनुष्ये न लिप्यते न संबध्यते ।

कायेनेति = योगिनः कर्मयोगिनः पुरुषाः संगं कर्मफलं त्यक्त्वा परित्यज्य
कायेन शरीरेण इन्द्रियैः कर्मज्ञानोभयैः इन्द्रियैः नित्यं नैमित्तिकं कर्म
बुद्ध्या निश्चित्य भगवतः विष्णोः मनसा ध्यानं श्रोत्रेण केवलेन भगवत्क-
थाश्रवणं, केवलेन चक्षुषा भगवन्मूर्तिदर्शनं, वाचा केवलया स्वाध्यायं,
पद्भ्यां तीर्थाटनादिकं आत्मशुद्धये स्वशोधनायैव ईश्वरप्राप्तये कुर्वन्ति ॥११॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मशुद्धये ॥११॥

"दुह्रां मे पञ्च प्रदिशो दुह्रामुर्वीर्यथाबलम् । प्रापेयं सर्वा आकूतीर्मनसा
हृदयेन च" अथ० ३।२०।९॥

दुह्रामिति = पञ्च प्रदिशः दिशावद्वृत्तमानानि पञ्च इन्द्रियाणि शरीरयात्रा
साधनभूतानि ज्ञानेन्द्रियाणि मे मह्यं दुह्राम = आत्मशुद्ध्यभिमतफलं
दुहताम् । उर्वीः उर्व्यः षट्-पंच कर्मेन्द्रियाणि मनश्च षट्संख्याकानि इन्द्रियाणि
यथाबलम् स्वशक्त्यनुसारं दुह्राम = आत्मशुद्ध्यभिमतफलं दुहतां प्रयच्छन्तु ।
अतश्च अहं मुमुक्षुः मनसा संकल्पविकल्पहेतुभूतया अन्तःकरणवृत्त्या हृदयेन
च हृदयोपलक्षितान्तःकरणेन च सर्वाः आकूतीः सकलान् आत्मशुद्धि-
करान् संकल्पान् प्रापेयं प्राप्नवानि ॥ ९ ॥

युक्त इति = आत्मानात्मविवेकी कर्मफलं स्वेनानुष्ठीयमानानां कर्मणां
फलं त्यक्त्वा संत्यज्य नैष्ठिकीं कर्मनिष्ठाजन्यां शान्तिं चित्तशुद्धिं आप्नोति
लभते । अयुक्तः अविवेकी कामकारेण फलकामनया फले कर्मफले सक्तः
आसक्तः सन् निबध्यते जन्मादिबन्धं प्राप्नोति ॥१२।

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥



(पद्मपत्रमिव न लिप्यते)

सर्वकर्माणीति = वशी सर्वेन्द्रियनियन्ता ब्रह्मवित् सर्वकर्माणि नित्यनैमि-त्तिकानि सर्वाणि कर्माणि मनसा संकल्पमात्रेण संन्यस्य फलादिकम् असत् इति संत्यज्य नवद्वारे चक्षुःश्रोत्रनासिकामुखपायूपस्थेति नवसंख्यात्मक-द्वारवति पुरे देहे देही जीवात्मा नैव कुर्वन् = स्वयं नैव किंचित् करोति। न कारयतीति सुखं सुखपूर्वकमास्ते तिष्ठतीति ॥१३॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥१३॥

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्। तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः॥ अथ० १०।८।४३॥

पुण्डरीकमिति = त्रिभिः गुणेभिः सत्वरजस्तमोभिः त्रिभिः गुणैः आवृतं मिलितं नवद्वारं चक्षुःश्रोत्रनासिकामुखपायूपस्थेति नवद्वारैः युक्तं पुण्डरीकं कमलात्मकं शरीरं देहिनः अस्ति। तस्मिन् नवद्वारे पुरे यत् यक्षं पूज्यं आत्मस्वरूपमस्ति, यः आत्मन्वत् आत्मविवेकी अस्ति। ब्रह्मविदः ब्रह्मज्ञानिनः "वै निश्चये" तद् यक्षं पूज्यम् आत्मस्वरूपं विदुः जानन्ति॥

न कर्तृत्वमिति = प्रभुः प्रकर्षेण सर्वत्र भातीति प्रभुः यद्वा सर्वं भासयतीति प्रभुः यद्वा सर्वात्मना स्वयमेव भातीति प्रभुः परमात्मा लोकस्य प्राणिमात्रस्य कर्तृत्वं "त्वमेवं कुरु" "त्वमेवं कुरु" इति प्रकारेण न सृजति न रचयति। लोकस्य प्राणिमात्रस्य सुखदुःखानि नानुभावयतीत्यर्थः। स्वभावः = पूर्वजन्मकृतप्रारब्धकर्मभिः साध्वसाधु-भावः - स एव कर्तृत्वादिव्यापारेषु प्रवर्तते। कर्मरूपिणी प्रकृतिरिष्टानिष्टे संपाद्य सुखदुःखे चानुभावयति ॥१४॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

नाहं तन्तुं न विजानाम्योतुं न यं वयन्ति समरेऽतमानाः। कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा॥ ऋ० ६।९।२॥

नाहमिति = अहं प्रभुः परमात्मा तन्तुं लोकानां कर्मतन्तून् न विजानामि न उत्पादयामि। ओतुं स्थूलरूपत्वेन फलत्वेन प्रकटीभूतानि ओतून् = कर्मफलानि न विजानामि नोत्पादयामि। यं कर्मफलप्रपञ्चं समरे कर्मणां तत्फलानां च संसारसंग्रामे अतमानाः सततं चेष्टमानाः संसारिणः प्राणिनः वयन्ति तेषामुप-भोगार्थं स्वपूर्वजन्मकृतप्रारब्धकर्माणि गच्छन्ति। इह अस्मिन् सम्बन्धे परः परस्तात् बुद्धेः अविषये वर्तमानानि वक्त्वानि वक्तव्यानि अवरेण अर्वा-चीनेन स्वजन्मोत्तरकालागतेन पित्रा देहपालकेन प्रारब्धकर्मणा स्वभा-वेन इति यावत् वर्तमानः सन् कस्य प्राणिमात्रस्य स्वित् खलु पुत्रः रक्षकः परमात्मा वदति कथयति। ईश्वरः अस्माकं कर्तृत्वं न कर्माणि न कर्मफलसंयो-गं सृजति अपि तु स्वभाव एव प्रवर्तते इति ॥

नादत्त इति = विभुः व्यापकोऽयमात्मा कस्यचित् पुरुषस्य सुकृतं पुण्यं न आदत्ते न गृह्णाति। अज्ञानेन आत्मतत्त्वाविवेकस्वहेतुना ज्ञानं वास्तविकात्मतत्त्वं आवृतं राहुणा रविबिम्बवत् तिरोहितमस्ति। तेन परमात्मतत्त्वाविवेकेन जन्तवः जीवाः एतत्कर्म मया ईश्वरार्पणं कृतम् अनेन ईश्वरः प्रीयते अतो मह्यं मदभीष्टं पदार्थं दास्यतीत्येवं मुह्यन्ति मोहं प्राप्नुवन्ति ॥१५॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥१५॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥ ऋ० १०।८२।७॥ यजु० १७।३१॥ निरु० १४।२०॥

न तमिति = हे जीवात्मानः तं प्रभुं न विदाथ न जानीथ यः इमा इमानि भूतानि तत्तत्कर्मानुकूलफलैः जजान जनयति उत्पादयति। युष्माकं सर्वेषां जीवानां अन्तरं भेदः अन्यत् प्रकारान्तरेण बभूव भवति विद्यते। प्रभुः पुष्करपलाशवन्निर्लेपित्वात् न पापं गृह्णाति न कस्यचित् पुण्यम्। यूयं जीवास्तु स्वशुभाशुभकर्मजन्यपुण्यपापफलं गृह्णन्ति। यूयं नीहारेण अज्ञानेन प्रावृताः आच्छन्नाः स्थ। अत एव जल्प्याः "देवोऽहं मनुष्योऽहमित्यादीन् तज्जल्पनेन प्रावृताः" सन्तः असुतृपः केनाप्युपायेन असून् प्राणान् तृप्यन्तः उदरम्भराः इत्यर्थः। उक्थशासः चरन्ति पृथिव्यां वर्तन्ते केवलमैहिकामुष्मिकभोगपराः वर्तध्वे। अतः पुण्यपापागृहीतारं परमात्मानं न जानीथ।

ज्ञानेनेति = येषां कर्मोपासनाप्रसक्तानां मुमुक्षूणां आत्मनः बुद्धेः सम्बन्धि तद् अज्ञानं सर्वानर्थबीजं मोहः ज्ञानेन आत्मपरमात्मतत्त्वविवेकेन नाशितं विध्वस्तम्। तेषां शुद्धात्मनां समुत्पन्नं तद् ज्ञानम् आदित्यवत् आदित्यः पदार्थजातमिव तत्परं परमात्मानं प्रकाशयति प्रत्यक्षीकरोति॥१६॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥१६॥

मन्दमान ऋतादधि प्रजायै सखिभिरिन्द्र इषिरेभिरर्थम्। आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत्तमांसि॥ ऋ० १०।७३।५॥

मन्दमान इति = इन्द्रः ऐश्वर्यवान् मुमुक्षुः जीवात्मा ऋतात् सत्यस्वरूपात् ब्रह्मणः अधि इषिरेभिः = शरीरे प्रेरकीभूतैः सखिभिः समानज्ञानैः इन्द्रियैः सह मन्दमानः मोदमानः सन् प्रजायै प्रकर्षेण इन्द्रियोत्पन्नायै वृत्त्यै अर्थं तत्तदिन्द्रियविषयं प्रयच्छतीति शेषः। अर्थात् मुमुक्षुः इन्द्रियाधीनः नास्ति। प्रत्युत इन्द्रियाणि तदधीनानि सन्ति। स च मुमुक्षुः आभिः ब्रह्मदृष्टीभिः आत्मज्ञानवतीभिः इन्द्रियवृत्तिभिः दस्युम् "वचनव्यत्ययः" बहुवचनस्थाने एकवचनम् - दस्यूः दुष्टविचारवतीः मायाः अज्ञानवृत्तीः विनाशयितुं उपागात् = प्राप्तवान्। स एव मुमुक्षुः तम्राः = आत्मज्ञानात् ग्लापयित्रीः

मिहः = दुष्प्रवृत्तिमयीः वृषीः प्रावपत् व्यनाशयत् तथा तमांसि अज्ञान-मयान् अन्धकारान् सूर्यवत् प्रावपत् विनाशयति ॥

तदिति = तद्बुद्धयः = तस्मिन् ब्रह्मणि बुद्धिर्येषां ते तद्बुद्धयः; तदात्मानः तद् ब्रह्म एव आत्मा अहं प्रत्ययार्थो येषां ते तदात्मानः; तन्निष्ठाः = तस्मिन् ब्रह्मणि एव निष्ठा स्थितिर्येषां ते तन्निष्ठाः; तत्परायणाः = तत् अद्वितीयं परं ब्रह्म एव अयनं गतिः येषां ते तत्परायणाः = सर्वात्मारामाः; ज्ञाननिर्धूतकल्मषाः = ज्ञानेन आत्मविवेकेन निर्धूतं निःशेषं प्रक्षालितं कल्मषं बुद्धिगतं भेदग्रहणस्वरूपं पापं येषां ते ज्ञाननिर्धूतकल्मषाः सन्तः अपुनरावृत्तिं भूयोजन्मग्रहणं पुनरावृत्तिः तदभावः अपुनरावृत्तिः तां देहसंबन्धशून्यां मुक्तिं गच्छन्ति ॥१७॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

अविन्दन् ते अतिहितं यदासीद् यज्ञस्य धाम परमं गुहा यत् । धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः । ऋ० १०।१८१।२॥

अविन्दन्निति = यज्ञस्य = "यज्ञो वै विष्णुः" तस्य यज्ञस्य पूज्यस्य विष्णोः परब्रह्मणः यत् परमं अत्युत्कृष्टं गुहा गुहास्वरूपं धाम परमं गुह्यतमं मुक्तिगृहं आसीत् अस्ति तत् बृहत् साममयं महत् वा धाम द्युतानात् द्योतमानात् धातुः जगद्धारकात् जगत्पोषकाच्च सवितुः जगदुत्पादकात् विष्णोः सर्वत्र व्यापकात् अग्नेः प्रकाशस्वरूपात् परब्रह्मणः भरद्वाजः = भरत् सत्वगुणपोषकं वाजो ज्ञानलक्षणं अन्नं यस्य स भरद्वाजः ब्रह्मज्ञानी आचक्रे करोति आहरति वा । तत् धाम अतिहितम् = अतिकल्याणकरं भूयो जन्माप्रापकं धाम मुक्तिगृहं ते ब्रह्मनिष्ठाः अविन्दन् लभन्ते "कालव्यत्ययः" ॥

विद्येति = विद्याविनयसंपन्ने = विद्या सर्ववेदशास्त्राध्ययनं ज्ञानं वा, विनयः नम्रता, ताभ्यां सम्पन्ने युक्ते ब्राह्मणे, गवि हविरादिना जगत्पावन्यां धेनौ, हस्तिनि गजे, शुनि अतिनिकृष्टे कुक्कुरे जीवे, श्वपाके श्वानमपि पचतीति श्वपाकः, यद्वा = 'श्वो भवितव्यम्' इति पचतीति श्वपाकः-चाण्डालः, तस्मिन्, चकारः लोहकाञ्चनादि पदार्थ ग्राहकः । पण्डिताः सर्वत्र ब्रह्मदर्शनपराः समदर्शिनः सर्वं दैकरूपेण समरसतया निश्चिन्वन्तीति-परं ब्रह्म समं इत्युच्यते - समं सर्वत्र द्रष्टुं शीलं येषां ते समदर्शिनः ॥१८॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥

सिंहे व्याघ्रे उत वा पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये वा । इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥१॥ या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या पुरुषेषु । इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥२॥ अथ० ६।३८।१-२

यद्वा (नूतनमन्त्रः) = " रुमे रुशमे श्यावके कृपे इन्द्र मादयसे सचा । कण्वास त्वा ब्रह्मभिः स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ अथ० २०।२७।२ ॥

सिंहे इति = या त्विषिः आत्मदीप्तिः आत्मज्योतिः सिंहे हिंसनशीले मृगेन्द्रे व्याघ्रे-

शार्दूले पृदाकौ सर्पे अग्नौ मौकार्मौ विद्युति तथा ब्राह्मणे ब्रह्मज्ञानविशिष्टे ब्राह्मण-
जातौ सूर्ये भास्करे अस्ति विद्यते, या आत्मदीप्तिः हस्तिनि गजेन्द्रे द्वीपिनि द्विवर्ण-
वति चित्रके व्याघ्रे इति यावत् अस्ति, या त्विषिः आत्मदीप्तिः हिरण्ये सुवर्णे दि-
व्यातौ अस्ति, या त्विषिः आत्मप्रकाशः अप्सु जलेषु गोषु हविरादिना जगत्पावन्यां
धेनौ, पुरुषेषु मनुष्येषु अस्ति, या देवी द्योतमाना सुभगा सुन्दरत्विषिः इन्द्रं
जीवात्मानं अजजान = जनयामास संसारावस्थायां प्रकटयामास, सा ब्रह्मत्विट् सर्वत्र सम
रूपा ब्रह्मदर्शनशक्तिः वर्चसा ब्रह्मतेजसा संविदाना संजानाना ऐकमत्यं गता नः अस्मान्
मुमुक्षून् ऐतु आसमन्तात् आगच्छतु ॥ १-२ ॥

यथा- 'रुमे' इति = हे इन्द्र! हे ऐश्वर्यवन् परमात्मन्। त्वं रुमे श्रुतिसम्पन्ने ज्ञानिनि पुरुषे
अर्थात् ब्राह्मणे, रुशमे हिंसके क्षत्रिये यथा सिंहादौ पशौ श्यावके देशदेशान्तरपर्यटके
अर्थात् वैश्ये, वृपे अकर्तरि पुरुषे शूद्रे-चाण्डाले वा सचा = आत्मनः समभावेन मादयसे
सर्वान् आत्मज्ञानिनः आनन्दयसि। स्तोमवाहसः स्तोतारः कण्वासः मेधाविनः पुरुषाः
ब्रह्मभिः वेदमन्त्रैः त्वा त्वां सर्वत्र व्यापुवन्तं त्वां परमात्मानं आगच्छन्ति ॥

इहैवेति = येषां समदर्शिनां आत्मविवेकिनां मनः साम्ये समम् एव साम्यं तस्मिन्
साम्ये समतायां स्थितं निश्चलतया तिष्ठति तैः ब्रह्मविद्भिः इहैव जीवदवस्थायामेव सर्गः
पूर्वजन्मसम्बन्धः जितः परिहृतः। हि यस्मात् कारणात् ब्रह्म निर्दोषं रागद्वेषसुखदुःखा-
दिद्वन्द्वदोषशून्यं समं सर्वत्रैकरसम्। तस्मात् कारणात् ते ब्रह्मविदः यतयः ब्रह्मणि
ब्रह्मस्वरूपे एव स्थिताः अर्थात् विदेहमुक्ताः जगति वर्तन्ते इति ॥ १९ ॥

न प्रहृष्येदिति = ब्रह्मवित् यतिः यदृच्छया प्राप्तं प्रियं अभिलषितं पदार्थं लब्ध्वा न
प्रहृष्येत् प्रहर्षं न कुर्यात्, अप्रियं प्रतिकूलं पदार्थं प्राप्य न उद्विजेत् धैर्यं न विमुञ्चेत्
दुःखी न भूयादित्यर्थः। असंमूढः समदर्शी एव स्थिरबुद्धिः स्थिरा ब्रह्माकारवृत्तिमत्यजन्ती
बुद्धिर्यस्य स स्थिरबुद्धिः सन् ब्रह्मणि एव स्थितो भवेत्। एवं

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥१९॥
न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २० ॥

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम्। यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम्।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनु संविदुः ॥ अथ० १०।७।१७ ॥

ये इति = ये आत्मविवेकिनः पुरुषाः पुरुषे = प्राणिमात्रे साम्येन वर्तमानं ब्रह्म-
विदुः जानन्ति, ते विदेहमुक्ताः परमेष्ठिनं परमे सर्वोत्कृष्टे पदे स्थितं परं ब्रह्म विदुः
जानन्ति। यः परमेष्ठिनं परं ब्रह्म वेद जानाति, यश्च आत्मतत्त्वविवेकी प्रजापतिं
स्थावरजंगमस्वामिनं परमेश्वरं सर्वत्र वेद जानाति। ये ब्राह्मणं ब्रह्मवेत्तारं ज्ञानिनं
ज्येष्ठं निर्दोषत्वेन सर्वश्रेष्ठं विदुः जानन्ति ते एव स्कम्भं सर्वसनातनं सर्वाधारं परमा-
त्मानं अनुसंविदुः सम्यक्तयाऽनुजानन्ति अनुशीलयन्ति च ॥

बाह्येति = यः आत्मविवेकी बाह्यस्पर्शेषु आत्मनः बहिरिति बाह्याः, इन्द्रियैः स्पृश्यन्ते गृह्यन्ते इति स्पर्शाः, बाह्याश्च ते स्पर्शाश्च ते बाह्यस्पर्शाः तेषु बाह्यस्पर्शेषु शब्दादिषु तज्जन्यसुखेषु च असक्तः अप्रवृत्तः आत्मा मनो यस्य सोऽसक्तात्मा सन् आत्मनि स्वस्मिन् यत् सुखम् आत्मसाक्षात्कारानुभवसुखं विन्दतिलभते। स आत्मविवेकी ब्रह्मयोगयुक्तात्मा ब्रह्मणा योगो वा ब्रह्मणि योगः ब्रह्ममात्रदर्शनं तस्मिन् युक्तः संलग्नः आत्मा मनो यस्य स ब्रह्मयोगयुक्तात्मा ब्रह्ममात्रदर्शनपर इत्यर्थः। अक्षय्यं क्षेतुं शक्यं क्षय्यं, न क्षय्यं अक्षय्यम् - विनाशरहितं सुखं ब्रह्मस्वरूपानन्दं अश्नुते भुंक्ते॥२१॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते॥२१॥

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः। विश्वे देवाः समनसः सकेताः एकं क्रतुमभि वियन्ति साधु॥ ऋ० ६।९।५॥

ध्रुवमिति = पतयत्सु गच्छत्सु जङ्गमप्राणिषु अन्तः मध्ये हृदये मनोजविष्ठं मनसोऽप्यतिशयेन वेगेन युक्तं कं सुखस्वरूपं ध्रुवं निश्चलं निर्विकल्पं ज्योतिः ब्रह्मचैतन्यं निहितं स्थितं दृशये दर्शनार्थं विश्वे देवाः दीव्यन्तीति देवाः इन्द्रियाणि विश्वे सर्वे देवाः सर्वाणि इन्द्रियाणि चक्षुरादयः अन्तर्मुखाः सन्तः समनसः मनसा सह वर्तमानाः, सकेताः = ब्रह्मज्ञानयुक्ताः सतेजस्काः सन्तः एकम् अद्वितीयं क्रतुम् = अक्षय्यसुखकर्तारं परमात्मानं अभिलक्ष्य साधु सम्यक् वियन्ति विविधं गच्छन्ति अर्थात् बाह्यवृत्तिविमुखानि अन्तर्मुखानि इन्द्रियाणि समनस्कानि अक्षय्यं ब्रह्मसुखमनुभवन्तीत्यर्थः।

ये हीति = हि यस्मात् ये संस्पर्शजाः इन्द्रियविषयसंस्पर्शः परस्परसंयोगः तस्मादेव जायन्ते इति संस्पर्शजाः इन्द्रियार्थसंनिकर्षणोद्भूताः भोगाः विषयसुखानि सन्ति ते भोगाः आद्यन्तवन्तः उत्पत्तिमन्तः विनाशवन्तश्च। अत एव ते भोगाः दुःखयोनयः दुःखहेतवः भवन्ति। बुधः विद्वान् यतिः तेषु दुःखयोनिमयविषयसुखेषु न रमते स्नेहं न करोति॥२२

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय! न तेषु रमते बुधः॥२२॥

अपहत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम्। आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः॥ ऋ० १०।७६।४॥

अपहत इति = हे अद्रयः! हे अविनाशिनः! जीवात्मानः! यूयं भङ्गुरावतः आद्यन्तवन्तः विनश्वरानिति यावत्। रक्षसो रक्षोभूतान् इन्द्रियविषयसुखानि अपहत विनाशयत। तथा निर्ऋतिम् = नियता ऋतिः घृणा यत्र सा निर्ऋतिः नित्यघृणावतः इत्यत्र विभक्तिव्यत्ययः। नित्यघृणावतः दुःखमयान् इन्द्रियभोगान् स्कभायत दूरे परिहरत। अमतिम् - अमननशीलां कुबुद्धिं सेधत निषेधत। नः = अस्मदर्थे स्वकीयार्थे सर्ववीरं सर्वैः ब्रह्मज्ञानिभिः वरणीयं रयिं ज्ञानं आसुनोतन प्राप्नुत। तथा देवाव्यं = देवानां विदुषां प्रीतिकरं श्लोकं भगवत्स्तुतिं भरत संपादयत॥

शक्नोतीति = यः मुमुक्षुः इह संसारे शरीरविमोक्षणात् देहपरित्यागात् प्राक् एव - पूर्वमेव कामक्रोधोद्भवं कामः अभिलाषः क्रोधः मनःक्षोभको द्वेषपरिणामतः कोपः, ताभ्याम् उद्भवः उत्पत्तिः यस्य तं कामक्रोधोद्भवं वेगं प्रवाहं सोढुं शमयितुं कामक्रोधभयेन शान्तः दान्तः भवितुमित्यर्थः शक्नोति समर्थो भवति । स मुमुक्षुः युक्तः ब्रह्मयोगयुक्तः एव भवति, स नर एव सुखी ब्रह्मानन्दोपभोगेन सुखयुक्तः भवति ॥२३॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

त आदित्यासे उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः । अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥ ऋ० २ । २७ । ३ ॥

त इति = ये अदब्धासः कामक्रोधप्रभृतिभिः शत्रुभिः अहिंसिताः कामक्रोधादिवेगसोढारः इत्यर्थः । दिप्सन्तः = कामक्रोधप्रभृतीन् शत्रून् दंभितुं हिंसितुमिच्छन्तः मुमुक्षवः जनाः अन्तः शरीरमध्ये एव वृजिना वृजिनानि पापानि दुःखानि पश्यन्ति अवलोकयन्ति जानन्तीत्यर्थः । ते आदित्यासः आदित्यवत्तेजस्विनः सन्तः उरवः महान्तः गभीराः कामक्रोधादिसोढृत्वेन गाम्भीर्योपेताः सर्वं वस्तुमात्रं साधु समीचीनं सुखस्वरूपं पश्यन्ति जानन्ति । उत अपि च ते परमा परमाणि दूरदेशावस्थितानि अपि सर्वाणि वस्तूनि चित् एव राजभ्यः = प्रकाशमानस्य ज्योतिःस्वरूपस्य ईश्वरस्य "विभक्तिव्यत्ययः" अन्ति = अन्तिके समीपे वर्तन्ते इति शेषः । दिप्सन्त इति = 'दंभु दम्भे' अस्मादिच्छायां सनि "सनीवन्तर्धेतीड्" इडभावपक्षे "दंभ इच्च" इतीकारः । "दंभेः हल् ग्रहणस्य" जातिवाचकत्वात् सिद्धमिति ।

योऽन्त इति = यः ब्रह्मवित् अन्तःसुखः अन्तः आत्मनि एव निष्कारणं सुखं यस्य स अन्तःसुखः । यः अन्तरारामः = अन्तः आत्मनि एव आरामः रमणं क्रीडनं यस्य स अन्तरारामः । यः अन्तर्ज्योतिः = अन्तर्लीनं ज्योतिः मनो यस्य स अन्तर्ज्योतिः अस्ति । स योगी ब्रह्मयोगयुक्तः ब्रह्मभूतः त्यक्तदेहात्मभावः सन् ब्रह्मनिर्वाणं ब्रह्मणः निर्वाणं विदेहमुक्तिं अधिगच्छति प्राप्नोति ॥२४"

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः । पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥ ऋ० १० । ७७ । ३ ॥

प्र ये इति = ये दिवः दिवि "विभक्तिव्यत्ययः" हृदयाकाशे प्ररिरिच्रे प्ररिरिचिरे प्रकर्षेण सम्पृक्ताः भवन्ति, न तु हृदयाकाशाद् बहिर्देशे । ये न = ये च "च न इति चार्थे", पृथिव्याः पृथिव्यां "विभक्तिव्यत्ययः" पृथिवीविकारे देहे प्ररिरिच्रे = प्ररिरिचिरे = प्रकर्षेण वियुक्ताः भवन्ति । रिच् धातुः संपर्के वियोगे च । ये न बर्हणा = महत्त्वेन त्मना = आत्मना एव अभ्रात् मेघात् विमुक्तः सूर्यः न = सूर्य इव पाजस्वन्तः बलवन्तः वीराः न = वीरा इव, पनस्यवः = स्तुतिकामाः रिशादसः = रिशतां हिंसताम् असितारः दूरे प्रक्षेप्तारः मर्याः न = मनुष्या इव युक्ताः सन्तः अभिद्यवः = अभिगतदीप्तयः ज्योतिर्मयाः विदेहमुक्ताः भवन्ति ।

लभन्ते इति = यतात्मान: यत: संयमित: स्ववशीकृत: आत्मा मनो यै: ते यतात्मान:। सर्वभूतहिते रता: = सर्वेषां भूतानां पदार्थमात्राणां हिते प्रिये रता: संलग्ना: ये ऋषय: ब्रह्मध्यानाभिमुख गन्तार: क्षीणकल्मषा: छिन्नद्वैधा = क्षीणं नि:शेषत्वेन क्षयं गतं कल्मषं वासनापापं - येषां ते क्षीणकल्मषा:। छिन्नद्वैधा: = अर्थस्य द्वैविध्यमवलम्ब्य जायन्ते इति द्वैधा: संशया: छिन्ना: विनाशं गता: द्वैधा: संशया: येषां ते छिन्नद्वैधा: सन्त: ब्रह्मनिर्वाणं विदेहकैवल्यं - लभन्ते प्राप्नुवन्ति ॥२५॥

लभन्ते ब्रह्मनिर्वाणमृषय: क्षीणकल्मषा:।
छिन्नद्वैधा: यतात्मान: सर्वभूतहिते रता: ॥२५॥

हंसा इव श्रेणिशो यताना: शुक्रा वसाना: स्वरवो न आगु:। उन्नीयमाना: कविभि: पुर - स्ताद्देवा देवानामपि यन्ति पाथ: ॥ ऋ० ३।८।९॥

हंसा इति = न: अस्माकं सहवासिन: जीवात्मान: अस्मत्संमुखे एव शुक्रा: पापराहित्यात् शुद्धात्मान: सन्त: वसाना: पापानि आच्छादयन्त: अर्थात् पापानि हंसा इव दूरे क्षिपन्त: = श्रेणिश: श्रेणिबद्धा: हंसा इव यताना: यथानियमं यत्नं कुर्वाणा: यथानियमं ज्ञानमार्गे प्रवर्तमाना: यताना: = इन्द्रियनियमेन यत्नं कुर्वन्त: स्वरव: = स्वरु: यज्ञो भवति, यज्ञात्मकं परमात्मानं स्मरन्त: - आगु: = ब्रह्मज्ञानप्राप्तये सर्वत: प्राप्नुवन्ति। ते कविभि: क्रान्तद - र्शिभि: ब्रह्मज्ञानिभि: पुरस्तात् ब्रह्मनिर्वाणप्राप्तित: पूर्वं शरीरविमोक्षणात् पूर्वं वा उन्नीयमा - ना: उन्नतिं लभमाना: देवा: विद्वांस: ऋषय: देवानां पाथ: देवानां स्थानम् अन्तरिक्षं मुक्ति धाम अपि यन्ति अभिगच्छन्ति।

कामक्रोधेति = काम: वासना, क्रोध: कोप:, ताभ्यां वियुक्तानां विरहितानां यतीनां मुमुक्षूणां यतचेतसां यतं नियमेन अन्तर्मुखत्वेन स्थापितं चेतो मनो येषां ते यतचे - तस: तेषां यतचेतसां विदितात्मनां विदित: सर्वात्मकत्वेन ज्ञात: आत्मा परमात्मा यै: ते वि - दितात्मान: तेषां विदितात्मनां सम्यग्विदितात्मतत्त्वानां अभित: उभयत: जीवद्दशायां विदेहदशायां च ब्रह्मनिर्वाणं ब्रह्मानन्दाऽवाप्ति: वर्तते उपतिष्ठते ॥२६॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥

ब्राह्मणास: सोमिनो वाचमक्रत ब्रह्म कृण्वन्त: परिवत्सरीणम्। अध्वर्यवो घर्मिण: सिष्विदाना: आविर्भवन्ति गुह्या न केचित् ॥ ऋ० ७।१०३।८॥

ब्राह्मणास इति = सोमिन: = सोम: आत्मा स विद्यतेऽस्मिन्निति सोमिन: सोमज्ञानविशिष्टा: विदितात्मान:। घर्मिण: घर्म: यज्ञ: तेन घर्मेण यतेन्द्रियत्वेन यज्ञेन विचरन्त: यत - चेतस इत्यर्थ:। अध्वर्यव: = ध्वर: हिंसा न ध्वर: हिंसा यत्र तत्कर्म अध्वरम् - काम - क्रोधादिजनितहिंसारहितं कर्म इच्छतीति अध्वर्यु: कामक्रोधात्मकहिंसारहित:। ते अध्व - र्यव: कामक्रोधविमुक्ता: यद्वा अध्वानं सत्पथं सन्मार्गं राति ददातीति अध्वर: "रा दाने" इति धातो: क प्रत्यय: = अध्वर: यज्ञ:। यद्वा न ध्वरति कुटिलो न भवति ध्वृ + अच्, नञ् तत्पुरुष:। सिष्विदा: = कामक्रोधादीन् विमुञ्चन्त: ब्राह्मणास:

ब्रह्मज्ञानिनः यतयः ब्रह्म कृण्वन्तः ब्रह्मज्ञानं कृण्वन्तः कुर्वन्तः लभमाना इति यावत्।
सर्वत्र वस्तुमात्रं ब्रह्म कुर्वन्तः ब्रह्म कीर्तयन्तः परिवत्सरीणं परिवत्सरः ब्रह्म तत्संबन्धि
परिवत्सर संबन्धि ब्रह्मसम्बन्धि ब्रह्ममयमित्यर्थः। वाचं भाषणमक्रत कुर्वन्ति।
ते ध्रुके अस्वमया: ब्रह्मज्ञानिनः चित् यतयः चित्एव न = अपि "नकारोऽप्यर्थकोऽ-
त्र"। गुहा गुह्यं स्थानं ब्रह्मनिर्वाणम् आविर्भवन्ति प्राप्नुवन्ति॥

स्पर्शानिति = बहिर्भवाः बाह्याः तान् बाह्यान् बहिर्भूतान् स्पर्शान् रूप-
रसादि विषयान् बहिः कृत्वा बहिर्देशे विधाय भ्रुवोः अन्तरे मध्ये चक्षुः
दृष्टिं कृत्वा नासाभ्यन्तरचारिणौ नासिकामध्यगमनशीलौ प्राणापानौ
प्राणापानौ प्राणापानवायू समौ एकरसौ कृत्वा केवलं प्राणायामं कृत्वा
मुनिः ब्रह्ममननशीलः, यतेन्द्रियमनोबुद्धिः = यताः स्वायत्तीकृताः इन्द्रियाणि मन-
श्च बुद्धिश्च येन स यतेन्द्रियमनोबुद्धिः, विगतेच्छाभयक्रोधः = विगताः दूरी-
भूताः इच्छा कामः भयं च त्रासश्च क्रोधश्च कोपश्च यस्य सः विगतेच्छा-
भयक्रोधः सन् मोक्षपरायणः तीव्रमोक्षेच्छया मोक्षसाधनैकनिष्ठः यः सदा
सर्वदा भवति। स एव मुनिः मुक्तो जीवनकाले जीवन्मुक्तः मरणानन्तरं कैवल्य-
मुक्तः नान्यः कश्चित् इति। २७। २८॥

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥२७॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥२८॥

"संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः। वाचं पर्जन्यजिन्वितां प्र-
मण्डूका अवादिषुः॥ ऋ० ७। १०३। १॥

"प्रजानन्तः प्रति गृह्णन्तु पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम्। दिवं गच्छ प्रति
तिष्ठा शरीरैः स्वर्गं याहि पथिभिर्देवयानैः॥ अथ० २। ३४। ५॥

संवत्सरमिति = मण्डूकाः नित्यं मोदमानाः ब्रह्मज्ञानेन मोदितकर्माणः। मदेः
रूपम्। आत्मज्ञानेन नित्यं तृप्ताः वा। यद्वा मण्डयते मण्डूकाः भवन्ति। ते हि भक्ति-
भिः नानाविचित्राभिः विधाभिः मण्डिता भवन्ति इति। मण्डूकाः भगवद्भक्तितृप्ताः
मुमुक्षवः पर्जन्यजिन्वितां पर्जन्येन देवेन जिन्वितां प्रीतां देवप्रीतिरूपां वाचं
वाणीं प्रावादिषुः प्रवदन्ति। एवम्भूतास्ते यतेन्द्रियमनोबुद्धयः मोक्षपरायणाः
भगवद्भक्ताः व्रतचारिणः बहिर्भूतरूपरसप्रभृत्यग्रहणरूपं व्रतम् आचरन्तः
कृतेन्द्रियसंयमाः ब्राह्मणाः ब्रह्मवेत्तारः संवत्सरं संवसन्ति अस्मिन् भूतानि इति
संवत्सरः परमात्मा तस्मिन् संवत्सरे परमात्मनि "संवत्सरम्" इत्यत्र सप्तमीस्थाने
द्वितीयाविभक्तिव्यत्ययः। शशयानाः शयनं कुर्वन्तः सन्तः मुक्ताः भवन्ति इति।

प्रजानन्त इति = पूर्वे सर्वेभ्यः प्रथमाः मुनयः प्रजानन्तः = प्रकर्षेण प्राणा-
यामविधिं जानन्तः ज्ञानिनः पुरुषाः परि + आचरन्तम् शरीरस्य सर्वेषु स्था-

नेषु भ्रममाणं प्राणं प्राणवायुम् अंगेभ्यः सर्वेभ्यः अवयवेभ्यः एकत्रीकृत्य प्रति गृह्णन्तु स्वायत्ती कुर्वन्तु । शरीरैः प्राणवायोः अवरोधे कृतेऽपि शरीरांगैः स्थूलसूक्ष्मकारणरूपैः शरीरैः तदवयवैश्च प्रतितिष्ठ प्रकर्षेण स्थितो भव। तव शरीरमपि मा पतेत्। देवयानैः देवैः योगिभिः यानैः गन्तव्यैः मार्गैः स्वर्गं दुःखासंभिन्नं सुखात्मकं लोकं याहि गच्छ। पुनः दिवं सर्वोपरि प्रकाशमानं मुक्तिधाम गच्छ प्राप्नुहि॥

भोक्तारमिति = यतः यज्ञतपसां यज्ञानां श्रौतस्मार्तानां यज्ञानां ब्रह्मज्ञानयज्ञानां वा तपसां सत्याचरणादीनां भोक्तारं पालयितारं सर्वभूतानां सर्वेषां प्राणिमात्राणां सुहृदं सुशोभनं हृत् हृदयं यस्य तथाभूतं सर्वलोकमहेश्वरं लोक्यन्ते इति लोकाः सर्वे च लोकाश्च सर्वलोकाः अव्यक्तादिस्थूलान्ताः तेभ्यो महान् महत्तमः। स्वसन्निधिमात्रेण सर्वम् ईष्टे चेष्टयतीति ईश्वरः। महांश्चासौ ईश्वरः महेश्वरः तं सर्वलोकमहेश्वरं सच्चिदानन्दस्वरूपं मां परमात्मानं श्रीकृष्णं ज्ञात्वा अवबुध्य शान्तिं सर्वसंसारोपशमं ब्रह्मभावं विदेहमुक्तिं गच्छति प्राप्नोति॥२९॥

इति श्री जगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यं पंचमोऽध्यायः॥५॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥२९॥

इति श्रीमद्भगवद्गीतायां पंचमोऽध्यायः॥

कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम्॥ ऋ० १।१२।७॥ साम० ३२॥

कविमिति = हे स्तोतस्त्वं! अध्वरे सर्वविधे यज्ञकर्मणि कविं क्रान्तदर्शिनं महेश्वरत्वेन सर्वलोकप्रेश्वरम्, अमीवचातनम् = अमीवानां कामक्रोधादिहिंसकरोगाणां कामक्रोधादिहिंसकशत्रूणां वा चातनं नाशकं, सर्वभूतसुहृदं सत्यधर्माणं सत्यं धर्मो यस्य सः सत्यधर्मा "धर्मादनिच् केवलात्" पा० ५।४।१२४। [illegible]॥ तं सत्यधर्माणं सत्यधर्मस्वरूपं देवं द्योतमानं परमात्मानं ज्ञात्वा उपस्तुहि आत्मतत्त्वपरिज्ञानेन उपेत्य स्तुतिं कुरु। परमात्मस्तुत्या शान्तिमाप्नुहि इत्यर्थः। अमीवचातनम् = "अम रोगे" इत्यस्मात् "शेवयह्वजिह्वाग्रीवाप्वामीवाः" उणादि० १।१५३ इति वन्प्रत्ययः। ईडागमे च निपातितः। "चदे चते याचने" इत्येतस्मात् हिंसार्थात् "णिजन्तान्नन्द्यादित्वात् ल्युः" पा० ३।१।१३४। योरनादेशः। "णेरनिटि" इति णिलोपः। अमीवानां चातनम् इति तत्पुरुषसमासः।

इति श्री सारस्वतान्वय लैया ग्रामवास्तव्य न्यायभूषणोपपद जगन्नाथशास्त्रिकृतायां वेदगीतार्थबोधिन्यां पंचमोऽध्यायः समाप्तः॥५॥

अथ षष्ठाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे सुदर्शनम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेद गीता पृथक्त्वं नो ज्ञेयो ब्रह्मप्रकीर्तनात् ॥२॥

अनाश्रित इति = यः कर्मानुष्ठानकर्ता मुमुक्षुः पुरुषः कर्मफलं ज्योतिष्टोम पुत्रेष्ट्यादि-यज्ञानां कर्मणां स्वर्ग पुत्रादि लब्धिफलम् अनाश्रितः आश्रयमप्राप्तः निष्कामः सन् कार्यं नियमपूर्वकं कर्तव्यं कर्म ब्रह्मयज्ञादिकं कर्म श्रद्धया करोति अनुतिष्ठति स यतिः एव संन्यासी कर्मफलपरित्यागात् सम्यक् त्यागी भवति। स च योगी कर्म योगसमाहितचित्तत्वात् योगी भवति। न निरग्निः श्रौतस्मार्ताग्नित्यागकर्ता संन्यासी न भवति। न च अक्रियः संध्योपासनादि नित्यनैमित्तिक कर्म परित्यागात् योगी भवति ॥१॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्। स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ऋ० १०।१०७।६॥

तमेवेति = यः प्रथमः मुक्त्यै प्रधानभूतः दक्षिणया पटुतया दक्षिणाप्रदानेन वा-ब्रह्मयज्ञादिपूर्त्यै रराध परं ब्रह्म आराधयति न तु स्वर्गादि पदार्थान् आराधयति। सः शुक्रस्य ज्योतिःस्वरूपस्य परमात्मनः तिस्रः त्रिसंख्यापरिमिताः तन्वः आध्यात्मिकाधिभौतिकाधिदैविक स्वरूपाणि शरीराणि वेद जानाति। तं ब्रह्मविदं जनं एव ऋषिं निष्कामकर्मकरणेन अतीन्द्रियार्थदर्शिनं योगिनं आहुः कथयन्ति। तमु=तमेव ब्रह्माणं ब्रह्मज्ञातारं आहुः कथयन्ति। तमेव यज्ञन्यं=यज्ञस्य निष्कामकर्म यज्ञस्य नेतारं आहुः। तमेव सामगां सामवेदस्य गातारम् आहुः कथयन्ति। तमु=तमेव उक्थशासम् उक्थानि सामवेदावयवान् शंसतीति उक्थशासः तम् उक्थशासं जीवन्मुक्तिमहाव्रत धारकमाहुः कथयन्ति॥

यमिति = हे पाण्डव! हे पाण्डुपुत्र! अर्जुन! यं कर्मफलत्यागलक्षणं धर्मं संन्यासं प्राहुः-वदन्ति त्वं तमेव योगं कर्मयोगं विद्धि जानीहि। हीति निश्चये। असंन्यस्तसंकल्पः अपरित्यागवासनः कश्चित् ब्राह्मणो वा यतिर्वाऽन्यो वा योगी कर्मफलाकांक्षाराहित्येन शुद्धचित्तः न भवति ॥२॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥

(वेदमंत्रो न लभ्यते)

आरुरुक्षोरिति = योगं कर्मफलनिरपेक्षत्वेन चित्तशुद्धिरूपं कर्मयोगं आरुरुक्षोः मुक्तिप्राप्त्यै ज्ञानयोगं प्राप्तुमिच्छोः मुनेः मननशीलस्य गृहस्थस्य कर्म निष्काम कर्म योग एव कारणं हेतुरुच्यते। योगारूढस्य योगं ज्ञानयोगम् आरूढस्य संप्राप्तवतः तस्यैव गृहस्थस्य यतेः शमः बाह्यविषयोपरतिरेव कारणं हेतुरुच्यते ॥३॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥३॥
(वेदमंत्रो न लभ्यते)

यदेति = हीति निश्चये। यदा यस्मिन् काले यतिः इन्द्रियार्थेषु इन्द्रियाणां चक्षुरादीनां अर्थेषु शब्दादिविषयेषु न अनुषज्जते आसक्तिं न करोति, सर्वसंकल्पसंन्यासी सर्वे संकल्पाः सर्वसंकल्पाः सर्वविषयाः तान् संन्यसितुं शीलं अस्यास्तीति सर्वसंकल्पसंन्यासी तदा तस्मिन् काले योगारूढः योगं ज्ञानयोगं आरूढः प्राप्तः स्थितप्रज्ञः जीवन्मुक्तः इति विद्वद्भिः उच्यते कथ्यते॥४॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते॥४॥

जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणम्। अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम्॥ ऋ० १०।११३।४॥

जज्ञानेति = स जीवात्मा ब्रह्मविद् यतिः जज्ञानः ब्रह्मज्ञानप्राप्त्यै प्रयत्नं कुर्वाणः एव स्पृधः इन्द्रियार्थान् शत्रून् व्यबाधत अत्यर्थं पीडयति वशीकुरुते। व्यबाधत = लडर्थे लङ्। अर्थात् इन्द्रियविषयविमुखो भवतीत्यर्थः। वीरः इन्द्रियार्थजये समर्थः स एव ब्रह्मविद् यतिः रणं प्रापञ्चिकसंग्रामं अभिलक्ष्य पौंस्यं कर्मफलस्वर्गादिलब्ध्याकांक्षारहितम् आत्मीयं बलं प्रापश्यत प्रकर्षेण पश्यति लडर्थे लङ्लकारः। अद्रिम् अदरणशीलं सुलभतया वशेऽनागच्छन्तं, चंचलं चित्तं अवृश्चत् छिनत्ति मनोनिरोधं करोतीत्यर्थः। अवृश्चत् = वृश्चति इत्यत्र लडर्थे लङ्लकारः। सस्यदः = प्रस्रवणशीलान् ज्ञानरसप्रवाहान् अवसृजत् = अवसृजति उत्पादयति। योगारूढो भवतीत्यर्थः। अवसृजत् = अवसृजतीत्यत्र लडर्थे लङ्लकारः। तथा स एव ब्रह्मविद् यतिः स्वपस्यया मुक्तिप्राप्तिकारकशोभनकर्मेच्छया पृथुं महान्तं नाकं मुक्तिधाम अस्तभ्नात् स्तभ्नाति स्वस्मै मुक्तिधामप्राप्तिनिमित्ते निरुद्धं करोति — अर्थात् एवंविधः जीवात्मा स्थितप्रज्ञः सन् योगारूढः सन् मुक्तिधाम प्राप्नोति। अस्तभ्नात् = स्तभ्नाति 'लडर्थे लङ्लकारः'। जज्ञानः — "जनी प्रादुर्भावे" छान्दसस्य लिटः कानच्। सस्यदः — "स्यन्दू प्रस्रवणे" निनप् "शासि न लोपः"॥४॥

उद्धरेदिति = अयं जीवात्मा मुमुक्षुः संसारार्णवमग्नं आत्मानं आत्मना लोभमोहादिपरित्यागपूर्वकभगवन्नामस्मरणशीलेन आत्मज्ञानेन उद्धरेत् संसारसागरात् आत्मनः उद्धरणं कुर्यात्। आत्मानम् अविद्याऽस्मितादिभिः न अवसादयेत् न विनाशयेत्। आत्मा स्वस्य आत्मनः ज्ञानध्यानादिसत्कर्मविधानेन बन्धुः संसारदुःखार्णवतारकः। आत्मनः स्वस्य आत्मनः कामक्रोधादिदुष्कर्मविधानेन रिपुः शत्रुः एव॥५॥

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥५॥

"योऽस्मान् द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु"॥५॥
"निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम"॥६॥ अथ० १६।७। ५-६॥

य इति = यः जीवात्मा अस्मान् जीवात्मनः द्वेष्टि द्वेषं विधत्ते, प्रत्युत जीवात्मनः न उद्धरेत् तं जीवात्मानुद्धारकर्तारं आत्मा स्वयमेव द्वेष्टि द्वेषं करोति । वयं संसारसागरमग्नाः यम् आत्मज्ञानप्रवृत्तिकारकम् आत्मानं द्विष्मः द्वेषं कुर्मः स अपि आत्मानं द्वेष्टु = द्वेष्टि "लडर्थे लोट्" ॥४॥

निर्दूषिनामिति = निर्दूषिनं स्वात्मानुकूलम् आचरन्तं निष्पापिन्याः संसारात् बहिः निरन्तरिक्षात् अन्तरिक्षलोकात् बहिः, दिवः = दिवि "विभक्तिव्यत्ययः" मुक्तिधाम्नि भजाम सेवामहे पश्यामेति भवः

बन्धुरिति = येन विज्ञातात्मतत्त्वेन आत्मना आत्मा रागद्वेषादीन् तिरस्कृत्य कार्यकारणसंघात एव जितः निर्जितः, तस्य आत्मनः आत्मा कार्यकारणसंघातजेता बन्धुः = अतिशयेन मोक्षसुखेन बध्नातीति बन्धुः संसारदुःखार्णवतारकः भवति । अनात्मनः आत्मज्ञानरहितस्य सांसारिकजीवात्मनः तु शत्रुत्वे समाधिप्रतिरोधके सति आत्मा संसारार्णव मनसः आत्मनः शत्रुवत् भवति ॥६॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥

आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः । प्रत्नं निपाति काव्यम् ॥ ऋ० ९।६।८॥

आत्मेति = यज्ञस्य यज्ञकर्तुः देवपूजाकर्तुः विष्णुध्यानपरस्य, यद्वा यज्ञस्य आत्मभिः सह संगतिकर्तुः मुमुक्षोः आत्मा रंह्या वेगेन अतिशयेनेति यावत्, सुष्वाणः संसारार्णवपारोल्लंघनभयात् कामान् प्रेरयन् पवते संसारमलात् पुनाति । अथ च सुतः ब्रह्मज्ञानाय सम्बद्धः सन् प्रत्नं पुरातनं सृष्ट्यादौ वर्तमानं सनातनं काव्यं क्रान्तदर्शित्वं ब्रह्म निपाति अभिरक्षति

जितात्मन इति = जितात्मनः जितः निर्जितः वशीकृतः समाधिना मनो येन स जितात्मा, तस्य जितात्मनः वशीकृतचित्तस्य प्रशान्तस्य विकल्परहितस्य मुमुक्षोः परमात्मा परं ब्रह्म समाहितः सम्यक् आहितः अन्तर्बहिः सर्वत्र ब्रह्मस्वरूपावभासो भवति । ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रावबोधः विज्ञानं परमात्मसाक्षात्कारज्ञानं ताभ्यां तृप्तः पूर्णः विकल्पान्तरावकाशशून्यः आत्मा मनो यस्य स ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रियः विशेष्य जितानि विषयग्रहणवैमुख्यं गमितानि इन्द्रियाणि बाह्याभ्यन्तरेन्द्रियाणि येन स विजितेन्द्रियः । अत एव समलोष्टाश्मकाञ्चनः समानि तुल्यानि लोष्टः मृत्तिका, अश्मा पाषाणः, काञ्चनं सुवर्णं यस्य स समलोष्टाश्मकाञ्चनः, शीतोष्णसुखदुःखेषु शीतजन्यसुखदुःखप्राप्तौ उष्णताजन्यसुखदुःखप्राप्तौ तथा मानापमानयोः मानं प्रतिष्ठा अपमानम् अप्रतिष्ठा तयोः मानापमानयोः । कूटस्थः विपरीतप्रत्ययैः अकम्प्यः योगी ब्रह्मयोगसाधनावान् यदा भवति तदा युक्तः योगारूढः ब्रह्मपदवीं प्राप्तः इति पण्डितैः उच्यते कथ्यते ॥७-८॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ साम० १६७२ ॥
ऋ० १।२२।२१॥ यजुर्वेद ३४। ४४॥

तद्विप्रास इति = विष्णोः सर्वत्रव्यापकस्य परमात्मनः यत् परमं पदं उत्तमं पदं ब्रह्मलक्षणं पदमस्ति, तद् ब्रह्मस्वरूपं मुक्तिपदं विप्रासः मेधाविनः योगिनः जागृवांसः इन्द्रियवृत्ति-निरोधेन निष्प्रमादेन जागरणशीलाः अप्रमत्ताः ज्ञानसमुच्चयकारिणः। विपन्यवः विशेषेण परमात्मनः स्तुतिकर्तारः ज्ञानिनः सन्तः समिन्धते सम्यक् दीपयन्ति योगाभ्यासाद्युपासनाभिः प्रकाशयन्तीति भावः। विप्रासः = "आज्जसेरसुक्" पा० ७।१।५०॥ विपन्यवः स्तुत्यर्थस्य पन्धातोः बाहुलकः औणादिको युः प्रत्ययः। जागृवांसः— "जागृ निद्राक्षये" लिटः क्वसुः क्र्यादिनियमात् प्राप्तस्य इटो "वस्वेकाजाद्घसाम्" पा० ७।२।६७ इति नियमान्निवृत्तिः॥५॥

सुहृदिति = सुहृत् = सुष्ठु हृदयं यस्य स सुहृद् मित्रं, दानप्रतिदानलक्षणलक्षितं मित्रम् = "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुंक्ते भोजयते चैव षड्विधं मित्रलक्षणम्"॥ अरिः = सर्वदापकारकर्ता शत्रुः। उदासीनः = सर्वदा सर्वत्र उपेक्षावान् मध्यस्थः वादिप्रतिवादिनोः समः। द्वेष्यः = द्वेष्टुं योग्यः। बन्धुः बान्धवः। तेषु सर्वेषु तथा साधुषु सत्कर्मवत्सु पापेषु दुराचाररतेषु समबुद्धिः समानज्ञानं समानदृष्टिश्च— समा समाकृति-मापन्ना सदा सर्वत्र बुद्धिर्यस्य स समबुद्धिः विशिष्यते उत्कृष्टो भवति॥९॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥९॥

संजानीध्वं संपृच्यध्वं सं वो मनांसि जानताम्। देवा भागं यथापूर्वे संजानाना उपासते॥ अथ० ६।६४।१॥

संजानीध्वमिति = हे समबुद्धयः मुमुक्षवः! यूयं संजानीध्वं सुहृन्मित्रार्युदासीनादिकम् एकरसतया अवबोधत। अर्थात् सुहृन्मित्रार्युदासीनादिषु समानज्ञानयुक्ताः भवत। ज्ञानस्य सर्वव्यवहारमूलत्वात् आदौ ज्ञानसमतायै प्रार्थना कृता। तथा यूयं संपृच्यध्वम् = समान-ज्ञानाः सन्तः संपृक्ताः संसृष्टकार्याः भवत। तथा च वो युष्माकं मनांसि ज्ञानोत्पत्तिनिमित्ता-नि अन्तःकरणानि संजानताम् = समानम् एकविधम् अर्थं जानन्तु परस्परविरुद्धज्ञान-जनकानि मा भूवन्नित्यर्थः। तत् दृष्टान्तेन द्रढयति = यथा येन प्रकारेण पूर्वे देवाः पूर्वतनाः देवाः दानादिगुणेन दीप्यमानाः ज्ञानिनः सन्तः संजानानाः समानकार्यज्ञानाः सन्तः भागं भगवत्परिकल्पितं मुक्त्यैश्वर्यं उपासते प्राप्नुवन्ति। अतः यूयमपि परस्पर-विद्वेषपरिहारेण संजानानाः इष्टफलं भजत इति भावः। संजानध्वम् = "ज्ञा अवबोधने" "संप्रतिभ्यां अनाध्याने" इत्यात्मनेपदम्। "ज्ञाजनोर्जा" इति जादेशः। संपृच्यध्वम् = "पृची संपर्के"। अयं मन्त्रः ऋ० अष्ट०८ अध्या०८ व०४९ मं०२ पाठान्तरेणास्ति = "संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवाः भागं यथापूर्वे संजानाना उपासते"॥

योगीति = योगी ब्रह्मणि चित्तं योक्तुं स्थापयितुं शीलमस्यास्तीति योगी- योगाभ्यासशीलो यतिः, एकाकी स्वातिरिक्तजनशून्यः। निराशीः = "एकान्तवासो लघुभोजनादी मौनं निराशा करणावरोधः। मुनेरसोः संयमनं षडेते चित्तप्रसादं जनयन्ति शीघ्रम्" इति॥

अपरिग्रहः = परिग्रहः - शरीरनिर्वाहार्थं वस्तूनि भवन्ति, कौपीनकन्थातिरिक्तः परिग्रहः

VI



शरीरनिर्वाहार्थं वस्तु न्यस्ति सोऽपरिग्रहः। यतचित्तात्मा = यतौ निगृहीतौ चित्तं मनः आत्मा देहेन्द्रियादिसंघातश्च तौ उभौ येन स यतचित्तात्मा, रहसि एकान्ते गिरिगुहादौ स्थितः सततं नियमानुकूलं आत्मानं मनः स्वात्मानं वा ब्रह्मणि युञ्जीत संदधीत ॥१०॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥१०॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥ ऋ० ५।८१।१॥ यजु० ५।१४(३७।२)॥

युञ्जते इति = होत्रा ज्ञानयज्ञेन हवनकर्तारः परेभ्यः ज्ञानं दातुं शीलाः ब्रह्मविद्भ्यश्च ज्ञानं ग्रहीतुं शीलाः वा विप्राः मेधाविनः विपश्चितः अखिलविद्यायुक्तस्य ज्ञानवतोऽनुज्ञया धियः = कर्माणि बुद्धीः वा युञ्जते समादधते। वयुनावित् = वयुनं वेत्ति कान्तिर्वा प्रज्ञा वा। इव शब्दः स्वार्थेऽस्ति। यो वयुनानि प्रज्ञानानि वेत्ति सः। "अन्येषामपि दृश्यते" इत्यनेन दीर्घः। वयुनावित् प्रज्ञावेत्ता एकः एकाकी स्वातिरिक्तजनशून्य एव देवस्य सर्वप्रकाशकस्य सवितुः सर्वस्य जगतः प्रसवितुः ईश्वरस्य मही महती परिष्टुतिः परिस्तवनं "मही परिष्टुतिः" इत्यत्र विभक्तिव्यत्ययः। विदधे करोति॥

शुचाविति = शुचौ मार्जनप्रोक्षणाभ्यां शुद्धे देशे स्थाने आत्मनः स्वकीयस्य आसनं स्थितिस्थानं नात्युच्छ्रितम् अत्यन्तोन्नतिरहितं नातिनीचम् अनिम्नं चैलाजिनकुशोत्तरं चैलं वस्त्रं अजिनं वैयाघ्रं कार्ष्णं वा कुशा दर्भा उत्तरम् उपर्युपरि व्युत्क्रमेण यस्य तच्चैलाजिनकुशोत्तरम् - अधः कुशासनं ततोऽजिनं ततो वस्त्रमिति क्रमः। एवंविधं आसनं स्थिरं निश्चलं यथा स्यात्तथा प्रतिष्ठाप्य कल्पयित्वा तत्र आसने उपविश्य यतचित्तेन्द्रियक्रियः = यता वशीकृता चित्तस्य मनसः इन्द्रियाणां कर्मज्ञानोभयविधेन्द्रियाणां क्रिया चेष्टा विषयप्रवृत्तिर्वा येन स यतचित्तेन्द्रियक्रियः मनः मनोवृत्तिम् एकाग्रं लक्ष्याभिमुखं कृत्वा यतिः आत्मविशुद्धये आत्मनः पवित्रीकरणाय निःशेषवासनानिवृत्तये योगं योगसमाधिं युञ्ज्यात् कुर्यात् अभ्यसेदिति यावत्॥११-१२॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥११॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये॥१२॥

"युक्त्वाय सविता देवान्स्वर्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान्॥ यजु० ११।३॥

यद्वा = ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू। स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वाँ उपयाहि सोमम्॥ ऋ० ३।३५।४॥ अथ० २०।८६।१॥

यद्वा = उपह्वरे गिरीणां संगमे च नदीनाम्। धिया विप्रोऽजायत॥ यजु० २६।१५॥ साम० १४३। ऋ० ८।६।२८॥

युक्त्वायेति = सविता ज्ञानयोगप्रसविता योगी आत्मविशुद्धये स्वर्यतः सांसारिक-

सुखप्रापकान् देवान् कर्म ज्ञानोभयविधेन्द्रियाणि परब्रह्मणि युत्वाय युक्तं कृत्वा धिया एकाग्रबुद्ध्या दिवं दिव्यस्वरूपं परमात्मानं ध्यायति। ये च योगिनः बृहत् महत् ज्योतिः विज्ञानमयं प्रकाशं करिष्यतः संस्कुर्वन्ति "कालव्यत्ययः विभक्तिव्यत्ययश्च" । सविता जगदुत्पादकः परमेश्वरः तान् ब्रह्मविदः योगिनः प्रसुवाति प्रसौति अभ्यनुजानातीति भावः।

उपह्वरे इति = गिरीणां पर्वतानां उपह्वरे गुहासु पर्वतैकदेशे इति भावः। अथवा नदीनां संगमे नदीसंयोगस्थाने विप्रः मेधावी ज्ञानी पुरुषः धियः बुद्धीः परमेश्वर ज्ञानबुद्धीः अजायत जनयति उत्पादयति। 'अजायत' इत्यत्र लडर्थे लङ्॥

ब्रह्मणेति = हे इन्द्र! हे आत्मन्! सधमादे ब्रह्मानन्दानुभवकरणदशायां अर्थात् योगसमाधिसमये आशू शीघ्रगतिकारिणौ हरी देहदुःखहर्तारौ सखाया समानस्वरूपौ ब्रह्मयुजा आत्मनि युक्तौ हरी शरीरधारकौ प्राणापानौ ब्रह्मणा परमात्मना सह युनज्मि योगाभ्यासेन संयोजयामि। हे इन्द्र! हे आत्मन्! त्वं सुखं सुखपूर्वकं यथा स्यात्तथा स्थिरं कायशिरोग्रीवादिस्थिरतासंयुक्तं रथं देहम् अधितिष्ठन् स्थितिं कुर्वन् प्रजानन् प्रकृष्टं ज्ञानं सम्पादयन् विद्वान् ज्ञानी भूत्वा सोमम् आनन्दमयं ब्रह्मामृतरसं उपयाहि = प्राप्नुहि॥

सममिति = कायशिरोग्रीवं कायः, कटेः ऊर्ध्वप्रदेशः देहः, शिरः ग्रीवा च कायशिरोग्रीवं समं ऋजु अचलं चलनरहितं यथा स्यात्तथा धारयन् स्थिरः स्तम्भवच्चलनरहितः सन् स्वकीयं नासिकाग्रं नासिकायाः अग्रभागं नेत्राभ्यां सम्प्रेक्ष्य दृष्ट्वा दिशः = पूर्वदक्षिणादीः चकारात् आत्मशरीरं अनवलोकयन् अपश्यन् प्रशान्तात्मा प्रकर्षेण शान्तः रागद्वेषादिविमुक्तः आत्मा मनो यस्य स प्रशान्तात्मा, विगतभीः विशेषेण गता दूरीभूता भीः शत्रुप्रभृतिभयं यस्य स विगतभीः। ब्रह्मचारिव्रते स्थितः = ब्रह्मचारिणं यद् व्रतं भिक्षाचर्यवेदाभ्यासादिकं व्रतं तस्मिन् स्थितः निष्ठावान्। मनः अन्तःकरणवृत्तिं संयम्य संनिरुध्य मच्चित्तः मयि ब्रह्मणि चित्तं यस्य स मच्चितः मत्परः अहमेव परं स्थानं यस्य स मत्परः युक्तः सर्वत्र ब्रह्मैव भावयन् आसीत आसने मौनमुपविशेत् १३-१४

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः॥१४॥

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं विजहुर्वेद्याभिरोह ब्रह्माणो विचरन्त्यु त्वे॥ ऋ० १०।७१।८॥

हृदेति = सखायः समानख्यानाः समानज्ञानव्रतचारिणः सर्वमित्राः ब्राह्मणाः ब्रह्मवेत्तारः यतयः हृदा प्रशान्तचित्तेन तष्टेषु सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मविषयेषु मनसः अन्तःकरणवृत्तेः जवेषु मनोव्यापारेषु यत् ब्रह्ममयं

तत्त्वं संयजन्ते संगच्छन्ते यद्वा संपूजयन्ति। अत्र ब्रह्मसंबन्धि साधनसमये त्वं मनसश्चाञ्चल्यम् अह = निश्चयेन विजहुः = विशेषेण परित्यजन्ति। आ + अह ब्रह्माणः = ऊह्यमानं ब्रह्मविद्या श्रुति मतिलक्षणं येषां ते अहब्रह्माणः सांसारिकसंकटेषु अप्रतिबध्यमानाः त्वे = एके ब्रह्मज्ञानिनः वेद्याभिः वेदितव्याभिः ब्रह्ममयीभिः वृत्तिभिः विचरन्ति विशेषतः सर्वत्रैव चरन्ति। उ इति प्रसिद्धौ।

युञ्जन्निति = योगी योगयुक्तात्मा यतिः सदा सर्वदाकाले आत्मानं अन्तःकरणं एवमुक्तप्रकारेण युञ्जन् अनुसन्धानं कुर्वन् नियतमानसः नियतं विकारादिभ्यः परिहृतं स्थिरीकृतं वा मानसं मनः येन स नियतमानसः योगसमाधिना स्थिरचित्तः सन् निर्वाणपरमां निर्वाणं मोक्षरूपं अत्युत्कृष्टं सुखं यस्यां सा तां मत्संस्थां मम एव संस्थास्थितिर्यत्र तां शान्तिम् आत्यन्तिकसंसारोपरतिं अधिगच्छति प्राप्नोति ॥१५॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः। ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ ऋ० १०।६३।४॥

नृचक्षस इति = नृणां कर्मज्ञाननेतॄणां उभयविधेन्द्रियाणां चक्षसः द्रष्टारः नियतेन्द्रिया इति भावः। अनिमिषन्तः = निमेषम् अकुर्वाणाः सर्वदा जागरूकाः देवासः = विद्वांसः ब्रह्मज्ञानिनः अर्हणा योगसाधनेन निर्वाणयोग्यताम् आपन्नाः सन्तः बृहत् अतिमहद् ब्रह्मसंस्थास्वरूपं अमृतत्वं अमरणधर्मं निर्वाणपदवीं आनशुः प्राप्नुवन्ति। अथ च ते यतयः ज्योतीरथाः ब्रह्मज्ञानेन दीप्यमानशरीरोपेताः जीवन्मुक्ताः, अहिमायाः = केनचिदिन्द्रियविशेषेणापि अहन्तव्यप्रज्ञाः अत एव अनागसः रागद्वेषादिपापरहिताः दिवः द्युलोकस्य वर्ष्माणं देहं नाभिस्थानं ब्रह्मसंस्थां निर्वाणपरमां शान्तिं स्वस्तये अविनाशाय अनावृत्तये मुक्तिकल्याणाय वा वसते अधिवसन्तीति।

नात्यश्नत इति = हे अर्जुन! अत्यश्नतः बहुभक्षकस्य योगिनः योगः योगसिद्धिः नास्ति न सिध्यति। एकान्तं सर्वथा अनश्नतः निराहारस्य यतेः योगः नास्ति। श्रवणमनने अपि न सिध्यतः। तथा अतिस्वप्नशीलस्य अत्यन्तं शयानस्यापि योगः न सिध्यति। जाग्रतः जागरूकस्यापि योगः न सिध्यति ॥१६॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति। अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥ ऋ० १०।१०।८॥ अथ० १८।१।९॥

न तिष्ठन्तीति = इह अस्मिन् लोके ये मुमुक्षवः जीवाः देवानां इन्द्रियाणां देहस्य शयनाशनादिकार्येषु स्पशः चराः दूतवत्कार्यसम्पादकाः चरन्ति भ्रमन्ति। एते जीवाः योगसाधनाय न तिष्ठन्ति योगसमाधौ स्थितिं न कुर्वन्ति। एते एव न निमिषन्ति पक्ष्मसंकोचनं न कुर्वन्ति, योगसमाधये जाग्रतीत्यर्थः। अतिजाग्रतामपि योगः

न सिध्यति। हे आहनः! = आङ्पूर्वात् हन्तेः असुन् प्रत्ययः। हे आहन्तः! हे योगाभ्यासनिमित्त अहन्तः योगिन्! मत् मत्तः मच्छक्तितः मद्ध्यानतः एव अन्येन सह देहरक्षणनिमित्ते युक्ताहारशयनादिभिः सह त्वं तूर्णं याहि गच्छ रमस्व चेति शेषः। तेन युक्ताहारविहारादिना सह रथ्याइव चक्रा इव = रथाधाराणि चक्राणि अक्षेण सह संश्लेषं कुर्वन्ति यथा तथा त्वमपि योगसमाधिना संश्लेषं कुरु॥१६॥

युक्ताहारेति = युक्ताहारविहारस्य युक्तः नियतपरिमाणः आहारः भोजनं, विहारः विश्रान्त्यै संचारो यस्य स युक्ताहारविहारः तस्य परिमितभोजनसंचारस्य कर्मसु अन्नादानादि क्रियासु युक्तचेष्टस्य = युक्ता कार्यसिद्धि परिमिता चेष्टा देहेन्द्रियादिव्यापारो यस्य तस्य, ~~योगिनः यतेः योगः समाधिः दुःखहा आध्यात्मिकजन्मादिदुःखानि~~ युक्तस्वप्नावबोधस्य = युक्तौ परिमितौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य योगिनः यतेः योगः समाधिः दुःखहा आध्यात्मिकजन्मादिदुःखानि ज्ञानानुष्ठानेन हन्तीति दुःखहा भवति विदेहमुक्तिं सम्पादयतीत्यर्थः॥१७॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥१७॥

आज्यस्य परमेष्ठिञ्जातवेदस्तनूवशिन्। अग्ने! तौलस्य प्राशान यातुधानान् विलापय॥ अथ० १।७।२॥

आज्यस्येति = हे परमेष्ठिन्! परमे अत्युत्कृष्टे योगासने स्थिन् वासं कर्तुं शीलः योगिन्! हे जातवेदः हे ब्रह्मज्ञानिन्! हे तनूवशिन्! हे युक्ताहारविहारादिभिः कर्मभिः स्वतनूं वशे कर्तुं शीलं यस्य सः तत्सम्बुद्धौ, स्वशरीरसंयन्तः! हे अग्ने हे जीवात्मन्! त्वं तौलस्य तुलया तुलितस्य परिमितस्येति यावत् आज्यस्य घृतस्य "कर्मणि षष्ठी" प्राशान भोजनं कुरु नत्वधिकम् — यातुधानान् पीडाकरान् योगबाधकान् दुष्टरोगान् विलापय विलोपय विनाशयेति भावः।

यदेति = योगिनः यदा यस्मिन् काले विनियतं विषयसम्बन्धावरुद्धं चित्तं आत्मनि परब्रह्मणि अवतिष्ठते स्थिरीभवति। यदा च सर्वकामेभ्यः सर्वविषयेभ्यः निस्पृहः निरिच्छुः भवति अर्थात् विषयेषु इन्द्रियाणि न प्रवर्तयति तदा तस्मिन्काले युक्तः योगारूढः इति विद्वद्भिः उच्यते कथ्यते॥१८

यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निःस्पृहः सर्वकामेभ्यः युक्त इत्युच्यते तदा॥१८॥

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥ यजु० १९।७५॥

अन्नादिति = अन्नात् भक्ष्यादि विषयात् परिस्रुतः सर्वतः स्रुतः परिपक्वात् फलस्वरूपात् रसं "ब्रह्ममयरसम्" ब्रह्मणा ब्रह्मस्वरूपेण आत्मना आत्मा व्यपिबत् पिबति गृह्णाति। प्रजापतिः स्वोत्पन्नविचार सन्ततिपरिरक्षकः अयमेव

यतिः क्षत्रं निजरक्षां पयः दुग्धमिव सोमं सत्वगुणं यद्वा ब्रह्मस्वरूपं व्यपिबत् पिबति गृह्णाति। स यतिः एव ऋतेन सत्यस्वरूपेण आत्मना सत्यं सत्यस्वरूपं ब्रह्म इन्द्रियम् इन्द्रेण जीवात्मना जुष्टं विपानं विविधं पानं रक्षणं यस्मात् तथाभूतं — शुक्रम् पवित्रम् अन्धसः मोहविष्टस्य इन्द्रस्य जीवात्मनः इन्द्रियं विज्ञानसाधकं इदं पयः सुखसाधकं अमृतम् = मृत्युरोगात् पृथक्करणम् अमरत्वधर्मोपेतं वा मधु मधुरं पदं मुक्तत्वपदं प्राप्नोति ॥१८॥

यथेति = यथा येन प्रकारेण दीपः निवातस्थः वायुरहितस्थाने स्थितः नङ्गते न चेष्टते। यतचित्तस्य आत्मनः योगं परमात्मसंबन्धि योगं समाधिं युञ्जतः अनुष्ठातुः योगिनः यतेः सा उपमा निवातस्थदीपोपमा स्मृता कथिता। यथा निवातस्थः दीपः न चलति तथा ब्रह्मविदः ब्रह्मणि स्थापितं चित्तं न चलति ॥१९॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति। इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ ऋ० १।१६४।२१॥ अथ० ९।९।२२॥

यत्रेति = यत्र यस्मिन् योगिनि यतौ सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय कुशलानि चक्षुरादीनि इन्द्रियाणि अमृतस्य भागं विषयावच्छिन्नचैतन्यं अमृतम् इत्युच्यते। तस्य भागं भजनीयं स्वस्वांशम् अनिमेषं निमेषरहितं सततं यथा स्यात्तथा विदथा वेदनेन परमात्मध्यानात्मकेन ज्ञानेन वृत्यवच्छिन्नचैतन्येन अभिस्वरन्ति अभिप्रयन्ति आवरणापगमेन स्फारयन्ति। यः अस्य देहेन्द्रियसंघातस्य इनः स्वामी स एव विश्वस्य सर्वस्य भुवनस्य देहस्वरूपभुवनस्य गोपाः रक्षिता। स एव धीरः समाधिनिष्ठः सर्वदा अविक्रियः अत्र अस्मिं योगसमाधौ मा = माम् योगनिष्ठं मुमुक्षुं पाकं परिपक्वमनस्कं निर्मलदर्पणवदति निर्मलसत्वोद्रिक्तमनस्कं आविवेश आविशतु ॥१०॥

यत्रेति = योगसेवया योगस्य योगसमाधेः सेवया अनुष्ठानेन निरुद्धं सांसारिकविषयविनिवृत्तं ब्रह्मवृत्तौ स्थापितं चित्तं मनः यत्र यस्यामवस्थायां उपरमते सांसारिकविषयेभ्यः उपशमं गच्छति, यत्र यस्यां चित्तपरिपक्वावस्थायां आत्मना स्वस्वरूपेण आत्मनि निर्मलान्तःकरणे आत्मानं ब्रह्मस्वरूपं पश्यन् अवलोकयन् तुष्यति आनन्दं प्राप्नोति ॥२०॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह। ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे ब्रह्मणे स्वाहा ॥ अथ० १९।४३।१॥

यत्रेति = यत्र यस्यामवस्थायां यद्वा यस्मिन् स्थाने ब्रह्मविदः योगसमाधिना ब्रह्मस्वरूपं जानन्तः दीक्षया दण्डकृष्णाजिनमेखलाधारण—

लिकया, तपसा योगव्रतादिना तपसा ब्रह्मपदवीं यान्ति गच्छन्ति। तत्र तस्यां ब्रह्मपदव्यां ब्रह्मा जगत्स्रष्टा परमेश्वरः मा मां नयतु प्रापयतु गमयतु इति यावत्। ब्रह्मा परमात्मा ब्रह्म स्वस्वरूपभूतं योगसमाधिजन्यं ज्ञानं तेजो वा मे मह्यं ब्रह्मविदे दधातु धारयतु। ब्रह्मणे सच्चिदानन्दस्वरूपाय परब्रह्मणे इदं शरीरं स्वाहा सुहुतं सुदत्तम् अस्तु॥

सुखमिति = यत्र यस्यां शुद्धसत्वप्राप्तिदशायां ब्रह्मवेत्ता यतिः बुद्धिग्राह्यं सूक्ष्मवृत्त्यैकगम्यम् अतीन्द्रियम् इन्द्रियागोचरम् आत्यन्तिकम् अन्तिकमतिक्रम्य वर्तमानम् आत्यन्तिकम् उत्पत्तिविनाशरहितम् यत् तत् सुखं वेत्ति जानाति। यत्र अयं योगी स्थितः स्थितिं प्राप्तः सन् तत्त्वतः परमार्थस्वरूपात् न चलति न प्रभ्रश्यति॥ २१॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥२१॥

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य। वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै॥ ऋ० १।६७।४॥

य ईमिति = यः पुमान् ईम् एनं गुहाभवन्तं हृदयाकाशे भवन्तं विद्यमानं सुखस्वरूपं परं ब्रह्म चिकेत जानाति, यश्च ऋतस्य सत्यस्य धारां धारयितारं ईम् एनं परमात्मानं आससाद उपास्ते। ये च ब्रह्मनिष्ठाः ऋता ऋतानि सत्यस्वरूपाणि सुखानि सपन्तः समवयन्तः एतं परमात्मानं विचृतन्ति स्तुतीः कुर्वन्ति, आदित् = तदनन्तरमेव अस्मै स्तुतिकर्त्रे जनाय वसूनि वासस्थानं मुक्तिधाम प्रववाच प्रकथयति परमात्मा प्रयच्छतीति भावः।

यमिति = यम् आत्मोपलब्धि परमकारणं निर्विकल्पसमाधिं लब्ध्वा प्राप्य यतिः अपरं ब्रह्मप्राप्तिभिन्नं लाभं ततः निर्विकल्पसमाधेः अधिकं विशेषं न मन्यते न स्वीकरोति। यस्मिन् निर्विकल्पसमाधौ स्थितः स्थितिं प्राप्तः सन् गुरुणा आधिभौतिकादिना महता दुःखेन न विचाल्यते चालयितुं न शक्यते॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते॥२२॥

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत्॥ ऋ०१।१५६।२॥

य इति = यः ब्रह्मविद् यतिः पूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः। वेधसे विविधजगत्कर्त्रे नवीयसे नित्यनूतनाय अत्यन्तरमणीयायेत्यर्थः। सुमज्जानये = स्वयमेवोत्पन्नाय "जने रौणादिक इण्", "सुमत् स्वयम्" इति यास्कः। विष्णवे व्यापकाय परब्रह्मणे ददाशति निर्विकल्पसमाधिना मनोवृत्त्यादिकं ददाति। यश्च ब्रह्मविद् यतिः अस्य विष्णोः महतः महानुभावस्य महि = महत् जातं हिरण्यगर्भादिरूपं जन्म ब्रुवत् ब्रूयात् संकीर्तयेत। से दु = स एव अपि - "इत एवार्थकः" "उ अप्यर्थकः"। स्तोता ब्रह्मविद् यतिः श्रवोभिः कीर्तिभिः युज्यं चित् = ब्रह्मवेत्तृभिः गन्तव्यं तत् मुक्ति-

पदं अभि आभिमुख्येन असत् गच्छति प्राप्नोति ॥

तमिति = दुःखसंयोगवियोगं दुःखशब्दसम्बन्धि सुखमपि च गृह्यते। दुःखानां आध्यात्मिकादीनां सुखानां पुत्रवित्तादिजनितसुखानां संयोगः संसर्गः तेन वियोगः यस्य स दुःखसंयोगवियोगः शुद्धान्तःकरणस्थितिविशेषः तं योगसंज्ञितं योग-इति संज्ञितं = संज्ञा यस्य स योगसंज्ञितः तं योगसंज्ञितं योगं विद्यात् जानीयात् स एव निर्विकल्पसमाधिमयः योगः निश्चयेन शास्त्र प्रतिपादितविज्ञप्रत्यक्ष-मेवेति निश्चयेन चित्तदार्ढ्येन अनिर्विण्णचेतसा अनिर्विण्णेन तीव्रमोक्षेच्छारहि-तेन चेतसा मनसा योक्तव्यः समीचीनतया कर्तव्यः ॥२३॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३॥

सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ यजु० ४०। ११॥

सम्भूतिमिति = सम्भूतिञ्च समस्तजगतः संभवैकहेतुं परं ब्रह्म च विनाशञ्च विनाशि शरीरं च यः योगी तदुभयं वेद जानाति, सह = एकीभूतम्। शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति, स विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वा उत्तीर्य सम्भूत्या आत्म-विज्ञानेन अनिर्विण्णचेतो युक्तेन ब्रह्मध्यानेन अमृतत्वं मुक्तिपदम् अश्नुते प्राप्नोति॥

संकल्पेति = संकल्पप्रभवान् सम्यकतया कल्पनं संकल्पः ततः प्रभवन्तीति संकल्प-प्रभवाः संकल्पोत्पन्नाः तान् संकल्पप्रभवान् कामान् मनोरथान् सर्वान् सकलान् अशेषतः संपूर्णतया त्यक्त्वा विहाय मनसा कामसंकल्परहितमनसा इन्द्रियग्रामं चक्षुरादीन्द्रियसमूहं समन्ततः सर्वतः विनियम्य तत्प्रवृत्तिं निगृह्य शनैः शनैः क्रमशः उपरमेत उपरतिं कुर्यात्। तथा धृतिगृहीतया धृत्या धैर्येण गृहीतया वशीकृतया बुद्ध्या मत्या मनः चित्तं आत्मसंस्थं आत्मनि चैतन्यस्वरूपे स्थितिं कृत्वा स्वयं किञ्चिदपि बाह्याभ्यन्तरं किमपि वस्तु न चिन्तयेत् चिन्तनं न कुर्यात् ॥ २४-२५॥

संकल्पप्रभवान्कामाँस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२५॥

धृषतश्चिद्धृषन्मनः कृणोषीन्द्र यत्त्वम्। तीव्रैः सोमैः सपर्यतो नमोभिः प्रति-भूषतो मन्द्रा इन्द्रस्य रातयः ॥ ऋ० ८।६२।५॥

यद्वा = आदधामि ते पदं समिद्धे जातवेदसि। अग्निः शरीरं वेवेष्टु सुं वागपि-गच्छतु ॥ अथ० २। १२। ८॥

धृषत इति = हे इन्द्र! हे जीवात्मन्! त्वं धृषतः चित् धृष्टादपि धृषत् धृष्टं चञ्चलं मनः "मनःशब्देन सर्वाणीन्द्रियाणि गृह्यन्ते"। इन्द्रियत्वम् इन्द्रियग्रामं सर्वविषय-ग्राहकं कृणोषि करोषि विधत्से। यत् यस्मात् कारणात् त्वं तीव्रैः तीक्ष्णैः सोमैः

शान्तिमयैः स्तोत्रैः सपर्यत: पूजयत: नमोभिः नमस्कारैः प्रतिभूषयत: अलंकुर्वत: इन्द्रस्य जीवात्मनः रातयः ज्ञानानि भद्राः कल्याणकराणि भवन्ति ।९। *यद्वा = ओदसामीति = (New Para) तथा समिद्धे सम्यक् प्रकाशमाने

*New para

जातवेदसि परब्रह्मणि – "जातवेदाः कस्मात् ? जातानि वेद, जातानि वैनं विदुः, जाते जाते विद्यते इति वा । निरू. ७।१९ ॥ तत्र ब्रह्मनिष्ठस्य पदं प्राप्तिस्थानं मुक्तिधाम इत्यर्थः। आदधामि आ समन्तात् धारयामि । अग्निः परमात्मा त्वदीयं शरीरजन्यं विकृतभावं दहतु । वाक् अपि = वागिन्द्रियमपि असुं प्राणमयं ब्रह्म गच्छतु प्राप्नोतु ॥८॥

यत इति = संकल्पवेगात् चंचलं रागादिदोषग्रस्तत्वात् अस्थिरं अव्यवस्थं मनः यतः यतः यं यं विषयमुद्दिश्य निश्चरति निर्गच्छति ततस्ततः तस्मात् तस्मात् विषयात् नियम्य संरुध्य एतत् मनः आत्मनि स्वस्मिन्नेव वशं नयेत् प्राप्नुयात् ॥२६॥

यतो यतो निश्चरति मनश्चंचलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

अन्तरिक्षेण पतति विश्वा रूपावचाकशत् । मुनिर्देवस्य देवस्य सौकृत्याय सखा हितः ॥ ऋ. १०।१३६।४॥

अन्तरिक्षेणेति = चंचलमस्थिरम् एतत् मनः विश्वा विश्वानि सर्वाणि रूपा रूपाणि रूप्यमाणानि पदार्थजातानि अवचाकशत् अभिपश्यत् सत् स्वतेजसा च दर्शयत् अन्तरिक्षेण आकाशेन पतति गच्छति । चञ्चलं मनः सर्वत्र गच्छतीत्यर्थः । मुनिः मुन्यवस्थां गतं तत् मनः सर्वविषयेभ्यः उपरतं सत् देवस्य द्योतमानस्य शुद्धस्वरूपस्य देवस्य आत्मनः सखा सखिभूतम् अत एव सौकृत्याय सुष्ठु परमात्मानम् उद्दिश्य क्रियमाणं कर्म सुकृतं तस्य भावाय योगसमाधेः सम्यगनुष्ठापनाय हितः स्थापितं भवति । मुनिः, सखा, हितः एतत्पदत्रये लिङ्गव्यत्ययः ॥

प्रशान्तमनसमिति = शान्तरजसं शान्तः उपरतः रजोगुणः यस्य तं तथाभूतम् अकल्मषं, कल्मषं भेदवासना, नास्ति कल्मषं भेदवासना यस्य तं तथाभूतम् अत एव ब्रह्मभूतं सर्वत्र ब्रह्मदृष्टिमानसं योगिनं ब्रह्मविदम् उत्तमम् अत्युत्कृष्टं सुखं ब्रह्मानन्दसुखमुपैति प्राप्नोति ॥२७॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ यजु. ११।१॥

यद्वा = वातस्याश्वो वायोः सखाथो देवेषितो मुनिः । उभौ समुद्रावाक्षेति यश्च पूर्व उतापरः ॥ ऋ. १०।१३६।५॥

युञ्जान इति = सविता ज्ञानेन स्वान्तःकरणद्वारा स्वस्मै ब्रह्मपदव्युत्पादकः मनुष्यः यद्वा ऐश्वर्याभिलाषुकः मनुष्यः इति स्वामी दयानन्दः । यतः तत्त्वाय ब्रह्मज्ञानतत्त्वप्राप्तये प्रथमम् आदौ मनः अन्तःकरणम् धियः तद्विषयप्राप्तिकर्त्रीः बुद्धीः युञ्जानः योगाभ्यासद्वारा स्वात्मनि अनुसन्दधानः अग्नेः प्रकाशस्वरूपस्य परब्रह्मणः ज्योतिः

प्रकाशमयं स्वरूपं निचाय्य निश्चित्य पृथिव्याः अपि मर्त्यलोकात् उपरि आभरत_ सम्यग्भूततया धारयति। आभरत इत्यत्र लडर्थे लङ्॥

यद्वा="वातस्येति" = वातस्य वायोः अश्वः अशिता भोक्ता मुनिः मन्ता ब्रह्मवित् यतिः वायोः परमात्मनः सखा मित्रभूतः परमात्मध्यानलग्नः अथो अपि च देवेषितः देवेन द्योतमानेन परमात्मना इषितः ब्रह्मज्ञानप्राप्तये प्रेरितः उभौ समुद्रौ आक्षेव समुद्रौ संसारार्णवम् अनेनैव देहेन आकाशार्णवं दिव्यदेहेन आक्षेति अभिगच्छति। "क्षि निवासगत्योः" छान्दसो विकरणस्य लुक्। कौ तौ समुद्रौ यः पूर्वः समुद्रः जीवन्मुक्त्यपेक्षया दैहिकसम्बन्धार्णवः उत अपि च अपरः कैवल्यमुक्त्यपेक्षया अपरः देहविनाशानन्तरे कैवल्यमुक्त्यर्णवः जीवन्मुक्त्यवस्थायां पूर्वस्मिन् समुद्रे वासः, कैवल्यमुक्त्यवस्थायां च अपरसमुद्रे वास इति भावः।

सर्वभूतस्थमिति = योगयुक्तात्मा = पुरुषं मुक्त्या योजयतीति योगः, योगेन निर्विकल्पसमाधिना युक्तः आत्मा मनो यस्य स योगयुक्तात्मा अत एव सर्वत्र सर्वस्मिन् वस्तुनि समदर्शनः समभावम् आपन्नं दर्शनं यस्य स समदर्शनः ब्रह्मवित् सर्वभूतस्थम् तं तथाभूतम् आत्मानं स्वस्वरूपमेव ईक्षते पश्यति। एवञ्च सर्वभूतानि सर्वाणि भूतानि आत्मनि स्वस्वरूपे ईक्षते तत्सत्ताम् अवलोकयति॥२९॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥२९॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥ यजु० ४०।६॥

यइति = यः शान्तः जितेन्द्रियः ब्रह्मवित् यतिः सर्वाणि सकलानि भूतानि चेतनाचेतनानि आत्मन् आत्मनि स्वस्वरूपे "मयि एव सर्वाणि भूतानि अवस्थितानि न मद्व्यतिरिक्तानि" इत्येवानुपश्यति अनुभवति। सर्वभूतेषु सर्वेषु चेतनाचेतनेषु पदार्थेषु च आत्मानं स्वस्वरूपं पश्यति निरीक्षते। ततः एवंविधानुभवे सति न विचिकित्सति निन्द्याचरणं न विधत्ते, एवं पश्यतो योगिनः परब्रह्मरूपाणि आत्मसंस्थानि भवन्ति। विज्ञानघनानन्दैकत्वात् अतो विचारात् न निवर्तते इति भावः॥

य इति = यः निर्विकल्पयोगसमाधिनिष्ठः ब्रह्मवित् यतिः मां सच्चिदानन्दैकरसं मां परं ब्रह्म सर्वत्र चराचरपदार्थेषु पश्यति अवलोकयति, सर्वं च सकलं ब्रह्मादिस्तम्बपर्यन्तं पदार्थमात्रं मयि परे ब्रह्मणि पश्यति अनुभवति, सदा एव एकत्वं पश्यतः तस्य यतेः अहं सच्चिदानन्दस्वरूपः परं ब्रह्म न प्रणश्यामि अदर्शनं न प्राप्नोमि। तद्दृते रविक्षयं न गच्छामीति भावः। स च ब्रह्मवित् यतिरपि मे मम परब्रह्मणः न प्रणश्यति अनात्म्यतादात्म्यमतिं न करोति॥३०॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥३०॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोकः एकत्वमनुपश्यतः॥ यजु० ४०।७॥

यस्मिन्निति = यस्मिन् निर्विकल्पयोगसमाध्यवस्थाविशेषे एकत्वं सर्वत्र ब्रह्माद्वैत-भावमनुपश्यतः अवलोकयतः सर्वाणि भूतानि एकत्वेन ध्यायतः विजानतः "आत्मैवेदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्येवमादिवाक्यविचारेण विधूतविज्ञानस्य सर्वाणि भूतानि चेतनाचेतनानि आत्मा एवाभूत् संभवति। आत्मज्ञानमग्ने मनसि यतिः जगत् पश्यन्नपि न पश्यति सर्वत्रात्मानं पश्यति आत्मानमनुभवति च। अन्यत् न-किञ्चिदनुभवति। तत्र अवस्थाविशेषे योगिनः कः मोहः कः शोकः! न कश्चिदपि इत्यभिप्रायः।

सर्वभूतेति = एकत्वं समभावम् आस्थितः स्थितिं कुर्वन् यः ब्रह्मवित् यतिः सर्वभूत-स्थितं सर्वेषु भूतेषु चराचरपदार्थेषु स्थितं विद्यमानं मां निर्विशेषं परं ब्रह्म भजति सेवते मद्भावमापन्नः स योगी सर्वथा सर्वप्रकारेण वर्तमानः अपि स्वप्रारब्धकर्मानुसारेण वि-विधकर्म कुर्वन्नपि वर्तते ऽस्मिन् मयि मत्स्वरूपे वर्तते तिष्ठति ॥ ३१॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१॥

पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषेऽर्पितानि। एतत्त्वाऽत्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥ यजु. २३।५२॥

पञ्चस्विति = हे मुमुक्षो! हे जीवात्मन्! पंचसु पृथिव्यादि पंचभूतेषु तन्मात्रासु च अन्त-र्मध्ये पुरुषः परमात्मा आविवेश। ओतप्रोतत्वेन प्रविष्टो वर्तते। तानि पंचभूतानि तन्मात्राश्च पुरुषे परब्रह्मणि अन्तः मध्ये अर्पितानि स्थितानि सन्ति। एतत् ब्रह्मैकत्वस्वरूपम् अत्र एवं-विषये त्वा त्वां भवन्तं मुमुक्षुं जीवात्मानं प्रति मन्वानः स्वीकुर्वन् अहं परमात्मा अस्मि वर्ते। त्वं च मायया मम दैव्या ज्ञानशक्त्या उत्तरः उत्कृष्टतरः योगी भवसि। अथ च त्वं मत् मत्तः पृथक् न असि, मुक्तौ मम स्वरूपं प्राप्स्यसीति भावः।

आत्मौपम्येनेति = हे अर्जुन! यः ब्रह्मवित् यतिः सर्वत्र सर्वप्राणिषु आत्मौपम्येन स्वसादृश्येन सुखम् इष्टं यदि वा = अपि वा दुःखम् अनिष्टं समं तुल्यं यथा स्वसुखं प्रियं स्वदुःखमप्रियं भवति तथा सर्वप्राणिनामपीति बुद्ध्वा सर्वत्र समतां पश्यति निरी-क्षते एवंविधः वर्तमानः योगी परमः उत्कृष्टः मतः कथितः ॥ ३२॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२॥

आत्मानं ते मनसाराद्जानामवो दिवा पतयन्तं पतङ्गम्। शिरो अपश्यं पथिभिः सुगेभिरेरेणुभिर्जेहमानं पतत्रि ॥ यजु० २९।१७॥ ऋ० १।१६३।६॥

आत्मानमिति = हे प्रभो! हे परमात्मन्! ते तव आत्मानं स्वरूपं मनसा स्वकीयेन प्रकृष्ट-मननवता चेतसा ज्ञानधिया वा आरात् स्वसमीपे स्वस्वरूपे सर्वप्राणिषु च स्थितं यद्वा आरात् = अतिदूरे सर्वत्र स्थितं आत्मतत्त्वं अवः = अधस्तात् भूमेः भूमिमारभ्य दिवा आकाशेन सह पतंगं पतन् पतन् गच्छन्तं सर्वत्र व्यापुवन्तं पतयन्तं सर्वत्र पतन-शीलम् अजानाम् जानामि। सर्वत्र त्वां सदृशं जानामि इति भावः। यद्वा यतो दिवा अन्तरिक्षेण मार्गेण दिवि वा पतयन्तं पतङ्गं आदित्यम् अवः = व्याप्नोषि अतः त्वां

व्याप्तुं जानामि। तथा चाहं सुगेभिः शोभनगमनसाधनैः अरेणुभिः सुखदुःपांसु-शून्यैः पथिभिः मार्गैः जेहमानं सर्वत्र समानतया व्याप्नुवत् पतत्रि शीघ्रगामि शिरः = अग्रवं सर्वस्य शिरोभूतम् अपश्यम् पश्यामि॥

य इति = हे मधुसूदन! हे भगवन्! कृष्ण! त्वया श्रीमता यतिकर्तव्यत्वेन योऽयं निर्विकल्पसमाधियोगः साम्यत्वेन तुल्यत्वेन प्रोक्तः कथितः, अहं चंचलत्वात् मनसः चंचलताकारणात् एतस्य पूर्वोक्तस्य योगस्य स्थिरां निश्चलां स्थितिं निष्ठां न पश्यामि न अवलोकयामि॥ ३३॥

चंचलमिति = हे कृष्ण! हीति निश्चये। मनः चित्तं चंचलं चपलं प्रमाथि शरीरेन्द्रियाणां प्रमथनशीलं बलवत् स्वशक्त्या वीर्यवत् दृढम् अजरं सूक्ष्मम् अस्ति। अतः अहं चांचल्यादिगुणयुक्तस्य मनसः निग्रहं निरोधं वायोः पवनस्य निग्रहमिव सुदुष्करं सुतरां दुःखेन कर्तुं शक्यं मन्ये स्वीकरोमि॥ ३४॥

अर्जुन उवाच = "योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चंचलत्वात् स्थितिं स्थिराम्॥ ३३॥
चंचलं हि मनः कृष्ण! प्रमाथि बलवद् दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥ ३४॥

यत्ते चतस्रः प्रदिशो मनो जगाम दूरकम्। तत्त आ वर्तयामसीह क्षयाय जीवसे। ऋ० १०।५८।४, १२।

यत्ते इति = हे जीवात्मन्! ते तव मनः चतस्रः प्रदिशः प्रकृष्टाः महादिशः दूरकम् अत्यन्तं दूरं यथा भवति तथा जगाम गच्छति। ते तव, तत् चंचलं मनः क्षयाय देहनिवासाय देहे स्थिरीकरणाय तथा जीवसे चिरकालजीवनप्राप्तये च आवर्तयामसि आवर्तयामि। एतदध्यायस्य समग्रः विंशः सर्गः मनश्चाञ्चल्यं प्रतिपादयति। ४, ५, ६, ७, ८, ९॥

हे महाबाहो! हे अर्जुन! मनः चलं चपलं अत एव दुर्निग्रहं दुःखेन रोद्धुं ग्रहीतुम् इति यावत् शक्यम् इति। असंशयं = अस्मिन् विषये संशयो नास्ति। हे कौन्तेय! हे कुन्तीसुत! अर्जुन! तत् चंचलं दुर्निग्रहम् अपि मनः वैराग्येण तीव्रमोक्षेच्छया समुत्पन्नं विषयवैरस्यं वैराग्यं तेन वैराग्येण गृह्यते अभ्यासेन सततं ब्रह्मप्रत्ययावृत्त्या च तन्मनः गृह्यते इति॥ ३५॥

श्री भगवानुवाच = "असंशयं महाबाहो! मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते॥ ३५॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि।
क्रतुं दधिक्रा अनु सन्तवीत्वत्पथामङ्कांस्यन्वापनीफणत्॥ ऋ० ४।४०।४॥

यद्वा = "यथा मनो मनस्केतैः परापतत्याशुमत्"। अथ० ६।१०५।१॥

यद्वा = यद्वो मनः परागतं यद् बद्धमिह वेह वा तद् आ वर्तयामसि। अथ० १२।४॥

यद्वा = "अभ्यासवैराग्याभ्यां तन्निरोधः। योगदर्शनम् १।१२॥

उत इति = स्यः "स्यशब्दे लिङ्गव्यत्ययः"। स्यशब्दे विशेषणेऽपि लिङ्गव्यत्ययो-
बोध्यः। नपुंसकलिङ्गस्थाने पुंलिङ्गव्यत्ययः। स्यः = तत् मनः वाजी = नपुंसकलिङ्ग-
स्थाने पुंलिङ्गव्यत्ययः। वाजी चंचलत्वेन बहुवेगवत् ग्रीवायां कण्ठदेशे कक्षे देह
पार्श्वदेशे आसनि मुखे बद्धं संरुद्धं वैराग्याभ्यासाभ्यां संबद्धम् अपि क्षिपणिं
क्षेपणं वैराग्याभ्यासाभ्यां दूरप्रक्षेपणं तुरण्यति सद्यः गमयति। दधिक्राः धर्त-
व्ययोः वैराग्याभ्यासयोः धारकः सन् तवीत्वत् = प्रवृद्धबलवत् भवत् पथां बहुविचारमार्गा-
णां अंकांसि सदसल्लक्षणानि क्रतुं कर्म शुभप्रज्ञां वा अनु = अनुसृत्य आपनीफणत् =
सर्वतो भृशं गच्छति॥

यक्षा = यथेति = यथा येन प्रकारेण आशुमत् शीघ्रगामि मनः चित्तं मन-
स्केतैः मनसः विषयैः सह परापतति अतिशयेन दूरं गच्छति।

यद्वा = यदिति = यत् यदि वः युष्माकं मनः परागतं चंचलत्वेन दूरं गतमायत-
यदि वा इह वा इह इतस्ततः अन्येषु विषयेषु परागतं लग्नमस्ति, वः युष्माकं
तत् चंचलं मनः अभ्यासेन वैराग्येण वा आवर्तयामसि पुनरत्रैवानयामि॥

असंयतात्मनेति = असंयतात्मना असंयतः अवशीकृतः आत्मा मनो येन स
असंयतात्मा तेन असंयतात्मना अनिरुद्धमनसा समाधिमकुर्वता यतिना ज्ञानयोगः
दुष्प्रापः दुःखेन प्राप्तुं शक्य इति मे मम श्रीकृष्णस्य यतिः इति मम सम्मतिः।
वश्यात्मना वश्यः वशीभूतः आत्मा मनो येन तथाभूतेन वश्यात्मना वशीकृतमनसा
यतता यथानियमं योगसिद्ध्यै यत्नं कुर्वता यतिना योगः ज्ञानयोगः उपायतः पूर्वोक्त
प्रकारेण उपायेन अवाप्तुं प्राप्तुं शक्यः भवति नान्यथा इति॥३६॥

असंयतात्मना योगो दुष्प्राप्य इति मे मतिः।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥३६॥

संज्ञपनं वो मनसोऽथो संज्ञपनं हृदः। अथो भगस्य यच्छ्रान्तं तेन-
संज्ञपयामि वः॥ अथ० ६।७४।२॥

संज्ञपनमिति = हे ब्रह्मवेत्तारः! हे मुमुक्षवः! वो युष्माकं योगसमाधेः प्रा-
प्तये यततां यतीनां मनसः ज्ञानसाधनस्य इन्द्रियस्य संज्ञपनं सम्यक्
ब्रह्मज्ञानजननं भवतु। अथो अपि च भगस्य ज्ञानैश्वर्यस्य प्राप्तये इति शेषः,
अथो अपि च हृदः विषयादिषु हरणशीलस्य मनसः संज्ञपनं सम्यक्तया
ब्रह्मप्राप्तिः ज्ञानजननं भूयात्। अथो अपि च भगस्य ज्ञानैश्वर्यस्य
प्राप्तये इति शेषः, यत् श्रान्तं श्रमजनितं तपोऽस्ति। तेन श्रमजनिततपसा
वः युष्मान् ब्रह्मज्ञानयोगाय यतमानान् यतीन् संज्ञपयामि समानज्ञानान्
करोमि। संज्ञपनम् = "संजानान् प्रयुंक्ते" इत्यस्मिन्नर्थे "हेतुमति च" इति णिच्।
ततः पुकि कृते "मारणतोषणनिशामनेषु ज्ञा" इति मित्वात् "मितां ह्रस्वः"
इति ह्रस्वत्वम्। "नन्दिग्रहिपचादिभ्यः" इति ल्युप्रत्ययः। श्रान्तम् "आदिकर्मणि क्तः"
इति ह्रस्वत्वम्। "नन्दिग्रहिपचादिभ्यः" इति ल्यु प्रत्ययः। श्रान्तम् "आदिकर्मणि क्तः"
श्राम्यन्ति अस्मिन् इति - "यस्य विभाषा" इति इण्निषेधः। "अनुनासिक-

स्य क्विझलोः" इति दीर्घत्वम्।

अयतिरिति = हे कृष्ण! योगसिद्ध्यै यतते इति यतिः अयतिः योगस्य सिद्ध्यै यत्नमकुर्वन् श्रद्धया उपेतः युक्तः सन् श्रद्धया योगानुष्ठानेन मोक्षाप्तिः इत्यास्तिकबुद्ध्या उपेतः मिलितः सन् योगात् ज्ञानयोगात् यद्वा योगसमाधेः चलितमानसः चलितं पतितं मानसं चित्तं यस्य स चलितमानसः विनष्टचित्तः यतिः योगसंसिद्धिं योगस्य सम्यग्ज्ञानस्य संसिद्धिं फलं अप्राप्य लाभं अकृत्वा स्वमरणानन्तरं कां गतिं स्वर्गादिप्राप्तिं गच्छति॥३७॥

कच्चिदिति = हे महाबाहो! भगवन् कृष्ण! ब्रह्मणः परमात्मनः पथि मार्गे कर्ममार्गे ज्ञानमार्गे च विमूढः कर्मदोषेण मोहं गतः अप्रतिष्ठः नास्ति प्रतिष्ठा ज्ञानकर्मान्यतरसाधनं यस्य स अप्रतिष्ठः ज्ञानकर्मान्यतरसाधनरहितः यतिः उभयभ्रष्टः कर्मयोगज्ञानयोगाभ्यां भ्रष्टः पतितः सन् छिन्नाभ्रमिव पूर्वापूर्वमेघसमूहभ्रष्टं स्वल्पाभ्रमिव छिन्नं सत् अन्तराले नश्यति स्वरूपनाशं प्राप्नोति तथायमपि नश्यति कच्चित् किम्॥३८॥

एतमिति = हे कृष्ण! त्वं मे मम एवं पूर्वप्रतिपादितं संशयं सन्देहं अशेषतः संपूर्णं यथा स्यात्तथा छेत्तुं दूरीकर्तुं अर्हसि समर्थोऽसि। त्वदन्यः त्वत्तोऽन्यः त्वदन्यः त्वद्भिन्नः देवो वा ऋषिर्वा अस्य संशयस्य संदेहस्य छेत्ता निरासकः "हीति निश्चये" न प्रपद्यते न संभवति॥३९॥

अर्जुन उवाच = "अयतिः श्रद्धयोपेतः योगाच्चलितमानसः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण! गच्छति॥३७॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति।
अप्रतिष्ठो महाबाहो! विमूढो ब्रह्मणः पथि॥३८॥
एतं मे संशयं कृष्ण! छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते॥३९॥

सेमं नः काममापृण गोभिरश्वैः शतक्रतो! स्तवाम त्वा स्वाध्यः॥
ऋ० ८।१६।९॥

सेममिति = हे शतक्रतो! शतानि क्रतवः कर्माणि यस्य स शतक्रतुः तत्संबुद्धौ हे शतक्रतो! हे शतकर्मन्! परमात्मन्! सत्वं नः अस्मदीयं इमं कामं काम्यमानं सन्देहं अश्वैः विषयं व्यापुवद्भिः गोभिः इन्द्रियैः सह आपृण अशेषतः पूरय। अस्माकं संशयं दूरीकृत्य मदिन्द्रियवृत्तिः सुस्थिरा भवतु इत्यर्थः। वयमपि स्वाध्यः सुष्ठु सर्वतः त्वद्ध्यानयुक्ताः सन्तः त्वा त्वां परमात्मानं स्तवाम संशयं छेत्तुं स्तुतिं कुर्मः। यतः त्वदन्यः संशयच्छेत्ता उत्तमः कश्चिदपि नास्ति।

पार्थ इति = हे पार्थ। हे पृथायाः पुत्र! हे अर्जुन! हे तात! मद्दत्तोपदेशं शिष्यप्रशिष्येभ्यः तनोति विस्तारयतीति भावः।

तत्संबुद्धौ हे तात! अर्जुन! तस्य योगसमाधिस्थस्य यतेः विनाशः हानिः प्रतिष्ठा भंगः इह अस्मिन् लोके नैव विद्यते नैवास्ति। तथा चामुत्र परस्मिन् लोके विनाशः दुर्योनिमयी दुर्गतिः न विद्यते। कल्याणकृत् शुभ-कर्मकृत् कश्चित् पुरुषः दुर्गतिं प्रतिष्ठाभंगं दुर्योन्यादि दुर्गतिं नहि गच्छति नहि प्राप्नोति किन्तु सद्गतिमेव गच्छति।

श्रीभगवानुवाच = पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति॥४०॥

नैनं प्राप्नोति शपथो न कृत्या नाभिशोचनम्।
नैनं विष्कन्धमश्नुते यस्त्वा बिभर्त्याञ्जन॥ अथ. ४।९।५

नैनमिति = हे आञ्जन! आ समन्तात् अनक्ति प्रकटीकरोति जगत् इति आञ्जनः तत्संबुद्धौ, हे परमात्मन्! यः ब्रह्मविद् यतिः योगी त्वा त्वां परमात्मानं बिभर्ति सर्वदा हृदये योगाभ्यासेन धारयति एनं त्वद्धातारं कल्याणकृतं पुरुषं शपथः परकृतः शपथः निन्दा अपकीर्तिर्वा न प्राप्नोति। तथा च एनं शुभकर्मकर्तारं कृत्या पराभिचारजनिता कृत्या पापमयकामना न प्राप्नोति। तथा च एनं कल्याणकृतं जनं अभिशोचनं परकृतापमानजनितशोकः न प्राप्नोति। तथा विष्कन्धं सद्योनिप्राप्त्यै विघ्नजातं अपि एनं पुण्यकर्तारं योगिनं न अश्नुते न भक्षयति। आञ्जन = "अञ्जू व्यक्तिम्रक्षणकान्ति-गतिषु"। अस्मात् आङ्पूर्वात् ल्युट् प्रत्ययः। कृत्या = "कृञः श च" इति चकारात् संज्ञायां करोतेः क्यप्। "ह्रस्वस्य पिति कृति तुक्" इति तुक्।

प्राप्येति = योगमार्गे प्रवृत्तः यतिः योगफलं न प्राप्य मरणा-नन्तरं पुण्यकृतां अश्वमेधादि यज्ञकर्तॄणां लोकान् वासस्था-नानि प्राप्य लब्ध्वा तत्र शाश्वतीः समाः बहुवर्षं यावत् उषित्वा वासं कृत्वा पुण्यक्षये सति शुचीनां पवित्रात्मनां श्रीमतां भाग्य-शालिनां गृहस्थानां गेहे भवने वंशे वा योगभ्रष्टः योगपतितः जनः अभिजायते समुत्पन्नो भवति न तु कर्मभ्रष्टो भवति॥४१॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥४१॥

आ नयैतमारभस्व सुकृतां लोकमपि गच्छतु प्रजानन्। तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमाक्रमतां तृतीयम्॥ अथ. ९।५।१॥

आनयेति = हे गुरो! एतं योगभ्रष्टं यतिम् आनय स्वसमीपं कर्ममार्गं प्रापय। यथा कर्मयोगेन योगाभ्यासमार्गं आरभस्व उपक्रमतामयम्। यथा चायं सुकृतां पुण्यकृतां लोकं स्वर्गादिलोकं अपि गच्छतु प्राप्नोतु। न जायते इति अजः जीवात्मा ज्ञानयोगकर्म-

योगाभ्यां बहुधा बहुप्रकारेण महान्ति अत्युग्राणि तमांसि पापानि तीर्त्वा पारं कृत्वा तृतीयं नाकं तृतीयं धाम मुक्तिपदम् इतिक्रमः आक्रमताम् आ समन्तात् क्रमतां प्राप्नोतु ॥

अथ वेति = अथवा मृत्योरनन्तरं धीमतामेव मेधाविनामेव योगिनां ज्ञाननिष्ठानां कुले वंशे योगभ्रष्टस्य जन्म भवति। ईदृशं वैराग्यमोक्षेच्छानुरूपं यत् जन्म तत् एतत् जन्म लोके योन्यन्तरगमनमन्तरेण दुर्लभतरं कठिनतपश्चर्यया लभ्यं भवति न लब्ध्येनैव।

अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

पुनर्मनः पुनरायुर्म आगन् वैश्वानरो अदब्धस्तनूपा। अग्निर्नः पातु दुरिताद्वद्यात् ॥ यजु० ४। १५॥

पुनरिति = मे ज्ञानयोगभ्रष्टस्य मे मम मनः विज्ञानसाधकं पुनः अपरजन्मनि आगन् प्राप्नोति। तथा चायुः जीवनं जीवनकालो वा मे मह्यम् आगन् = प्राप्नोति। पुनः मनुष्यदेहधारणानन्तरं मे मम प्राण आत्मा "अतति सर्वत्र व्याप्नोति सर्वान्तर्यामी परमात्मा स्वस्वरूपो वा अमितः आगन् प्राप्नोति। पुनः देहधारणानन्तरं मे मह्यं चक्षुः "चष्टे येन तद्" रूपग्राहकम् इन्द्रियम् मह्यम् आगन् प्राप्नोति। पुनः अग्रिमे जन्मनि श्रोत्रम् "शृणोति शब्दान् येन" तत् शब्द ग्राहकम् इन्द्रियम् मे मह्यम् आगन् प्राप्नोति। वैश्वानरः विश्वान् नरान् मुक्तौ स्वसमीपे नयतीति वैश्वानरः, परमेश्वरः अदब्धः केनापि हिंसितुमनर्हः तनूपाः = शरीरस्य गोपयिता अग्निः ज्योतिःस्वरूपविज्ञानानन्दघनमयः परमात्मा नः "वैराग्यमोक्षेच्छानुरूपजन्मधारकान् योगभ्रष्टान् अस्मान् दुरितात् पापजन्यप्राप्तव्य दुर्योन्यादिगतिदुःखात् अवद्यात् पापाचरणात् पातु रक्षतु अस्माकं जन्म धीमतां योगिनां कुले भूयात् ॥

तत्रेति = तत्र ज्ञानियोगिकुले जन्म गृहीत्वा स योगी पौर्वदेहिकं पूर्वजन्मनि लब्धं तं बुद्धिसंयोगं ज्ञानयोगं लभते प्राप्नोति। ततः ज्ञानयोगसिद्ध्यनन्तरं भूयः पुनः अस्मिन् जन्मनि संसिद्धौ ज्ञानसंसिद्धिनिमित्तं मुक्तिनिमित्तमिति यावत् यतते प्रयत्नं करोति हे कुरुनन्दन! हे अर्जुन। ॥४३॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३॥

एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ। जूरसि धृता मनसा जुष्टा विष्णवे। यजु० ४। १७॥

एषेति = हे शुक्र! हे सत्वगुणविशिष्ट! यते! पूर्वजन्मनि योगभ्रष्टानन्तरं मृत्युं प्राप्य एषा एतज्जन्मविशिष्टा तनूः शरीरं ते त्वया विष्णवे परमेश्वरप्राप्तये मुक्तये इत्यर्थः – धृता गृहीता। मनसा मनोनिरोधपूर्वकं ज्ञानसंयोगेन जुष्टा सेविता अस्ति। तया ज्ञानयुक्तया परमात्मार्पितया तन्वा जूः असि = योगिनां जीवनं प्राप्तोऽसि। यद्वा तया लब्धया तन्वा जूः असि = ज्ञानवान् असि। तथैव एतत् प्रत्यक्षस्वरूपं वर्चः विज्ञानं तेजो वा सम्भव समीचीनतया निष्पादय तया प्रत्यक्षीभूतया तन्वा परिपूर्णज्ञानप्रयत्नेन भ्राजं प्रकाशस्वरूपं परं ब्रह्म

गच्छ प्राप्नुहि। जूः = "जीव् प्राणधारणे" - अस्य क्विबन्तस्यापि डूप्रत्यये जूः इति भवति। जुष्टा = जुषी प्रीतिसेवनयोः"।

पूर्वाभ्यासेनेति = हि यस्मात् कारणात् तेनैव पूर्वाभ्यासेन अभ्यासेन सततं समाधया वृत्त्या सः योगपतितः यतिः अवशः अनिच्छन् अपि ह्रियेत बलात्कारेण योगसमाधौ स्थाप्यते। योगस्य निर्विकल्पसमाधिप्राप्यस्य परमात्मनः जिज्ञासुः ज्ञातुमिच्छुः शब्दब्रह्म "अहमेव ब्रह्मास्मि" इति केवलेन शब्दमात्रेण उच्चार्यमाणं ब्रह्मभावं अतिवर्तते परित्यज्य प्रवर्तते अपितु स्वानुभवप्राप्यं ब्रह्मत्वं अधिगच्छतीति भावः॥ यद्वा शब्दब्रह्म वेदः तं वेदप्रतिपादितं सकामकर्म त्यक्त्वा प्रवर्तते इति॥४४॥

पूर्वाभ्यासेन तेनैव ह्रियेत ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते॥४४॥

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ ऋ० १।१६४।४५॥

चत्वारीति = वाक्पदानि वाचः वाण्याः पदानि स्थानानि चत्वारि चतुःसंख्याकानि परिमिता परिमितानि सन्ति। मनुष्यस्य वाचा आर्तत्वं जिज्ञासुत्वं अर्थार्थित्वम् ज्ञानित्वं च प्रतीयते। यद्वा परा पश्यन्ती मध्यमा वैखरी इति चत्वारि वाक्पदानि सन्ति। सा एकैव नादात्मिका वाक् मूलाधारात् उदिता 'परा' इत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी 'पश्यन्ती' इत्युच्यते। मध्ये हृदयाख्ये उदीयमानत्वात् 'मध्यमा'। अथ यदा सैव वाक् 'अहं ब्रह्मास्मि' इति वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा "वैखरी" इत्युच्यते। तानि चत्वारि वाक्पदानि मनीषिणः "मनसः स्वामिनः" स्वाधीनमनस्काः ब्राह्मणाः वाच्यस्य "शब्दब्रह्मणः" "अहं ब्रह्मास्मीति" अधिगन्तारो योगिनः परादि चत्वारि पदानि विदुः जानन्ति। तेषु चतुर्षु मध्ये त्रीणि परादीनि गुहा गुहायां हृदयाकाशे निहिता निहितानि हृदयान्तर्वर्तित्वात् न इङ्गयन्ति न चेष्टन्ते। मनुष्याः पामराः योगविद्यानधिगन्तारः वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं "अहं ब्रह्मास्मीति" वदन्ति व्यवहरन्ति न तु योगिनः - योगसमाधिनिष्ठाः योगिनः शब्दब्रह्म अतिवर्तन्ते इति॥४५॥

प्रयत्नादिति = प्रयत्नात् अतितीव्रयत्नात् यतमानः योगसिद्ध्यै यत्नं कुर्वाणः तु योगी ब्रह्मवेत्ता यतिः संशुद्धकिल्बिषः सम्यक् शुद्धं दूरीकृतं किल्बिषं अज्ञानं येन तथाभूतः अनेकजन्मसंसिद्धः अनेकेषु बहुषु जन्मसु संसिद्धः योगसमाधिना अप्रतिबद्धज्ञानः सन् ततः तेन योगसमाधिजनितब्रह्मदर्शनेन पराम् अत्युत्कृष्टां गतिं स्वस्वरूपभूतां परमावस्थां विदेहकैवल्यं याति प्राप्नोति॥४५॥

प्रयत्नात् यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥४५॥

मुनयो वातरशना पिशंगा वसते मला। वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत॥ ऋ० १०।१३६।२॥

मुनय इति = वातरशनाः वाते वायौ रशना जिह्वा येषां ते तथाभूताः वातरशनाः वायुमात्रभोजनाः मुनयः मननशीलाः अतीन्द्रियार्थदर्शिनः बहुजन्माभ्यासेन ब्रह्मवेत्तारः यतयः पिशंगा पिशंगानि कपिलवर्णानि मला = म्लानानि वल्कल-रूपाणि वासांसि वसते योगसमाधिसिद्धये आच्छादयन्ति। यत् यस्मात् अनेक-जन्मप्राप्तसंसिद्धिकारणात् देवासः योगसमाधितपोमहिम्ना दीप्यमानाः सन्तः अविक्षत ब्रह्मदर्शनं प्राविशन्। ततः योगसमाधिजनितब्रह्मदर्शनानन्तरं वातस्य सर्वजगदाधारभूतस्य सूत्रात्मनः परब्रह्मणः ध्राजिं परां गतिं परमावस्थां विदेह-कैवल्यं अनुयन्ति अनुगच्छन्ति ब्रह्मोपासनया ब्रह्मस्वरूपम् अनुगताः इति।

तपस्विभ्यः इति = तपस्विभ्यः पञ्चाग्नितापसेभ्यः योगी ब्रह्मवित् यतिः अधिकः भवति। ज्ञानिभ्यः अपि केवलं ज्ञानमात्राधारकेभ्यः वेदान्तादिशास्त्रार्थविद्भ्यः अपि अधिकः उत्तमः मतः कथितः। कर्मिभ्यश्च वैदिकाग्निहोत्र-प्रभृति सकामकर्मकर्तृभ्यः अपि योगी ब्रह्मज्ञानी अधिकः उत्कृष्टः भवति। हे अर्जुन! तस्मात् कारणात् त्वं योगी योगनिष्ठाजनितब्रह्मज्ञानेन ब्रह्मपदवी-प्राप्त्यधिकारी भव॥४६॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥४६॥

एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं श‍ृणोमि यशसं जनेषु। तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम्॥ ऋ० ५।३२।११

एकमिति = हे मुमुक्षो! हे ब्रह्मवेत्तः! हे यते! तपस्विज्ञानिकर्मिमनुष्येषु मध्ये पाञ्चजन्यं पञ्चजनेभ्यः मनुष्येभ्यः हितं यशसं ब्रह्मज्ञानयशो-युक्तं सत्पतिं - "सत् ब्रह्म" = "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रि-विधः स्मृतः" तदेव पतिः स्वामी यस्य स सत्पतिः तं सत्पतिं परब्र-ह्मोपासकं - यद्वा सतां सज्जनानां वचनानां पालकम्। जातं विद्य-मानं त्वां ब्रह्मयोगिनं एकं नु मुख्यमेव अहं श‍ृणोमि त्वदुपासनया वग-च्छामि। दोषा = रात्रौ, वस्तोः = वासरे, अहर्निशमित्यर्थः। इन्द्रम् ऐश्वर्यप-न्नं परमात्मानं मां हवमानासः स्तुवन्तः सन्तः आशासः मुक्त्याशासं-युक्ताः ते तव योगिनः मे मम नविष्ठं सर्वदा अतिशयेन नवीनं तम् अपवर्गं जगृभ्रे = गृह्णन्ति "कालव्यत्ययः वचनव्यत्ययश्च" लडर्थे लिट्लकारः।

योगिनामिति = यः ब्रह्मवित् यतिः श्रद्धावान् "सर्वं खल्विदं ब्रह्म" इति सद्भावनया युक्तः सन् मद्गतेन मयि ब्रह्मणि गतेन प्राप्तेन अन्तरात्मना मनसा मां परमात्मानं भजते सेवते "सर्वं ब्रह्मैव" इति पश्यति। सर्वेषां भिन्नभिन्नस्वरूपोपासकानां योगिनां मध्ये स ब्रह्मवित् योगी मे मम ईश्वरस्य युक्ततमः योगिश्रेष्ठः

मतः अभिमतः इति॥

इति श्री जगन्नाथ शास्त्रि संकलितायां गीतावेदार्थबोधिन्यां षष्ठोऽध्यायः समाप्तः॥ श्रीकृष्णार्पणमस्तु॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥४७॥

इति श्रीमद्भगवद्गीतायां श्रीकृष्णार्जुनसंवादे षष्ठोऽध्यायः समाप्तः॥

"ब्राह्मणो जज्ञे प्रथमो दशशीर्षो दशास्यः।
स सोमं प्रथमः पपौ स चकारारसं विषम्॥अथ०४।६।१॥

ब्राह्मण इति = "ब्राह्मणः" ब्रह्म जानाति इति ब्राह्मणः इत्युक्तेः परब्रह्मज्ञः ब्रह्मवेत्ता योगी दशशीर्षः दश संख्याकानि ज्ञानकर्मेन्द्रियाणि शीर्षाणि शिरोरूपाणि यस्य स दशशीर्षः दशेन्द्रियैः ब्रह्मज्ञानानुष्ठाता। दशास्यः = दशेन्द्रियाणां तद्वृत्तीनां च दूरप्रक्षेप्ता इन्द्रियग्रामवशीभूतः प्रथमः सर्वयोगिभ्यः मुख्यतमः उत्कृष्टः जज्ञे प्रादुर्भूतः वर्तते ज्ञायते च। स च प्रथमः मुख्यतमः युक्ततम एव सोमं ब्रह्मरसं पपौ पिबति अर्थात् स योगी एव परब्रह्म भजते। स युक्ततम एव विषं = पापमयं विषं अरसं रसहीनं चकार करोति। अतः एवं विधः योगी मे युक्ततमः मत इति भावः। चकार = छान्दसो लिट्। जज्ञे = "जनी प्रादुर्भावे" इत्यस्मात् लिट्। "गमहनजन—" इत्युपधालोपे "द्विर्वचनेऽचि च" इति स्थानिवद्भावात् द्विर्वचनम्।

इति श्री सारस्वतान्वय लैया ग्रामवास्तव्य न्यायभूषणोपपद-जगन्नाथशास्त्रि कृतायां वेदगीतार्थबोधिन्यां षष्ठोऽध्यायः समाप्तः॥ श्रीकृष्णार्पणमस्तु॥

अथ सप्तमोऽध्यायः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युद्धर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो द्वयोः ब्रह्म प्रकीर्तिनात्॥२॥

श्रीभगवानुवाच = मय्यीति = हे पार्थ! हे अर्जुन! योगं दुःखसंयोग-वियोगाख्यं योगं युञ्जन् योक्तुमिच्छन् मदाश्रयः = अहं परं ब्रह्मैवाश्रयोऽवलम्बनं यस्य स तथाभूतः सन् मयि परे ब्रह्मणि एव आसक्तमनाः आसक्तं लग्नं मनो यस्य तथाभूतः सन् त्वं मां मत्स्वरूपं परमात्मानमित्यर्थः असंशयं संशयमन्तरेणैव समग्रं अशेषतया यथा येन प्रकारेण ज्ञास्यसि ज्ञानविषयं करिष्यसि तत् तज्ज्ञान मार्गं तथा शृणु॥१॥

ज्ञानमिति = अहं परब्रह्मस्वरूपः कृष्णः ते तुभ्यं अर्जुनाय जीवमात्राय वा इदं ज्ञानं ब्रह्मज्ञानबोधः सविज्ञानं अनुभवेन ज्ञानेन सहितम् अशेषतः यथावस्तु ज्ञानं पूर्णतया स्यात् तथैव समग्रं वक्ष्यामि कथयिष्यामि। यत् मदुपदिष्टं विज्ञानसंयुक्तं ज्ञानं ज्ञात्वा अनुभूय इह अस्मिन् जन्मनि भूयः पुनः अन्यत् अपरं ज्ञातव्यं वस्तु न अवशिष्यते पुनर्ज्ञेयान्तरशेषो न विद्यते।२॥

श्रीभगवानुवाच = "मय्यासक्तमनाः पार्थ! योगं युञ्जन् मदाश्रयः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु॥१॥
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते॥२॥

" यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभिमन्याते अन्धाम्।
कतरो मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात्॥
ऋ० १०॥ २७॥ ११॥

यस्येति = यस्य ज्ञानयोगिनः भक्तियोगिनः पुरुषस्य दुहिता स्वान्तःकरणात् दूरे प्रक्षिप्ता अनक्षा अक्षभिः इन्द्रियैः इन्द्रियवृत्तिभिश्च रहिता सती जातु यदा कदाचिदपि आस भवति अर्थात् मयि स्थितिं प्राप्नोति। अर्थात् यः मय्यासक्तमतिः भवति कः पुरुषः तां बुद्धिं अन्धां ज्ञान-शून्यां स्वमनोवृत्तिं अभिमन्याते अभिमन्यते - आत्मनि आश्रयप्रदानेन पूजयति। कतरः पुरुषः तम् अनात्मज्ञानमयं ~~प्रसिद्धं~~ प्रसिद्धं मेनिं वज्रमयं पापं प्रतिमुचाते सर्वतः प्रतिमुञ्चति। यः मुमुक्षुः पुरुषः ईम् = एनं परमात्मनः ज्ञानयोगं ध्यानयोगं च वहते धारयति यः ईम् = एनं परमात्मनः अनुभवज्ञानं वरेयात् वृणोति।

तथा च = बृह० उप० २।४।१४॥ = " येनेदं सर्वं विजानाति तं केन-

विजानीयात् - विज्ञातारमरे केन विजानीयादिति"।

अन्यच्च = श्वेताश्व० उप० ४।१४ = " यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति"। तथा च = श्वेताश्व० ३।८ = " तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"॥

मनुष्याणामिति = मनुष्याणां सहस्रेषु असंख्यातेषु मनुष्येषु कश्चित् पुरुषः सिद्धये ब्रह्मप्राप्तिसिद्धये यतति यत्नं करोति। यततां ब्रह्मसिद्धौ यत्नं कुर्वतां अपि सिद्धानां ब्रह्मजिज्ञासूनां मध्ये कश्चित् पुरुष एव मां यथावत्स्वरूपं परमात्मानं तत्त्वतः यथार्थतः वेत्ति जानाति।३।

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥३॥

दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना। अभ्रादिव प्रस्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत्॥ ऋ० १०।७५।३॥

दिवीति = भूम्योपरि = भूमेरुपरि दिवि प्रकाशमय ब्रह्मलोकसमावो स्वनः शब्दब्रह्मोपासकः कश्चित् जिज्ञासुः यतते ब्रह्मप्राप्तिसिद्धये यत्नं करोति। अयं ब्रह्मोपासकः अयमेव ब्रह्मवेत्ता सिद्धः भानुना ब्रह्मप्रकाशेन अनन्तम् अपर्यन्तं पारावाररहितं शुष्मं तेजः उदियर्ति उद्गच्छति प्राप्नोतीति यावत्। अभ्रादिव अन्तरिक्षादिव वृष्टयः वर्षणशीलाः मेघाः यथा प्रस्तनयन्ति शब्दं कुर्वन्ति तथा असंख्येषु पुरुषेषु केचिद् ब्रह्मविदः यतयः ब्रह्मस्वरूपं परेभ्योऽपि प्रस्तनयन्ति। यत् यस्मात् कारणात् सिन्धुः ब्रह्मज्ञानस्यन्दनशीलः वृषभः सर्वश्रेष्ठः यतिः एव रोरुवत् अतिशयेन परमात्मशब्दम् उच्चारयन् एति संसारे जीवनयात्रां गच्छति॥३॥

भूमिरिति = भूमिः पृथिवी गन्धतन्मात्रश्च, आपः जलानि रसतन्मात्रश्च, वायुः मरुत् स्पर्शतन्मात्रश्च, खम् आकाशः शब्दतन्मात्रश्च, मनः संकल्पविकल्पौ, बुद्धिः सर्वसमष्टिः महत्तत्त्वम्, अहंकार वासनादिविशिष्टं अव्यक्तम्, इतीयं प्रकृतिः = सांख्यशास्त्रप्रोक्त प्रधानं अष्टधा अष्टप्रकारा भिन्ना मे मम परमात्मनः अस्ति।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥४॥

" अष्टजाता भूता प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या ये। अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति"॥ अथ० ८।९।२१॥

यद्वा = " अष्टधा युक्तो वहति वह्निरुग्रः पिता देवानां जनिता मतीनाम्। ऋतस्य तन्तुं मनसा मिमानः सर्वा दिशः पवते मातरिश्वा" अथ० १३।३।१९॥

अष्टजातेति = हे इन्द्र! हे जीवात्मन्! ऋतस्य परब्रह्मणः मम प्रथमजा =

सृष्ट्यादौ जाता अष्ट = अष्टसंख्यापरिमिता = भूमिजलाग्निवाय्वाका-
शमनोबुद्ध्यहंकारात्मिका भूता भावरूपा प्रकृतिः जाता जगत्कारण-
स्वरूपा कार्यत्वेन प्रादुर्भूता। ये दैव्याः प्रकाशात्मकाः ऋत्विजः जग-
न्मय यज्ञसम्पादकाः सन्ति। अष्टयोनिः = अष्टानां पृथिव्यप्तेजोवाय्वा-
काशमनोबुद्ध्यहंकाराणां योनिः मूलकारणम् अदितिः = खण्डैः रहिता
नित्या इत्यर्थः। अष्टपुत्रा = अष्टौ पृथिव्यादिस्थूलपदार्थाः पुत्राः पुत्ररूपाः
यस्याः ईदृशी सा अष्टविधा प्रकृतिः अष्टमीं प्रकृत्यारम्भां रात्रिं स्व-
लयस्थानं हव्यं लयस्वरूपं भोजनम् अभ्येति अभिगच्छति।

अष्टधेति = उग्रः उग्रस्वरूपः देवानाम् इन्द्रियाणां तद्विषयाणां
च पिता पालकः मतीनां वृत्तीनां जनिता उत्पादकः वह्निः प्रपञ्चस्य वोढा
अपरा प्रकृतिः मनसा सर्वेषां प्राणिनां संकल्पकल्पनया कृतस्य जगद्-
यज्ञस्य तन्तुं विस्तारं मिमानः मानं कुर्वन् सन् युक्तः जगत्संचालन-
कर्मणि नियुक्तः अष्टधा युक्तः = भूमिजलाग्निवाय्वाकाशमनोबुद्ध्य-
हंकारे ~~वहति धारयति प्रकाशयति वा~~ त्यष्टविधापरप्रकृतिनाम्ना-
युक्तः वहति संसारे चलति — अष्टधा = पृथिव्यप्तेजोवाय्वाका-
शमनोबुद्ध्यहंकारान् वहति धारयति प्रकाशयति वा॥

अपरेयमिति = भूमिजलाद्यष्टविधा प्रकृतिः या प्रोक्ता सा इयम् अपरा
नाम्ना उच्यते। इतः तु अपरानाम्न्याः प्रकृतेः अन्यां भिन्नां परां श्रेष्ठां
जीवभूतां क्षेत्रज्ञरूपां मे ममेश्वरस्य प्रकृतिं विद्धि जानीहि। यया
जीवरूपया परया प्रकृत्या इदं देहेन्द्रियादिरूपं जगत् गच्छतीति जगत् =
शरीरं धार्यते॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥ ५॥

इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा। महान्तो
अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री। अथ० ३।१०।४॥
इयमिति = इयमेव अपरा भूम्याद्यष्टविधा प्रकृतिः या प्रथमा स-
ष्ट्यादौ पृथक्स्वरूपमागता व्यौच्छत् = सर्वत्र प्रासरत्। इतरासु =
इतरा जीवरूपा प्रकृतिः (इतरा इत्यत्र प्रथमार्थे सप्तमी व्यत्ययः)
आसु अष्टविधप्रकृतिरूपासु तनूषु प्रविष्टा अनुगता सती
चरति वर्तते। अस्यां जीवभूतायां प्रकृतौ अन्तः मध्ये महान्तः
मुख्याः महिमानः माहात्म्यविशेषाः वर्तन्ते इति शेषः। सा का-
रणजीवरूपा प्रकृतिः वधूः नवोढा स्त्री इव नित्यं नवा
सती नवगत् नवं स्वकर्मभिः अभिनवं जन्म गच्छति इति
नवंगत् भूत्वा जनित्री स्वशुभाशुभकर्मणां जनयित्री

सती जिगम्य जयति सर्वोत्कर्षेण वर्तते। अर्थात् जीवरूपा प्रकृतिः एव सर्वं जगन्मयं शरीरं धारयति।

एतद्योनीति = एतत् पराऽपराप्रकृतिद्वयं योनिः कारणं येषां तानि एतद्योनीनि भूतानि = "भवन्ति जन्मना सत्तां भजन्तीति भूतानि" ब्रह्मादिस्तम्बपर्यन्तानि सर्वाणि इत्युपधारय इति निश्चिनुहि। कृत्स्नस्य स्थूलसूक्ष्मकारणत्रितयस्य जगतः ब्रह्माण्डस्य अहमेव प्रभवः उत्पत्तिस्थानम् अस्मि- यद्वा = प्रभवत्यस्मादिति प्रभवः उपादानकारणम्। उपसर्गवशात् प्रलीयते निष्पाद्यतेऽनेनेति प्रलयः निमित्तकारणञ्चाभयमेव अहमेवास्मि- इति बोध्यम् ॥६॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे। ततो वितिष्ठे भुवनाऽनु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ऋ० १०।१२५।७॥ अथ०४।३०।७॥

अहमिति = अहं परमात्मा एव "पितरम्" — 'द्यौः पिता' तैत्ति० ब्रा० ३।७।५।५॥ इति श्रुतेः पिता द्यौः पितरं दिवं सुवे प्रसुवे जनयामि। "आत्मनः आकाशः संभूतः" इति श्रुतेः। अस्य मे मम परमात्मनः मूर्धन् मूर्धनि वियदादिकार्यजातं सर्वं वर्तते - तन्तुषु पट इव। यद्वा अस्य भूर्लोकस्य मूर्धन् मूर्धनि उपरि पितरमाकाशं सुवे जनयामि। समुद्रे अन्तरिक्षे अप्सु अम्मयेषु जलीयप्राणिषु जलीयपदार्थेषु च अन्तः मध्ये मम योनिः कारणभूतं ब्रह्मचैतन्यं वर्तते। यद्वा समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये वाडववैद्युतरूपेण यत् तेजो वर्तते तदेव मम योनिः कारणरूपं ब्रह्मचैतन्यं वर्तते। ततः तस्माद्धेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अनु प्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि। उत अपि च अमूं द्यां विप्रकृष्टां दिवम् — उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं ब्रह्मणि अध्यस्तं विकारजातं वर्ष्मणा कारणभूतेन विराट्स्वरूपेण देहेन उपस्पृशामि। सुवे = षूङ् प्राणिगर्भविमोचने" अदादित्वात् शपो लुक्। वितिष्ठे = समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

मत्त इति = हे धनंजय! हे अर्जुन! मत्तः परमेश्वरात् परतरम् अत्युत्कृष्टं अन्यत् कारणं किञ्चिदपि नास्ति न वर्तते। सूत्रे गुणे मणिगणाः इव = मणिसमूह इव मयि कारणभूते सर्वाधिष्ठाने परे ब्रह्मणि इदं परिदृश्यमानं चराचरात्मकं सर्वं जगत् प्रोतम् अनुगतं भवति ॥७॥

मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥

" वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः। सूत्रं सूत्रस्याहं वेदाथो यद् ब्राह्मणं महत्" ॥ अथ० १०।८।३८॥

यद्वा = दृढो दृंह स्थिरोऽन्यो ब्रह्म विश्वसृजो दश। नाभिमिव सर्वतश्चक्र-मुच्छिष्टे देवताः श्रिताः॥ अथ० ११।७।४॥

यद्वा = तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥अथ० ११।८।३२॥

यद्वा = विश्वान्यस्मिन् सम्भृताऽधिवीर्या ॥ ऋ० २।१६।२ ॥

वेदाहमिति = अहं मुमुक्षुः ब्रह्मवित् सूत्रं सूत्रयति स्वात्मनि सर्वं जगत् स्वात्मना वेष्टयति इति सूत्रं परं ब्रह्म, तदेव विततं विशेषेण सर्वत्र विस्तृतं वेद जानामि। यस्मिन् परे ब्रह्मणि इमाः सर्वाः प्रजाः प्रकर्षेण जायन्ते इति प्रजाः सर्वे पदार्थाः ओताः सूत्रे मणिगणा इव अन्तर्व्याप्ताः सन्ति। अहं सूत्रस्य परब्रह्मणः सूत्रं सूक्ष्मत्वं वेद जानामि। अथो अपि च यत् महत् सर्वतोऽधिकमहत्त्ववत् ब्राह्मणं = सर्वत्र-बृंहणशीलम् अस्ति।

यद्वा = दृढ इति = विश्वसृजः विश्वं सृजतीति विश्वसृट् तस्य विश्वसृजः परमात्मनः दश दश दिक्षु दृंह स्थिरः दृढत्वेन स्थिरतरः ब्रह्म सर्वत्र ओतत्वप्रोतत्वं दृढः स्थिरः यः सर्वत्र व्यापकः परमात्मा अस्ति। सर्वाः देवताः सर्वे पदार्थाः नाभौ चक्रमिव यद्वा नाभौ नडीव उच्छिष्टे शेषस्वरूपे परब्रह्मणि आश्रिताः सन्ति॥

यद्वा = विश्वानीति = अस्मिन् परब्रह्मणि सर्वाः देवताः सर्वे पदार्थाः गोष्ठे गाव इव गवां स्थाने धेनव इव आसते विराजन्ते। तस्मात् कारणात् विद्वान् ज्ञानी इदं पुरुषं जीवात्मानं ब्रह्म ओतप्रोतत्वेन सर्वत्र व्यापकं परं ब्रह्म मन्यते जानाति।

रस इति = हे कौन्तेय! हे अर्जुन! अहं परमात्मा अप्सु जलेषु रसः अस्मि रसरूपेण तिष्ठामि। तथा शशिसूर्ययोः रवीन्द्वोः प्रभाऽस्मि प्रकाशरूपोऽस्मि। सर्ववेदेषु ऋगादिषु चतुर्षु वेदेषु प्रणवः ओंकाररूपेण तिष्ठामि। खे = आकाशे शब्दः शब्दस्वरूपोऽस्मि। नृषु = पुरुषेषु पौरुषं पुरुषभावः तिष्ठामि।

रसोऽहमप्सु कौन्तेय! प्रभास्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ् मा साम्। मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥ अथ० ३।१३।६ ॥

आदिदिति = हे जीवात्मन्! आत् इत् स्वकीयान्तरं यदेवास्ति तदेव स्वमया प्रभासमानं स्वमेव पश्यामि। अतः शशिसूर्यादि प्रभामद्विभूतिरेव। उत वा अपि च शृणोमि घोषः शब्दः मा मामागच्छति आयाति अर्थात् आकाशस्य विशेषगुणः शब्दोऽपि मद्विभूतिरेवास्ति। "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्युपनिषद्। यदा यस्मिन् काले अमृतस्य अमृतमयस्य ओंस्वरूपस्य भेजानः भजन् जीवात्मा मुक्तो भवति इति मन्ये इति तर्कयामि। "अ

VII



"पूर्ववत् कर्मणः" सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। हे हिरण्यवर्णाः! हिरण्मयः विज्ञानमयः वर्णः स्वरूपं येषां ते हिरण्यवर्णाः विज्ञानस्वरूपाः हितरमणस्वभावाः मुमुक्षवः! तर्हि तदानीं वः युष्माकं ओं स्वरूपसेवनपौरुषेण अतृपम् = सुप्रीतो भवामि इत्यर्थः। भेजानः इति = भजेश्छान्दसे लिटि "तृफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। अतृपम् इति = "तृप तृम्फ तृप्तौ," तौदादिकः। लुङि उत्तमैकवचने रूपम्।

पुण्य इति = पृथिव्यां भूमौ पुण्यः पवित्रः गन्धोऽहमस्मि। विभावसौ अग्नौ अहं तेजः तेजोमयोऽस्मि। सर्वभूतेषु सर्वप्राणिषु जीवनं जीवनाधारः प्राणः अस्मि तपस्विषु कृच्छ्रचान्द्रायणादिव्रताग्नितापादिकर्तृषु तपस्विजनेषु तपोरूपेणास्मि।

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९॥

(1) "तं पुण्यं गन्धं गन्धर्वाप्सरस उपजीवन्ति पुण्यगन्धिरुपजीवनीयो भवति य एवं वेद। अथ० ८।१४।८॥
यद्वा = तेजोऽसि तेजो मयि धेहि"। यजु० १९।९॥
यद्वा = प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते। प्राणो ह सत्यवादिनमुत्तमे लोक आदधत्। अथ० ११।४।११॥
यद्वा = प्राणाद्वायुरजायत। ऋ० १०।९०।१३॥
यद्वा = प्राणो वै सत्यम्। बृह० उप० २।१।२०॥
यद्वा = आयुरस्यायुर्मे दाः स्वाहा। अथ० २।१७।४॥
यद्वा = नमस्ते प्राण प्राणते नमो अस्त्वपानते। पराचीनाय ते नमः। प्रतीचीनाय ते नमः सर्वस्मै त इदं नमः। अथ० ११।४।८॥
यद्वा = तद्ब्रह्म च तपश्च सप्त ऋषय उपजीवन्ति॥ अथ० ८।१०।१६॥

(1) तमिति = गन्धर्वाप्सरसः = गां वाचं धारयति वशीकरुते इति गन्धर्वः वाङ्नियन्ता, यद्वा गवां इन्द्रियाणां धर्ता इन्द्रियवशीकर्ता। अप्सरसः = आप इत्यन्तरिक्षनाम। अप्सु हृदयाकाशे सरतीति अप्सराः हृदयगन्ता, यद्वा अप्स इति रूप। रो मत्वर्थीयः। अप्सराः रूपवान् ब्रह्मरूपदर्शकः। यद्वा अपः प्रति नित्यं सरतीति अप्सराः ब्रह्माधिगन्ता इत्यत्र अप्शब्दोपपदात् सर्तेः असुन् प्रत्ययः। अप्सुशब्दोपपदात् "ला आदाने" इत्यस्माद्वा रत्वे असुन्। 'रा दाने' इत्यस्माद्वा असुन्। तथा च यास्केनोक्तम् = अप्सराः अप्सारिण्यपि वा अप्स इति रूपनाम, अप्सातेरप्सानीयं भवति आदर्शनीयं व्यापनीयं वा तद्वा भवति रूपवती तद् अनया तमिति वा तद् अस्मै दत्तमिति च॥ निरु० ५।१३
गन्धर्वाश्च अप्सरसश्चेति गन्धर्वाप्सरसः। इन्द्रियनियन्तृब्रह्मविदः तं पुण्यं पवित्रं गन्धं गां पृथिवीं धरतीति गन्धः तं गन्धं पृथ्वीसमवेतं विशेषगुणं परमात्मविभूतिं उपजीवन्ति स्वोपजीवनं विदधति, पुण्यगन्धिः शुद्धं ब्रह्मस्वरूपं उपजीवनीयः शरण्यः भवति। गन्धोऽपि ब्रह्मविभूतिरस्ति इति यः जीवात्मा

वेद जानाति स एव गन्धो ब्रह्मविभूतिः।

तेज इति = हे परमात्मन्! त्वं तेजोऽसि अतः तेजः स्वविभूतिं मयि भक्ते धेहि-धारणं कुरु।

नमस्ते इति = हे प्राण! प्रकर्षेण अनिति सर्व प्राणिशरीरं व्याप्य चेष्टते इति प्राणः, समष्टिशरीराभिमानी प्रथमसृष्टः हिरण्यगर्भः, तत्संबुद्धौ हे प्राण! हे सर्वभूतजीवन! प्राणते प्राणव्यापारं कुर्वते ते तुभ्यं नमः अस्तु। तथा अपानते अपानव्यापारं कुर्वते अपानवृत्त्यात्मकाय तुभ्यं नमोऽस्तु। तथा पराचीनाय पराङ्मुखाय परमात्मस्वभावाय देहाद् बहिरवस्थिताय ते तुभ्यं नमोऽस्तु। तथा प्रतीचीनाय प्रतिमुखम् अञ्चते देहमध्ये वर्तमानाय ते तुभ्यं नमः अस्तु। सर्वस्मै सर्वव्यापारकर्त्रे सर्वप्राणिशरीरान्तर्वर्तिने ते तुभ्यं इदं नमः अयं नमस्कारो भवतु।

तद् ब्रह्मेति = सप्त ऋषयः सृष्ट्यादौ उत्पन्नाः अत्रिभृगुवसिष्ठप्रभृतयः अतीन्द्रियार्थद्रष्टारो वा ब्रह्मवेत्तारः परमात्मानं तद् ब्रह्म तपः तपःस्वरूपं उपजीवन्ति स्वोपजीवनं विदधति। यः ब्रह्मवेत्ता एवं इत्थं वेद जानाति स ब्रह्मवेत्ता ब्रह्मवर्चसी ब्रह्मज्ञानयुक्तः सन् उपजीवनीयः स्वजीवननिर्वाहकः भवति।

आयुरिति = हे परमात्मन्! आयुरसि त्वम् आयुः जीवनम् असि, आयुः जीवनं मे मह्यं धाः देहि।

बीजमिति = हे पार्थ! हे पृथायाः पुत्र! हे अर्जुन! सनातनं सनातनं सर्वेभ्यः प्राक्तनं मां परमेश्वरं सर्वभूतानां सर्वेषां आकाशादीनां भूतानां बीजं मूलकारणं विद्धि जानीहि। तथा बुद्धिमताम् आत्मानात्मविवेकिनां बुद्धिः प्रज्ञा अहमेवास्मि। तथा तेजस्विनां परैः अप्रधृष्यानां तेजः अभिभावकं तेजोरूपं कारणमहमस्मि॥

बीजं मां ~~विद्धि~~ सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजः तेजस्विनामहम् ॥१०॥

अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव। अथ० ४।३०।८॥ ऋ० १०।१२५।८॥

यथा = मेधाकारं विदथस्य प्रसाधनं मग्निं होतारं परिभूतरं मतिम्। त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत्। साम० ८८४॥ ऋ० १०।९१।८॥

अहमिति = अहं परमात्मा एव विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा बीजरूपेण अहमेव परमात्मा उत्पादयन् असहाय एव प्रवामि प्रवर्ते। तत्र दृष्टान्तः = वात इव - वातः वायुः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति। तद्वदहमपि स्वेच्छया बीजरूपत्वात् प्रवामि। परो दिवा = परस्-सकारान्तः शब्दः। अधः अधस्तात् इतिशब्दवत् परः परस्तात् इत्यर्थो भवति। अधस्तात् इव परस्तात् शब्दयोगेऽपि तृतीया। दिवा आकाशस्य परस्तात्। एना पृथिव्या द्वितीया टौस्वेनः" इति इदमः अन्वादेशः। "सुपां सुलुक्"। अस्याः पृथिव्याः परः परस्तात् द्यावापृथिव्योरुपादानम् उपलक्षणम्। एतदुपलक्षितात्-

सर्वस्मात् विकारजातात् परस्तात् वर्तमानोऽहं चैतन्यरूपं ब्रह्म महिना महिम्ना माहात्म्येन एतावती एतावान् महान् बीजरूपोऽस्मि। आरभमाणा, एतावती - अत्र लिङ्गव्यत्ययः। एतावत् = एतच्छब्दात् "यत्तदेतेभ्यः" इति वतुप्। "आ सर्वनाम्नः" इत्यात्वम्। मेधाकारम् बुद्धिस्वरूपं यद्वा मेधायाः प्रज्ञायाः कर्तारं विदथस्य = विदथानि वेदनानि "विदथानि प्रचोदयन्" इत्यपि निगमो भवति। निरु. ६।७॥ विदथस्य ज्ञानस्य ब्रह्मयज्ञस्य वा प्रसाधनं प्रकर्षेण साधकम्। होतारं ज्ञानस्य दातारम्। अतिशयेन पापानाम् अभिभवितारं मतिं मनसः प्रेरयितारं महः तेजःस्वरूपं त्वाम् अग्निं परमात्मानमेव सर्वे मुमुक्षवः समानमित् सहैव मिलिताः अर्भस्य अल्पस्य हविषः ज्ञानमयस्य भक्षणाय वृणते प्रार्थयन्ते। त्वत् त्वत्तः अन्यं अतिरिक्तं कमपि देवं न वृणते न प्रार्थयन्ति।

बलमिति = हे भरतर्षभ! हे अर्जुन! बलवतां बलशालिनां देहिनां कामराग-विवर्जितं कामः अभिलाषः रागः अप्राप्तपदार्थप्राप्तीच्छा ताभ्यां विवर्जितं रहितं बलं च अपि अहमस्मि। भूतेषु सर्वेषु प्राणिषु धर्माविरुद्धः वर्णाश्रमधर्माविरुद्धः कामः अहमेवास्मि। तेषु सर्वेषु कामात्मनाऽहं प्रविष्टोऽस्मि।

बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥

"बलमसि बलं मे दाः स्वाहा" । अथ० २।१७।३॥

"कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत्। स काम कामेन बृहता सयोनी रायस्पोषं यजमानाय धेहि ॥ अथ० १९।५२।१॥

बलमिति = हे परमात्मन्! त्वं बलमसि देहशक्तिरसि। अतः मे मह्यं बलं शक्तिं दाः देहि। स्वाहा = सु सम्यक्तया आहा-कथयति प्रार्थयिता। यथा च यास्क आह = "स्वाहा इत्येतत् सु आहेति वा, स्वा वाग् आहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोति इति। निरु. ८।२०॥

काम इति = प्रलयकाले सर्वेषु जगत्सु वासनाशेषेण मायायां विलीनेषु पुनः ईश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं काम इच्छैव। तस्या अग्रे सृष्टेः प्राक् परमेश्वरः परमेश्वरेच्छा वा समवर्तत सम्यक्तया विद्यते। मनसः सर्वप्राण्यन्तःकरणस्य रेतः भाविनः प्रपञ्चस्य रेतः बीजभूतं प्रथमं पुराकाल्पिकं कृतं पुण्यापुण्यात्मकं कर्म यत् आसीत् अभवत् तत् तस्मात् हेतोः परमात्मनः मनसि सिसृक्षा जायते अतः कामोऽपीश्वरविभूतिरेवास्ति। हे काम! हे कामस्वरूप परमात्मन्! स त्वं परमात्मा बृहता महता धर्माविरुद्धेन कामेन अभिलाषेण सयोनिः समानकारणः परमेश्वराव्यतिरिक्तस्वरूपः सन् यजमानाय परमेश्वरपूजकाय पुरुषाय रायः ज्ञानसाधनस्य पोषं पुष्टिं समृद्धिं धेहि स्थापय प्रयच्छेति भावः।

*यज्ञ = "यो देवो विश्वाद् यमु काममाहुः यं दातारं प्रतिगृह्णन्तमाहुः ॥ अथ० ३।२९।४॥

यद्वा — य इति = यः देवः ज्योतिः स्वरूपः परमात्मा विश्वाद् विश्वसंहर्ताऽस्ति, यं दातारं कर्मफलप्रदातारं यं प्रति गृह्णन्तं स्वस्मिन् लयकर्तारमाहुः कथयन्ति, यम् उ = यं परमात्मानमेव कामम् आहुः कथयन्ति॥

ये इति = ये सात्विकाः सत्वगुणविशिष्टाः भावाः देवर्षिब्राह्मणादयः पदार्थाः सन्ति, ये च राजसाः रजोगुणविशिष्टाः भावाः क्षत्रियादिकाः पदार्थाः सन्ति, तान् एतान् सर्वान् मत्तः मत् परमात्मनः जातान् ये च तामसाः तमोगुणविशिष्टाः भावाः राक्षसादि मुख्याः पदार्थाः सन्ति तान् एतान् सर्वान् मत्तः मत् परमात्मनः जातान् विद्धि जानीहि। तदेतत् सर्वं प्रत्यक्षमात्रं कार्यजातं मत्तः उत्पन्नमिति भावः। अहं सर्वव्यापकत्वात् अपरिच्छिन्नः तु तेषु परिच्छिन्नेषु पदार्थेषु नास्मि। यतस्ते अधिकरणस्वरूपाः भवितुं नार्हन्ति। ते सर्वे कार्यस्वरूपाः पदार्थाः परिच्छिन्नाः सन्तः मयि अपरिच्छिन्ने सर्वाधिकरणे मयि वर्तन्ते।

ये चैव सात्विकाः भावाः राजसाः तामसाश्च ये।
मत्त एवेति तान् विद्धि, न त्वहं तेषु, ते मयि॥१२॥

"त्रिभिष्टं देव सवितर्वर्षिष्ठैः सोमधामभिः। अग्ने दक्षैः पुनीहि नः।
ऋ० ९।६७।२६॥

त्रिभिरिति = हे देव! हे द्योतनात्मक! ज्योतिः स्वरूप परमात्मन्! हे सवितः! हे सौम्यरसात्मक! त्वं त्रिगुणाधिपतिः वर्षिष्ठैः श्रेष्ठैः वृद्धतमैः वा दक्षैः निजगुणप्रत्यक्षीकरणे सामर्थ्यवद्भिः त्रिभिः सत्वरजस्तमोगुणैः त्रिसंख्याकैः धामभिः संसारप्रवृत्त्याधारैः नः अस्मान् स्वविभूत्युपासकान् भक्तान् पुनीहि परिशुद्धान् कुरु अर्थात् वयं त्रिभिर्गुणैः बद्धाः न भवेम॥ तथा च मुण्डकोप० २।१।१ = " ओं तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिंगाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥

त्रिभिरिति = गुणमयैः सत्वादिगुणमयैः त्रिभिः त्रिप्रकारकैः सात्विकैः राजसैः तामसैः भावैः भोग्यपदार्थैः एभिः अनुभूयमानैः शब्दादिविषयैः तज्जन्यैः रागद्वेषादिभिश्च इदं सर्वं जगत् मोहितं ज्ञानाज्ञानविचारविरहितं एभ्यः सत्वादिगुणेभ्यः तत्कार्येभ्यश्च परं भिन्नं अव्ययं विकाररहितं मां परमात्मानं न अभिजानाति न वेत्ति॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥१३॥

न कीरेवन्त सख्याय विन्दसे पीयन्ति ते सुराश्वः।
यदा कृणोषि नदनुं समूहस्यादित् पितेव हूयसे। साम० १३९०

ऋ० ८।२१।१४॥ अथ० २०।११४।२॥

VII



यद्वा = ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः। वाचस्पति र्बला तेषां तन्वो अद्य दधातु मे॥ अथ० १।१।१॥

न किरिति = हे परमात्मन्! त्वं रेवन्तं धनवन्तं रजोगुणमोहितं जनं सख्याय सखिभावाय मुक्तये न किः विन्दसे न भजसे नाश्रयसीत्यर्थः। राजसः जनः त्वां न अभिजानातीति भावः। सुराश्वः = "टु ओश्वि - गतिवृद्ध्योः" सुरया तमोगुण-प्रधानेन मादकद्रव्येण प्रवृद्धाः प्रमत्ताः तामसाः जनाः ते त्वां परमात्मानं पीयन्ति हिंसन्ति त्वां नाश्रयन्ति। पीयतिः हिंसाकर्मा। यदा यस्मिन् काले रजोगुणादिभिः मोहिताः न भवन्ति तदा त्वं रजोगुणसत्वगुणतमोगुणैः त्रिभिः अमोहितं जनं नदनुं = "नद अव्यक्ते शब्दे" नदनुं = स्तोतारं कृणुषे कुरुषे। मदीयोऽयं जनः इति। यद्वा त्वं भावयसि तदानीं तमेव समूहयासि स्वात्मना सह योजयासि। आदित् = अनन्तरमेव त्वं पिता इव पालयिता इव रागद्वेषादि-शून्यैः स्वभक्तैः आहूयसे सुतिभिः आकार्यसे।

ये इति = विश्वानि सर्वाणि रूपाणि पदार्थानां स्वरूपाणि बिभ्रतः धारयन्तः त्रिसप्ताः त्रिभिः गुणैः सप्ताः सप्तविधाः ३ × ७ = २१ पदार्थाः परियन्ति सर्वत्र व्याप्नुवन्ति। वाचस्पतिः परमात्मा गुरुर्वा तेषां बला एकविंशति पदार्थानां त्यागशक्तिमन्ति बलानि मे मम तन्वः शरीरस्य मध्ये दधातु धारयतु"

दैवीति = दैवी = स्वयमेव दीव्यति प्रकाशते इति देवः परमात्मा, देवस्येदं दैवं, स्त्री चेत् दैवी। यद्वा देवे तिष्ठतीति दैवी गुणमयी गुणत्रयवती एषा मम परमात्मनः माया गुणमयी शक्तिः सा एषा दुरत्यया दुःखेन अतेतुं शक्याऽस्ति। ये यतयः निष्कामसेवया मामेव परमात्मानमेव प्रपद्यन्ते शरणं प्राप्नुवन्ति ते निष्कामनया ईश्वरार्पणबुद्ध्या सुकृत्यैः शुद्धान्तःकरणाः सन्तः एताम् आवरणविक्षेपात्मिकां गुणत्रयात्मिकां मायां तत्कार्यं च तरन्ति पारं यान्ति॥१४॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥१४॥

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्। दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमारुहेमा स्वस्तये॥ अथ० ७।६।३॥

" माश्च मोहार्थवचनं याश्च प्रापणवाचकः। तं प्रापयति या नित्यं सा माया परिकीर्तिता"॥ ब्रह्मवैवर्त पुराण — कृष्णजन्मतः।

सुत्रामाणमिति = हे परमात्मन्! वयं यतयः सुत्रामाणं सुष्ठु स्वगुणैः स्व-स्वविषयं त्रायमाणां पृथिवीं सर्वत्र पदार्थमात्रे विस्तीर्णां सुप्रणीतिं = सुखेन कर्मणां प्रणेत्रीं स्वरित्रां सुष्ठु दण्डनीयां नावं नौसदृशीं पारकर्त्रीं दैवीं देवसम्बन्धिनीं मायां "नौः प्रणेतव्या भवति, नमतेर्वा"। निरु० ५।२३॥

VII



नुद् प्रेरणायाम्। आरुहेम = आरूढा भूयास्म। तदुपरि आरुह्य संसारार्णवपारं गच्छेमेति भावः। अथ च अनागसः = पापादिदोषैः रहिताः वयं दैवीमाया-तरणानन्तरं, सुशर्माणं = शोभन सुखयुक्तां, अदितिं = अखण्डनीयां, अस्रवन्तीं = अविनश्वरीं द्यां द्योतमानां अभिगन्तव्यां मत्संस्थितिं स्वस्तये क्षेमाय अविनाशाय च आरुहेम आरूढा भूयास्मेति। सुत्रामाणम् = सूपसर्गपूर्वकः "त्रैङ् - रक्षणे"। "आतो मनिन्क्वनिब्वनिपश्च" इति मनिन् प्रत्ययः। आरुहेम = रोहतेः लिङि "लिङ्याशिष्यङ्" इत्यङ् प्रत्ययश्च। "अन्येषामपि दृश्यते" इति सांहितिको दीर्घः। पृथिवीम् = "प्रथेः षिवन् संप्रसारणञ्च" उणादि०१।१४८ इति प्रत्ययसंप्रसारणे। षित्वात् ङीष्। दैवीम् = "देवाद्यञञौ" इति अञ् प्रत्ययः॥ देवी भाग० अध्या० ४५ = "विचित्रकार्यकरणा अचिन्तितफलप्रदा। स्वप्नेन्द्रजालवल्लोके माया तेन प्रकीर्तिता"॥

न मामिति = दुष्कृतिनः = दुष्टा कृतिः कर्म येषां ते दुष्कृतिनः अशुभकर्मकर्तारः मायया सकामकर्मरूपेण अज्ञानेन अपहृतं विनष्टं ज्ञानं येषां ते अपहृतज्ञानाः सदसद्विवेकशून्याः अत एव आसुरम् असुरसम्बन्धिनं भावम् आशयम् आश्रिताः प्राप्ताः सन्तः मूढाः मोहं गताः नराधमाः नरेषु अधमाः नराधमाः नीचतराः पापाः पुरुषाः मां परमात्मानं न प्रपद्यन्ते न प्राप्नुवन्ति ॥१५॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।

माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥

परांच एनान् प्रणुद कण्वान् जीवितयोपनान्। तमांसि यत्र गच्छन्ति तत् क्रव्यादो अजीगमम्॥ अथ० २।२५।५॥

परांच इति = हे जीवात्मन्! हे मुमुक्षो! परांचः परमात्मध्यानपराङ्मुखान् कर्मबन्ध्यान् प्रत्यगात्मतत्त्वभिन्नान् जीवितयोपनान् = जीवितस्य जीवनस्य मोहकान् - "युपरुपलुप - विमोहने", "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट्। एनान् ज्ञानविमुखकरान् आसुरीभावान् कण्वान् पापानि - "कणतिः शब्दार्थः" - "अशू प्रुषिलटि कणि - खटि विशिभ्य क्वन्" उणादि० १।१४९ इति क्वन् प्रत्ययः। प्रणुद = अपसारय। तमांसि मूढाः कार्याकार्यविवेकशून्याः पुरुषाः - "तमु ग्लानौ; असुन् प्रत्ययः"। यत्र यं प्रदेशं मुक्तिधामतः दूरतरं लोकं गच्छन्ति तत् तथाविधं निष्प्रकाशं स्थानं क्रव्यादः = क्रव्यं मांसमश्नीति क्रव्यात् असुरः। "क्रव्ये च" इति अदेर्विट् प्रत्ययः। क्रव्यादः मांसभक्षकान् तान् असुरान् नराधमान् अजीगमम् = प्रापयामि। अतः मूढाः नराधमाः मां न प्रपद्यन्ते इति।

चतुर्विधा इति = हे अर्जुन! हे भरतर्षभ! हे भरतश्रेष्ठ! आर्तः = आध्यात्मिकाद्युपद्रवपीडितः, जिज्ञासुः आत्मानात्मविवेकतत्त्वं ज्ञातुमिच्छुः, अर्थार्थी = कस्यचित् सुखस्य इच्छुकः, ज्ञानी सदसद्वस्तुविवेकपूर्वकं ब्रह्मपदप्राप्त्यभिलाषी इति चतुर्विधाः चतुष्प्रकाराः सुकृतिनः पुण्यात्मानः जनाः लोकाः मां परमात्मानं सेवन्ते। १६

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन!
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥

"चत्वारं ईं बिभ्रति क्षेमयन्तो दशगर्भं चरसे धापयन्ते। त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान्" ॥ ऋ० ५।४७।४॥

यद्वा = "मां चत्वार आशवः शविष्ठस्य द्रवित्नवः। सुरथासो अभिप्रयो वक्षन्वयो न तुग्र्यम्" ॥ ऋ० ८।७४।१४॥

चत्वार इति = चत्वारः = आर्तः १, जिज्ञासुः २, अर्थार्थी ३, ज्ञानी ४ इति चतुर्विधाः जनाः क्षेमयन्तः आत्मनः कल्याणमिच्छन्तः ईम् एनं परमात्मानं बिभ्रति धारयन्ति भजन्तो इति भावः। दश दिशः सर्वतः गर्भं गर्भवन्मध्ये व्याप्नुवन्तं एनं परमात्मानं चरसे प्राप्तये धापयन्ते गच्छन्ति। अस्य परमात्मनः त्रिधातवः भूतभविष्यद्वर्तमानकालत्रये धारणशीलाः यद्वा त्रयः कर्मोपासनाज्ञानानां धातवः जगद्धारकाः मंत्राः यस्मिन् स त्रिधातुः ते त्रिधातवः ऋग्यजुःसाममंत्राः परमाः अत्युत्कृष्टाः दिवः प्रकाशस्वरूपाः गावः ज्ञानमय्यः वाचः अन्तान् परि शरीरपरित्यागानन्तरं सद्यः तत्कालमेव चरन्ति गच्छन्ति।

यद्वा- मामिति = हे जीवात्मन्! आशवः = दुःखनिवृत्तये शीघ्रगन्तारः आर्ता इत्यर्थः १, शविष्ठस्य अतिशयेन बलवतः प्रयोजनस्य द्रवित्नवः द्रावकाः अर्थार्थिनः इति भावः २, सुरथासः सुष्ठु रथः शरीरं येषां ते सुरथासः जिज्ञासवः ३, प्रयः = प्रकर्षेण ईः ज्ञानकामः सः प्रे, ते प्रयः ज्ञानिनः ४, इत्येवंरूपाः चत्वारः चतुर्विधाः मां परमात्मानं अभिवक्षन् अभिवहन्ति धारयन्ति। "वयो न तुग्र्यम्" वयः विहगः तुग्र्यं न = जलराशिमिव, प्राप्तुमिच्छन्ति। एवं चतुर्विधाः पुरुषा अपि मां प्राप्तुमिच्छन्ति।

तेषामिति = तेषां चतुर्विधानां सुकृतिनां भक्तानां मध्ये ज्ञानी नित्ययुक्तः नित्यं सर्वदा युक्तः परमात्मनः योगेन युक्तः सन् एकभक्तिः एकस्मिन् परमात्मनि भक्तिः अनुरक्तिः यस्य स एकभक्तिः ज्ञानी विशिष्यते विशिष्टो भवति। ज्ञानिनः ब्रह्मज्ञानवतः अहं परमात्मा अत्यर्थं अत्यन्तं प्रियः प्रेष्ठः अस्मि। स च ज्ञानी एव मम परमेश्वरस्य प्रियः प्रेष्ठः अस्ति। १७॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७॥

"सत्यमित्त्वा महे नदि परुष्ण्यव देदिशम्।
नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः" ॥ ऋ० ८।७४।१५॥

सत्यमिति = हे मुमुक्षो! जीवात्मन्! सत्यमित् सत्यस्वरूपः महे नदि आनन्दघनस्वरूपः परुष्णि ज्ञानस्वरूपः परमात्मा अहं ब्रह्मैवाहं त्वा त्वां मुमुक्षुं अवदेदिशम् = आदिशामि वदामि। महे नदि = महे सततानन्दजनकव्यापारे ब्रह्मतेजसि वा नन्दतीति महे नदि ब्रह्मानन्दभुक्, परुष्णि = भास्वत् ज्ञानेन प्रकाशमानः आपः ब्रह्मणः व्याप्तिं जानन् यद्वा अपः आनन्दः, अपं आनन्दं वेत्तीति आपः आनन्द-

वेत्ता ब्रह्मज्ञानी, अश्वदातरः संसारत्यागिनः पुरुषात् न अस्ति प्रियो नास्ति"

उदारा इति = एते आर्तादयः सर्वे चत्वारः एव उदाराः श्रेष्ठा एव सन्ति. यतः सर्वे मां भजन्ति। सर्वे तु मे मम आत्मा एव। हि यस्मात् कारणात् स ज्ञानी युक्तात्मा युक्तः परमेश्वरे ऽभिनिविष्टः आत्मा मनो यस्य स युक्तात्मा अनुत्तमां सर्वोत्कृष्टां गतिं मां परमात्मानम् आस्थितः आ समन्तात् तिष्ठति॥१८॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्॥१८॥

"एते शमीभिः सुशमी अभूवन् ये हिन्विरे तन्वः सोम उक्थैः। नृवद्वद- न्नुप नो माहि वाजान्दिवि श्रवो दधिषे नाम वीरः॥ ऋ० १०। २८। १२॥

एते इति = ये आर्तः, जिज्ञासुः, अर्थार्थी, ज्ञानी इत्येवंस्वरूपाः ये ब्रह्मानन्दाभि- लाषिणः भक्ताः जनाः तन्वः स्वशरीराणि शरीरस्थेन्द्रियाणि च सोमे परमात्मनि उक्थैः स्तुतिवचनैः हिन्विरे वर्धयन्ति अर्पयन्ति वा। ते एते आर्तार्थार्थिजि- ज्ञासुज्ञानिनः शमीभिः स्वस्वब्रह्मस्तवनकर्मभिः सुशमी सुकर्माणः "सुशमी- त्यत्र बहुवचनस्थाने एकवचनप्रत्ययः। श्रेष्ठा अभूवन् भवन्ति। हे ज्ञानिन्! त्वं तु नृवत् एषां आर्तादिचतुर्णां मध्ये नेता इव वदन् स्वात्मानं प्रकथयन् नः = मत्परमात्मसमीपे उपमाहि उपगम्य वाजान् ज्ञानबलानि दधिषे धारयसि अतः वीरः कामक्रोधादिशत्रूणां दूरप्रक्षेपकः, भक्त्या वरीतुं योग्यो वा। यथा यास्कः = "वीरो वीरयति अमित्रान्, वेत्तर्वा स्याद् गतिकर्मणः, वीरयतेर्वा" निरु० १।७॥ त्वं दिवि द्युलोके श्रवः यशः इति नाम, "प्रवो महे मन्द- श्रवणीयं यशो नृम्णं च बलम्" निरु० ११। ९॥ यद्वा- "श्रवो नाम - प्रशंसा नाम" — श्रवः इच्छमानः प्रशंसामिच्छमानः — निरु० ९। १०। दधिषे धारयसि॥

बहूनामिति = बहूनामनेकेषां जन्मनामन्ते पश्चात् ज्ञानवान् आत्मतत्त्व- विवेकी वासुदेवः सर्वं — "वसन्ति भूतानि अत्रेति वसुः" वस् निवासे"। "सृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" उणादि० १।१० इति उ प्रत्ययः। वसोरयं वासुः। दीव्यति इति देवः। वसुश्चासौ देवः वासुदेवः परमात्मा, सर्वं दृश्यमानं अदृश्यमानं सर्वं जगत् इति ज्ञात्वा मां परमात्मानं प्रपद्यते प्राप्नोति, स महात्मा महान् उच्चतरः आत्मा मनो यस्य स महानु- भावः जगति सुदुर्लभः सुतरां दुःखेन लभ्यः॥१९॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥१९॥

"नूनं तदस्य काव्यो हिनोति महो देवस्य पूर्व्यस्य धाम। एष जज्ञे बहुभिः साकमित्था पूर्वे अर्धे विषिते ससन् नु॥ अथ० ४।१।६॥

नूनमिति = काव्यः = कविः क्रान्तदर्शी सर्वज्ञः परमात्मा "कविः क्रान्तद-

शनो भवति, कवतेर्वा" निरु० १२।१३॥ कविरेव काव्यः -" स्वार्थे अञ्" । सर्वज्ञस्य परमात्मनः ज्ञाता ज्ञानी नूनं खलु अस्य पूर्व्यस्य पूर्वतनस्य देवस्य प्रकाशात्मकस्य परमात्मनः तद् महो महत् धाम तेजो रूपं गृहं लोकं ब्रह्मलोकमित्यर्थः। हिनोति प्राप्नोति । "हि गतौ"। इत्था इत्थं "थाहेतौ च छन्दसि" इति इदमः था प्रत्ययः। बहुभिः साकं बहुभिः जीवैः सह एषः ज्ञानी जज्ञे उत्पन्नः आसीत्। परन्तु यदा पूर्वे अर्धे विषिते = विसिते पूर्वे अर्धे अपूर्णज्ञानमये जन्मनि विसिते विशेषेण सम्बद्धे सति प्रत्यक् जीवः ससन् नु = अस्वपत् मुक्तौ यत्नवान् न अभवत्॥

कामैरिति = तैः तैः कामैः पुत्रस्वर्गपश्वायुरादिभिः मनोरथैः हृतज्ञानाः हृतं विनष्टं ज्ञानं नित्यानित्यविवेकः येषां ते हृतज्ञानाः सन्तः स्वया स्वकीयया प्रकृत्या वासनया नियताः वशीभूताः सन्तः तं तं नियमं विध्यनतिक्रमं आस्थाय आश्रित्य अन्यदेवताः परमात्मभिन्नान् देवान् प्रपद्यन्ते सेवन्ते शरणं प्राप्नुवन्ति॥२०

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २०॥

यज्ञे यज्ञे समर्त्यो देवान् संपर्यति । यः सुम्नैः ~~पुत्रस्वर्गपशुप्राप्त्यादि सुखकरैः पूजनैः एनान् पुत्रादिप्राप्तिकरान् ब्रह्मभिन्नान् देवान् दीर्घश्रुत्तम~~ आविवासात्येनान्॥ ऋ० १०।९३।२॥

यज्ञे इति = ~~यः जनः दीर्घश्रुत्तमः~~ अतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोता सन् भिन्नभिन्नशास्त्रेषु भिन्नभिन्नकामानां पूरकाणां भिन्नभिन्नविधीनां श्रोता - इत्यर्थः। सुम्नैः पुत्रस्वर्गपशुप्राप्त्यादिसुखकरैः पूजनैः एनान् पुत्रादिप्राप्तिकरान् ब्रह्मभिन्नान् देवान् आविवासति = परिचरति, स मर्त्यः कामहृतज्ञानः मनुष्यः यज्ञे यज्ञे याच्ञे याच्ञे भिन्नभिन्नकामनायाच्ञायाम् — "यज्ञः कस्मात् प्रख्यातं यजति कर्मेति नैरुक्ताः। याच्ञो भवतीति वा यजुरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवो - यजूंष्येनं नयन्ति वा" निरु० ३।१९॥ देवान् भिन्नकामनापूरकान् भिन्नभिन्नदेवान् सपर्यति सेवते॥ तथा च मुण्डकोप० १।२।९ — "अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः"॥

यो य इति = यः भक्तः शैवो वैष्णवो वा यां यां शैवीं वैष्णवीं ऐन्द्रीं वा तनुं कामितं अर्थम् - तनोतीति तनुः देवता तां श्रद्धया श्रत् सत्यं तत् दधातीति श्रद्धा तया अर्चितुं फलसिद्धये आराधयितुं इच्छति। अहं परमात्मा तस्य तस्य भक्तस्य तामेव श्रद्धां अचलां स्थितिमतीं विदधामि प्रयच्छामि धारयामि वा॥२१॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

" मनीषिणः प्रभरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम् । इन्द्रं सत्यैरे-

एरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥ ऋ० १०।१११।१ ॥

मनीषिण इति = हे मनीषिणः! हे स्तोतारः! हे विद्वांसः! वा नृणां कर्मनेतॄणां युष्माकं यथा यथा यादृश्यः यादृश्यः यद्यद्देवता पूजनात्मिकाः मतयः बुद्धयः सन्ति। तथा तथा तादृशीं मनीषां स्वस्वश्रद्धानुसारिणीं स्तुतिं तत्तद्देवतापूजनात्मिकां बुद्धिं प्रभरध्वं यूयं कुरुध्वम्। अहं परमात्मा सत्यैः सन्तं आपयतीति सत्यं तैः सत्यैः विद्यमानैः तत्तद्देवतात्मकश्रद्धामयैः कृतेभिः कर्मभिः इन्द्रं याज्ञिकपुरुषाणां आदरयितारं जीवात्मानं एरयाम तस्मिन्तस्मिन् कर्मणि प्रेरयामि। हि यस्मात् कारणात् वीरः ~~वीरः~~ देवपूजायै वेगवान् विदानः देवतापूजां जानानः स जीवात्मा एव गिर्वणस्युः गीर्भिः स्तुत्यभिलाषुकः अस्ति। सत्यम् = "अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्थान् संचस्कार शाकटायनः। एतेः कारितं च यकारादिं चान्तकरणम् अस्तेः शुद्धं च सकारादिं च" निरु० १।१३॥ इन्द्रः = "तद् यदेनं प्राणैः समैन्धस्तदिन्द्रस्य इन्द्रत्वमिति विज्ञायते"। निरु० १०।८॥ एरयाम = "ईर् गतौ" ण्यन्तस्य लोट्। वीरः = "अजेर्वी भावः"॥

स इति = स च भक्तः तया पूर्वोक्तयाऽचलया श्रद्धया युक्तः संगतः सन् तस्याः स्वस्वदेवतायाः स्वस्वदेवतामूर्त्याः वा आराधनं पूजनम् ईहते करोति, ततः तत्तद्देवताद्वारा मया एव तत्तद्देवतान्तर्यामिणा परमात्मनैव विहितान् नियतीकृतान् दत्तान् वा हितान् इष्टान् कामान् मनोरथान् लभते प्राप्नोति ।२२

स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हितान् ॥२२॥

"अहं तष्टेव बन्धुरं पर्यचामि हृदा मतिम्। कुवित्सोमस्यापामिति"।
ऋ० १०।११९।५॥

अहमिति = अहं परमात्मा एव हृदा आत्मीयेन मनः संकल्पेन तस्य तस्य भक्तजनस्य मतिं बुद्धिं कामं वा 'बन्धुरं तष्टा इव" पर्यचामि तत्तन्मतिसाधुकरणाय परिगच्छामि। यथा तक्षा बन्धुरं सारथिनिवासस्थानं साधुकरोति तथाहमपि तन्मतिं तथैव करोमि। इति हेतौ = इति यस्मात् कारणात् अहं परमात्मैव कुवित् बहुवारं "कुविन्-बहुस्य बहुनामसु पाठः" निघं० ३।१॥ सोमस्य द्वितीयार्थे षष्ठी। सोमस्य सोमं शान्तस्वभावं सत्वगुणविशिष्टं ज्ञानिनाम् अपाम् = "पा पाने" इति सति पीतवान् अस्मि स्वस्मिन् गृहीतवानस्मि। 'पा रक्षणे' इति सति - अरक्षम् तद्रक्षा मदधीना इति। सोमस्य संप्रदानसंज्ञा - "चतुर्थ्यर्थे बहुलम्" इति षष्ठी। अपाम् = 'पा पाने' लुङि "गातिस्था -" सिचो लुक्। 'पा रक्षणे' लङि रूपम्।

अनत्वदिति = अल्पमेधसां = अल्पा सदसद्विवेकरहिता —

मेधा बुद्धिर्येषां तेऽल्पमेधसः तेषां अल्पमेधसां तेषां मनोरथवतां तत् तु फलं अन्तवत् विनश्वरं भवति। देवयजः इन्द्रादिदेवताभक्ताः देवान् इन्द्रादिदेवलोकान् यान्ति प्राप्नुवन्ति। मद्भक्ताः मदुपासकाः जनाः माम् यान्ति प्राप्नुवन्ति॥ २३॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि॥ २३॥

देवान् वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनानि प्रतस्थुः। ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः॥ ऋ० १०।६६।१५॥

यद्वा = "समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः। विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्न इव तारिषत॥ ऋ० ८।१९।१४॥

देवानिति = वसिष्ठः अतिशयेन वशी "इष्ठन् इते लुक्" शस्य सः। अतिशयजितेन्द्रियः। अमृतान् अयाचितलब्धमानान् देवान् इन्द्रादिदेवान् ववन्दे स्तौति। ये देवाः विश्वा विश्वानि भुवना भुवनानि लोकान् अभि प्रतस्थुः स्वतेजसा अभितः प्रतिष्ठन्ति। प्रपूर्वात् तिष्ठतेः लिटि रूपम्। ते देवा अद्य अस्मिन् काले नोऽस्मान् स्वदासान् उरुगायं प्रभूतयशस्कं यथा स्यात्तथा रासन्ताम् = स्वनिवासलोकं प्रयच्छन्तु। यूयम् अस्मत्फलप्रदातारः देवाः स्वस्तिभिः आशीर्वचनैः नोऽस्मान् दासान् ~~उरुगायं प्रभूतयशस्कं~~ सदा सर्वदा पात रक्षत।

समिधेति = यः मर्त्यः मनुष्यः निशिती निशित्या नितरां तीव्रया समिधा समिद्धया संदीप्त्या भक्त्या, अस्य परमात्मनः "तृतीयार्थे षष्ठी" अनेन परमात्मना प्रदत्तैः धामभिः गृहधारकैः सर्वेन्द्रियैः अदितिम् अखण्डनीयम् अविनश्वरं परमात्मानं दाशत् परिचरति सेवते। स इत् स भक्त एव धीभिः कर्मभिः बुद्धिविशेषैः वा सुभगः सर्वप्रियः भवति। तथा द्युम्नैः यशोभिः विश्वा विश्वान् सर्वान् जनान् मनुष्यान् उद्न इव उदकानि इव नौका अतितारिषत् अतिक्रामति॥

यद्वा = सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः। अथ० २०।६९।३

अव्यक्तमिति = अबुद्धयः स्वल्पबुद्धयः मूढाः मम परमेश्वरस्य अव्ययम् अविनश्वरम् अनुत्तमं नास्ति उत्तमः यस्मात् स अनुत्तमः तम् अनुत्तमम् उत्तमोत्तमं परं भावं परमं तत्त्वं अजानन्तः ज्ञानविषयम् अकुर्वन्तः अव्यक्तं = व्यज्यते इति व्यक्तः विकारः देहेन्द्रियादिसंघातः तद्रहितः अव्यक्तः परमात्मस्वरूपः तम् अव्यक्तं परमात्मस्वरूपं मां व्यक्तिं आपन्नं मनुष्यात्मना स्थितं मन्यन्ते स्वीकुर्वन्ति पश्यन्तीति भावः॥ २४

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम्॥ २४॥

असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः। उतो सन्मन्यन्तेऽवरे ये ते शाखामुपासते॥ अथ० १०।७।२१॥

असच्छाखामिति = ये अवरे अधमाः मूढा जनाः पुरुषाः परमम् अत्युत्कृष्टं

सत् अविनश्वरं ब्रह्मस्वरूपं माम् इव-एव असन्द्धारवाम् = खे आकाशे हृदयाकाशे शेते इति शाखा। "पृषोदरादि-" पा०६।३।१०९ का० इत्यनेन आद्यन्तविपर्ययः। यद्वा - शक्नोतेः (स्वादि० परस्मै०) औणादिकः खकारः, कस्य खादेशः = शाखा। हृदय भाव: असती मिथ्याविनश्वरशीला शाखा-च हृदयभावश्च असच्छाखा ताम् असन्द्धाखाम् असद्विचारवतीं प्रतिष्ठन्तीं स्थितिं विदुः जानन्ति स्वीयबुद्धिविषयं कुर्वन्ति। अथ च मन्यन्ते मननं कुर्वन्ति। उतो अपि-च ते मूढाः पुरुषाः एव शाखां मूलं परमात्मस्वरूपं हित्वा शाखां विनश्वरं मनुजदेहं एव उपासते। आश्रयन्ति॥

नाहमिति = योगमायासमावृतः योग एव माया भगवतो जगत्सर्जनात्मिकी शक्ति तया समावृतः समाच्छन्नः अहं वैष्णवीशक्त्या समाश्लिष्टोऽहं सर्वस्य लोकस्य न प्रकाशः ज्ञानविषयो न भवामि। अथापि योगमाया जननमरणदुःखप्रवाहयोजिकया मायया तमोरूपया वृत्त्या समावृतः समाच्छन्नः अत एव मूढः विपरीतभावं प्राप्तः अयं लोकः माम् अव्यक्तं परमात्मस्वरूपं तथा अजं कारणशून्यम् अव्ययं विनाशरहितं न अभिजानाति न वेत्ति॥२४॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम्॥२५॥

"परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति। उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वं परमस्य वित्से॥ ऋ०७।९९।१॥ तैत्ति०ब्रा०२।८।३।२"

पर इति = परस् परस्तात् "परशब्दात् छान्दसः सिप् प्रत्ययः। मात्रया इत्यत्र पंचम्यर्थे तृतीया। मीयन्तेऽनया विषया इति मात्रा। मा + त्रन् = इन्द्रियवृत्तिः। तस्याः मात्रायाः इन्द्रियवृत्त्याः परः परस्तात् वर्तमानया अपरिमितया तन्वा शरीरेण वृधान! वर्द्धमान! हे विष्णो! हे सर्वव्यापक! परमात्मन्! ते तव महित्वं महत्त्वं प्रकाशस्वरूपमहत्तां न अनुअश्नुवन्ति न व्यापुवन्ति लोकाः। तव माहात्म्यं सर्वैः जनैः ज्ञातुं न शक्यते इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्याः पृथिवीत आरभ्य अन्तरिक्षं यावत् विद्म चक्षुषा उपलभामहे नान्यत् किञ्चित्। हे देव! हे प्रकाशस्वरूप परमात्मन्! त्वमेव परमस्य अत्युत्कृष्टस्य लोकस्य - इत्यत्र द्वितीयार्थे षष्ठी - परमं लोकं वित्से जानासि। नान्यः साधारणः जनः ज्ञातुं शक्तः। अतएव तव महत्त्वं न केनापि मूढजनेन ज्ञातुं शक्यम् इति भावः। अथ कठोप० २।३।१२ = "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा"॥ तथा च = श्वेताश्व० अ०४। श्रु०२० = "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्"॥ तथा च मुण्ड० उप० ३।१।८ = "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा"॥

वेदेति = हे अर्जुन! अहं परमानन्दस्वरूपः श्रीकृष्णः समतीतानि व्यतीतानि वर्तमानानि साम्प्रतिकानि भविष्याणि अनागतानि भूतानि सर्वप्राण्यप्राणिपदार्थान् वेद जानामि। मां तु अज्ञानाच्छन्नत्वात् देहेन्द्रियसमूहः प्राणो मनो वा-

कश्चन पण्डितोऽपि वा न वेद न जानाति ॥२६॥

वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥

न त्वा देवास: आशत न मर्त्यासो अद्रिव: । विश्वा जातानि शवसाऽभिभूरसि न त्वा देवास आशत ॥ ऋ० ८। ९७। ९॥

न त्वेति = हे अद्रिव:! सर्वै: आदरणीय परमात्मन्! देवास: चक्षुरादीन्द्रियाणि त्वा त्वां परमात्मानं न आशत स्वकर्मणा स्वबलेन वा न ज्ञातुं व्याप्नुवन्ति ज्ञातुं समर्था: न भवन्ति। मर्त्यास: अज्ञानिन: साधारणा: मनुष्या: त्वां न आशत स्वकर्मणा स्वबलेन वा न ज्ञातुं व्याप्नुवन्ति। यस्माद्धेतो: त्वं परमात्मा विश्वा विश्वानि सर्वाणि जातानि जात-मात्रपदार्थान् शवसा स्वबलेन एव अभिभू: असि अभिभावुकोऽसि। तस्मात्त्वां परमात्मानं देवास: सर्वाणि इन्द्रियाणि पण्डिता: मनुष्याश्च न आशत ज्ञातुं समर्था: न भवन्ति। यथा - केनोप० खं० १ श्रु० ३ = "न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितात्" ॥

इच्छाद्वेषेति = हे भारत! हे अर्जुन! हे परन्तप! हे शत्रुनाशक! इच्छाद्वेषसमुत्थेन = इच्छा= वस्तुप्राप्तिकाम:, द्वेष: = अनिष्टवस्तुपरित्याग: ताभ्यां समुत्थेन उद्भूतेन द्वन्द्वमोहेन सुखे दु:खज्ञानं दु:खे सुखज्ञानम् एवं सुखदु:खे, रागद्वेषौ, हानिलाभौ इत्यादिद्वन्द्वस्य मोहेन विपरीतचित्तत्वेन सर्वभूतानि सर्वप्राणिन: सर्गे शरीरोत्पत्तिसमये संमोहं सं-मूढत्वं यान्ति प्राप्नुवन्ति ॥२७॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत!
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥२७॥

अयं लोक: जालमासीच्छक्रस्य महतो महान्। तेनाहमिन्द्रजालेनामूंस्तमसाऽभि-दधामि सर्वान् ॥ अथ० ८। ८। ८॥

अयमिति = हे मुमुक्षो! हे जीवात्मन्! शक्रस्य सर्वकार्येषु शक्तस्य "शक्लृ शक्तौ" इत्यस्मात् - "स्फायितञ्चि-" उणादि० २।१३ - इति रक् प्रत्यय:। महत: सर्वै: पूजनीयस्य सर्वेभ्य: उत्कृष्टस्य मम परमात्मन: अयं महान् सर्व: लोक: प्राणिवर्ग: जालम् = इच्छाद्वेषादि-द्वन्द्वमोहसंवृत: आसीत् = स्वकर्मवशात् शरीरोत्पत्तिसमयत: = अस्ति। जालम् = जाल: = "लिङ्गव्यत्यय:" "जल संवरणे" - घञ् प्रत्यय:। अहं कर्मफलप्रदाता परमात्मा तेन मोहमयेन जालेन अन्यथास्थितस्य वस्तुन: अन्यथादर्शनसाधनेन अनात्मनि आत्मबुद्धिदर्शनसा-धनेन सर्वान् अमून् प्राणिन: तमसा मोहेन कार्याकार्यकर्तव्यविवेकशून्यत्वेन अभिद-धामि संयोजयामीति।

येषामिति = पुण्यकर्मणां पुण्यं कर्म येषां ते पुण्यकर्माण: तेषां पुण्यकर्मणां सुकृतां येषां जनानां लोकानां पापं पौर्वदेहिकं पापम् अन्तगतं विनष्टं भवति, ते पुण्यकर्माण: एव द्वन्द्वमोहनिर्मुक्ता: सज्ज्ञानप्रतिबन्धकसुखदु:खादिद्वन्द्वमोहा-त् निर्मुक्ता: निर्गता: सन्त: दृढव्रता: दृढं परिपक्वं व्रतं बुद्धिनिश्चयो येषां ते दृढव्रता: पूर्णनिश्चया: मां परमात्मानं भजन्ति सेवन्ते ॥२८॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।

ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

"पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् । ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥ अथ० ५।१७।११ ॥ ऋ० १०।१०९।७ ॥

पुनर्दायेति = देवैः देवाः "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति भिसस्तृतीयादेशः । देवाः द्वन्द्वमोह निर्मुक्ताः विद्वांसः ज्ञानिनः निकिल्बिषम् किल्बिषाणामभावः निकिल्बिषम् आत्मानं निष्पापं कृत्वी कृत्वा विधाय "स्नात्व्यादयश्च" इति निपातितः । ब्रह्मजायां ब्रह्मणः जायते इति ब्रह्मजा भक्तिः ताम् अयते प्राप्नोति इति ब्रह्मजाया तां ब्रह्मजायां ब्रह्मभक्तिं पुनर्दाय = "पुनश्चनसौ च्छन्दसि गतिसंज्ञा वक्तव्या" इति पुनः शब्दस्य गतिसंज्ञायां समासल्यपौ । "न ल्यपि" इतीत्व प्रतिषेधः । "कृदुत्तरपदप्रकृतिस्वरत्वम्" मनसि पुनर्दत्त्वा ब्रह्मसेवायां प्रविश्य पृथिव्याः ऊर्जं रसभूतम् अन्नं यथासमयं भक्त्वाय भक्त्वा विभज्य, "क्त्वो यक्" इति यगागमः । मिताहारी भूत्वा उरुगायम् = उरुभिः बहुभिः जीवैः गायं स्तोतव्यम् उरुगायं परमात्मानं उपासते सेवन्ते ॥ यथा श्वेताश्व० अ० १ श्लो० १० = "तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ॥

जरेति = ये मुमुक्षवः जनाः मां परमेश्वरं आश्रित्य मद्भजनासक्ताः सन्तः जरामरणमोक्षाय — जरा वृद्धावस्था, मरणं देहपरित्यागः, तयोः मोक्षाय तज्जनित-दुःखपरित्यागाय यतन्ति प्रयत्नं कुर्वन्ति ते जनाः कृत्स्नं समग्रं अध्यात्मं प्रत्यग्रूपं सर्वं वस्तु अखिलं सर्वं कर्म सुखदुःखाद्यनुभवकारणं कर्म विदुः जानन्ति, तथा तत् ब्रह्म विदुः जानन्ति ॥ २९ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।

ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

"तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः । अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥ ऋ० ५।३०।६ ॥

तुभ्येदिति = इन्द्रः ब्रह्मैश्वर्योपपन्नः यः मुमुक्षुः जीवात्मा ओहानं सत्कर्मावरोधकं अपः ब्रह्म आशयानम् आवृत्य शयानं कुर्वन्तं मायिनं शुभकर्मभ्यः छलकर्तारं अहिं पापं मायाभिः ब्रह्मज्ञानशक्तिभिः प्रसक्षत् अभिभवति तिरस्करोति । एते इत् = ते एव मरुतः स्तोतारः मुमुक्षवः जनाः तुभ्येत् = तुभ्यं परमात्मने एव अर्कम् अर्चनीयं स्तोत्रं अर्चन्ति कुर्वन्ति । अतः एव सुशेवाः = शेवमिति सुखनाम, शोभनसुखाः एव ते अन्धः पापप्रवृत्तिकारकं अन्नं सुन्वन्ति निष्पीडयन्ति परित्यजन्तीत्यर्थः । सुन्वन्ति = षुञ् अभिषवे, "अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानञ्च" । "हुश्नुवोः" इति यण् । मरुतः = मरुच्छब्दस्य ऋत्विङ्नामसु पाठः । "मरुतः — प्रथमगामिनो भवन्ति, मरुतो मितराविणो मितरोचिनो वा, महद् द्रवन्तीति वा" । निरु० ११।१३ ॥ अन्धः अन्ननामैतत् । "अदेर्नुम् धश्च" (उणादि० ४।२०५) इत्यसुनि व्युत्पादितम् । अहिम् = अहि रेनोदेति अन्तरिक्षे,

अयमपीतरोऽहिः रेतस्कोदेव। नि इसित उपसर्गः — आहन्तीति " निरु० २।१७॥
आ + हन् + डिन्, टिलोपः " आङो ह्रस्वः " इति अहिः॥

साधिभूतेति = ये मुमुक्षवः जनाः साधिभूताधिदैवम् = भूते अधि इति अधिभूतम् — सूर्यादि सर्वं कार्यम्। अधिदैवम् = देवे परमात्मनि अधि इति अधिदैवम् ताभ्यां सह वर्तते इति साधिभूताधिदैवम्। साधियज्ञम् = यज्ञे अधि इति अधियज्ञं तेन सह वर्तते इति साधियज्ञम् — अधियज्ञात्मना स्थितं मां परं ब्रह्म विदुः कथयन्ति। युक्तचेतसः मयि युक्तं समाहितं चेतः मनः यैः ते युक्तचेतसः समाहितचित्ताः भूत्वा प्रयाणकालेऽपि मृत्युसमयेऽपि मां ब्रह्म विदुः जानन्ति॥

इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां सप्तमोऽध्यायः समाप्तः।

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥ ३०॥

इति श्रीमद्भगवद्गीतायां श्रीकृष्णार्जुनसंवादे सप्तमोऽध्यायः। श्रीकृष्णार्पणमस्तु॥

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते। ऋ० १।१६४।३९॥

ऋच इति = अधिभूताधिदैवाधियज्ञप्रतिपादकोऽयं मंत्रः। अधिभूतपक्षे यथा = ऋचः अनेन अर्चन्तीति ऋचः शरीराणि। परमे अत्युत्कृष्टे व्योम्नि- व्योमन् = अवतेस्तर्पणार्थात् " अन्येभ्योऽपि दृश्यते " इति मनिन् प्रत्ययः। " नेड्वशि कृति " इतीट्प्रतिषेधः। " ज्वरत्वर — " इत्यादिना वकारोपधयोरूठ्। " सुपां सुलुक् " — " न ङिसम्बुद्ध्योः " इति नलोपप्रतिषेधः। व्योम्नि निरतिशयानन्दस्वरूपे, अवतेर्ज्ञानार्थकः विशेषेण ज्ञातरि, अक्षरे = न क्षरतीत्यक्षरम् — आत्मा तस्मिन् अक्षरे सन्ति। " अक्षरं न क्षरति, न क्षीयते वाऽक्षरं भवति वाचोऽक्ष इति वा। अक्षो यानस्याञ्जनात् तत्प्रकृतीतरद्वर्तनसामान्यादिति; निरु० १३।१२॥ यस्मिन् आत्मनि विश्वे सर्वे देवाः इन्द्रियाणि " तानि हि विषयेषु द्योतन्ते " इति देवाः। अधिनिषेदुः अधिनिषण्णानि भवन्ति। यः देहाधिष्ठितः पुरुषः तत् अक्षरम् आत्मानं न वेद न जानाति स जीवात्मा ऋचा देहेन किं करिष्यति, न तस्य जीवितेन अर्थः। ये इत् ये एव तद् अक्षरं आत्मानं विदुः जानन्ति ते इमे देहाः देहविशिष्टाः जीवात्मानः समासते सम्यक् तिष्ठन्ति। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम् - इत्यधिभूतम्। यथा च निरुक्तपरिशिष्टे — " शरीरमत्र ऋगुच्यते यदनेन अर्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशि धर्म तदक्षरं भवतीन्द्रियाण्यत्र देवाऽउच्यन्ते यानि अस्मिन्नात्मनि एकं भवन्ति इत्यात्मप्रवादः " " निरु० १३।११॥

अथाधिदैवपक्षे = ऋचः यदेनमर्चन्ति इति स्वप्रभया प्राणिनां ऋचः ब्रह्माण्डस्य प्राणिनः परमे व्योमनि अत्यन्तरक्षके अक्षरे सूर्ये — " य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते " तैत्ति० आ० १०। २३

इति श्रुत्युक्तस्वरूपे सूर्ये एकाश्रिताः सन्ति। यस्मिन् सूर्ये विश्वे सर्वे देवाः द्योतमानाः रश्मयः अधिनिषेदुः वर्तन्ते। यः प्राणी तत् अक्षरं तं सूर्यं न वेद न जानाति स पुमान् ऋचा प्राणिवर्गेण किं करिष्यति। य इत् ये एव प्राणिनः तत् सूर्यस्वरूपं हिरण्मयं स्वरूपं जानन्ति भावयन्ति ते इमे एव विद्वांसः समासते सुखेन रोगादिरहिताः भोगिनः सन्तः चिरकालं जीवन्ति। इत्यधिदैवम्। यथा निरुक्तपरिशिष्टे= "आदित्य इति पुत्रः शाकपूणेरेषर्भवति। यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि यदन्यन्मंत्रेभ्यः तदक्षरं भवति। रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णाः" इत्यधिदैवतम् (निरु० १३।११)।

अथाधियज्ञपक्षे = ऋचः ऋक्शब्देन ऋक्प्रधानभूताः साङ्गपरविद्यात्मकाः चत्वारो वेदा उच्यन्ते। ऋचः चत्वारो वेदाः परमे अत्युत्कृष्टे निरतिशये व्योमन् व्योमनि व्योमसदृशे अलेपत्वनीरूपत्वव्याप्तित्वादिसादृश्येन व्योम इत्युक्तम्। यद्वा विशेषेण सर्वस्य रक्षके यद्वा विविधम् अस्मिन् शब्दजातमोतमिति व्योम, तस्मिन् अक्षरे तिसृषु मात्रासु अकारोकारमकारलक्षणासु उपशान्तासु यद् अवशिष्यते तदक्षरम् तस्मिन् अक्षरे परमात्मनि आश्रित्य तिष्ठन्ति। यस्मिन् ओंकारे परमात्मनि विश्वे सर्वे देवाः अधिनिषेदुः निषीदन्ति आश्रित्य तिष्ठन्ति। ऋगादिषु ये देवाः ते मंत्रद्वारेण अक्षरे निषण्णाः तस्य शब्दकारणत्वात् अथवा प्रथममात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन इत्यर्थः। द्वितीयायां मात्रायां अन्तरिक्षं वायुः यजूंषि तल्लोकवासिनो जनाः इति। तृतीयायां मात्रायां द्यौः आदित्यः सामानि तल्लोकवासिनो जनाः इति विज्ञायते। ओंकार एवेदम् तस्मिन् यथोक्तलक्षणे अक्षरे परमात्मनि ऋगुपलक्षिताः सर्वे साङ्गाः वेदाः पर्यवसिता इत्यर्थः। यो यो मर्त्यः तत् तादृशं देवादीनां स्वरूपलाभास्पदं समग्रवेदैस्तात्पर्यं प्रतिपाद्यं ब्रह्म न वेद न जानाति स मर्त्यः ऋचा ऋगादिशब्दजालेन स्तुत्या वा किं करिष्यति। वेदनसाधनेन वेदनवेद्यम् अविदित्वा किं साधयतीत्यर्थः। य इत् ये एव तत् तत्त्वं ओंकारं परं ब्रह्म विदुः जानन्ति ते इमे ते एव इमे ज्ञातारः समासते अपुनरावृत्त्या स्वस्वरूपस्थित्या च सम्यक् तिष्ठन्ति। यथा च निरुक्तपरिशिष्टे = "ऋचो अक्षरे परमे व्यवने यस्मिन् देवाः अधिनिषण्णाः सर्वे, यस्तन्न वेद किं स ऋचा करिष्यति। य इत्तद्विदुस्त इमे समासते इति विदुषः उपदिशति। कतमत्तदेतदक्षरम् = "ओम्" इत्येषा वागिति शाकपूणिः, ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु मंत्रेषु एतद्ध एतदक्षरं यत् सर्वां त्रयीं विद्यां प्रति प्रतीति च ब्राह्मणम्। निरु० परि० १३।१०॥ इति श्री लैयावोसाव्य जगन्नाथशास्त्रिसंकलितायां वेदगीतार्थबोधिन्यां सप्तमोऽध्यायः समाप्तः। श्रीकृष्णार्पणमस्तु॥

VIII



# अथाष्टमोऽध्यायः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युद्धरणम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीता पृथक्त्वं नो द्वयोर्ब्रह्म प्रकीर्तितम्॥२॥

किमिति = हे पुरुषोत्तम! हे जनार्दन! तद् ब्रह्म किम्? किंलक्षणमस्तीत्युच्यताम्। किमध्यात्मम्? आत्मा देहः तमधिकृत्य तिष्ठतीति अध्यात्मं प्राणः श्रोत्रादिकं वा आत्मा वा तत्किं स्वरूपमस्ति। कर्म श्रौतं स्मार्तं वा कर्म किंस्वरूपमस्ति। अधिभूतं किंस्वरूपं प्रोक्तं कथितम्। अधिदैवम् अधिदैवस्वरूपं किमुच्यते कथ्यते।१।

अधियज्ञ इति = हे मधुसूदन! हे कृष्ण! अधियज्ञः कः किंस्वरूपः। अत्र अस्मिन् देहे अधियज्ञः कथं केन प्रकारेण तिष्ठति। नियतात्मभिः नियतः वशीकृतः आत्मा मनो यैः तैः नियतात्मभिः वशीकृतमनोभिः प्रयाणकाले देहत्यागसमये कथं केन प्रकारेण सगुणरूपेण निर्गुणरूपेण वा ज्ञेयोऽसि ज्ञातुं योग्योऽसि।२

अर्जुन उवाच = किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम।
अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् देहेऽस्मिन् मधुसूदन।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः॥२॥
(वेदमन्त्रो न लभ्यते)

अक्षरमिति = अक्षरं न क्षरति न नश्यति इत्यक्षरं परमं ब्रह्म उच्यते। स्वभावः = स्वयमेव भवतीति स्वभावः परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावं अनुभवतीति स्वभावः, परं ब्रह्म अध्यात्ममुच्यते। भूतभावोद्भवकरः भूतानां भवः जन्म उद्भवः वृद्धिः तयोः कर्ता, यद्वा भूतानि एव भावाः भूतभावाः स्थावरजंगमपदार्थाः तेषाम् उद्भवः उत्पत्तिः तं करोतीति भूतभावोद्भवकरः विसर्गः देवोद्देश्येन चरुपुरोडाशादिद्रव्यपरित्यागः यज्ञो वा कर्मसंज्ञितः कर्म उच्यते।३॥

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः॥३॥

सुभूः स्वयंभूः प्रथमोऽन्तर्महत्यर्णवे।
दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः॥ यजु० २३।६३

सुभूरिति = हे जिज्ञासो! हे जीवात्मन्! स परमात्मा अक्षरस्वरूपः सुभूः सम्यक्तया भवनशीलः सर्वोपरि विराजमानः। स एव स्वयंभूः स्वयं भवतीति स्वयंभूः उत्पत्तिविनाशरहितः स्वभावत्वेन अध्यात्ममित्युच्यते। महति अतिविस्तृते अर्णवे संसारे अन्तः मध्ये ऋत्वियं ऋत्वनुकूलं गर्भं भूतभावोद्भवकरं विसर्गं कर्म दधे धारयति। यतः यस्मात् कर्मणः प्रजापतिः अग्निसूर्यादिः

जातः उत्पन्नः॥

अधिभूतमिति = क्षरः = क्षरति नश्यति इति क्षरः भावः पदार्थः, अधिभूतं, सर्वम् उत्पत्तिमत् अधिभूतमस्ति इति भावः। पुरुषः पुरि शयनात् पुरुषः परमात्मा अधिदैवतमुच्यते। हे देहभृतांवर! देहधारिणां श्रेष्ठ अर्जुन! अत्र देहे अस्मिन् शरीरे अहम् एव अधियज्ञः इज्यते क्रियते इति यज्ञः श्रौतस्मार्तकर्म तदधिकृत्य तिष्ठतीति अधियज्ञोऽहमेवास्मि॥४॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर॥४॥

"इदं यमस्य सादनं देवमानं यदुच्यते। इयमस्य धम्यते नाडीरयं गीर्भिः परिष्कृतः॥"
ऋ०१०।१३५।७॥

"पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति।
तान्त्सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम्॥" अथ०११।५।२२॥

इदमिति = इदं क्षेत्रमधिभूतं वा यत् देवमानं देवानाम् इन्द्रियाणां मानं विषयनिर्माणसाधनम् उच्यते कथ्यते। तत् क्षेत्रं विनश्वरमस्तीति भावः। सादनं सदनम् इत्यत्र छान्दसः सांहितिको दीर्घः। अस्य क्षेत्रस्य विनाशसूचनाय इयं नाडी "वचनव्यत्ययः" देहस्था शिराः धम्यते परमात्मना वाद्यते। अयम् अनित्यः देहः गीर्भिः वाणीभिः परिष्कृतः अलंकृतः अस्ति। परिष्कृतः "संपरिभ्यां करोतौ" पा०६।१।१३७॥ इति सुडागमः। "परिनिविभ्यः" इति षत्वम्।

पृथगिति = सर्वे प्राजापत्याः प्रजापतिना परमात्मना सृष्टाः देवमनुष्यादयः आत्मसु विनश्वरेषु स्वस्वदेहेषु पृथक् भिन्नभिन्नतया प्राणान् परमात्मसत्तां बिभ्रति धारयन्ति। यद्वा = प्राजापत्याः प्रजापतिना ब्रह्मणा सृष्टाः सर्वे पदार्थाः कार्यरूपतामापन्नाः आत्मसु स्वस्वदेहेषु प्राणान् स्थितिकारकं बलं पृथक् भिन्नं भिन्नं बिभ्रति धारयन्ति। अधिदैवत्वमापन्नाः सर्वे पदार्थाः इत्यर्थः। ब्रह्मचारिणि वेदविदि आभृतं भक्त्या धृतं पालितं वा ब्रह्म परमात्मा तान् सर्वान् पदार्थान् अधियज्ञस्वरूपेण रक्षति पालयति॥

अन्तकाल इति = यः ब्रह्मविद् यतिः अन्तकाले मृत्युसमये मामेव परमात्मानं स्मरन् ध्यायन् कलेवरं शरीरं मुक्त्वा त्यक्त्वा प्रयाति देहत्यागं करोति स मुमुक्षुः मद्भावं मत्स्वरूपं याति प्राप्नोति अत्र अस्मिन् विषये संशयः संदेहः नास्ति॥५॥

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥५॥

अहमेवास्म्यमावास्या३ मामावसन्ति सुकृतो मयीमे। मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे। अथ०७।८४।२॥

अहमिति = अहं परमात्मा एव अमावास्या = अमा निर्माणरहिता वसति अत्र स्वरूपे इति अमावास्या = कारणरहितोऽस्मि। "अमा अस्मिन्नदनि। अमा पुनरनिर्मितं भवति"। निरु०५।२०॥ इमे सुकृतः सुकर्माणः ब्रह्मविदः अन्तकाले मामेव —

स्मरन्तः मयि परमात्मनि आवसन्ति आतिष्ठन्ते। इन्द्रज्येष्ठाः इन्द्रं ज्ञानैश्वर्यं ज्येष्ठं येषां ते इन्द्रज्येष्ठाः, इन्द्र एव ज्येष्ठः येषां ते ज्ञानैश्वर्य महान्तः साध्याः ज्ञानकर्मसमुच्चयकारिणः मद्भावमापन्नाः विराडुपासकाः वा, च शब्दात् सिद्धा इत्युभये द्विप्रकाराः सर्वे देवाः ज्ञानिनः विद्वांसः मयि परमात्मनि समगच्छन्त मद्भावं यान्ति – मयि मिलिताः भवन्ति इति भावः। अमावस्या = "अमावस्यादन्यतरस्याम्" इति पक्षे ण्यत्। णित्वादुपधावृद्धिः। यद्वा अमावास्या = "आ मा वसन्ति देवाः" आङ्‌वसत्योर्मध्ये 'मा' इति अस्मदो द्वितीयैकवचनस्य प्रयोगः। आङुपसर्गस्य ह्रस्वत्वम्= इत्यमावास्या शब्दस्य निष्पत्तिः प्रदर्शिता। आ वसन्ति = "उपान्वध्याङ्‌वसः" = इत्याङ् पूर्ववसिप्रयोगे माम् इत्यस्य कर्मता।

यमिति = हे कौन्तेय! हे अर्जुन! यः पुरुषः अन्ते मृत्युकाले यं यं भावं यं यं स्वरूपं स्मरन् ध्यायन् अन्ते मृत्युकाले कलेवरं देहं त्यजति मुञ्चति स पुरुषः सदा सर्वदा तद्भावभावितः संस्कृतः सन् तं तमेव स्वरूपं एति प्राप्नोति ॥६॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥६॥

ये अग्रवः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः। ते द्यामुदित्या विदन्त लोकं नाकस्य पृष्ठे अधिदीध्यानाः॥ अथ० १८।२।४७॥

यद्वा = प्रच्यवस्व तन्वं३ संभरस्व मा ते गात्रा विहायि मो शरीरम्। मनो निविष्टमनु संविशस्व यत्र भूमेर्जुषसे तत्र गच्छ॥ अथ० १८।३।९॥

ये इति = ये ये पुरुषाः अग्रवः लौकिकव्यवहारप्राप्तये अग्रगामिनो भूत्वा द्वेषांसि पापानि हित्वा त्यक्त्वा अनपत्यवन्तः लौकिकवासनापत्यरहिताः सन्तः शशमानाः भिन्नान् भिन्नान् देवान् स्तुवन्तः सन्तः परेयुः = शरीरं त्यजन्ति ते पुरुषाः अधिदीध्यानाः स्वस्वदेवभावनया अधिकं दीप्यमानाः द्यां प्रकाशमयीं अवस्थां उदित्य प्राप्य ऊर्ध्वं गत्वेति भावः। नाकस्य = दुःखसंस्पर्शरहितस्य पृष्ठे उपरि भागे लोकं स्वसुकृतफलोपभोगस्थानम् अविन्दन्त अलभन्त। "विद्लृ लाभे" लृदित्वात् आत्मनेपदेऽपि व्यत्ययेन च्लेः अङादेशः। यद्वा लङ्. "अनित्यम् आगमशासनम्" इति नुमभावः।

यद्वा = "प्रच्यवस्वेति" = हे जीवात्मन्! त्वं तन्वं स्वशरीरं प्रच्यवस्व प्रकर्षेण – विमुञ्च। पुनः तन्वं अपरस्मिन् जन्मनि उत्पत्स्यमानं शरीरं संभरस्व सम्यक्तया संभृतं कुरु। ते तव गात्राणि हस्तपादादीनि अंगानि मा विहायि परित्यक्तानि मा भूवन्। तथा शरीरं अवयवीभूतः सूक्ष्मः देहः मा विहायि परित्यक्तः मा भूत्। यत्र यस्मिन् भावे जुषसे प्रीयसे तत्र गच्छ तं प्रदेशं प्राप्नुहि। जुषसे=जुषी प्रीतिसेवनयोः"

तस्मादिति = हे अर्जुन! तस्मात् कारणात् सर्वेषु कालेषु आहारविहारादिषु सर्वदा मां परमात्मानम् अनुस्मर विषयीकुरु। युध्य च = युद्धं च कुरु। मयि परमात्मनि अर्पितमनोबुद्धिः स्थापितमनोबुद्धिः सन् त्वं मां परमात्मानं एव असि प्राप्स्यसि – इत्यत्र संशयो नास्ति ॥७॥

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः ॥७॥

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरं अमृतस्य गोपाम्। स नः शर्म त्रिवरूथं वियंसत्पातं नो द्यावापृथिवी उपस्थे ॥ ऋ० ८।४२।२॥ [1]

एवेति = गुरुः जिज्ञासुं कथयति = हे जिज्ञासो! बृहन्तं महतो महान्तं वरुणं योगिभिः वरणीयं सर्वश्रेष्ठं वा परमात्मानं वन्दस्व स्मरणपूर्वकं स्तुहि। तथा अमृतस्य मुक्तेः गोपाम् गोपायितारं धीरं सर्वधारकं सर्वप्राज्ञं वा नमस्य नमस्कुरु। स परमात्मा नः अस्मभ्यं गुरुशिष्याभ्यां त्रिवरूथं आध्यात्मिकाधिभौतिकाधिदैविकेति त्रिविध दुःखनिवारकं कवचमयं शर्म गृहं धाम "शर्मेति गृहनाम" वियंसत प्रयच्छति। हे द्यावापृथिवी! हे प्रकाशमान सर्वव्यापक परमात्मन्! उपस्थे स्वोत्संगे वसतः नोऽस्मान् सर्वान् सांसारिकयुद्धादिकार्यात् पातम् रक्षतम्।

अभ्यासेति = हे पार्थ! हे अर्जुन! अभ्यासयोगयुक्तेन पुनःपुनरीश्वरध्यानमभ्यासः समाधिः - तेन प्राप्तः यः योगः निर्विकल्पसमाधिः तेन युक्तेन ब्रह्माकारवृत्तिं प्राप्तेन नान्यगामिना अन्यत्र गमनरहितेन चेतसा मनसा अनुचिन्तयन् परमात्मनः ध्यानं कुर्वन् यतिः परमं सर्वोत्कृष्टं दिव्यं प्रकाशमयं पुरुषं परमात्मानं प्राप्नोति ॥ ८ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया। गृभ्णन्ति जिह्वया ससम्॥ ऋ० ८।७२।३॥
युञ्ज = युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शक्त्या ॥ यजु० ११।२॥

अन्तरिति = ये जने ये जनाः योगिनः पुरुषाः "विभक्तिव्यत्ययः" परः मनीषया अत्युत्कृष्ट योगाभ्यास जन्यया प्रज्ञया - अत्युत्कृष्टया स्तुत्या वा। यथाह - यास्कः = "मनीषया मनस ईषया स्तुत्या प्रज्ञया वा" निरु० ६।१०
तं रुद्रं रुद् दुःखं तस्य द्रावयितारं अथवा रुत् स्तुतिः तया गन्तव्यं स्तुत्यं तं परमात्मानम् अन्तः अन्तरात्मनि योगाभ्यासेन इच्छन्ति अभिलषन्ति। ते ब्रह्मविदः यतयः एव जिह्वया प्रभवया योगयुक्तया मत्या परमात्मानं अनुचिन्तयन्तः ससं स्वपन्तं सर्ववस्तुशयं परमात्मानं गृभ्णन्ति लभन्ते। यथा च यास्कः प्राह = "ससं स्वप्नमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम्" निरु० ५।३॥

युञ्ज - युक्तेनेति = हे जिज्ञासवः यतयः! वयं मुमुक्षवः युक्तेन अभ्यासयोगयुक्तेन मनसा चेतसा देवस्य ज्योतिःस्वरूपस्य सवितुः जगदुत्पादकस्य सवे यज्ञे यजनदेशे पूजने परमधाम्नि शक्त्या यथाशक्त्या स्वर्ग्याय आनन्दोपभोगाय प्राप्नुयाम इति शेषः॥

कविमिति = यः मुमुक्षुः भक्त्या भगवद्विषयिकया वृत्त्या च तथा योगबलेन योगस्य समाधेः बलेन युक्तः मिलितः सन् प्रयाणकाले मृत्युसमये अचलेन स्थिरेण एकाग्रेण मनसा चित्तेन सर्वस्य जगतः धातारं कर्मानुसारं फलप्रदातारं अचिन्त्यरूपं आदित्यवर्णम् आदित्यस्य इव नित्यः वर्णः प्रकाशो यस्य तथाविधं तमसः अज्ञानात् परस्तात् परम्, अणोः अतिसूक्ष्मात् आकाशादेरप्यणीयांसं सूक्ष्मतरम् अनुशासितारं सर्वस्य नियन्तारं पुराणं सनातनं कविं सर्वज्ञं परमात्मानं अनुस्मरेत् अनुसंदध्यात् — तथा च स भ्रुवोः मध्ये सम्यक् प्राणं प्राणवायुम् आवेश्य संधार्य दिव्यं प्रकाशमयं परं पुरुषं परमात्मानम् उपैति प्राप्नोति ॥ ९-१० ॥

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥
प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

ध्रुवोऽच्युतः प्रमृणीहि शत्रून् छत्रूयतोऽधरान् पादयस्व। सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ॥ अथ० ६।८८।३॥
यद्वा = मूर्धानमस्य संसीव्याथर्वा हृदयं च यत्। मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोऽधि शीर्षतः ॥ अथ० १०।२।२६॥

ध्रुव इति = हे मुमुक्षो ! इह अस्मिन् योगसमाधौ ध्रुवः भ्रुवोर्मध्ये प्राणस्थापनेन स्थिरीभूतः अत एव अच्युतः योगसमाधितः पतनरहितः त्वं शत्रून् मुक्तिप्रतिबन्धकान् कामक्रोधलोभमोहाहङ्कारशत्रून् प्रमृणीहि प्रजहि। 'मृञ् हिंसायाम्' शत्रूयतः शत्रुवदाचरणशीलान् मानसिकविचारान् भक्त्या योगबलेन च अधरान् अधोमुखान् संसारसुखरहितान् पादयस्व निपातितान् कुरु। देहस्थशत्रूणाम् अपगमे सति सर्वाः दिशः सर्वतः सर्वे पदार्थाः संमनसः समानमनस्काः एकरूपाः ब्रह्मवदाभासमानाः सध्रीचीः त्वया सह अञ्चन्त्यः वर्तमानाः त्वत्सेवापरायणाः भविष्यन्ति। सर्वे पदार्थाः त्वन्मुक्तिप्राप्तये त्वदनुकूलाः भविष्यन्ति इत्यर्थः। सर्वासु अवस्थासु ध्रुवाय निश्चलावस्थिताय ते तुभ्यं समितिः संसारसंग्रामः — "सङ्ख्ये समितिः समनम् इत्येतेषां संग्रामनामसु पाठः। निघं० २।१७॥ कल्पताम् समर्था भवतु अर्थात् संसारसंग्रामात् त्वत्पलायनं मा भवतु। सध्रीचीः = सह अञ्चन्तीति सध्रीच्यः। अञ्चतेः = "ऋत्विग्—" इति क्विन्। "अनिदितां हल—" इति नलोपः। "सहस्य सध्रिः" इति सध्र्यादेशः। "अञ्चतेश्चोपसंख्यानम्" इति ङीप्। "अचः" इत्यकारलोपे "चौ" इति दीर्घः। आसजन् = षंज सङ्गे अस्माल्लङि शपि "दंशसंजस्वञ्जां शपि" इति नलोपः ॥ तथा श्वेताश्व० उप० ३।८। = "ओं वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" ॥

मूर्ध्नीति = अथर्वा - 'थर्व कम्पने' न थर्वा अथर्वा निश्चलः योगी अस्य स्वस्य देहस्य मूर्धानं शिरः च = पुनः यत् हृदयम् अस्ति तत् परस्परं संसीव्य संबध्य एकस्मिन् केन्द्रे लयं कृत्वा पवमानः प्राणवायुं शीर्षतः अधि शिरो मध्ये मस्तिष्कात् ऊर्ध्वः उपरि प्रैरयत् प्रेरयति।

यदिति = वेदविदः वेदज्ञाः ब्राह्मणाः यत् परं ब्रह्म अक्षरं "न क्षरति विनश्यतीत्यक्षरं" वदन्ति कथयन्ति। वीतरागाः रागद्वेषादिद्वन्द्वरहिताः यतयः ज्ञानतृप्ताः ऋषयः यत् परं ब्रह्म विशन्ति प्राप्नुवन्ति। यत् परं ब्रह्मैव इच्छन्तः गुरुसकाशात् ज्ञातुमीहमानाः ब्रह्मचर्यं वेद नियमपालनं चरन्ति कुर्वन्ति। तत् पदं पद्यते ज्ञानेन प्राप्यते इति पदं परं ब्रह्म संग्रहेण संक्षेपेण प्रवक्ष्ये प्रकर्षेण वदिष्यामि ॥११॥

यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

यद् ब्रह्मभिर्यद् ऋषिभिर्यद् देवैः विदितं पुरा। यद् भूतं भव्यमासन्वत् तेना ते वारये विषम्॥ अथ० ५।१२।२॥

यदिति = ब्रह्मभिः ब्राह्मणैः ब्रह्मज्ञानाय यत् परं ब्रह्म ओंनामकं पुरा पूर्वं विदितं ज्ञातम् - यत् परं ब्रह्म देवैः ब्रह्मचर्यवद्भिः ब्रह्मज्ञानिभिः पुरा विदितं ज्ञातम् - यत् परं ब्रह्म भूतं भूतकालावच्छिन्नं भव्यं भावि भविष्यत्कालावच्छिन्नं - आसन्वत् संमुखस्थवत् विद्यमानमस्ति। हे मुमुक्षो! अहं परमात्मा तेन हेतुना ते तव मुमुक्षोः विषं त्वच्छरीरस्थं पापमयं विषं ब्रह्मपदनिरूपणमात्रेणैव वारये निवारयामि। तथा च माण्डू० उप० श्रु०१ = "ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भविष्यदिति सर्वमोंकार एव यच्चान्यत् त्रिकालातीतं तदप्योंकार एव" तथा च बृह० उप० ३।८।९॥ = "ओं य एतदक्षरं गार्गि! विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः", "ओं यः पुनरेतत् त्रिमात्रेणोमित्यनेनैवाक्षरेण परमं पुरुषमभिध्यायीत स तमधिगच्छति" तथा कठोप० व०२ श्रु०१५ = "सर्वे वेदाः यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति, यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम्" इति एतत्।

सर्वद्वाराणीति = यः मुमुक्षुः सर्वद्वाराणि नासिकादिसकलनवद्वाराणि संयम्य संनिरुध्य मनश्च चित्तं च हृदि हृद्देशे निरुध्य संयोज्य आत्मनः प्राणं प्राणवायुं मूर्ध्नि ब्रह्मरन्ध्रे आधाय संस्थाप्य योगधारणां योगक्रियां आस्थितः आश्रितः सन् एकाक्षरं एकं च तद् अक्षरम् अविनश्वरं च एकाक्षरं ब्रह्म यत् ओंनामकमस्ति तदेव व्याहरन् प्रस्फुटम् उच्चारयन् मां परमेश्वरं मनसा अनुस्मरन् ध्यायन् देहं स्थूलशरीरं त्यजन् विमुञ्चन् प्रयाति देहत्यागं करोति स योगी परमां गतिं कैवल्यपदवीं याति गच्छति ॥१२-१३॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।

VIII



मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।

यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१३॥

"संसिचो नाम ते देवाः ये संभारान्त्समभरन्। सर्वं संसिच्य मर्त्यं देवाः पुरुषमाविशन्" ॥अथ० ११।८।१३॥

यथा = "त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः। प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा ॥अथ० ५।२८।८॥

संसिच इति = ये देवाः ब्रह्मज्ञानिनः योगिनः संभारान् संभ्रियन्ते एभिः देहाः इति संभाराः स्वस्वविषय संधायकाः इन्द्रियगणाः तान् समभरन् एकस्मिन् स्थाने संरुंधन्ति। ते एव संसिचः स्वप्राणसंधायकाः सन्ति। ते एव देवाः सर्वं मर्त्यं मरणधर्माणं देहं तद्वृत्तिश्च संसिच्य सम्यक्तया एकत्रीकृत्य पुरुषं पुरुषोत्तमं आविशन् प्रविशन्ति। "लंकार व्यत्ययः"। ते एव ज्ञानिनः अमृतेन अमृतमयेन आत्मना विश्वा विश्वानि सर्वाणि दुरितानि पापानि साकं युगपदेव अन्तर्दधानाः अन्तर रुन्धानाः मृत्युसमये मृत्युं प्रत्यौहन् वशीकुर्वन्ति। यत् यदा त्रयः = इन्द्रियनियन्ता योगी, मनोनिरोधकः योगी, ब्रह्मरन्ध्रे प्राणस्थापकः योगी- एते त्रयः योगिनः सुपर्णाः सम्यक् ज्ञानिनः त्रिवृताः त्रिविध प्राण बलैः = सर्वद्वाराणि संयम्य मनो हृदि निरुध्य आत्मनः प्राणं मूर्ध्नि आधाय = इति त्रिव्यवहारैः एकाक्षरं एकं च तदक्षरं च एकाक्षरं ब्रह्म यत् ओं पदवाच्यं तदेव एकाक्षरम् अभिसंभूय संप्राप्य आयन् मोक्षं प्राप्नुवन्ति॥ यथा कठोप० १।२।१६ = "एतद्ध्येवाक्षरं ब्रह्म ह्येतदेवाक्षरं परम्। एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्"॥ तथा प्रश्नोप० प्र०५ श्रु०२ = "ओं एतद्वै सत्यकाम! परं च अपरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति"॥ तथा मुण्डकोप० मुं०२ श्रु०४ = "ओं प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन बोद्धव्यं शरवत्तन्मयो भवेत्"। तथा छान्दो० उप० अध्या०१ खं०१ श्रु०१ = "ओमित्येतदक्षरमुद्गीथमुपासीतोमित्येतदनुकृतिः। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानि इति ब्रह्मैवोपाप्नोति।

अनन्यचेता इति = हे अर्जुन! यः ब्रह्मवित् अनन्यचेताः नास्ति ब्रह्मातिरिक्ते पदार्थे चेतो मनो यस्य स अनन्यचेताः नित्यशः सर्वदा सततम् अविरतम् मां परमात्मानं स्मरति स्मरणं करोति तस्य अनन्यचेतसः नित्ययुक्तस्य नित्यं समाधियुक्तस्य योगिनः ब्रह्मनिष्ठस्य यतेः अहं परमात्मा सुलभः सुखेन लब्धुं शक्यः अस्मि।१४।

अनन्यचेताः सततं यो मां स्मरति नित्यशः।

तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥१४

परि प्रयन्तं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः।
यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळ मर्त्यः॥ ऋ० ९।६८।८.

परि प्रयन्तमिति = स्तुभः ब्रह्म स्तोतारः ज्ञानिनः "छन्दः स्तुप् रुद्रः" इति स्तोतृनामसु पाठः (निघं० ३।१६)। परिप्रयन्तं परितः प्रकर्षेण यन्तं गच्छन्तं सर्वव्यापकं वय्यं ज्ञानिभिः काम्यमानं "वी गत्यादिषु" इत्यस्मात् वयन्ति "मय्यप्रवय्ये च छन्दसि" इति निपातितः। अत्रानुपसर्गस्यापि निपातनं भवति। सुषंसदं शोभन सदनं मुक्तिस्थानं सोमं परमात्मानं मनीषा सततं मनसः ईषा एकाग्रकर्त्र्या बुद्ध्या स्वामिन्या अनन्यचेतसा इति यावत् अभ्यनूषत अभिष्टुवन्ति। रयिषाट् अज्ञानधनाभिभविता अमर्त्यः मरणधर्मातीतः मधुमान् मधुरब्रह्म ज्ञानोपेतः यः यतिः धारया धारयित्र्या धाराप्रवाहमय्या वा ऊर्मिणा नमस्कृत्या "ऊर्मिरूर्णोतेः"। नौः प्रणेतव्या भवति, नमतेर्वा-(निरु० ५।२३)॥ दिवः प्रकाशमानस्य परमात्मनः वाचं स्तुतिवाणीं इयर्ति सदा प्रेरयति ईश्वरं सदा स्मरतीत्यर्थः।

मामिति = महात्मानः ब्रह्मनिष्ठमनसः यतयः मां परमात्मानं उपेत्य प्राप्य परमाम् अत्युत्कृष्टां संसिद्धिं विदेहमुक्तिं गताः प्राप्ताः अशाश्वतं विनाशिनं दुःखालयं आध्यात्मिकाधिभौतिकाधिदैविक दुःखाश्रयं जन्म पुनः भूयः नाप्नुवन्ति न लभन्ते १५

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ १५॥

ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम्। तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनुराजति ष्टुप्॥ साम० १२७६॥ ऋ० ९।९६।१८॥

ऋषिमना इति- यः मुमुक्षुः जनः ऋषिमनाः ऋषीणां मन एव मनो यस्य स ऋषिमनाः परमात्मनः मननकर्ता। ऋषिकृत् ऋषीणां कृत् कर्म इव कृत् यस्य स ऋषिकृत् ऋषिकर्मा यद्वा ऋषिः तत्त्वदर्शी तम् आत्मानं करोति इति ऋषिकृत्। स्वर्षाः शुभपदार्थ-द्रष्टा, सहस्रनीथः सहस्रशः परमात्मनः स्तुतिकर्ता। नीथः स्तुतिः, बहुविध स्तुतिकर्ता इत्यर्थः। कवीनां मेधाविनां पदवीः स्खलितानां पदानां सन्मार्गदर्शकः। महिषः पूज्यः सन् तृतीयं धाम कर्मबन्धनछेदनानन्तरं मुक्तिस्थानं सिषासन् साधयितुमिच्छन् विराजं विशेषेण राजनं परमात्मानं ष्टुप् स्तुवन् अनुराजति परमात्मनः आनन्दं अनुभवन् परमां संसिद्धिं गच्छतीति।

आब्रह्मेति = हे कौन्तेय! आब्रह्म भुवनात् मर्त्यलोकात् आरभ्य ब्रह्मणो लोक-पर्यन्तं सर्वे लोकाः सर्वे जीवाः पुनरावर्तिनः मर्त्यलोके पुनः जन्म गृह्णन्ति। हे अर्जुन! मां परमात्मानं तु उपेत्य प्राप्य पुनर्जन्म पुनर्देहप्राप्तिः न विद्यते॥ १६॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥ १६॥

परमां तं परावतमिन्द्रो नुदतु वृत्रहा। यतो न पुनरायति शश्वतीभ्यः समाभ्यः॥ अथ० ६।७५।२॥

यद्वा = ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति। तेषाम्-

ज्यानिं यतमो वहाति तस्मै मा देवाः परिधत्तेह सर्वे ॥अथ० ६।५५।१॥

परमामिति = वृत्रहा वृत्रं पापं हन्तीति वृत्रहा पापनाशकः इन्द्रः परमात्मा परमां परावतम् अति दूरस्थं ब्रह्मादिलोकतः परतरं तं स्वलोकं महीं नुदतु प्रेरयतु । यतः यस्मात् लोकात् विदेह मुक्तः जनः शश्वतीभ्यः समाभ्यः बहुसंवत्सरकालात् अपि न पुनरायाति पुनर्नावर्तते ॥

यद्वा - ये इति = देवयानाः देवैः विद्वद्भिः यानाः गन्तुं शक्याः ये पन्थानः मार्गाः बहवः कर्मणां अनुष्ठानात् ब्रह्मादिलोकप्राप्त्युपायाः नाना विधाः सन्तः द्यावापृथिवी अन्तरा द्यावापृथिव्योः मध्ये संचरन्ति वर्तन्ते । तन्मध्ये तत्तत्कर्मकरणेन तत्तल्लोकं प्राप्नुवन्ति । तेषां ब्रह्मरुद्रादि लोकानां मध्ये यतमः यज्जातीयः लोकः अज्यानिं ज्यानिः हानिः तद्रहितां नित्यतं वहाति धारयति । हे सर्वे देवाः ! हे सर्वप्रकाशक परमात्मन् ! तस्मै अविनश्वराय स्वलोकाय इह अस्मिन् जन्मनि एव अर्थात् विदेहमुक्तौ एव मा मां भक्तं परिधत्त परियच्छत मत्प्राप्त्यर्थं तं लोकं प्रापयेत्यर्थः ।

देवयानाः यातेः करणे ल्युट् । यतमः = "वा बहूनां जातिपरिप्रश्ने" इति यच्छब्दात् डतमच् । वहाति = वहेः लेटि आडागमः । तथा = श्वेताश्व० उप० १।१०।११ = "तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः । ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः" । तथा - बृह० उप० ६।२।१५ = "ते तेषु ब्रह्मलोकेषु परा परावतो वसन्ति तेषां न पुनरावृत्तिः" । तथा च वेदान्तदर्शने = "अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्" ।

सहस्रेति = ते अहोरात्रविदो जनाः ब्राह्मदिनस्य ब्राह्मीरात्र्याश्च ज्ञातारः विद्वांसः सहस्रयुगपर्यन्तं सत्यत्रेताद्वापरकलियुगानां सहस्रसंख्याकानां वर्षाणां समाप्तिपर्यन्तं ब्रह्मणः अहः दिनं विदुः जानन्ति । अहरागमे ब्राह्मदिनागमे सर्वाः व्यक्तयः स्थावरजंगमादिकाः पिण्डाः अव्यक्तात् अव्यक्तस्वरूपात् ब्रह्मणः प्रभवन्ति उत्पद्यन्ते । रात्र्यागमे ब्राह्मीरात्र्यागमे सति तत्रैव अव्यक्तसंज्ञके स्वकारणस्वरूपे ब्रह्मणि एव प्रलीयन्ते अदर्शनं गच्छन्ति ॥१७-१८॥

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥
अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् । स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा । अथ० १३।२।३८॥

सहस्राह्ण्यमिति = अस्य हरेः "हरति पापानीति हरिः" तस्य हरेः पापहर्तुः हंसस्य सर्वप्राणिचित्तरूपस्थितस्य परमात्मनः पक्षौ अहः निशा इति गतिशीलौ द्वौ पक्षौ सहस्राह्ण्यं सहस्रैः युगैः गमनयोग्यं अहः दिनं तावद्भिः सहस्रयुगैः गमनयोग्या रात्रिः इति द्वौ पक्षौ वियतौ विशेषनियमेन प्रसृतौ स्वर्गं विस्तृताकाशमार्गं

प्रतः गच्छतः। स हिरण्यगर्भः सर्वान् सकलान् देवान् प्राणिनोऽप्राणिनश्च पदार्थान् उरसि स्वस्मिन् अव्यक्तस्वरूपे गर्भे उपदय संधार्य विश्वा विश्वानि सर्वाणि भुवनानि लोकान् संपश्यन् अवलोकयन् याति विचरति॥ तथा ब्रह्मोपनिषद् श्रुति-४ = "ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि। जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः"। मुं० श्रु० ७ = "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। तथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्"। तथा श्वेता० उप० अध्या० ३ श्रु० ४ = "देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु"॥

भूतग्राम इति = पूर्वकल्पे यः प्राणिवर्गः उत्पन्नः अभूत् स एवायं भूतग्रामः प्राणिवर्गः भूत्वा भूत्वा स्वकर्मानुसारेण जन्म गृहीत्वा अवशः परतन्त्रः सन् रात्र्यागमे ब्राह्मीरात्र्यागमे प्रलीयते लयं प्राप्नोति। हे पार्थ! हे अर्जुन! अहरागमे ब्राह्मदिनागमे सति स एव प्राणिवर्गः प्रभवति उत्पद्यते॥१९॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ! प्रभवत्यहरागमे॥१९॥

अजाता आसन्नृतवोऽथो धाता बृहस्पतिः। इन्द्राग्नी अश्विना तर्हि कं ते ज्येष्ठमुपासत॥ अथ० ११। ८।५॥

यद्वा= तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे। तपो ह जज्ञे कर्मणस्तत् ज्येष्ठमुपासते।
अथ० ११। ८।६॥

अजातेति = ऋतवः वसन्तादिकालविशेषाः तथा धाता ब्रह्मा विष्णुः बृहस्पतिः - जीवः, इन्द्रः सूर्यः अग्निः वह्निः, अश्विना अश्विनौ अहोरात्रे सूर्याचन्द्रमसावित्येके - (निरु०१२।१)। ब्राह्म्यां रात्रौ सत्यां अजाताः आसन् अनुत्पन्नाः अभूवन्। तर्हि तस्मिन् प्रलयकाले ते स्वस्वकर्माधीनाः सन्तः कं ज्येष्ठं वृद्धतमं कं कारणभूतं उपासत कुत्र विलीनाः आसते। महति प्रभूते अर्णवे प्रलयकालीने समुद्रे अन्तः मध्ये वसतः तपः सृष्ट्यपर्यालोचनात्मकं यज्ज्ञानमयं तपः कर्म प्राणिभिः अनुष्ठितं पुण्यापुण्यात्मकं सुखदुःखफलोन्मुखं परिपक्वं कर्म च आस्ताम् भवतः "लकारव्यत्ययः"। ब्राह्मदिनागमे सति तपः जगत्स्रष्टुः परमात्मनः भूतवर्गसृष्ट्यपर्यालोचनात्मकः जगत्सिसृक्षात्मकः विचारः कर्मणः कल्पान्तरे प्राणिभिरनुष्ठितात् परिपक्वात् कर्मणः सकाशात् जज्ञे उत्पद्यते। अतः ते ऋत्वादयः तत् ज्येष्ठं वृद्धतमं सृष्टेः कारणभूतं परिपक्वं स्वकृतं कर्म उपासत उपासते वासं कुर्वन्ति। तथा चोपनिषद् = "गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत"॥

पर इति = तस्मात् अव्यक्तात् सर्वपदार्थोत्पत्तिलयकारणस्वरूपात् अव्यक्तात् अन्यः भिन्नः भावः परमात्मा अव्यक्तः सर्वैः प्राणिभिः प्रमातुमशक्यः अप्रमेयः परः प्रकृष्टः सनातनः नित्यः यः अस्ति स अव्यक्तस्वरूपः परमात्मा सर्वभूतेषु सर्वेषु पदार्थमात्रेषु नश्यत्सु विनाशं गतेषु न विनश्यति कदापि विनाशं न प्राप्नोति॥

~~परस्तस्मात्तु~~ परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

नाम नाम्ना जोहवीति पुरा सूर्यात् पुरोषसः। यदजः प्रथमं संबभूव सह तत् स्वराज्यमियाय यस्मान्नान्यत् परमस्ति भूतम्। अथ० १०।७।३१॥

नामेति = ब्रह्मज्ञानी सूर्यात् पुरा पूर्वं उषसः पुरा उषःकालादपि पूर्वं नाम नमस्करणीयं परमात्मानं नाम्ना ओंकारनाम्ना जोहवीति अतिशयेन आह्वयति। यत् परं ब्रह्म प्रथमं सर्वेभ्यः पदार्थमात्रेभ्यः पूर्वं संबभूव विद्यमानमभूत्। स अव्यक्तात् कारणस्वरूपात् अव्यक्तात् परः अव्यक्तः स्वराज्यं स्वयं प्रकाशमानस्वरूपम् इयाय प्राप्तोऽस्ति। यस्मात् अव्यक्तात् अनादिस्वरूपात् अन्यत् भिन्नं परं भूतं अत्युत्तमपदार्थः न अस्ति न विद्यते।

अव्यक्त इति = यः अव्यक्तः कार्यकारणाव्यक्तस्वरूपात् भिन्नः अक्षरः अविनश्वरः इत्युक्तः तमक्षरमेव परमाम् अत्युत्तमां गतिं तत्त्वं प्राप्तिस्थानं सूरयः आहुः कथयन्ति। यमक्षरं परमात्मानं प्राप्य न निवर्तन्ते पुनः जगति जन्मग्रहणाय नायान्ति तदेव अक्षरं ब्रह्म मम परमात्मनः परमम् अत्युत्कृष्टं धाम प्रकाशात्मकं मम स्थानमस्ति ॥२१॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्।"
साम० १६७२। यजु० ६।५॥ अथ० ७।२६।७॥ ऋ० १।२२।२०॥

तद्विष्णोरिति = सूरयः मेधाविनः विष्णोः सर्वव्यापकस्य परमात्मनः तत् प्रसिद्धं परमम् उत्कृष्टं पदं पद्यते गम्यते इति पदं ज्ञानमयं स्थानं दिवि द्युलोके चक्षुरिव सर्वेषां चक्षुःस्थानीयं सूर्यमण्डलमिव इह चक्षुःशब्देनोच्यते। "चक्षुर्मित्रस्य वरुणस्याग्नेः" ऋ० १।११५।१॥ आततं समन्तात् विस्तारितं सूर्यमण्डलमिव सर्वत्र प्रकाशस्वरूपं सदा सर्वकाले नित्यमेव पश्यन्ति अर्थात् कदापि तत्परमपददर्शनात् न विरमन्ते। भूयः भुवि लोके न समागच्छन्तीति भावः।

सदा = "सर्वैकान्येति" पा० ५।३।१५ इति दा प्रत्ययः। "सर्वस्य सोऽन्यतरस्याम्" पा० ५।३।६ इति सर्वशब्दस्य सत्वम्। आततम् = तनोतेः कर्मणि क्तः। "यस्य विभाषा" पा० ७।२।१५ इति इट्प्रतिषेधः। तथा च कठोप० २।६।८

"अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति।" अन्यच्च = "अन्यदेव तद्विदितात्"। अथापि च = "न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः"॥

पुरुष इति = हे पार्थ हे अर्जुन! स परः पुरुषः पुरुषोत्तमः अनन्यया अव्यभिचारिण्या भक्त्या लभ्यः प्राप्य एव। भूतानि सर्वे पदार्थाः यस्य पुरुषोत्तमस्य अन्तः ~~अव्यभिचारिण्या भक्त्या लभ्यः प्राप्य एव~~ मध्ये। स्थितानि सन्ति। येन पुरु-

प्रोतमेन इदं सर्वं दृश्यमानं जगत् ततं विस्तृतमस्ति॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥२२॥

अर्चा शक्राय शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभिष्टुहि।
यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृञ्जत॥ ऋ० १।५४।२॥

यद्वा "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः।
मुंडकोप० २।२।५॥

"तत्सृष्ट्वा तदेवानुप्राविशत्"। "सर्वस्य वशी सर्वस्येशानः सर्वाधिपतिः"।

अर्चेति = हे जीवात्मन्! त्वं शक्राय पूर्णशक्तिमते शचीवते ज्ञानस्वरूपाय शाकिने = कर्तुम् अकर्तुम् अन्यथा कर्तुम् इति गुणैः सर्वसमर्थाय परमात्मने अर्चा काय-वाङ्-मनोभिः अर्चां कुरु। अथ च शृण्वन्तम् त्वया कृतां स्तुतिं आकर्णयन्तम् इन्द्रं परमैश्वर्यसम्पन्नं परमात्मानं महयन् श्रद्धाभक्त्या महत्त्वं गायन् पूजयन् वा त्वम् अभिष्टुहि स्तुतिं कुरु। यः परमात्मा धृष्णुना दुष्टानां धर्षकेण शवसा बलेन उभे रोदसी द्यावापृथिव्यौ न्यृञ्जत स्ववशीकुरुते। यथा वृषा बलवान् वृषभः पुरुषः वृषत्वा स्वबलेन निर्बलान् वशीकुरुते। तथा च मुंडकोप० २।२।५ = "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"। तथा च बृहदा० उप० ४।४।२२ = "सर्वस्य वशी सर्वस्येशानः सर्वाधिपतिः"। तथा च "तत्सृष्ट्वा तदेवानुप्राविशत्" (मुंड०)।

यत्रेति = हे भरतर्षभ! हे अर्जुन! यत्र यस्मिन् काले योगिनः यतयः प्रयाताः मृताः अनावृत्तिं पुनरावृत्तिरहितां गतिं आवृत्तिं पुनर्जन्मगतिं यान्ति प्राप्नुवन्ति तं कालं तं समयं वक्ष्यामि कथयिष्ये।

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥२३॥
(वेदमन्त्रो न लभ्यते)

अग्निरिति = अग्निः उत्तरायणकालाभिमानी देवः, ज्योतिः ज्योतिःकालाभिमानी देवः, अहः दिनाभिमानी देवः, शुक्लः शुक्लपक्षाभिमानी देवः तत्र तस्मिन् उत्तरायणे प्रयाताः मृताः सन्तः ब्रह्मविदः ब्रह्मज्ञानिनः योगिनः ब्रह्म परमात्मानं-गच्छन्ति प्राप्नुवन्ति॥२४॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥२४॥

"पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद् दिवमारुहम्। दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्॥ अथ० ४।१४।३॥ यजु० १७।६७॥

पृथिव्या इति = अहं ब्रह्मवेत्ता पृथिव्याः मर्त्यलोकात् अग्निद्वारा पार्थिवशरीरं त्यक्त्वा अन्तरिक्षं ज्योतिराश्रयमाकाशम् उदारुहम् ऊर्ध्वक्रमेण अन्तरिक्षम्

आरूढः। ततः अन्तरिक्षात् आकाशात् दिवं प्रकाशमानं सूर्यम् आ + अरुहम् = आरूढः। दिवः प्रकाशमानस्य नाकस्य सुखनिमित्तस्य पृष्ठात् सकाशात् अहं यथाक्रमम् उपरि गच्छन्नेव स्वरादित्यं ज्योतिः ज्योतिःस्वरूपं प्रकाशमानं परं ब्रह्म अगमम् = अगच्छम् अनेन मार्गेण भूयः संसारं न आगच्छामि॥ तथा च छान्दो० उप० ५।१०।१-२ = "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङेति मासास्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनां ब्रह्म गमयति। एषः देवयानः पन्थाः" इति॥

धूम इति = धूमः धूमाभिमानी देवः यद्वा अज्ञानम्, रात्रिः रात्र्यभिमानी देवः यद्वा ज्ञानत्रस्तः, कृष्णः कृष्णपक्षाभिमानी देवः यद्वा पापकर्मविशिष्टः, षण्मासाः षण्मासाभिमानी देवः यद्वा षड्विध ज्ञानरहितः, दक्षिणायनम् दक्षिणायनाभिमानी देवः यद्वा दक्षिणदिशाभिमुखत्वं केवलं कर्मकर्ता तत्र अस्यामवस्थायां प्रयतः योगी कर्मयोगी चान्द्रमसं ज्योतिः चन्द्रसम्बन्धि इष्टापूर्तादि पुण्यकर्मसंभवं फलं प्राप्य अनुभूय निवर्तते पुनरेव मानवलोकं प्राप्नोति॥ २५॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥२५॥

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति। त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते॥ ऋ० १।१६४।४७॥ अथ० ६।२२।१॥

कृष्णमिति = कृष्णं कृष्णपक्षः, नियानं नियमनं रात्रिः, अपः धूममयं कर्म, हरयः उदकस्य हर्तारः दक्षिणायनस्य षण्मासाः इत्यादिषु वसानाः वसन्तः प्रयाणं कुर्वन्तः सन्तः, सुपर्णाः इष्टापूर्तादिकर्मसु पतन्तः कर्मयोगिनः दिवम् द्युलोकस्थं चान्द्रमसं ज्योतिः उत्पतन्ति ऊर्ध्वं गच्छन्ति। ते कर्मयोगिनः ऋतस्य कर्मफलस्य "ऋतं कर्मफलम्" - "ऋतं पिबन्तौ सुकृतस्य लोके" इति श्रुतेः। सदनात् स्थानात् चन्द्रमंडलात् आववृत्रन् आवर्तन्ते अर्वाङ् आगच्छन्ति। आत् अनन्तरं घृतेन कर्मयोगिनां कर्मजलेन पृथिवी पृथिवीलोके उत्पन्नं शरीरं व्युद्यते विविधं क्लिद्यते जन्मभिः आसिच्यते इति भावः। तथा च छान्दो० उप० ५।१०।३,४,५ = "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति"।३। "मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति"।४। "तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाऽध्वानं पुनर्निवर्तन्ते"।५।

शुक्लकृष्णे इति = शुक्लकृष्णे शुक्ला निर्मलस्वभावा, कृष्णा मलिनस्वभावा - एते गती मार्गौ जगतः ज्ञानकर्माधिकारिणः जनस्य शाश्वते स्वर्गलोकादि प्राप्तये मुक्तिप्राप्तये च नित्ये मते कथिते। एकया शुक्लगत्या अनावृत्तिं मुक्तिं याति प्राप्नोति। अन्यया अपरया कृष्णया कर्मगत्या पुनः आवर्तते संसारे पुनर्जन्म प्राप्नोति॥ २६॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः॥२६॥

"नाना चक्राते यम्या३ वपूंषि तयोरन्यद्रोचते कृष्णमन्यत्। श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरत्वमेकम्॥ ऋ० ३।५५।११॥

नानेति = यम्या यमरूपे मिथुनभूते अहश्च रात्रिश्च ज्ञानकर्मणीतिवा एते द्वे गती नाना नानाविधानि वपूंषि शुक्लकृष्णादीनि ज्ञानकर्मस्वरूपाणि मुक्तिपुनरावृत्तिगतिमयानि चक्राते कुरुतः। श्यावी कृष्णवर्णा कर्ममयी गतिः। अरुषी शुक्लतया रोचमाना ज्ञानस्वरूपेण भास्वती यत् ये स्वसारौ सहगमनशीले भवतः। तयोर्मध्ये अन्यत् एकं कृष्णं संसारप्रापकं तमःस्वरूपं पुनर्जन्मप्रदात् अस्ति। अन्यत् शुक्लवर्णमयं ज्ञानं रोचते आभाति। सा शुक्ला गतिरेव देवानां प्रकाशमानानां ब्रह्मादिलोकानां उपरितनं महत् अत्युत्कृष्टं एकं मुख्यं असुरत्वं अस्यति क्षिपति कुत्सान् पापान् स्वस्मात् इति असुरः तस्य भावः असुरत्वं पदं प्रापयतीति शेषः।

नैते इति = हे पार्थ! हे अर्जुन! कश्चन योगी योगसमाधिनिष्ठः एते शुक्लकृष्णे सृती पदव्यौ मार्गौ जानन् विदन् न मुह्यति मोहं न प्राप्नोति। हे अर्जुन! तस्मात् कारणात् त्वं सर्वेषु कालेषु आहारशयनादिसमयेषु योगयुक्तः ब्रह्मचिन्तनलग्नो भव। "योगः कर्मसु कौशलम्" योगयुक्तः कर्मकरणे कुशलो भव॥२७॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन॥२७॥

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च॥ ऋ० १०।८८।१५॥

द्वे इति = अहं मुमुक्षुः योगी देवानां ज्ञानेन प्रकाशमानानां पितॄणां यथाशास्त्रं स्वनियमपालयितॄणां योगसमाधिनिष्ठितानां यतीनां उत अपि मर्त्यानां पुनःपुनः मरणधर्माणां कर्मनिष्ठानां जनानां द्वे सृती द्वौ मार्गौ शुक्लकृष्णगतिकौ देवयानपितृयानाख्यौ अशृणवम् अश्रौषम्। यत् इदं पदं पितरं पितृभूतं द्यां मातरं मातृभूतां पृथिवीं च अन्तरा मध्ये भवति। यत्पदं द्यावापृथिव्योर्मध्ये भवति तत् इदं विश्वं "विश्वशब्देन जीव उपलक्ष्यते" मुमुक्षुः जीवः ताभ्यां देवयानपितृयानमार्गाभ्यां एजत् एजन् मुक्तिमार्गं गच्छन् समेति समीचीनतया मुक्तिमार्गं गच्छति न च पुनरावृत्तिं गच्छतीति भावः।

वेदेषु इति = वेदेषु साङ्गाधीतेषु ऋग्वेदादियज्ञेषु अग्निष्टोमादियागेषु तपःसु कृच्छ्रचान्द्रायणादिषु दानेषु गवादिदानेषु यत् पुण्यफलम् ऊर्ध्वलोकेषु भोक्तव्यं सुखं शास्त्रेषु प्रदिष्टं निर्दिष्टम्— योगी ब्रह्मवेत्ता इदं मार्गरूपं परं ब्रह्म विदित्वा सम्यक् उपास्य तत्सर्वं ऊर्ध्वलोकादि भोक्तव्यं सुखम् अत्येति उल्लङ्घयति नाङ्गीकुरुते इति भावः। स एव योगी आद्यं सर्वकारणभूतं स्थानं सर्वाश्रयं परम् अक्षरं ब्रह्म उपैति प्राप्नोति॥ इति श्रीजग—

न्नाथ शास्त्रि संकलितायां गीतार्थबोधिन्यामष्टमोऽध्यायः समाप्तः ॥८॥

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे — अष्टमोऽध्यायः समाप्तः ॥८॥

"स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतो धारं सुविद्वांसो वितेनिरे॥ यजु० १७।६८"

स्वर्यन्त इति = ये यजमानाः कर्मठाः विश्वतो धारम् — "आहुतिदक्षिणान्नानि यज्ञस्य धारा उच्यन्ते। सर्वतः लोकं धारयितारं यज्ञं भिन्न भिन्न पुण्यफलप्रदात् कर्म वितेनिरे वितन्वन्ति। सुविद्वांसः पूर्णज्ञानिनः ब्रह्मोपासकाः योगिनः यताः पर-ब्रह्मोपासनया अनन्यया भक्त्या अधिगच्छन्तः स्वः स्वर्गादिलोकसुखं न अपेक्षन्ते नाभिलषन्ति। अथ च ते एव योगिनः ब्रह्मवेत्तारः रोदसी जरामृत्यु-शोकादीनां रोद्धी "रोदसी दिव एतद्विशेषणं न तु द्यावापृथिव्योरभिधानम्" दिव इति स्वःशब्दोपादान सामर्थ्यात् द्यां ज्योतिःस्वरूपगतिं परब्रह्मगतिं आरोहन्ति प्राप्नुवन्ति॥

इति श्री सारस्वतान्वय लैया ग्रामवास्तव्य न्यायभूषण जगन्नाथ शास्त्रि कृतायां वेदगीतार्थबोधिन्यामष्टमोऽध्यायः समाप्तः ॥८॥

---

अथ भगवद्गीतानवमाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीतावचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युदर्णवम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनम् ॥२॥

श्रीभगवानुवाच = इदमिति = इदं प्रत्यक्षनिर्दिष्टं गुह्यतमं अतिशयेन गोप्यं राजविद्या सर्वासां विद्यानां राजा श्रेष्ठो भवत्यतः राजविद्या। राजगुह्यं राजा अतिरहस्येन गोपनीयत्वात् राजगुह्यम्, पवित्रं पुनातीति पवित्रं, इदं ब्रह्मज्ञानं उत्तमं सर्वश्रेष्ठं प्रत्यक्षावगमं प्रत्यक्षेण अवगम्यते यत् ज्ञानं तत् प्रत्यक्षावगमं, धर्म्यं धर्माऽविरोधि, सुसुखं सुसुखेनकर्तुं योग्यं सम्पादयितुं योग्यं विज्ञानसहितं विज्ञानम् अपरोक्षानुभवः तेन ज्ञानेन सहितं ज्ञानं साक्षान्मोक्षकारणम् अनसूयवे असूयादिदुर्गुणरहिताय ते तुभ्यं शिष्याय प्रवक्ष्यामि कथयामि, विज्ञानसहितं यत् ज्ञानं ज्ञात्वा अवबुध्य अशुभात् संसारदुःखप्रवाहात् मोक्ष्यसे मुक्तिंप्राप्स्यसि॥

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।

प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

गुहाहितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम्। उतो अपो-द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण॥ ऋ० २।११।५॥

गुहाहितमिति = हे शूर! हे एकस्मात् देहात् अपरस्मिन् देहे गतिशील! जीवात्मन्! "शूरः शवते गतिकर्मणः (निरु० ४।१३) यतः त्वं वीर्येण स्वज्ञान-सामर्थ्येन द्यां प्रकाशमानं परमात्मस्वरूपं तस्तभ्वांसं स्तम्भयन्तं अहिम् असूयादि-दुर्गुणं पापं अहन् हतवान् असि। अतः गुहाहितं गुहायां बुद्धौ हितं स्थितं प्रत्यक्षास्थितं गुह्यं गोप्यं गूळ्हम् अतिशयेन गुह्यतमं विज्ञानसहितं ज्ञानम् अप्सु अनन्यभक्तिकर्मसु अपीवृतं तिरोहितं मायिनं माया ब्रह्मशक्तिः तद्वन्तं परमात्मानं क्षियन्तं वासयितृ विज्ञानसहितं ज्ञानम् अपः परिपालय यद्वा विज्ञानसहितं अपः ज्ञानं वक्ष्ये इति शेषः॥ कूर्मपुराणाध्यायः १४= "चतुर्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमितरं विद्या येन धर्मो विवर्धते।"१॥ तथा तैत्ति० उप० अध्या० २ अनु० ५ = "ॐ विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते"॥ तथा श्वेताश्व० उप० अध्या० ६ श्लो० २२, २३ = "वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम्। नाऽप्रशान्ताय दातव्यं नाऽपुत्रायाऽशिष्याय वा पुनः॥ यस्य देवे परा भक्तिः यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"॥

अश्रद्दधाना इति = हे परंतप! हे अर्जुन! अस्य पूर्वप्रतिपादितस्य धर्मस्य मोक्षहेतोः ज्ञानस्य अश्रद्दधानाः श्रत् सत्यं तद्दधातीति श्रद्धा शास्त्रप्रतिपादित-फलप्राप्त्यास्था विरहिताः दुष्कर्माणः पुरुषाः माम् आनन्दैकरसं परमात्मानं अप्राप्य अलब्ध्वा मृत्युसंसारवर्त्मनि मृत्युभूयिष्ठः संसारो मृत्युसंसारः पुनः पुनः "मनुष्यपश्वादिजन्म तदेव वर्त्म मार्गः तस्मिन्नेव निवर्तन्ते नितरां वर्तन्ते" जायन्ते म्रियन्ते इति वर्त्म भवतीति भावः॥ ३॥

अश्रद्दधानाः पुरुषाः धर्मस्यास्य परंतप।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि॥ ३॥

"यस्य क्रूरमभजन्त दुष्कृतोऽस्वप्नेन सुकृतः पुण्यमायुः। स्वर्मदसि परमेण बन्धुना तप्यमानस्य मनसोऽधिजज्ञिषे॥ अथ० १९।५६।५॥

यस्येति = दुष्कृतः दुष्कर्मकर्तारः धर्मस्य अश्रद्दधानाः पापभाजः पुरुषाः यस्य प्रमादमयस्य कर्मणः क्रूरं मृत्युसंसारवर्त्मात्मकं क्रूरं फलं अभजन्त भुञ्जते। सुकृतः सुकर्माणः ज्ञानिनः पुरुषाः अस्वप्नेन धर्मे निद्रायाः अकरणेन हेतुना पुण्यं पुण्यमयं मुक्त्यात्मकं आयुः पर्यन्तम् अभजन्त भजन्ते। हे अश्रद्धे! यदा त्वं तप्यमानस्य तपस्यां कुर्वतः मुनेः मनसः अपि अधिजज्ञिषे स्वाधिकारं कुरुषे तदा परमेण सर्वोत्तमेन बन्धुना बन्धनकर्त्रा स्वरूपेण स्वः सुखात्मकं प्रकाशस्वरूपं मदसि आच्छादयसि। "मदी हर्षग्लेपनयोः" भ्वा०

तथा - कौशीतक्युप० अध्या० ४ श्रु० २० = "स यावद् वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः" ॥

मयेति = अव्यक्तमूर्तिना अप्रमेयस्वरूपेण मया परमात्मना इदं दृश्यमानं सर्वं जगत् स्थावरजंगमात्मकं जगत् ततं व्याप्तम् - एतत् सर्वं जगत् मया सर्वतो व्याप्य प्रकाश्यते । सर्वभूतानि सर्वाणि अव्यक्तादीनि स्थूलान्तानि भूतानि पदार्थाः मत्स्थानि मयि अव्यक्तमूर्तौ स्थितानि सन्ति । अहं परमात्मा बहिरन्तः परिपूर्णः सन् च तेषु पदार्थेषु विकारीव बिले सर्प इव प्रविश्य नैव तिष्ठामि - तानि भूतानि आश्रित्य न तिष्ठामीत्यर्थः ॥४॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४"

"स वेद पुत्रः पितरं स मातरं स सूनुर्भुवत् स भुवत् पुनर्मघः । स द्यामौर्णोदन्तरिक्षं स्वः स इदं विश्वमभवत् स आभवत" ॥ अथ० ७।१।२ ॥

स वेदेति = अनेन मंत्रेण सार्वात्म्यम् अभिधीयते । स परमात्मा पुत्रः स्वीयं रूपं सम्यक् जानतः पुरुषान् अनर्थहेतोः संसारात् त्रायते इति पुत्रः संसाररक्षक इत्यर्थः । 'पुत्रः पुरु त्रायते' (निरु० २।११) पितरं द्युलोकं वेद जानाति । स परमात्मा मातरं पृथिवीं वेद जानाति । "द्यौः पिता पृथिवी माता" तैत्ति० ब्रा० ३।७।५।५ ॥ "ताभ्यां इदं विश्वम् एजत् समेति यदन्तरा पितरं मातरञ्च" ॥ ऋ० १०।८८।१५ इति श्रुतेः । द्यावापृथिव्योः मध्ये विश्वस्यावस्थानात् तयोः प्राधान्येनाभिधानम् । अस्य विश्वस्य पिता सकलजगदधिष्ठानं परं ब्रह्म । माता चित् प्रतिबिम्बिता मूलप्रकृतिः तौ परमात्मा स्वाभेदेन जानाति । स परमात्मा सूनुः सर्वस्य जगतः स्वस्वकर्मसु प्रेरयिता भुवत् भवति । "यं यं कामये तं तमुग्रं कृणोमि" । ऋ० ॥ 'षु प्रेरणे' इत्यस्मात् औणादिको 'नु' प्रत्ययः । भुवत् = भवतेर्लोङि व्यत्ययेन शः । "भूसुवोस्तिङि" इति गुणप्रतिषेधः । स पुनः स च परमात्मा एव मघः कर्मफलम् अपि भुवत् भवति । अत्र धनवाचिना मघशब्देन कर्मफलं विवक्ष्यते । यद्वा "पुनर्मघः" इति समस्तं पदं - भक्तेभ्यः बहुधनज्ञानप्रदानेऽपि पुनः परिपूर्णज्ञानधनत्वात् अभिवृद्धज्ञानधन इत्यर्थः । स परमात्मैव द्यां "द्यु अभिगमने" इत्यस्मात् उत्पन्नः द्योशब्दः । सुकृतिभिः अभिगन्तव्यां दिवम् और्णोत् स्वात्मना व्याप्नोति । स च अन्तरिक्षम् अन्तरा क्षान्तमित्यन्तरिक्षम् आकाशमपि और्णोत् व्याप्नोति । स परमात्मा इदं परिदृश्यमानं नामरूपात्मकं विश्वं जगत् अभवत् अस्ति - विश्वात्मना स एव अवतिष्ठते । स च आभवत् आ सर्वतो व्याप्य वर्तते । आवृत्य आवृत्य तद्रूपेण कारणात्मना वा वर्तते इति भावः । तथा - मुंडकोप० ३।१।७ = "ओं बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति" ॥

न चेति = हे अर्जुन! भूतानि कार्यभावमापन्नानि भूतजातानि मत्स्थानि मयि अव्यक्ते स्वरूपे स्थितानि न भवन्ति स्वकारणे तानि विद्यन्ते । मे मम ऐश्वरं ईश्वरसम्बन्धिनं योगं युज्यते योगेन प्राप्यते इति योगं स्वरूपं पश्य अवलोकय

मम मे आत्मा शुद्धः बुद्धः अव्यक्तस्वरूपः भूतभावनः भूतानि आकाशादीनि भावयति स्वसत्तया प्रकाशयति इति भूतभावनः सन् भूतभृत् भूतानि आकाशादिपृथिव्यन्तानि कार्यमात्राणि बिभर्ति दधातीति भूतभृत् भूत्वा न च भूतस्थः भूतेषु आत्मरूपेण अभिमानितया न तिष्ठामि।

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥ ५॥

नाधृष आदधृषते धृषाणो धृषितः शवः। पुरा यथा व्यथिः श्रव इन्द्रस्य नाधृषे शवः॥ अथ० ६।३३।२"

नाधृष इति = स च इन्द्रः अव्यक्तस्वरूपः परमात्मा नाधृषे नाधृष्यते कार्यान्तरमापन्नैः भूतैः नाभिभूयते अर्थात् भूताश्रये ब्रह्म न तिष्ठति। स च धृषाणः धृष्टः प्रगल्भः अन्येषामाधर्षणशीलः सन् धृषितः - धृषित इति कर्तरि निष्ठा - लिङ्गव्यत्ययः। धर्षकं शवः बलं सर्वस्वरूपाधायकत्वात् आदधृषते आधर्षयति अभिभवति। कोऽप्यन्यः तस्य आधर्षकः नास्तीत्यर्थः। पुरा सृष्ट्यादौ व्यथिः पापनाशकारि श्रवः प्रशस्यं "श्रवश्चाच्छा पशुमच्च यूथम्" (निरु. ४।२४) श्रूयमाणं वा इन्द्रस्य परमात्मनः शवः भूतभावनबलं यथा येन केन प्रकारेण नाधृषे अन्यैर्नाधृष्यते। अन्यानि भूतानि तं परमात्मानं अभिभवितुं न शक्नुवन्ति।

यथेति = आकाशस्थितः आकाशे तिष्ठतीति आकाशस्थितः वायुः यथा येन प्रकारेण सर्वत्रगः सर्वत्र सर्वेषु स्थानेषु गच्छति चेष्टते इति सर्वत्रगः नित्यं सदा महान् महत्परिणामवान् भवति तथा तेनैव प्रकारेण सर्वाणि समग्राणि भूतानि महदादिस्थूलान्तानि मत्स्थानि मयि परिपूर्णे ब्रह्मणि तिष्ठन्ति इति मत्स्थानि इत्येवम् उपधारय निश्चिनुहि॥ ६॥

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥ ६॥

वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्विशथो यौ च रक्षथः।
यौ विश्वस्य परिभू बभूवथुस्तौ नो मुञ्चतमंहसः॥ अथ० ४।२५।१॥

वायोरिति = गुरुः शिष्यमुपदिशति = हे शिष्य! आकाशस्थितस्य महतः सर्वत्रगस्य पवनस्य इव सवितुः जगदुत्पादकस्य तव परमात्मनः विदथानि वेदितव्यान् गुणान् मन्महे वयं मननं कुर्मः। यौ " लोके वायुः ब्रह्माण्डे च परमात्मा आत्मन्वत् आत्मयुतं स्थावरजंगमात्मकं जगत् विशथः महत्परिमाणवन्तौ प्रविष्टौ वसतः, रक्षथः च परिपालयतः। यौ यः परमात्मा वायुश्च विश्वस्य समस्तसंसारे परिभूः सर्वत्रव्यापकः बभूवथुः भवतः। " वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव बहिश्च" (क०)। तौ युवां परमात्मा वायुश्च अंहसः मलिनतापापात् मुञ्चतम् दूरीकुरुतम्।"

सर्वभूतानीति = हे कौन्तेय! हे अर्जुन! कल्पक्षये ब्रह्मकल्पक्षये सति अहं सर्व-

भूतानि सर्वाणि स्थावरजंगमात्मकानि भूतानि मामिकां मदीयां अपराख्यां प्रकृतिं त्रिगुणात्मिकां मायां यान्ति प्राप्नुवन्ति। अहं परमात्मा तानि सर्वाणि भूतानि कल्पादौ ब्रह्मकल्पारम्भे विसृजामि उत्पादयामि ॥७॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यषीदत्पिता नः। स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश ॥ ऋ० १०।८१।१॥ यजु० १७।१७। तै०सं० ४,६,२,१

य इति = यः विश्वकर्मा विश्वं कर्म यस्य स विश्वकर्मा परमात्मा ऋषिः सर्वद्रष्टा सर्वज्ञः इमा इमानि विश्वा विश्वानि भुवनानि भूतजातानि जुह्वत् कल्पक्षये पृथिव्यादीन् इमान् सप्तलोकान् स्वात्मनि जुह्वत् आददानः संहरन् वा होता संसाररूपस्य होमस्य कर्ता, यद्वा संसारस्य जिघत्सुः नः अस्माकं प्राण्यप्राणिनां पिता पाता पालकः जनको वा न्यषीदत् निषसाद स्वयं तिष्ठति। अयमर्थः = प्रलयकाले प्राप्ते सति सर्वान् लोकान् संहृत्य अस्माकमपि संहर्ता पुनश्च स्रष्टा सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत् स एव परमेश्वरः आशिषा - "एकोऽहं बहु स्यां प्रजायेय" इत्येवंरूपया पुनः सिसृक्षया द्रविणं द्रविणोपलक्षितं जगद्भोगं रचयितुमिच्छमानः आकांक्षमाणः प्रथमच्छद् प्रथमं मुख्यं निष्प्रपञ्चं च पारमार्थिकं रूपम् आवृण्वन् अवरान् स्वसृष्टान् द्विपदचतुष्पदस्थावरादीन् आविवेश आविष्कार। "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्युपनिषद् ॥ २।६॥ "एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" माण्डू० उप० ६। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म"। तैत्ति० उप० ३।१॥ "एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः। भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा"। श्वेताश्व० उप० ५।३। "जन्माद्यस्य यतः" वेदा० द० ८।१।१।२॥

प्रकृतिमिति = अहं परमेश्वरः स्वां स्वकीयां प्रकृतिं भूम्याद्यष्टविधां प्रकृतिं अवष्टभ्य स्वायत्तीकृत्य प्रकृतेः भिन्नभिन्नकर्मस्वभावस्य वशात् हेतोः अवशं परतन्त्रम् इमं परिदृश्यमानं मनुष्यपश्वादिलक्षणं भूतग्रामं कृत्स्नं सर्वं प्राणिवर्गं पुनः पुनः भूयः भूयः विसृजामि रचयामि ॥८॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि। क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत्। अथ० ११।८।१॥

यन्मन्युरिति = यत् यदा मन्युः "मन्यते सर्वं जानातीति मन्युः" निरावरणज्ञानः परमेश्वरः "मन्युर्भगो मन्युरेवास देवो मन्युर्होता वरुणो विश्ववेदाः" तै० ब्रा० २।४।१।११॥ 'मन ज्ञाने' औणादिको युः प्रत्ययः। संकल्पस्य वासना-

या: "एकोऽहं बहु स्याम्" गृहात् आदि ग्रहण सामर्थ्यात् जायां "जायतेऽस्यां सर्वं जगत्" इति जाया सिसृक्षावस्थापन्ना भूम्याद्यष्टविधा प्रकृतिः तां प्रकृतिं अवहत् अविष्टम्भयति। सृष्ट्यवष्टम्भन समये के जन्याः सृष्ट्युत्पत्तौ कारणानि आसन् अभवन्। "तपश्चैवास्तां कर्म" अथ० ११।८।२" तदानीं प्राणिनां पूर्वकल्पे कृतानि कर्माण्येव सृष्ट्युत्पत्तौ कारणानि अभवन्। के वराः के वरणीयाः स्वस्वदेहे, वरणीया आसन्। क उ ज्येष्ठवरः अभवत्। ज्येष्ठेषु वरः ज्येष्ठवरः सर्वेभ्यः श्रेष्ठतरः कः अभवत् कः भवति। "ब्रह्म ज्येष्ठवरोऽभवत्" अथर्व॥

न चेति = हे धनंजय! हे अर्जुन! तानि भूतसृष्ट्यादीनि कर्माणि उदासीनवत् आसीनं तूष्णीं तिष्ठन्तं तेषु कर्मसु सृष्टिसंहारादिकर्मसु असक्तं संगरहितं मां परमात्मानं न निबध्नन्ति मम बन्धनाय न भवन्ति॥९॥

न च मां तानि कर्माणि निबध्नन्ति धनंजय।
उदासीनवदासीनमसक्तं तेषु कर्मसु॥ ९॥

इन्दुरोषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम्। बिभेद बलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम्॥ अथ० २०।११।१०॥

इन्द्र इति = इन्द्रः ऐश्वर्यवान् परमात्मा ओषधीः तृणगुल्मादीन् पदार्थान् प्राणिनामुपभोगार्थम् असनोत् प्रादात् ते पदार्थाः तद्बन्धनाय नालम्। स च अहानि प्राणिनां स्वस्वकार्यसाधनाय दिवसान् आयुः परिकल्पत्यर्थं च असनोत् प्रायच्छत्। न तु स्वायुः परिकल्पत्यर्थम्। स परमेश्वरः वनस्पतीन् यज्ञार्थं खदिरपलाशादिवृक्षान् अग्निं वा — यथाह यास्कः = "तत्को वनस्पतिः? यूप इति कात्थक्यः। अग्निरिति शाकपूणिः" निरु० ८।१७। स परमेश्वरः अन्तरिक्षं सर्वप्राण्यप्राणिनासार्थं आकाशं प्रायच्छत्। स परमेश्वरः अन्तरिक्षं बलम् = संव्रियते आत्माऽनेनेति बलम् अज्ञानम् आत्मावरकम् अज्ञानं बिभेद भिनत्ति। विवाचः विरुद्धवाचः भक्तप्रतिकूलान् आचरणान् नुनुदे – भक्तरक्षार्थं बाधते। यद्वा विवाचः विविधाः वेदवाणीः नुनुदे प्रेरयति अथ अनन्तरं अभिक्रतूनां क्रतुः कर्म अभिमुखेन युद्धार्थं कर्म येषां ते अभिक्रतवः बलीयांसः शत्रवः तेषामपि दमिता उपशमयिता अभवत् भवति। एवं परमात्मा सृष्ट्यादिविधानेन हितकरणाहितपरिहाराभ्यां सर्वाः प्रजाः पालयति न तु तत्र स्वासक्तिं विधत्ते – इति भावः। असनोत् = 'षणु दाने' इत्यस्य लङि रूपम्। वनस्पतीन् = पारस्करप्रभृतित्वात् सुडागमः। बिभेद = 'भिदिर् विदारणे' इत्यस्य लिटि रूपम्। नुनुदे = 'णुद प्रेरणे' - इत्यस्य लिटि रूपम्। दमिता = 'दमु उपशमे' इत्यस्य तृचि रूपम्॥

मयेति = हे कौन्तेय! हे अर्जुन! अध्यक्षेण साक्षित्वरूपेण स्वामित्वरूपेण वा मया प्रकृतिः भूम्याद्यष्टविधाऽपरा प्रकृतिः सचराचरं स्थावरजंगमसहितं जगत् सूयते जनयति। अनेन हेतुना अनेन प्रकारेण जगत् विपरिवर्तते सर्वतः चेष्टते॥ १०

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥१०॥

इयं पित्र्या राष्ट्र्येत्वग्रे प्रथमाय जनुषे भुवनेष्ठाः। तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्तु प्रथमाय धास्यवे ॥ अथ० ४।१।२॥

इयमिति = पित्र्या पालकेन सर्वाध्यक्षेण परमात्मना इयं राष्ट्री संसारराष्ट्रस्वामिनी प्रकृतिः भुवनेष्ठाः सचराचरे भुवने स्वसर्जनशक्त्या तिष्ठतीति भुवनेष्ठाः सती प्रथमाय प्रारम्भिकाय जनुषे संसारोत्पत्तये अग्रे सृष्ट्यारम्भे एतु कार्यरूपतामापद्यते। तस्मै प्रकृत्यध्यक्षाय प्रथमाय अनादिने धास्यवे सर्वजगद्धारकाय सर्वपोषकाय सुरुचं सुष्ठुरुचिकरं ह्वारं मानसिकसद्विचार ह्वातारं अह्यं हीनतारहितं प्रात्यहिकं घर्मं पूजायज्ञं श्रीणन्तु सर्वे योगिनः परिपक्वं विदधतु॥

अवजानन्तीति = मोघाशाः मोघाः निष्फलाः आशाः मनोरथाः येषां ते मोघाशाः निष्फलमनोरथाः। मोघकर्माणः मोघानि निष्फलानि कर्माणि येषां ते मोघकर्माणः निष्फलकर्माणः। मोघज्ञानाः मोघं निष्फलं ज्ञानं सकलशास्त्राध्ययनजन्यं येषां ते मोघज्ञानाः। विचेतसः विपरीतबुद्धयः राक्षसीं क्रूरताहिंसादिगुणप्रधानां राजसीं प्रकृतिं, अथच आसुरीं दुष्टां प्रकृतिं मोहिनीं मोहसम्पादिनीं प्रकृतिं स्वभावम् आश्रिताः प्राप्ताः सन्तः मूढाः मूर्खाः मम स्वरूपमजानन्तः अविदितवन्तः मानुषीं मनुष्यसम्बन्धिनीं तनुं शरीरं आश्रितं प्राप्तं मां कृष्णं परमात्मानं अवजानन्ति तिरस्कुर्वन्ति ।११-१२॥

अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥
मोघाशाः मोघकर्माणः मोघज्ञानाः विचेतसः।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥१२॥

[1] य ईं शृणोत्युक्तम्। अमन्तवो मान्त उपक्षियन्ति श्रुधि श्रुतः श्रद्धेयं ते वदामि॥४॥ [2] तां मायामसुरा उपजीवन्त्युपजीवनीयो भवति य एवं वेद॥ [1] अथ० ४।३०।४॥ [2] अथ० ८।१०।४॥

य ईमिति = यः प्राणी अन्नं भोज्यं पदार्थं अत्ति भक्षयति। यः प्राणी विपश्यति आलोकयति, यः प्राणी प्राणिति श्वासोच्छ्वासादि व्यापारं करोति, यः प्राणी उक्तं कथितं वचनं शृणोति श्रवणं करोति, एवंविधमन्तर्यामिरूपेण स्थितं मां ये न जानन्ति ते मूढाः आसुरीं प्रकृतिं आश्रिताः निष्फलज्ञानाः सन्तः अमन्तवः ईश्वरीयज्ञानरहिताः मद्भूतम् ऐश्वरं भावम् अमन्यमानाः अजानन्तः माम् उपक्षियन्ति मां क्षीणं कुर्वन्ति मानुषीं तनुम् आश्रितं माम् अवजानन्ति तां मायां मिथ्याबुद्धिहेतुम् अज्ञानं असुराः असुरताः सुष्ठुप्रेमरहिताः ब्रह्मज्ञानस्थान परिभ्रष्टाः मूर्खाः जनाः = यथा यास्क आह = "असुरा असुरताः

IX



स्थाने स्वस्ताः स्थानेभ्यः इति वासो देवानसृजत तत् सुराणां सुरत्वम्।
असोरसुरानसृजत तदसुराणामसुरत्वम् इति ब्राह्मणम्। निरु० ३।८॥
उपजीवन्ति उपाश्रित्य प्राणं धारयन्ति। उपजीवनीयो देहाश्रित ज्ञानाश्रितः
सम्भवति, न परमात्म ज्ञानाश्रितः भवति। हे श्रुव! हे श्रवणकर्तः! विद्वन्! श्रुधि
~~हे श्रुवः~~ मया वक्ष्यमाणं वचनं शृणु। ते तुभ्यं श्रद्धियं श्रद्धि श्रद्धा तया युक्तं
श्रद्धा ~~युक्तं~~ यत्नेन लभ्यमित्यर्थः, वदामि उपदिशामि। शृणोति = श्रु श्रवणे। "श्रुवः-
श्रृच" इति श्रुधातोः श्रभावः। अमनाव: = मनेः औणादिकः तु प्रत्ययः। यद्वा
भावे तु प्रत्ययः। श्रुधि = छान्दसो विकरणस्य लुक्। "श्रुशृणुपृकृवृभ्यः" इति
हेर्धिभावः। श्रद्धियम् = श्रदन्तोरुपसर्गवद्वृत्ति रिष्यते" इति श्रच्छब्दस्य उपसर्ग-
वद्वर्तमानत्वात् - "उपसर्गे घोः किरिति किप्रत्ययः, मत्वर्थीयो वा॥
महात्मान इति = हे पार्थ! हे अर्जुन! महात्मानः महान उत्कृष्टः आत्मा मनो येषां ते
महात्मानः यतयः दैवीं परमात्मसम्बन्धिनीं प्रकृतिं सम्पत्तिं आश्रिताः प्राप्ताः सन्तः
भूतादिं प्राणिमात्राणां आदिभूतम् अव्ययं विनाशरहितं मां परमात्मानं ज्ञात्वा
अवबुध्य अनन्यमनसः नास्ति अन्यस्मिन् वस्तुनि मनो येषां तेऽनन्यमनसः
अनन्यहृदयाः सन्तः मां परमात्मानमेव भजन्ति सेवन्ते॥१३॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥१३॥

कण्वाः इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः। इन्द्रं स्तोमेभिर्महयन्त
आयवः प्रियमेधासो अस्वरन्॥ ऋ० ८।३।१६॥ अथ० २०।१०।२॥
कण्वा इति = प्रियमेधासः प्रिया मेधा येषां ते प्रियमेधासः प्रियप्रज्ञाः आयवः मनुष्याः
"आयुः मनुष्यः" यथा यास्कः = "आयोरयनस्य मनुष्यस्य" (नि० १०।४१) कण्वा
इव कणन्ति स्तुवन्ति स्तुतिं रचयन्ति ते कण्वाः, यद्वा कणन्ति परमात्मानं लक्ष्यी-
कृत्य व्यवहारेषु गच्छन्ति इति कण्वाः। कणतिर्गतिकर्मा, यद्वा कण् निमीलने
अस्मात् क्वन् प्रत्ययः। बाह्येन्द्रियाणि निमील्य ध्यानकर्तारः ईश्वरोपासकाः।
कण्वस्य मेधाविनामसु पाठः (निघं० ३।१५।) भृगवः तेजस्विनः तपस्विनो वा
"भृज्जन्ति तपश्चर्यादिषु ये परिपक्वप्रज्ञाः भवन्ति ते भृगवः तपस्विनः"
दैवीं प्रकृतिमाश्रिताः सन्तः। भृगवः = भ्रस्ज पाके इत्यतः उः संप्रसारणम्-
सलोपश्च। सूर्या इव सूर्यवत्तेजस्विनः महात्मानः सन्तः धीतं सर्वैः आध्यातं
विश्वमित् व्याप्तमेव परमात्मानम् आनशुः अश्नुवन्ति सर्वदा तस्मिन् अनन्य-
मनसा लीनाः तिष्ठन्ति। एवंभूताः अनन्यमनसस्त एव यतयः इन्द्रं परमात्मानं
महयन्तः पूजयन्तः सन्तः स्तोमेभिः स्तोत्रैः अस्वरन् उच्चैः स्वरन्ति उच्चैः गा-
यन्ति। "स्वृ शब्दोपतापयोः" भौवादिकः॥
सततमिति = दृढव्रताः दृढं विच्छेदरहितं ज्ञानसमाधिलक्षणं व्रतं
नियमो येषां ते दृढव्रताः सततं नित्यं मां परमात्मानं कीर्तयन्तः कीर्तनं कुर्वन्तः

यतन्तः मत्प्राप्तये यत्नं कुर्वन्तः सन्तः भक्त्या परामक्त्या मां परमात्मानमेव नमस्यन्तः नमस्कारं कुर्वन्तः सन्तः नित्ययुक्ताः नित्यसमाधिनियमोपेताः सन्तः भक्ताः माम् उपासन्ते सेवन्ते। यद्वा नित्ययुक्ताः नित्यसमाधिनियमोपेताः नित्यो मोक्षः तत्सिद्धये युक्ताः नियताः उपासते उपासनां कुर्वन्ति॥ १४॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।

नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥ १४॥

सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः। शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन्॥ ऋ० ४।२।१७॥ अथ० १८।३।२२॥

सुकर्माण इति = सुकर्माणः सुष्ठु ज्ञानादिलक्षणं कर्म येषां ते सुकर्माणः शोभनज्ञानवन्तः, सुरुचः सुष्ठु रुक् ब्रह्मकीर्तनं प्रीतिः येषां ते सुरुचः शोभनप्रीतयः शोभनप्रवृत्तयो वा, देवयन्तः देवं परमात्मानं कामयमानाः परमात्मोपासकाः ईश्वरभक्ता इत्यर्थः देवाः ईश्वरभक्त्या देदीप्यमानाः यतयः, अयो न = यथा लोहकाराः अयः = लोहं भस्त्रेण धमन्ति तद्वत् जनिं = स्वकीयं मानुषं जन्म धमन्तः भक्त्या निर्मलीकुर्वन्तः अग्निं अग्निवत् प्रकाशस्वरूपं ज्ञानमयम् आत्मानं शुचन्तः प्रदीपयन्तः इन्द्रं परमैश्वर्यवन्तं परमात्मानं ववृधन्तः स्तुत्या वर्धयन्तः सन्तः परिषदन्तः नित्ययोगसमाधिना परितः सीदन्तः ऊर्वं महतो महान्तं गव्यं गोमयं वाङ्मयं परं ब्रह्म अग्मन् गच्छन्ति उपासते इत्यर्थः। धमन्तः = "ध्मा शब्दाग्निसंयोगयोः"। शतरि "पाघ्राध्मा —" इत्यादिना धमादेशः। ववृधन्तः = "वृधु वर्धने" व्यत्ययेन परस्मैपदम्। शतरि शपः श्लुः। अग्मन् = गमेर्लुङि च्लेर्लुकि रूपम्॥

ज्ञानयज्ञेनेति = इज्यते पूज्यतेऽनेनेति यज्ञः ज्ञानं ब्रह्मात्मैकत्वविषयं ज्ञानमेव यज्ञः ज्ञानयज्ञः तेन ज्ञानयज्ञेन अन्ये केचित् यतयः एकत्वेन अभेदोपासनया यजन्तः पूजयन्तः मां परमात्मानं उपासते उपासनां कुर्वन्ति। अपिशब्देन कर्मिणः गृह्यन्ते। कर्मयज्ञोपासकाः कर्मिणः पृथक्त्वेन भेदेन विश्वतोमुखं सर्वात्मकं मां परमात्मानं बहुधा अनेकप्रकारेण उपासते सेवन्ते।

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।

एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्॥ १५॥

"ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश। एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः॥" ऋ० ६।३।२॥

ईजे इति = यः यजमानः यतिः ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं तेजः स्वरूपं यस्य तादृशाय अग्नये सर्वव्यापकाय परमात्मने ददाश भक्त्या स्वमनः अर्पयति स यजमानः ब्रह्मविद् यतिः यज्ञेभिः अभेदोपासनामयेन ज्ञानयज्ञेन ईजे इष्टवान् भवति। तथा शमीभिः कर्मयज्ञोपासनामयैः बहुविधकर्मभिः कर्मयज्ञोपासकः शशमे शान्तश्च भवति। कर्मयोगेनापि सर्वं फलं लभते। एवा चन = अपि च तं यजमानम् एकत्वोपासकं ज्ञानिनं पृथक्त्वोपासकं कर्मिणं वा यशसाम् अजुष्टिः यशोलब्धिः —

न नश्यते न प्राप्नोति, तथा प्रदीप्तः अनर्थहेतुः प्रकृष्टः दर्पः अभिमानः न नश्यते न प्राप्नोति ॥

अहमिति = क्रतुः संकल्पः अहं यज्ञः उपासनादिकर्म अहम्। स्वधा = पितृभ्यः पार्वण-श्राद्धादौ स्वधाशब्दितः अहमेव। औषधं व्रीह्यादिकं अप्यहमेव। येन देवपितृभ्यः स्वाहास्वधान्तेन हविर्दीयते सः मंत्रः अहमेव। आज्यं घृतचरु पुरोडाशादिकम् अहमेव। अग्निः अपि अहमेव अस्मि। हुतं हवनक्रियापि अहमेवास्मि ॥१६॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

"अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्। अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ऋ० ३।२६।७॥ साम० ६१३॥ यजु० १८।६६॥

अग्निरिति = अहं परमात्मा अग्निरस्मि देवानां हविः प्रापणाद् अंगनादिगुणयुक्तोऽस्मि। अहं जन्मना स्वप्राकट्येनैव जातवेदाः जातं जातं कर्म वेत्तीति जातवेदाः क्रतुः अप्यहमस्मि। "जातवेदाः कस्मात्? जातानि वेद, जातानि वैनं विदुः, जाते जाते विद्यत इति वा, जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वम्" इति ब्राह्मणम् (निरु० ७।१९)। जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। अतः घृतम् आज्यं मे मम परमेश्वरस्य चक्षुः चक्षुःस्थानीयम्। यथा लोके चक्षुर्भासकम् एवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयत् भासकमस्ति। अमृतम् अमृतमयम् औषधं मे मम परमेश्वरस्य आसन् आस्ये वर्तते अर्थात् औषधमप्यहमेवास्मि। अर्कः अर्चनीयः यज्ञः नामनाम्नास्मि। त्रिधातुः त्रयः ऋग्यजुःसामानि धातवः जगद्धारकाः मंत्राः यस्मिन् स त्रिधातुः ऋग्यजुःसाममंत्रः अहमेवास्मि। रजसः पितृलोकस्य विमानः स्वधाशब्दविशेषेण निर्माताऽस्मि। अर्थात् पार्वणश्राद्धादौ स्वधाशब्दितोऽप्यहमेव। अजस्रः अनुपक्षीणः घर्मः प्रदीप्तः सूर्योऽप्यहमेवास्मि। हविः होतव्यं द्रव्यं हुतञ्च सर्वमेवाहमस्मि। चक्षुः चक्षिङ् व्यक्तायां वाचि "उसन्नित्यनुवृत्तौ 'चक्षेः सिच्च'" इत्युसुन्। शिद्भावात् ख्याञादेशाभावः। आसन् = आस्यशब्दस्य "पद्दन्नो—आसन्नादेशः।" "सुपां सुलुक्—" इति सप्तम्याः लुक्। विमानः = माङ् माने। "कृत्यल्युटो बहुलम्" इति ल्युट्। अजस्रः = जसु मोक्षणे नञ्पूर्वः। "नमिकम्पि—रः" इति ताच्छील्ये रप्रत्ययः। नञ्पूर्वो जसिर्नैरन्तर्ये वर्तते। यथा चोपनिषदि = "अन्नाद्धि खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्त्यभिसंविशन्ति। तथा प्रश्नोप० १।१४॥ = "अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मात् इमाः प्रजाः प्रजायन्ते"।

पितेति = अस्य जगतः संसारस्य पिता आदिकारणम् अहमस्मि। माता अपरा प्रकृतिरहमेवास्मि। धाता पोष्टाऽहमस्मि। पितामहः अक्षरं ब्रह्म अपि अहमेवास्मि। वेद्यं ज्ञातुं योग्यं सर्वं वस्तु अहमेवास्मि। पवित्रं पावकं सूर्याग्नि-

वाय्वादि सर्वमेवाहमस्मि। ओंकारः परमात्मनाम अहमेवास्मि। ऋक्साम-यजूंषि ऋग्वेदः सामवेदो यजुर्वेदोऽहमेवास्मि।

पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकारः ऋक् साम यजुरेव च॥१७॥

"स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा। यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा।" अथ० २।१।३॥

यद्वा = ऋचो नामास्मि यजूंषि नामास्मि सामानि नामास्मि। ये अग्नयः पाञ्चजन्या अस्यां पृथिव्यामधि। तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव॥ यजु० १८।६७॥

नूतनमंत्रः = ऋग्वेदपरिशिष्टे ३३।२१ = "यो वै वेद महादेवं प्रणवं पुरुषोत्तमम्। ओंकारं परमात्मानं तन्मे मनः शिवसंकल्पमस्तु॥

यद्वा = पिता जनितुरुच्छिष्टोऽसोः पौत्रः पितामहः। स क्षियति विश्वस्येशानो वृषा भूम्यामतिघ्न्यः॥ अथ० ११।७।१६॥

स नः इति = सः परमात्मा नोऽस्माकं प्राण्यप्राणिनां वस्तूनां पिता पालयिता धाता पोषकः अस्ति। स परमात्मा एव जनिता उत्पादकः आदिकारणत्वेन पितृस्थानीयः अस्ति। स उत परमात्मा एव नः शासकः अस्ति। बन्धुः भ्रातृवत् प्रेमबन्धुः अस्ति। स एव विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद वेत्ति। अतएव स परमात्मा पितामहोऽप्यस्ति। यः परमात्मा देवानाम् अग्निवाय्वादीनां देवानां नामध नाम्नां धाता स्थापयिता एक एव अद्वितीय ओंकार एवास्ति। संप्रश्नं सम्यक्तया प्रश्नपूर्वकं ज्ञातुं योग्यं तं परमात्मानं सर्वा सर्वाणि भुवना भुवनानि भूतजातानि यन्ति प्राप्नुवन्ति प्रलयकाले लीनानि भवन्ति॥

यद्वा = ऋच इति = ऋचो नामास्मि ऋग्वेदनामास्मि। यजूंषि नामास्मि। अहं परमात्मा एव यजुर्वेदनामास्मि। अहं परमात्मा सामानि नामास्मि सामवेदोऽस्मि। ये चाग्नयः ज्ञानिनः यतयः पांचजन्याः पंचजनेभ्यः मनुष्येभ्यः हिताः पांचजन्याः पंचजना इति मनुष्यनाम-(निघं० २।३) मनुष्यश्रेयस्करतराः अस्यां पृथिव्यां अधि उपरिस्थाः सन्ति। हे परमात्मन्! तेषां सर्वेषां ज्ञानिनां उत्तमः उच्चतरोऽस्मि। अतः नः अस्माकं जीवातवे चिरंजीवनाय प्रसुव प्रेरको भव।

य इति = यः जीवात्मा वै महादेवं पुरुषोत्तमं प्रणवम् ओंकारं परमात्मानं वेद तत् तस्मिन् ओंकारे मे मम मनः शिवसंकल्पं कल्याणसंकल्पमस्तु॥

पितेति = उच्छिष्टः परमात्मा जनितुः उत्पादकस्य पिता जनकः रक्षकोऽस्ति स उच्छिष्टः असोः प्राणस्य पौत्रः नरकाद्रक्षकोऽपि पितामहः अस्ति। स परमात्मा विश्वस्य ब्रह्माण्डस्य ईशानः स्वामी ईश्वरो भूत्वा क्षियति सर्वत्र वासं करोति स परमात्मा वृषा ऋगादिवेदज्ञानस्य वर्षयिता सन् भूम्यां पृथिव्यां अतिघ्न्यः=

हनन्नीति क्रान्तिः सर्वश्रेष्ठो वा वर्तते।

गतिरिति = गतिः कर्मफलं स्वर्गादिः अहमेवास्मि। भर्ता पालकः अहमेवास्मि। प्रभुः सर्वप्राण्यप्राणिनां स्वामी अहमस्मि। साक्षी प्राणिकृतकर्मणां साक्षात् कर्ताऽप्यहमेवास्मि। निवासः सर्वेषां भोनिमनिवासस्थानमहमस्मि। शरणं दुःखितानां दुःखहर्ताऽहमस्मि। सुहृत् प्राण्यप्राणिनामुपकर्ता चन्द्रवाय्वादिः अहमेवास्मि। प्रभवः सर्वजगदुत्पत्तेः निमित्तोपादानकारणम् अहमस्मि। प्रलयः सर्वजगत्संहर्ताऽहमस्मि। स्थानं स्थितिकारणमहमस्मि। निधानं कार्यकारणप्रपञ्चाधिष्ठानमहमस्मि। अव्ययं व्ययरहितं बीजं जगद्बीजमप्यहमस्मि॥१८॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्॥१८

अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः। स प्रत्युदैद्धरुणं मध्वो अग्रं स्वया तन्वा तन्वमैरयत॥ अथ० ७।३।१॥

अया इति = अया अयं परमात्मा विष्ठा विविधं प्रकारं तिष्ठतीति विष्ठा "क्विप् च" इति क्विप् — सर्वात्मना स्थितः — अनेन स्थानं समर्थितम्। कर्वराणि = कर्म नामैतत् — कार्यजातान् पदार्थान् जनयन्नुत्पादयन् वर्तते — अनेन प्रभुत्वं समर्थितम्। स एव परमात्मा घृणिः दीप्यमानः वराय वरणीयाय शरणं प्राप्ताय उरुः महान् गातुः गतिः मार्गः साधनान्तरनिरपेक्षः महान् उपायः अस्ति। अनेन स परमात्मा गतिः इति समर्थितम्। हि शब्दो हेतौ वर्तते। स परमात्मा एव धरुणं धारकं मध्वः मधुनः "नुमभावश्छान्दसः" मधुवदास्वाद्यस्य फलस्य अग्रं सारं बीजं प्रत्युदैत् प्रत्युद्गमयति स्रोतभ्यः। प्रत्युदैत् = अन्तर्भावित ण्यर्थः। "छन्दसि लुङ्" "गादेशाभावे" "सिचि वृद्धिः" अनेन बीजत्वं फलप्रदातृत्वञ्च समर्थितम्। सर्वेषां फलप्रदत्वं स्वस्य सर्वनियन्तृत्वमन्तरेण न संभवति इति तदुपपादयति। स्वयेति = स्वया स्वीयया विराडात्मिकया तन्वा शरीरेण तन्वं "जातावेकवचनम्" सर्वशरीराणि ऐरयत् तत्तत्कर्मसु प्रेरयति। अया = प्रथमायाः आकारः। ऐरयत् = ईर् गतौ कम्पने च। छान्दसो लङ्

तपामीति = अहं परमात्मा तपामि जगतः तापक्रियां करोमि। अहं वर्षं निगृह्णामि = वर्षाविरोधं करोमि। अहमेव वर्षासु वर्षाम् उत्सृजामि उत्पादयामि। हे अर्जुन! अमृतं मुक्तिः, मृत्युः प्राणपरित्यागः, सत् = नामरूपात्मकं कार्यं जगत् अहमस्मि। असत् = तद्विलक्षणम् अव्यक्तम् अहमस्मि॥१९॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन॥१९॥

"सन्नुच्छिष्टे असंश्चोभौ मृत्युर्वाजः प्रजापतिः। लौक्या उच्छिष्ट आयत्ता व्रश्च द्रश्चापि श्रीर्मयि।" अथ० ११।७।३॥

यद्वा = "सतश्च योनिमसतश्च विवः।" अथ० ४।१।१॥

सदिति = उच्छिष्टे सकलब्रह्माण्डे प्रलयं गते यत् उत्तरं शिष्यते स उच्छिष्टः परमात्मा, यद्वा इति न, इति न इति भावनया समस्तप्रपञ्चे निषिद्धे कृते सति यः

सर्वेभ्योऽतिरिक्तः सन् शिष्यते स उच्छिष्टः परमात्मा, तस्मिन् उच्छिष्टे परब्रह्मणि सत् नामरूपात्मकं कार्यं जगत् अस्ति। तस्मिन् उच्छिष्टे च असत् अव्यक्तरूपं प्रधानं च उभावेव स्तः। तस्मिन् उच्छिष्टे मृत्युः सर्वप्राणिनां प्राणहर्ताऽस्ति। तस्मिन् परमात्मनि देः = अमृतम् अस्ति। तस्मिन् परमात्मनि व्रः = सर्वाच्छादकः आकाशः अस्ति। तस्मिन् परमात्मनि वाजः = बलं तपो वाऽस्ति। प्रजापतिः प्रजापालकः मेघः वृष्टिर्वा, तस्मिन्नुच्छिष्टे वर्तते। तथा च लौक्याः समस्तलोके वर्तमानाः लोकाः उच्छिष्टे परब्रह्मणि आयत्ताः संयताः सन्ति। तस्मिन् मयि परमात्मनि श्रीः = चेतनस्वरूपा शोभा विद्यमानाऽस्ति। अतः तपोवर्षादिकं सर्वमहमेवास्मि।

~~तथा च मंत्रान्तरम्~~ = यद्वा = <u>सत इति</u> = सतः व्यक्तजगतः मूलकारणं च असतः अव्यक्तस्य प्राकृतजगतः अव्यक्तस्वरूपस्य योनिं मूलकारणं विवः = प्राचय॥

तथा च मंत्रान्तरम् = "अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय। अहमपो अनयं वावशाना मम देवासो अनुकेतमायन्॥ ऋ० ४।२६।२॥

<u>अहमिति</u> = अहं परमात्मा आर्याय श्रेष्ठाय जनाय भूमिं वासाय पृथिवीं अददाम् ददामि। दाशुषे हविर्दत्तवते मर्त्याय यजमानाय मनुष्याय वृष्टिं सस्याद्यभिवृद्ध्यर्थं वृष्ट्युत्पन्नं जलम् अददाम् अहमेव ददामि। किञ्च अहम् अपः जन्ममरणात्मकानि कर्माणि तत्फलानि च अनयम् प्रापयामि। वावशानाः सदसदात्मकं मां कामयमानाः देवासः ज्ञानिनः विद्वांसः मम मदीयं केतं निवासस्थानं यद्वा मदीयं संकल्पं ज्ञानं वा अनु + आयन = अनुगच्छन्ति॥ तथा प्रश्नोप० २।९ = "त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः" तथा = बृहदा० २।१।२ = "स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास"॥ तथा बृह० २।२६ = "यदा त्वमभिवर्षसि" अथ च = "असद्वा इदमग्र आसीत्ततो वै सदजायत"॥

<u>त्रैविद्येति</u> = त्रैविद्याः कर्मोपासनाज्ञानरूपाः तिस्रः विद्याः त्रिविद्याः ताः ये अधीयन्ते ते त्रैविद्याः त्रयीविद्या ज्ञानिनः सकामकर्मकर्तारः सोमपाः यज्ञे सोमरसपायिनः अत एव पूतपापाः पापविरहिताः यज्ञैः अग्निष्टोमप्रभृतिभिः यज्ञैः मां परमेश्वरं इष्ट्वा सम्यक् पूजयित्वा स्वर्गतिं स्वर्गप्राप्तिं प्रार्थयन्ते कामयन्ते। ते पुण्यात्मानः पुण्यं पवित्रं सुरेन्द्रलोकं स्वर्गस्थानं आसाद्य प्राप्य दिवि स्वर्गलोके दिव्यान् स्वर्गभवान् देवभोगान् देवानां ये भोगाः यच्छरीरं यद्भोग्यं यत्सुखं तादृशान् एव भोगान् सुखविशेषान् अश्नन्ति भुञ्जते" २०॥

त्रैविद्याः मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥२०॥

"येन देवाः स्वरारुरुहुर्हित्वा शरीरममृतस्य नाभिम्। तेन गेष्म सुकृतस्य लोकं घर्मस्य व्रतेन तपसा यशस्यवः॥ अथ० ४।११।६।"

<u>येनेति</u> = येन वेदत्रयीज्ञानेन देवाः सोमपाः सकामकर्मकर्तारः विद्वांसः शरीरं पाञ्चभौतिकं देहं हित्वा परित्यज्य अमृतस्य अविनश्वरस्य भोगस्य नाभिं मध्यभागं —

स्वः स्वर्गम् आरूरुहुः आरोहन्ति । तपसा तपश्चर्यया यशस्यवः यशः स्वरूपं परं ब्रह्म प्राप्तुमिच्छमानाः वयं सेवकाः धर्मस्य अग्निष्टोमादि यज्ञस्य व्रतेन व्रतधारणेन तेन वेदत्रयीज्ञानेन सुकृतस्य पुण्यात्मनः लोकं पुण्यं स्वर्गलोकं गेष्म प्राप्नुवाम॥ यथा चोपनिषदि = "एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददा-यन्। तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः। मुं० उप० १।२।५

ते इति = ते सोमपाः याज्ञिकाः पुरुषाः विशालपुण्यातिशयेन विस्तृतं स्वर्गलोकं स्वर्गीयं सुखविशेषं भुक्त्वा भोगं कृत्वा पुण्ये क्षीणे विनष्टे सति मर्त्यलोकं मनुष्य-लोकं विशन्ति जन्म गृह्णन्ति। एवं इत्थं त्रयीधर्मं वेदत्रयीधर्मं अनुप्रपन्नाः प्राप्ताः कामकामाः काम्यन्ते इति कामाः भोगाः तान् एव कामयन्ते इति कामकामाः विषय-लम्पटाः गतागतं गमनागमनं जन्ममरणप्रवाहं लभन्ते॥२१॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना: गतागतं कामकामाः लभन्ते॥ २१॥

"स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी। यज्ञं ये विश्वतो धारं सुविद्वांसो वितेनिरे॥ यजु० १७।६८॥ अथ० ४।१४।४॥

यद्वा नूतनो मंत्रः = ये अर्वाञ्चस्तां उ परा च आहुर्ये पराञ्चस्तां उ अर्वाच आहुः।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति। ऋ० १।१६४।१९

स्वर्यन्त इति = ये यजमानाः कामकामाः सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः विश्वतोधारं सर्वतोधारम् आहुतिदक्षिणादानानि यज्ञस्य धाराः तद्वन्तं यज्ञं यद्वा विश्वस्य जगतः धारयितारं यज्ञं अग्निष्टोमादियज्ञं वितेनिरे वितन्वन्ति, ते कामकामाः विद्वांसः स्वः स्वर्गलोकसुखं यन्तः प्राप्नुवन्तः न अपेक्षन्ते न कामयन्ते। पुण्योपभोगपर्यन्तं रोदसी = जरामृत्युशोकादीनां रोद्धीं, द्यां स्वर्गीयं प्रकाशमानं लोकं आरोहन्ति अधिगच्छन्ति॥ यथा - मुण्ड० उप० १।२।७ = "प्लवा: ह्येते अदृढाः यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापि यन्ति"॥

यद्वा = ये इति = ये अर्वाञ्चः मनुष्याः ज्योतिष्टोमादि सकामकर्मरताः अर्थात् वेदत्रयीप्रोक्तसकामकर्मधर्ममनुपपन्नाः सन्ति तान् उ = एव अर्वाञ्च आहुः। पूर्वकृतपुण्यकर्मणां पुण्ये क्षीणे सति अत्र लोके पुनरावर्तन्ते। हे सोम! सुभ्वन्! कर्मिन्! प्रयोज्यकर्तः! त्वम् इन्द्रः प्रयोजककर्ता युवां या = यानि कर्माणि चक्रथुः कृतवन्तौ स्थः तानि कर्माणि धुरा अग्रेसरेण लिंगशरीरेण युक्ता = युक्तानि रजसः ~~ब्रह्मलोकाद्वा~~ मनुष्यलोकान् वहन्ति ब्रह्मादिलोकं प्रापयन्ति रजसः ब्रह्मलोकाद्वा वहन्ति मर्त्यलोकं प्रापयन्ति। धुरा न युक्ता = यथा रथस्य धुरा युक्ताः अश्वाः तं रथं देशाद्देशान्तरं प्रापयन्ति तद्वत् इत्यर्थः। यथाकल्पे प्रोक्तम् = "मंत्रोदिताः ये मनुजाः प्रयान्ति ब्रह्मादिलोकानथ ते नृलोकान्। तत्त्वज्ञतः या-वदिमे भ्रमन्ति कर्माण्यसाधारणकारणानि"॥

अनन्या इति = ये जनाः अनन्याः अन्याश्रयरहिताः सन्तः मां परमात्मानं चिन्तयन्तः मच्चिन्तनं कुर्वन्तः पर्युपासते मदुपासनां कुर्वन्ति, अहं परमात्मा नित्याभियुक्तानां निरन्तर समाहितचित्तानां तेषां ब्रह्मोपासकानां योगक्षेमं अप्राप्तस्य वस्तुनः प्रापणं योगः, स्थितस्य परिपालनं क्षेमः, तदुभयमेव वहामि करोमि, यद्वा योगः ब्रह्मसमाधिः तस्य क्षेमम् आध्यात्मिकाद्युपद्रवरहितं वहामि करोमि ॥२२॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

"योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम्। अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव। ऋ० १०।१६६।५॥

योगक्षेममिति = हे जीवात्मानः! हे योगिनः! मे मम परमात्मनः अधस्पदात् पादस्याधस्तात् क्षुद्रजीवने वर्तमानाः यूयम् उदकात् वृष्टिजलात् अधःप्रदेशे वर्तमानाः मण्डूका इव उद्वदत उच्चैः मां चिन्तयत। ततोऽहं निरन्तरसमाहितचित्तानां वो युष्मभ्यं योगक्षेमं अप्राप्तस्य वस्तुनः प्राप्तिः योगः, प्राप्तस्य वस्तुनः रक्षणं क्षेमः तदुभयं आ समन्तात् दाय दत्वा, यद्वा योगः ब्रह्मसमाधिः तस्य क्षेमम् आध्यात्मिकाद्युपद्रवरहितं योगकौशलमिति भावः। आ समन्तात् दाय दत्वा उत्तमः परमपदप्राप्तिद्वयकः सर्वश्रेष्ठः भूयासं भवामीति। अक्रमीम = क्रमेर्लुङि "अमो मश्" "इटः इटीति सिचो लोपः"॥

ये इति = ये जनाः अन्यदेवताभक्ताः अन्यासां देवतानां भक्ताः उपासकाः अपि श्रद्धयान्विताः श्रद्धायुक्ताः सन्तः यजन्ते वेदोदितविधिना उपासते, हे कौन्तेय! हे अर्जुन! तेऽपि मां परमात्मानं अविधिपूर्वकं शास्त्रविधिं विहाय यजन्ति पूजयन्ति ॥२३॥

येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयान्विताः।

तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥

"यच्चिद्धि शश्वता तना देवं देवं यजामहे। त्वे इद्धूयते हविः। साम०१६१८ ऋ० १।२६।६॥

यदिति = यत् चित् हि = यद्यपि हि यत् हि शश्वता शाश्वतेन नित्येन तना विस्तृतेन हविषा पूजनेन देवं देवं अन्यं अन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषं यजामहे पूजयामः तत् हविः तत्पूजनं त्वे इत् = त्वयि एव हूयते अर्प्यते — अन्यान्यदेवताविषयो यागोऽपि त्वदीयैव सेवा इत्यर्थः। तना = तनु विस्तारे "क्विप् च" इति क्विप्। यद्वा "पचाद्यच्" "सुपां सुलुक्" इति तृतीयायाः आकारः। "त्वे" युष्मच्छब्दस्य छन्दसि "शे" आदेशः। "त्वमावेकवचने" इति त्वादेशः। "अतो गुणे" इति गुणभावः।

अहमिति = सर्वयज्ञानां श्रौतस्मार्तनानाविधयज्ञानां भोक्ता उपभोगकर्ता च तथा प्रभुः नेता अहं परमात्माऽस्मि। ते अन्यदेवोपासकाः एवंविधं मां तत्त्वेन यथार्थतः न जानन्ति अतः ते च्यवन्ति परमपुरुषार्थात् भ्रश्यन्ति ॥२४॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहं सो अस्मि यः पुरा सुते वदामि कानि चित्। तं मा व्यन्त्याध्यो वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी। ऋ० १।१०५।७॥

अहमिति = हे मनुष्याः! अहं परमात्मा वदामि कथयामि, यः अहं पुरा सर्वतः प्राचीने सुते युष्माकं यज्ञे कानिचित् कतिपयानि कर्माणि स्तोत्राणि वा सन्ति। सः सर्वकर्ममयः यज्ञः अहमस्मि। यद्वा पुरा पूर्वभूते सुते यज्ञे कानिचित् स्तोत्राणि कर्माणि वा वदामि उक्तवान् अस्मि। स सर्व एवाहमस्मि न तु अन्यः कश्चिदस्ति। तस्मात् किमर्थं मां परित्यजथ। युष्माकं आध्यः आधीयते मनसि स्थाप्यते इत्याधिः तात्त्विकी मानसी स्थितिः ता आध्यः = मानस्यः स्थितयः तं तादृशं यज्ञपतिं मां परमात्मानं व्यन्ति विस्मरन्ति सम्यक्तया न अभिजानन्ति। वृको न तृष्णजं मृगम् = अरण्यश्वा तृष्णजं जाततृष्णं मृगं यथा विनाशयति तथा तत्त्वतो माम् अजानन् अस्मदर्थं विनश्यति। मां स्वान्तःकरणात् च्यावयतीति भावः। हे रोदसी! हे द्यावापृथिवीवासिनः पुरुषाः मे मदीयं अस्य इदं वचनं वित्तं जानीतम्। व्यन्ति = वी गत्यादिषु। अदादित्वाच्छपो लुक्। "तन्वादीनां छन्दसि बहुलमुपसंख्यानम्" इति बहुलवचनात् यण्। आध्यः = "उपसर्गे घोः किः" "आतो लोप इटि च" इत्याकारलोपः। "जसादिषु छन्दसि वा वचनम्" इति "जसि च" इति गुणस्य विकल्पनादभावे यणादेशः। तृष्णजम् = तृष् पिपासायाम्। "स्वपितृषोः नजिङ्" इति नजिङ्। पदकारस्त्वेवं मन्यते। "अन्येष्वपि दृश्यते" इति दृशि ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डः प्रत्ययः। तृष्णा जाता यस्य "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वत्वम्। वित्तम् = विद् ज्ञाने लोटि अदादित्वात् शपो लुक्। "अस्य क्रियाग्रहणं कर्तव्यम्" इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। तथा छान्दो० उप० उत्त० प्रपा० ५।२४।२ = अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु भूतेषु सर्वेषु आत्मसु हुतं भवति॥

यान्तीति = देवव्रताः देवेषु विष्णुशिवादिदेवेषु व्रतं येषां ते देवव्रताः देवयाजिनः देवान् विष्णुशिवादिदेवान् यान्ति तत्तत्पदं गच्छन्ति।

यान्ति देवव्रताः देवान्।

देवयन्तो यथामतिमच्छा विदद्वसुं गिरः। महामनूषत श्रुतम्।
अथ० २०।७०।२॥ ऋ० १।६।६॥

देवयन्त इति = गिरः गृणन्ति स्तुवन्ति इति गिरः शिवविष्ण्वादिदेवानां स्तोतारः जनाः देवयन्तः देवान् विष्णुशिवादिदेवान् कामयमानाः यथामतिं यथार्थतया मननयोग्यं वसुं वासयोग्यं श्रुतं विख्यातं श्रवणयोग्यं वा महां महान्तं अच्छ प्रत्यक्षभूतं तं देवं विदत् जानन्ति ते अनूषत देवान् स्तुवन्ति। देवयन्तः = देवान् आत्मनः इच्छन्तः। "सुप आत्मनः क्यच्" "क्यचि च" इतीत्वम्॥ "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घत्वे च न भवति। यथा = "प्रकार वचने

थाल् " इति थाल् प्रत्ययः। मतिम् = "मंत्रे वृषेषपचमन" इत्यादिना क्तिन्"
गिरः = गृणातेः क्विप्। "ऋत इद्धातोः" इतीत्वं रपरत्वम्। महां = महान्तम्। नकारतकारयोर्लोपः छान्दसः। अनूषत = णु स्तुतौ, व्यत्ययेन आत्मनेपदम्। लुङि झेः स्यादेशः। "सिचि कुटादित्वेन" ङित्वात् गुणाभावः। इउभावः उकार दीर्घत्वञ्च छान्दसम्।

पितृनिति = पितृव्रताः पितृषु श्राद्धभूरिभोजनादिनियमो येषां ते पितृव्रताः पितृन् पूजयन्तः पितृन् अग्निष्वात्तादीन् गच्छन्ति।

पितॄन् यान्ति पितृव्रताः।

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः। तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ यजु० १९।५१॥ ऋ० १०।१५।८॥

ये इति = हे परमात्मन्! नः पितृपूजकानां अस्माकं ये पूर्वे पूर्वतनाः पितरः पितृपितामहप्रपितामहादयः सोम्यासः सौम्यगुणयुक्ताः शान्त्यादिगुणवन्तः वसिष्ठाः अतिशयेन जितेन्द्रियतायुक्ताः सोमपीथं पितृयज्ञे सोमरसपानम् अनूहिरे आनुपूर्व्येण हवींषि पैतृकयज्ञसंपादितानि अन्नानि उशन् कामयमानः यमः इन्द्रियसंयमी पितृपूजकः पितृस्वरूपमापन्नः तेभिः तैः पितृभिः सह संरराणः संप्रीयमाणः रममाणो वा उशद्भिः कामयमानैः सह प्रतिकामं कामं कामं प्रति अत्तु यानि यानि हवींषि कामयेत तानि तानि भक्षयतु इत्यर्थः। अनु+ऊहिरे = 'वह प्रापणे'। वसिष्ठाः = इष्ठन् प्रत्ययः। तथा कृष्णयजुः आर० ६ अ० १ अनु० १० = "देवान् वै पितॄन् प्रीतान् मनुष्याः पितरोऽनुप्रीयन्ते" तथा शतपथब्राह्मणे = "शरदि कुर्यात् स्वधां वै", शरत्स्वधो वै पितृणामन्नं तदेनमन्नं स्वधयादधाति, यद्वा = ऋ० १०।१५।२ = इदं पितृभ्यो नमोऽस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्यानिषत्ता ये वा नूनं सुवृजनासु विक्षु"।

भूतानीति = भूतेज्याः विनायकवेतालदुर्गादिभूतान् जपबल्यादिभिः ये यजन्ति ते भूतेज्याः भूतपूजकाः जनाः भूतानि यान्ति प्राप्नुवन्ति।

भूतानि यान्ति भूतेज्याः।

भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव। तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनु मन्यतामिदम् ॥ अथ० ४।८।१॥

भूत इति = भूतः भूतोपासकः भूतेषु सम्बद्धपुरुषेषु पयः पूजाद्रव्यं आदधाति धारयति अर्पयतीत्यर्थः। स भूतोपासकः एव भूतानामधिपतिः स्वामी बभूव भवति। तस्य भूताधिपतेः मृत्युः दण्डसामर्थ्यं राजसूयं यज्ञादिकर्माणि चरति प्रवर्तते। स भूतपतिः राजा जगति प्रकाशमानः सन् इदं राज्यं इदं भूतराज्यं अनुमन्यतां स्वीकरोति।

यान्तीति = मद्याजिनः मदुपासकाः जनाः मां परमात्मानं एव यान्ति प्राप्नुवन्ति॥

यान्ति मद्याजिनोऽपि माम् ॥२५॥

सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः।
ऋ० १।५।५॥ अथ० २०।६९।३॥

सुतपाव्ने इति = इमे मध्याजकाः शुचयः निर्मलाः निष्पापाः सन्तः सुताः ज्ञानेन अभिषिक्ताः मध्योगसमाधिनिष्णाताः सोमासः शान्ताः ब्रह्मोपासकाः ज्ञानिनः दध्याशिरः = दधाति पुष्णाति इति दधि ध्यानयोगः। शृणाति हिनस्ति स्वाभाविकं दोषमित्याशीः। दध्ना ध्यानयोगेन देहदोषान् शृणाति हिनस्तीति दध्याशीः ते - दध्याशिरः परमात्मध्यानयोगेन नष्टदेहदोषाः सन्तः सुतपाव्ने - सुतं ज्ञाननिष्णातं पाति रक्षति इति सुतपावा ईश्वरः तस्मै सुतपाव्ने परमेश्वराय परमेश्वरमित्यर्थः। वीतये विशेषेण पूर्णतया प्राप्तये यन्ति प्राप्नुवन्ति मोक्षमार्गमनुसरन्ति इत्यर्थः। सुतपाव्ने = सुतं पातीति सुतपावा, वनिपः पित्वात् धातुस्वर एव शिष्यते। समासे द्वितीया पूर्वपद प्रकृति स्वरं बाधित्वा कृदुत्तर पदप्रकृति स्वरत्वम्। शुचयः = 'शुच = दीप्तौ' "इगुपधात् कित्" इत्यनुवृत्तौ "इगुपधात् कित्" इतीनः कित्वात् लघूपधगुणाभावः। वीतये = व्युपसर्गपूर्वकात् 'इण् गतौ' धातोः क्तिन् प्रत्ययः। सोमासः = "षुञ् - अभिषवे" "अर्ति स्तु सु हु सृ धृ क्षीत्यादिना मन् प्रत्ययः।" आज्जसेरसुक्" इत्यसुगागमः। दध्याशिरः = दधि = "डुधाञ् धारणपोषणयोः" "आदृगमहन जनः किकिनौ लिट् च" इति किन्। लिड्वद्भावात् द्विर्भावः। किन्वात् आकारलोपः 'शॄ हिंसायाम्' क्विप्। "ऋत इद्धातोः" इतीत्वं रपरत्वञ्च॥

पत्रमिति = यो मुमुक्षुः जनः मे मह्यं परमात्मने पत्रं पुष्पं फलं तोयं वा अर्थात् अल्पादपि अल्पं वस्तु भक्त्या श्रद्धाभक्त्या प्रेम्णा वा प्रयच्छति समर्पणं करोति, प्रयतात्मनः प्रयतो वशीकृतः आत्मा मनो येन स प्रयतात्मा तस्य प्रयतात्मनः शुद्धवृत्तेः भक्त्या प्रेमभक्त्या सेवया उपहृतं समर्पितं तद्वस्तु अहं परमात्मा अश्नामि स्वीकरोमि॥२६॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥२६॥

"प्रयाजान् मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्तभागम्।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः।" ऋ० १०।५१।८॥

प्रयाजानिति = हे देवाः! हे मुमुक्षवः जनाः! यूयं मे मह्यं परमात्मने प्रयाजान् = प्र = प्रकृष्टया भक्त्या यष्टुं योग्यान् अन्नादीन् पदार्थान् केवलान् भक्त्योपहृतान् अनुयाजान् साधारणान् पदार्थान् दत्त प्रयच्छत। तथा ऊर्जस्वन्तं सारवन्तं हविषः = हूयते इति हविः "हु कर्मणि असुन्। हविषः आहवनीय द्रव्यस्य घृतस्य भागं भक्त्या दत्त प्रयच्छत। तथा ऊर्जस्वन्तं सारभूतं घृतं उदकं अपां जलानां सारभूतं जलोत्पन्नं पत्रपुष्पादिकं तथा ओषधीनां ओषधिभ्यः उत्पन्नं फलभागं पुरुषं परमात्मानं परमात्मने इत्यर्थः = पूरयति अनेन इति पुरुषः परमात्मा, "यस्मात्परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।

वृक्ष इव स्तब्धः दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" । निरु० २।३।
दत्त प्रयच्छत । भवद्भिः भक्त्युपहृतमेतत् पत्रपुष्पादिकं सर्वम् अग्नेः सर्वव्यापकस्य मम दीर्घमायुः चिरकालं स्वीकृतमस्तु । तथा च मन्त्रान्तरम् =

= " यो अस्मा अन्नं तृष्वा ३ दधात्याज्यैर्घृतैर्जुहोति पुष्यति । तस्मै सहस्रमक्षभिर्विचक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वम्" । ऋ० अष्ट० ८ अध्या० ३ व० ४ मं० ५ ॥
तथा च श्रीमद्भागव० स्कं० १० अध्या० ८१ श्लो० ३ = "अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् । भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे । तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥ ९ ॥

यत्करोषीति = हे अर्जुन ! यत् शास्त्रप्रतिपादितं कर्म करोषि विधत्से, यत् शास्त्रविहितमश्नासि भक्षयसि, यत् यथाशास्त्रं हविः अग्नौ जुहोषि प्रक्षिपसि, यद्देयं द्रव्यं दीनेभ्यः यच्छसि ददासि, यत् सन्ध्यावन्दनवेदाध्ययनादिकं व्रतोपवासादिकं वा तपः करोषि, लोकवेदोक्तं कर्म यत् करोषि तदेव मदर्पणं ब्रह्मार्पणबुद्ध्यैव सकलं कर्तव्यं कर्म कुरुष्व ॥ २७ ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

यदश्नासि यत्पिबसि धान्यं कृष्टाः पयः । यदाद्यं ३ यदनाद्यं सर्वं ते अन्नमविषं कृणोमि । अथ० ८।२।१९ ॥

यद्वा = "त्वे अपि क्रतुर्मम" । ऋ० ७।३१।५ ॥ अथ० २०।१८।५ ॥
यदश्नासीति = हे कृष्टाः ! योगेन कर्षणार्हं मनो येषां ते कृष्टाः तत्सम्बोधने हे कृष्टाः ! हे योगिनः पुरुषाः ! यत् शास्त्रविहितं धान्यं अन्नमश्नासि भक्षयसि, यत् यथाशास्त्र पयः प्रभृति पेयं द्रव्यं पिबसि पानं करोषि, अथ च यथाविधि धान्यं व्रीह्यादि धान्यं जुहोषि अग्नौ हवनं करोषि, यत् आद्यं अदनीयं समयानुकूलं सुखेन भक्षणीयं द्रव्यं भक्षयसि । यत् अनाद्यं परस्मै देयं द्रव्यं दीनेभ्यः ददासि । मय्यर्पितं तत्सर्वम् अन्नादि द्रव्यं तेत्वदर्थं अविषं दोषरहितं अमृतं कृणोमि करोमि । १९ ॥

भक्तः प्रार्थयति = हे परमात्मन् ! नः अस्मान् स्वभक्तान् निदे निन्दकपुरुषे मा रन्धीः अधीनं मा कुरु अर्थात् तदधीनाः वयं न स्याम । अपि अराव्णे = अदातरि कृपणे तथा वक्तवे कठोरभाषिणः मा रन्धीः अधीनं मा कुरु । मम भक्तस्य क्रतुः अशनयजनदानतपश्चरणादिकं कर्म त्वे त्वयि परमात्मनि अर्थात् त्वदर्पणमस्ति ।

शुभेति = एवं परमात्मार्पणबुद्ध्या लौकिकं वैदिकं च कर्म कुर्वन् त्वं शुभाशुभफलैः सुखदुःखफलैः कर्मपाशैः मोक्ष्यसे मुक्तिं प्राप्स्यसे । तथा च संन्यासयोगयुक्तात्मा = संन्यासः परमात्मनि कर्मफलार्पणं स एव योगः कर्मबन्धमोक्षोपायः तत्र युक्तः लग्नः आत्मा मनो यस्य तथोक्तः विमुक्तः सन् परमात्मानमुपैष्यसि प्राप्स्यसि ॥ २८ ॥
"शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः । संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

"क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्त्सुरेक्णाः। मर्त आनाश सुवृक्तिम्॥"
ऋ० ८।२५।२५॥

क्रत्वेति = हे परमात्मन्! अद्य एतज्जन्मनि क्रत्वा त्वत्परिचरणात्मना कर्मणा त्वा त्वां परमात्मानं वन्वन् संभजन् "वन संभक्तौ" दाः = सर्वं त्वदर्पणमेव दाता योगी अत एव श्रेष्ठः। कर्मबन्धनविमुक्तत्वात् अतिशयेन प्रशस्यः विमुक्तो भवति। सुरेक्णाः शोभनज्ञानवान् स मर्तः संन्यासयोगयुक्तात्मा विमुक्तः मनुष्यः सुवृक्तिं त्वद्विषयां सुष्टुतिं सम्यक् स्तुतिं आनाश प्राप्नोति स सर्वदा तव स्तोता भवतीत्यर्थः।

सम इति = सर्वभूतेषु सर्वप्राणिषु अहं परमात्मा समः पूर्णः एकरसोऽस्मि। मे मम न द्वेष्यः द्वेष्टुं योग्यः नास्ति। न च मम प्रियः स्निग्धः नास्ति। ये जनाः मां परमात्मानं भक्त्या परया श्रद्धया भजन्ति सेवन्ते, ते जनाः मदुपासकाः मयि आनन्दस्वरूपे ब्रह्मणि वर्तन्ते। अहं परमात्माऽपि च तेषु ब्रह्मवित्सु सर्वदा वर्ते॥२९॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्॥२९॥

"कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति। सध्रीचीनेन मनसाविवेनन्तमित्सखायं कृणुते समत्सु॥ ऋ० ४।२४।६॥

कृणोतीति = यः मदुपासकः ब्रह्मनिष्ठः इत्था एवंप्रकारेण परया भक्त्या सोमं शान्त्यादिगुणयुतं स्वभक्तं उशते कामयमानाय इन्द्राय परमात्मने सध्रीचीनेन सम्यक्तया मनसा सुनोति अभिधानं गृह्णाति भजते वा। परमात्मापि अस्मै एवंविधोपासकाय स्वसेवकाय वरिवः ज्ञानधनं कृणोति करोति। विवेनः = विगतेच्छः रागद्वेषरहितः, विवेनन् केनचिदपि सह रागद्वेषादिकम् अकुर्वन् परमात्मा तम् इत् तमेव सेवकं सखायं समानवासं मित्रं समत्सु सर्वविधप्रसन्नतायां कृणुते करोति अर्थात् मुक्तिं प्रयच्छति।

अपि चेदिति = यः पूर्वं ब्राह्मणादिषु वर्णेषु कश्चनापि सुदुराचारः अत्यन्तदुष्टाचारोऽपि सत्संगतिं लब्ध्वा अनन्यभाक् आत्मानमन्तरेण देहेन्द्रियादिकं न भजतीति अनन्यभाक् आत्मसेवी सन् मां परमात्मानं भजते सेवते, सः अनन्यभक्तः साधुः सत्पुरुष एव मन्तव्यः पण्डितैः ज्ञातव्यः। हि = यस्मात् कारणात् स पुरुषः सम्यक् व्यवसितः सम्यग् ज्ञानसम्पन्नः क्षिप्रं शीघ्रं धर्मात्मा पुण्यात्मा भवति शश्वत् शाश्वतीं शान्तिं निर्वाणपदवीं निगच्छति प्राप्नोति। हे कौन्तेय! हे अर्जुन! मे मम परमात्मनः भक्तः सेवकः न प्रणश्यति मुक्तिमार्गतः न प्रभ्रश्यति इति प्रतिजानीहि त्वं निश्चयेन जानीहि॥३०-३१॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥३०॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥३१॥

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि। तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वया कश्चन हि प्रकेतः। यजु० ३४।१८॥ ऋ० ३।३०।१॥

इच्छन्तीति = ये सुदुराचाराः ब्राह्मणादयः अपि प्रयांसि प्राणादि हवींषि भगवदर्थं दधति धारयन्ति अर्थात् भगवद्भजनं कुर्वन्ति। अथ च ते त्वदीयाः भृत्याः त्वत् त्वदर्थं एव जनानां सर्वेषां मनुष्याणां अभिशस्तिं तत्कृतां हिंसां दुर्वचनं वा तितिक्षन्ते सहन्ते अर्थात् संयत मनो वाक्कायाः क्षान्तिपराः साधवः भवन्ति। अत एव ते एव सुदुराचाराः जनाः तितिक्षादि गुणान् उपलभ्य सोम्यासः शान्तिमापन्नाः सखायः सर्वेषां मित्रभूताः त्वा त्वां परमात्मानं इच्छन्ति कामयन्ते अर्थात् ते एव त्वद्भक्ताः सोमं मुक्तिपदवीं सुन्वन्ति साधुवन्ति हे इन्द्र! हे परमात्मन्! त्वत्सकाशादेव आ समन्तात् कः+चनो निपातः अप्यर्थे। कः+चन = कोऽपि प्रकेतः भक्तानां मध्ये कोऽपि ज्ञानवान् भवति। हिः निश्चयार्थोऽस्ति।

मामिति = हे पार्थ! हे अर्जुन! स्त्रियः, वैश्याः तथा शूद्राः येऽप्यन्ये पापयोनयः नीचजन्मानः नीचकर्माणः स्युः भवन्ति, तेऽपि मां परमात्मानं व्यपाश्रित्य सम्यक्तया समुपास्य परां गतिं मुक्तिं यान्ति गच्छन्ति॥३२॥

मां हि पार्थ! व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रा स्तेऽपि यान्ति परां गतिम्॥३२॥

"ये धीवानो रथकाराः कर्मारा ये मनीषिणः। उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्।" अथ० ३।५।६

नूतनो मंत्रः = "स्त्रियः सतीस्तां उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः। कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत्॥ ऋ० १।१६४।१६॥

यद्वा = उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी। अदेवत्रादराधसः॥ ऋ० ५।६१।६॥

ये इति = परमात्मा उपदिशति = " हे पर्ण! हे ज्ञानवन्! हे यते! ये रथकाराः शिल्पिनः शूद्राः धीवानः परमात्मभक्तौ बुद्धिमन्तः सन्ति। ये कर्माराः कर्मकराः लौहकार सुवर्णकारादयः कर्मकरत्वेन शूद्रभूता अपि मनीषिणः मदुपासनायां बुद्धिमन्तः सन्तः अध्यात्मविद्या ज्ञातारः सन्ति तान् उपस्तीन् मदुपासनार्थे उपस्थितान् सर्वान् सकलान् तान् जनान् स्त्री वैश्य शूद्रादीन् सुदुराचारान् अपि अभितः सर्वतः त्वं ब्रह्मविद् यतिः मह्यं परमात्मने स्वसंगति प्रभावेण कृणु कुरु। कर्माराः = कर्म ऋच्छतीति ऋधातोः अण् प्रत्ययः॥६॥

स्त्रिय इति = उ अपि मे मम ब्रह्मवित्त्वेन परमात्मनः सतीः सम्बन्धिनीः आत्मविद्याप्रवीणाः स्त्रियः अपि तान् अत्यन्तोत्कृष्टान् पुंसः पुरुषान् आहुः लौकिकं स्त्रीत्वं ब्रह्मविद्याविषये आतिदेशिकेन पुंस्त्वेन श्रौतेन बाध्यतेऽतः सा स्मृतिः ब्रह्मविद्येतर विषया एव = "गोधादि योषितां स्त्रीत्वेऽप्यस्ति ब्रह्मणि भागिता। रुक्मिणी देवहूतीला देवक्याे ब्रह्मवित्तमाः"। पश्यत् = स्त्री वा पुरुषो वा यदि ब्रह्म पश्यति तदा अक्षण्वान्

चक्षुष्मानेकोऽसौ। अविचेतत् = ब्रह्मविद्यां न वेत्ति चेत् तदा अन्ध एवासौ। कविः = तत्त्वज्ञः ज्ञानी यः पुत्रः = वयसाऽल्पोऽपि ईम् = इदम् आत्मतत्त्वम् आचिकेत आज्ञापयति इति स गुरुः स्यादेव। ज्ञापको हि गुरुः। ज्ञानेनैव ज्ञापयन्ति। यः पुरुषः पुत्रः सन्नपि ता = तद् ब्रह्मज्ञानं विजानात् विजानाति स पितुः अपिपिता सत् = भवति॥ "स्त्रीशूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा। कर्मश्रेयसि मूढानां श्रेय एवं भवेदिति॥ इति भागवते। "यस्तु वर्णावकृष्टः स्यान्नारी वा धर्मचारिणी। तावप्येतेन योगेन गच्छेतां परमां गतिम्" इति शिवधर्मोत्तरे। "स्त्रियो वैश्यास्तथा शूद्रास्तेऽनुकम्प्या मवाहशाम्। अनन्यशरणास्ते हि श्रद्धा येष्वपि दृश्यते॥ भाग० ११।५।१४॥ "श्वपच निषाद चाण्डाल प्रश्नः कर्कटिकां प्रति। परं ब्रह्म ततोऽस्त्येव स्त्रीणां ब्रह्माधिकारिता" इति वसिष्ठरामायणे॥

यद्वा — उतेति = उत अपि च त्वा = एका नीचा स्त्री अदेवत्रात् देवपूजनं परमात्मपूजनं अकुर्वतः अराधसः = दानार्ह धनरहितात् लुब्धकात् पुंसः पुरुषात् शशीयसी प्रशस्या, वस्यसी = वसीयसी जगति वासार्हा भवति॥६॥

किं पुनरिति = पुण्याः पवित्रात्मानः ब्राह्मणाः तथा पुण्यकर्माणः राजर्षयः राजश्रेष्ठाः भक्ताः मद्भक्तिसम्पन्नाः पुनः परां गतिं मुक्तिं यान्ति इत्यत्र किं किमु वक्तव्यम्। अनित्यं विनश्वरं असुखं दुःखमयम् इमं लोकं = लोक्यते इति लोकः, यद्वा आत्मस्वरूपं लोकयतीति मानवो देहः तमिमं मुक्तिसाधनं मानवं देहं प्राप्य लब्ध्वा मां परमात्मानं भजस्व भजनं कुरु॥ ३३॥

किं पुनर्ब्राह्मणाः पुण्याः भक्ताः राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्॥ ३३॥

"यं विप्रा उक्थवाहसोऽभिप्रमन्दुरायवः। घृतं न पिप्य आसन्यृतस्य यत्॥ ऋ० ८।१२।१३॥
यद्वा = "या दम्पती समनसा सुनुत आ च धावतः। देवासो नित्ययाशिरा॥ ऋ० ८।३१।५॥
यमिति = विप्राः मेधाविनः ब्राह्मणाः उक्थवाहसः उक्थानां शास्त्राणां वोढारः राजर्षयः आयवः मुक्तिप्राप्तये आयतविचाराः मनुष्याः भक्ताः यं परमात्मानं अभिप्रमन्दुः अभि= प्रकर्षेण मन्दुः प्रसीदन्ति इत्यत्र किमु वक्तव्यम्। हे जीवात्मन्! अतः त्वम् ऋतस्य सत्यस्वरूपस्य परब्रह्मणः आसनि आस्ये मुक्तिपदे यत् ज्ञानं तत् घृतं न = शुद्धं घृतमिव पिप्ये सेचनेन वर्धयस्व। अभिप्रमन्दुः = अभिप्रौ उपसर्गौ, मदेर्व्यत्ययेन परस्परं द्विवचनपरेण "छन्दसि वा" इति वचनात् द्विर्वचनाभावः। आसनि= आस्ये, "पदन्नो—" इत्यादिना आस्यशब्दस्य आसन्नादेशः। पिप्ये = प्यायेत "छन्दसो लिट्" "लिड्यङोश्च" इति पीभावः॥

या इति = हे देवासः! हे विद्वांसः! या = यौ दम्पती जायापती समनसा समाहितमनसा समनस्कौ सुनुतः यज्ञकर्म कुरुतः च यौ दम्पती आधावतः भगवद्भक्तिं प्रति आत्मानं शोधयतः। "धावु गतिशुद्धयोः", यौ च नित्यया आशिरया भगवदाश्रयेण आश्रयेत इति शेषः। बृहद० ४।४।१४ = "इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवे-

IX



दीर्महती विनष्टिः। ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति"॥

मन्मना इति = मन्मनाः मयि आनन्दात्मके परमात्मनि मनो यस्य स मन्मनाः भव भूयाः। मद्याजी मामेव परमात्मानं यष्टुं शीलमस्येति मद्याजी भव। मामेव कर्मभिः यजस्व। मद्भक्तः सर्वत्र मद्बुद्ध्या मां भजतीति मद्भक्तः भव। तथा मां परमात्मानं नमस्कुरु प्रणामं कुरु वन्दस्व। मत्परायणः अहमेव परम् अयनं प्राप्तिस्थानं यस्य सः मत्परायणः सन् युक्त्वा योगसमाधिं कृत्वा आत्मानं सर्वत्र आत्मस्वरूपत्वेन व्याप्तं मां परमात्मानं एव एष्यसि प्राप्स्यसि॥

इतिश्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां नवमोऽध्यायः समाप्तः॥९॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे नवमोऽध्यायः समाप्तः॥९॥

"सं वो मनांसि सं व्रता समाकूतीर्नमामसि। अमी ये विव्रता स्थन तान् वः संनमयामसि"। अथ० ३।८।५॥

सं व इति = हे मुमुक्षवः! अहं परमात्मा वो युष्माकं भक्तानां मनांसि चित्तानि संनमामसि स्वानुकूलं करोमि अर्थात् युष्माकं मनोवृत्तयः मयि समागच्छन्तु। वो युष्माकं मद्भक्तानां व्रताः नित्यनैमित्तिकानि कर्माणि संनमामसि स्वानुकूलं करोमि, अर्थात् मद्यजनशीला युष्माकं वृत्तिरस्तु। वो युष्माकं आकूतीः संकल्पान् आध्यात्मिकविचारान् संनमामसि स्वानुकूलं करोमि अर्थात् युष्माकं नमस्कृतयः मदनुकूलाः सन्तु। ये च अमी विव्रता विरुद्धकर्मकर्तारः मद्विमुखाः स्थन सन्ति। तान् मद्विमुखान् जनान् वो युष्माकं संमुखे एव संनमयामसि स्वमर्यादास्थापनाय स्वभक्तानां रक्षणाय च तान् सत्कर्मणि नम्रीकरोमि यथा च तेऽपि मद्भक्ताः भवेयुरिति। मुं० उप० ३।२।८ = यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥

इति श्रीसारस्वतान्वयलैयावासव्यन्यायभूषणजगन्नाथशास्त्रिज्योतिर्विकृतायां वेदगीतार्थबोधिन्यां नवमोऽध्यायः समाप्तः॥९॥

अथ भगवद्गीता दशमाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युधर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीता पृथक्त्वं नो द्वयोः ब्रह्म प्रकीर्तनात्॥२॥

भूय इति = हे महाबाहो! हे अर्जुन! भूयः पुनरपि मे मम परमेश्वरस्य परमं अत्युत्कृष्टं पारमार्थिकं वचः वचनं शृणु आकर्णय। अहं प्रीयमाणाय श्रवणाय प्रीतिं कुर्वते ते तुभ्यं भक्ताय हितकाम्यया नित्यसुखसम्पादनेच्छया यद्वचः वक्ष्यामि तत् शृणु॥१॥

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया॥१॥

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः। इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम्॥ ऋ० १।१०।९॥

आश्रुदिति = आसमन्तात् श्रुतौ श्रोतारौ कर्णौ यस्य तथाभूतः आश्रुत्कर्णः तत्संबुद्धौ हे आश्रुत्कर्ण! हे उपदेशश्रवणकर्तः! हे इन्द्र! हे जीवात्मन्! मम परमेश्वरस्य हवं वचनं "ह्वेञ् स्पर्धायां शब्दे च" नु = क्षिप्रं श्रुधी = शृणु। मे मम परमात्मनः गिरः मदुक्ताः वाणीः दधिष्व चित् धारय। "चित् पादपूरणे"। मम मदीयं पारमार्थिकं इमं मया उच्यमानं स्तोमं वाक्यसमूहं युजश्चित् स्वकीयसख्युः मनसः अन्तरं मध्ये कृष्व कुरु। यथा मदुक्तं वचनं प्रियं मन्यसे तथा मत्स्तुतिषु अपि प्रीतिं कुरु इति भावः। आश्रुत्कर्णः = आसमनात् शृणुते इत्याश्रुत् - "क्विप्" "ह्रस्वस्य पिति कृति तुक्"। श्रुधी = श्रु श्रवणे, लोटो हिः। "श्रुवः शृ च" इति विहितश्नोः "बहुलं छन्दसि" इति लुक्। तत्सन्नियोगशिष्टत्वाच्छृभावोऽपि निवर्तते। "श्रुशृणुपृ—" पा० ६।४।१०२ = इति हेर्धिः। "संहितायामन्येषामपि दृश्यते" इति दीर्घः। हवम् = ह्वेञ् स्पर्धायां शब्दे च"। "बहुलं छन्दसि" इत्यनैमित्तिके संप्रसारणे कृते पश्चादुकारान्तत्वेन "ऋदोरप्" इत्यप् प्रत्ययः। नू = "संहितायामृचि तुनुघमक्षु" पा० ६।३।१३३ इति दीर्घः॥ दधिष्व = दधातेर्लोटि थासः से। "सवाभ्यां वामौ" "शपः श्लुः" अभ्यासस्य प्रत्ययादिः "छन्दस्युभयथा" इत्यार्धधातुकस्यापि स्वीकारात् इडागमः आकारलोपश्च। कृष्व = 'डुकृञ् करणे' लोट् "थासः से" "सवाभ्यां वामौ" "शपो बहुलम्" छन्दसि इति लुक्" तुलना = गीतायां भगवान् श्रद्धायुक्तचेतसमर्जुनमुपदेशग्रहणाय सज्जते, मोहपरित्यागाय भूय उपदिशति। वेदेऽपि भगवान् मनुष्येभ्यः इदमुपदिदेश। वेदोपदेशः सावधानतया श्रोतव्यः, मनः मयि धारयितव्यमित्युपदिदेश॥

न मे इति = सुरगणाः देवगणाः महर्षयः भृगुव्यासादयः मे मम परमेश्वरस्य प्रभवं प्रभावं सामर्थ्यं न विदुः न जानन्ति। हि यस्मात् कारणात् अहं देवानां महर्षीणां सर्वशः आदिः कारणमस्मि॥२॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः॥२॥

"न यस्य द्यावापृथिवी अनु व्यचो"… "न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः। न परिक्वा त्वक्षसा क्षो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती॥१५॥ ऋ० १।१००।१५॥

न यस्येति = यस्य देवा = प्रकाशस्वरूपस्य "विभक्तिव्यत्ययः" परमात्मनः शवसः बलस्य प्रभवस्य अन्तम् अवसानं देवता इन्द्रादयो देवाः, आपः = आप्ताः भृगुव्यासादयो महर्षयः मर्ताः सामान्याः मनुष्याः अन्तम् अवसानम् न आपुः न प्राप्नुवन्ति। मरुत्वान् = मरुतः जीवात्मानः सन्ति अस्येति मरुत्वान् जीवाधिपतिः परमात्मा त्वक्षसा पापानां तनूकर्त्रा आत्मीयेन बलेन क्ष्मः पृथिव्याः दिवश्च आकाशस्य च प्ररिक्वा = प्रकर्षेण रेचकः वियोगकारकः इन्द्रः परमात्मा नोऽस्माकं ऊती ऊतये रक्षणाय भवतु। देवता = देव एव देवता "देवात्तल्" इति स्वार्थे तल् प्रत्ययः। सुपां सुलुगिति षष्ठ्याः लुक्॥ मर्ता = मृङ् प्राणत्यागे। "असिहसि —" इत्यादिना तन् प्रत्ययः। प्ररिक्वा = "रिचिर् वियोगे - सम्पर्के च"। 'अन्येभ्योऽपि दृश्यते' इति क्वनिप्। अन्यविकार श्छन्दसः। त्वक्षसा = तक्षू - त्वक्षू तनूकरणे। असुन्। क्ष्मः = क्ष्मा इति पृथिवीनाम। "आतो धातोः" इत्यत्र 'आत्' इति योगविभागादिष्टसिद्धिः' इत्यभिधानात् ङसि भसंज्ञायामाकारलोपः। यद्वा = "क्ष्मायी विधूनने" अस्मात् "क्विप् च" इति क्विप्। "वेरपृक्तलोपात् पूर्वं वलिलोपः"॥१५॥ उपनिषदि - अप्युक्तम् = "न तत्र सूर्यो भाति न चन्द्रतारकम्"। "न तत्र चक्षुर्गच्छति न वाग् गच्छति"। "अचिन्त्यमग्रास —" "ओं बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्चैतत्सूक्ष्मतरं विभाति", "न चक्षुषा गृह्यते नापि वाचा"। तथा - केनोप० २।१ = "यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्। यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्"।

यो मामिति = यः मुमुक्षुः मां परमात्मानं अजं जन्मरहितं अनादिं = न विद्यते आदिः उपादानकारणं निमित्तकारणं च यस्य स अनादिः नित्यः तं अनादिं नित्यं लोकमहेश्वरं यस्य शक्त्या चेष्टते स ईश्वरः। महांश्चासौ ईश्वरः महेश्वरः, लोकस्य महेश्वरः लोकमहेश्वरः तं लोकमहेश्वरम्। सर्वलोकप्रवर्तकं मां परमात्मानं वेत्ति जानाति। मर्त्येषु सर्वजनेषु असंमूढः पण्डितः ज्ञानी वा, स एव सर्वपापैः सर्वैः पापैः पापकार्यैः दुःखदुर्योनिदुर्गतिभिः प्रमुच्यते प्रकर्षेण विमुक्तो भवति॥३॥

यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥३॥

"स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत्। ऋ० ४।५६।३॥ तै० ब्रा० २।८।४।७॥

स इति = यः परमात्मा इमे परिदृश्यमाने द्यावापृथिवी जजान उत्पादितवान्, न च तेभ्यः स्वयं जातः अतः अजः इति उच्यते। यश्च धीरः = धीमान् - यद्वा धियं बुद्धिं राति ददातीति धीरः परमात्मा प्रजापतिः उर्वी उर्व्यौ विस्तीर्णे गभीरे अविचले, सुमेके शोभनरूपे, अवंशे अविद्यमानः वंशः उत्पादनशक्तिः ययोः ते उत्पत्तिरहिते रजसी लोकौ - लोकाः रजांस्युच्यन्ते - शच्या स्वशक्त्या कुशलकर्मणा समैरत् सम्यक् प्रेरितवान् अर्थात् यश्च लोकमहेश्वरः यश्च अनादिः यश्च पृथिव्याद्युत्पादकः स एव परमेश्वरः इति यः जानाति स

इत सर्व पण्डितः ज्ञानी वा स्वपाः शोभनकर्मा यद्वा सम्यक्तया पापरहितः भुवनेषु भुवनवासिषु सर्वेषु मर्त्येषु आस आस्ते।

बुद्धिरिति = बुद्धिः निश्चयात्मकः विचारः। ज्ञानं सदसद्विवेकः। असंमोहः मोह-राहित्यम् - क्षमा उपद्रवसहिष्णुता, सत्यं यथार्थवचनं, दमः बाह्येन्द्रियनिग्रहः, शमः विषयोपरतिः, सुखं दुःखं भवः उद्भवः, भावः सत्ता, भयं त्रासः अभयं त्रासराहित्यम्। अहिंसा परस्य अवधः, समता सादृश्यं, तुष्टिः सन्तोषः, तपः चित्तैकाग्र्यम्। दानं परस्मै दानबुद्ध्या द्रव्यादिदानम्। यशः कीर्तिः अयशः अपकीर्तिः पृथग्विधाः नानाप्रकाराः उक्ताः अयुक्ताः कामक्रोधलोभादयः भावाः विकाराः भूतानां जीवानां मत्तः मत् परमेश्वरादेव भवन्ति सर्वपदार्थमूलमहमेवास्मि। ४-५।

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवो भावो
भयं चाभयमेव च ॥४॥ अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावाः भूतानां मत्त एव पृथग्विधाः॥५॥

"ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च। भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले। समृद्धिरोजः आकूतिः क्षत्रं राष्ट्रं षडुर्व्यः। संवत्सरोऽध्युच्छिष्ट इडा प्रैषा ग्रहा हविः॥" अथ० ११।७।१७-१८॥

ऋतमिति = ऋतं मनसा यथार्थसंकल्पनं अर्थात् बुद्धिः यद्वा कर्मफलम्। "ऋतं पिबन्तौ सुकृतस्य लोके" - इति श्रुतेः। सत्यं वाचा यथार्थभाषणम्। तपः शरीरसन्तापकरो व्रतोपवासादिनियमविशेषः। राष्ट्रं राज्यसुखम्। श्रमः परिश्रमः विश्रामो वा शान्तिः शब्दादिविषयभोगस्य उपरतिः। धर्मः पुण्यम्। कर्म वर्णाश्रमानुसारेण विहितं यागदानसमतादिकम्। चकारात् अहिंसा। भूतम् उद्भवः। भविष्यत् उत्पत्स्यमानं सर्वं पदार्थमात्रम्। वीर्यम् अभयं बलम्। सर्वकर्मनिर्वर्तनक्षमं शरीरगतं सामर्थ्यम्। लक्ष्मीः सर्वविधैश्वर्यं तज्जन्या कीर्तिश्च। समृद्धिः इष्टफलस्य अभिवृद्धिः। ओजः तेजः। आकूतिः इष्टफलविषयः संकल्पः। क्षत्रं क्षात्रं तेजः। राष्ट्रं शत्रुजन्यं राज्यदुःखम्। षट् संख्याकाः उर्व्यः = द्यौः पृथिवी, अहः, रात्रिः, आपश्च, ओषधयः। संवत्सरः द्वादशमासात्मकः कालः। इडा वाक्। प्रैषाः = यज्ञादिकर्मसु ऋत्विजां प्रेरकाः मंत्राः। ग्रहाः सूर्यादयो ग्रहाः। हविः चरुपुरोडाशादिकम् अन्नम्। एते अन्ये च नानाविधाः भूतानां भावाः, बले बलवति उच्छिष्टे दृश्यप्रपञ्चनिषेधाऽवधित्वेन उच्छिष्यमाणे स्वप्रकाशे परे ब्रह्मणि अधिवर्तन्ते भवन्ति इत्यर्थः। अग्निपुराणे यथा = "सर्वभूतेषु गोविन्दो बहुरूपो व्यवस्थितः। इति मत्वा महाप्राज्ञः प्रतिकूलं न कारयेत्"। पद्मपुराणे मोहलक्षणं यथा = "मम माता ममपिता ममेयं गृहिणी गृहम्। एतदन्यं ममत्वं यत् स मोह इति कीर्तितः"॥ तथा पद्मपुराणे षोडशाध्याये यथा = "यथार्थकथनं यच्च सर्वलोकसुखप्रदम्। तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययम्"॥ मत्स्यपुराणे द्वादशाध्याये यथा = "आक्रुष्टोऽभिहितो यस्तु नाक्रोशेो न हनेदपि। अदुष्टैः वाङ्मनःकायैः तितिक्षुश्च क्षमा स्मृता"॥ पद्मपुराणे दमलक्षणम् = "कुत्सितात् कर्मणो विप्र। यच्च तन्निवारणम्। स कीर्तितो दमः प्राज्ञैः समस्तैस्तत्त्वदर्शिभिः"। तुष्टिः = अधिगतार्था-

दन्यत्र तुच्छत्वबुद्धिः। सन्तोषादनुत्तमः सुखलाभः। मनसश्चेन्द्रियाणामैकाग्र्यं परमं तपः"॥ यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते। चेतसा धर्मयुक्तेन दानं तद्विमलं शिवम्"॥

महर्षय इति = पूर्वे सर्वेभ्यः पूर्वतनाः सप्त भृग्वादिवसिष्ठान्ताः महर्षयः तथा पूर्वे प्राचीनाः चत्वारः सनकसनन्दनसनातनसनत्कुमाराः तथा मनवः स्वयम्भूप्रभृतयः मनवः मानसाः मनःसंकल्पमात्रात् जाताः उत्पन्नाः सन्तः मद्भावाः मम परमेश्वरस्य स्वरूपत्वेन मान्यन्ते इति मद्भावाः मम विभूतय इत्यर्थः। लोके संसारे येषां भृग्वादीनां महर्षीणां तथा स्वयम्भ्वादिमनूनां इमाः सर्वत्र परिदृश्यमानाः प्रजाः एताः सर्वाः सन्ति ॥६॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥६॥

"एकैकयैषा सृष्ट्या संबभूव यत्र गा असृजन्त भूतकृतो विश्वरूपाः। यत्र विजायते यमिन्यपर्तुः सा पशून् क्षिणाति रिफती रुशती। अथ० ३।२८।१॥

एकैकयेति = एषा विधातृकृता सृष्टिः एकैकया एकैकव्यक्त्या मानसी सृष्टिः या संबभूव एकः नरः एका नारी प्रादुरभूत्। एकैकव्यक्त्युत्पत्तिरेव न्याय्या। यमलजननं तु न तथा इत्यर्थः। "यत्र मानसिकसृष्टौ भूतकृतः भूतैः कृताः पार्थिवादिभूतविकाराः विश्वरूपाः नानावर्णाः गाः = गमनशीलाः गवोपलक्षिताः चराः जीवाः मानुषप्रभृतयः असृजन्त उत्पद्यन्त। सा सृष्टिः अपर्तुः ऋतुवीर्यहीना मानसी अस्ति न तु मैथुनी। यत्र यस्यां औत्पत्तिकसृष्टौ रिफती कामचेष्टया मिथः हिंसन्ती रुशती क्रुद्धा सती पशून् "पश्यति धर्ममिति पशुः" धर्मात्मा ज्ञानी, तद्गुणं ज्ञानं तद्वतः जीवान् क्षिणाति क्षयं प्रापयति। कामवृत्त्या मैथुनी सृष्टिः अन्धीभूता भवतीति भावः।

एतामिति = यः बुद्धिमान् मुमुक्षुः मम परमात्मनः एतां पूर्वोक्तां विभूतिं विविधाकारभवनं सर्वात्मस्वरूपं योगञ्च सृष्टिस्थितिसंहारादिसामर्थ्यं च तत्त्वतः याथातथ्येन वेत्ति जानाति। सः पण्डित एव अविकम्पेन अविचलेन योगेन मदुपासनायोगेन युज्यते सम्बध्यते। अत्र अस्मिन् विषये संशयः संदेहो नास्ति॥

एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः॥७॥

एवा हि ते विभूतयः ऊतय इन्द्र मावते। सद्यश्चित् सन्ति दाशुषे"ऋ०१।८।९॥ अथ०२०।६०।६॥

एवेति = हे इन्द्र! हे परमैश्वर्ययुक्त परमात्मन्! ते तव परमात्मनः विभूतयः विविधाकारभवनानि ऐश्वर्यविशेषा वा एवा हि एवंविधाः खलु मावते मत्सदृशाय दाशुषे यजमानाय मुमुक्षवे भक्ताय सद्यश्चित् सर्वदा काले ऊतयः संसारार्णवात् रक्षारूपाः सन्ति भवन्ति। मावते = वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इत्यस्मच्छब्दात् वतुप्। "मपर्यन्तस्य प्रत्ययोत्तरपदयोश्च" इति मादेशः। अद्शब्देन सह "अतो गुणे" इति पररूपत्वम्। "दृग्दृश्वतुष्वित्यनुवृत्तौ आ सर्वनाम्नः" इति दकारस्य आकारः। सवर्णदीर्घत्वम्। सद्यः = समाने द्यवि इत्यर्थे सद्यः "परुत्परार्यैषमः" इत्यादिना निपातितम्। दाशुषे = दाशृ दाने, "दाश्वान्साह्वान्मीढ्वांश्च" इति निपातनात् क्वसौ द्विर्भावो द्विर्वचनाभावश्च। चतुर्थ्येकवचने "यचि भम्" इति





भसंज्ञायां "वसोः संप्रसारणम्" इति संप्रसारणम्। वकारस्याकारः परपूर्वत्वम्। "शासिवसिघसीनाञ्च" इति षत्वम्।

अहमिति = अहं परमात्मा सर्वस्य जगन्मात्रस्य प्रभवः उत्पत्तिस्थानमस्मि। मत्तः परमात्मनः सकाशात् सर्वं संसारसर्गादिकं प्रवर्तते प्रवृत्तिनिवृत्ती मत्त एव सिध्यतः। सर्वकारणं परमेश्वर इति मत्वा बुद्ध्वा भावसमन्विताः मद्भावनायुक्ताः बुधाः मुमुक्षवः मां परमात्मानं भजन्ते उपासते इति। ८॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ ८॥

तमुष्टवाम य इमा जजान विश्वा जातान्यवराण्यस्मात्। इन्द्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम॥ ऋ० ८। ९६। ६॥

तमिति = यः परमात्मा इमा इमानि भूतानि जजान जनयामास। अस्मात् परमात्मनः विश्वा विश्वानि सर्वाणि वस्तूनि वसुजातानि जगन्ति वा अवराणि अवरकालीनानि पश्चाद्भूतानि जातानि प्रादुर्भूतानि सन्ति। तमु तमेव परमात्मानं वयं मुमुक्षवः स्तवाम स्तुतिं करवाम। वयम् इन्द्रेण परमैश्वर्यवता परमात्मना गीर्भिः स्तुतिभिः मित्रं "लुप्तभावे प्रत्ययेन निर्देशः। मित्रं = मैत्रीं दिधिषेम = धारयेम। दिधिष धारणे इति धातुं केचिद्वदन्ति। यद्वा मित्रं छान्दसमेकवचनम्। वयम् इन्द्रेण परमात्मना सह परमभक्त्या मित्राणि सुहृदो भवामेति। गीर्भिः परमात्मानं दिधिषेम शब्दयेम। धिष् शब्दे जौहोत्यादिकः। अत्र सत्येन द्विर्विकरणता श्लुश्च शप् च। अतः नमोभिः क्रियमाणैः नमस्कारैः वृषभं कामानां वर्षितारं सर्वोत्तमं पुरुषोत्तमं उपविशेम स्वामिमुख्येन कुर्याम।

मन्त्रान्तरं यथा = "अहं जजान पृथिवीमुत द्यामहमृतूँरजनयं सप्त सिन्धून्। अहं सत्यमनृतं यद्वदामि यो अग्नीषोमावजुषे सखाया॥ अथ० ६। ६१। ३"

अहमिति = अहं परमात्मा पृथिवीं भूमिं उत = अपि च द्याम् आकाशं अर्थात् समग्रं विश्वं जजान उत्पादितवानस्मि। अहम् ऋतून् ऋतुसंज्ञकान् कालान् सप्त सिन्धून् सप्त समुद्रान् अजनयम् उत्पादितवानस्मि। अहं यत् सत्यं सत्यात्मिकां वाचम् अनृतम् असत्यात्मिकां वाचं वेदे प्रतिपाद्य वदामि उपदिशामि, अग्नीषोमौ जीवात्मपरमात्मानौ सखायौ भक्त्या ज्ञानेन वा समानख्यानौ अजुषे परस्परं संयोजयामि। यथैतरेयोप० खं० १ श्रु० १-२ = "स ईक्षत लोकान्नु सृजा स इमाँल्लोकानसृजत"।

मच्चित्ता इति = मयि परमात्मनि चित्तं मनो येषां ते मच्चित्ताः, मद्गतप्राणाः = मयि परमात्मनि गताः प्राणाः येषां ते मद्गतप्राणाः बुधाः मुमुक्षवः परस्परं मिथः बोधयन्तः ब्रह्मसम्बन्धिनीं वार्तां बोधयन्तः तथा परस्परं मां परमात्मानं नित्यं सर्वदा कथयन्तः वदन्तः सन्तः तुष्यन्ति आनन्दन्ति रमन्ति च कालं नयन्ति च॥ ९॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥ ९॥

१९९

"ते हि सत्या ऋतस्पृश ऋतावानो जने जने। सुनीथासः सुदानवोऽंहोश्चिदुरुचक्रयः॥" ऋ० ५।६७।४॥

ते इति = ते मुमुक्षवः जनाः "हीति निश्चये" सत्याः सत्ये ब्रह्मणि स्थिताः सत्यफला वा, ऋतस्पृशः ऋतं ब्रह्म वागादिभिः स्पृशन्तीति ऋतस्पृशः मद्गतप्राणाः ऋतावानः सर्वं ब्रह्ममयं पश्यन्तः, जने जने सर्वेषु जनेषु सुदानवः परमात्मसम्बन्धिन्याः वार्ता याः दानशीलाः सन्तः, यद्वा जने जने ब्रह्मज्ञान संबन्धि दानं येषां ते सुदानवः, अत एव सुनीथासः प्रशस्याः सन्तः "सुनीथस्य प्रशस्ये पाठः" (निघं० ३।८) अंहोश्चित् = चित् अप्यर्थे, पुरा पापिनोऽपि मद्ध्यानमात्रादेव उरुचक्रयः = प्रशस्यकर्मकर्तारः भवन्तः स्वस्वकालं आनन्देन नयन्ति॥

तेषामिति = सततयुक्तानां सततं नित्यं युक्तानां परमात्मभक्तौ लग्नानां प्रीतिपूर्वकं स्नेहपूर्वकं भजतां ध्यायतां तेषां मुमुक्षूणां अहं परमात्मा बुद्धियोगं स्वरूपज्ञानं सैव योगः बुद्धियोगः तं ददामि प्रयच्छामि। येन मत्प्रदत्तेन बुद्धियोगेन ते बुधाः भक्ताः मां परमात्मानं उपयान्ति प्राप्नुवन्ति॥१०॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥१०॥

"तेषां सर्वेषामीशाना उत्तिष्ठत संनह्यध्वं मित्रा देवजना यूयम्। इमं संग्रामं संजित्य यथालोकं वितिष्ठध्वम्॥" अथ० ११।९।२६॥

तेषामिति = हे मित्राः! हे समदृष्ट्या सर्वेषां सुहृदः! हे देवजनाः! हे भगवद्भक्ताः हे बुधाः! यूयं मुमुक्षवः तेषां सर्वेषां सकलानां कामक्रोधादि शत्रूणां ईशानाः स्वामिनः शिक्षकाः सन्तः उत्तिष्ठत भगवद् भजनाय उत्थिताः भवत। संनह्यध्वम् = तेषां शिक्षणाय उत्थाय संनद्धा भवत। तथा यूयम् इमं संमुखस्थं संग्रामं संसारयुद्धं संजित्य सम्यक्तया जित्वा कामक्रोधादिशत्रून् निरस्य भगवद्भक्तिं च कृत्वा यथालोकं मद्भक्तिप्रभावेण यथास्थानं मुक्तिधाम वितिष्ठध्वम् = स्थितिं कुरुत। वितिष्ठध्वम् = "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्॥

तेषामिति = आत्मभावस्थः आत्मा अन्तःकरणं तस्य भावः वृत्तिः तत्र प्रत्यग्रूपेण तिष्ठतीति आत्मभावस्थः प्रत्यग्वृत्तौ आविर्भूतः सन् अहं परमात्मा तेषां मदुमजनैकनिष्ठानां भक्तानां अनुकम्पार्थं अनुकम्पा दया तदर्थं भास्वता प्रकाशमानेन ज्ञानदीपेन ज्ञानमेव दीपः तेन ज्ञानदीपेन अज्ञानजम् अज्ञानात् जातं तमः आवरणात्मकं अविद्यान्धकारं नाशयामि विध्वंसयामि॥११

तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥११॥

"मैतं पन्थामनुगा भीम एष येन पूर्वं नेयथ तं ब्रवीमि। तम एतत् पुरुष मा प्रपत्था भयं परस्तादभयं ते अर्वाक्।" अथ० ८।१।१०॥

मैतमिति = हे पुरुष! हे मुमुक्षुजन! एतम् अज्ञानावृतं पन्थां पन्थानं

मार्गं तमेमार्गं माऽनुगाः मा याहि। भीमः भयानकः एषः मार्गः अस्ति। येन ज्ञानमार्गेण पूर्वे पूर्वपुरुषं विद्वांसः नेयथ = न+ईयथ न प्राप्नुवन्ति। न ईयथ रापेत्र पुरुषव्यत्ययः। तं मुक्तिकारकं ज्ञानमार्गं त्वदनुकम्पार्थं त्वां ब्रवीमि परमात्माऽहं स्वयं कथयामि। एतत् संसारप्रापकं तमः आवरणात्मकं अज्ञानं मा प्रपत्थ = मा प्राप्नुहि। ज्ञानाश्रयाच्च परस्तात् अप्रत्यक्षेऽपि ते तुभ्यं अभयं भयं माऽस्तु। अर्वाक् संमुखेऽपि ते तुभ्यं अभयं भयं माऽस्तु अर्वाक् संमुखेऽपि ते तुभ्यं अभयं भयं माऽस्तु ॥१०॥

परं ब्रह्मेति = हे भगवन् कृष्ण! भवान् परं ब्रह्म प्रकृतेः परं सर्वव्यापकं ब्रह्म भवान् परं धाम मुक्तिधाम। भवान् परमम् अत्युत्कृष्टं पवित्रं पावनं अस्ति। देवर्षिः नारदः, असितः, देवलः, व्यासः इत्यादयः सर्वे ऋषयः शाश्वतं नित्यं दिव्यं दिवि = स्व महिम्नि स्थातुं योग्यं दिव्यं आदिदेवं = सर्वेषां कारणभूतः देवः द्योतनशीलः, सचासौ देवः आदिदेवः तम् आदिदेवं अजं जन्मरहितं विभुं व्यापकं त्वाम् आहुः कथयन्ति। स्वयं चैव त्वमपि मे मह्यं ब्रवीषि कथयसि। १२-१३॥

अर्जुन उवाच = परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयंचैव ब्रवीषि मे ॥१३॥

अवाच्चक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन्। अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम। ऋ० ५।३०।२॥

अवाच्चक्षमिति = अस्य परमात्मनः सस्वः अन्तर्हितं परमं गुह्यं उग्रं सर्वोत्कृष्टं पदं परमं धाम अवाच्चक्षम् = अहं मुमुक्षुः अवाङ्क्षम्। इच्छन् = परब्रह्मस्वरूपं ज्ञातुमिच्छन् अहं निधातुः = स्व महिम्ना जगतः स्थापयितुः परब्रह्मणः पदम् अन्वायम् अन्वगच्छम्। अन्यान् उत = अन्यान् देवर्षीन् नारदव्यासादीन् अपि परमात्मस्वरूपं वा अपृच्छम् पृष्टवानस्मि। ते नारदादयः ऋषयः पृष्टाः मे मह्यं इन्द्रं परं ब्रह्म आहुः कथयन्ति। नरः = ज्ञानिनां नेतारः बुबुधानाः परमात्मस्वरूपं बुभुत्समानाः वयं मुमुक्षवः अपि अशेम परमात्मस्वरूपं प्राप्नुयाम।

सर्वमिति = हे केशव! स्वपरब्रह्म त्वं यत् मां प्रति वदसि कथयसि, अहं एतत् सर्वं ऋतं सत्यमेव मन्ये मननं करोमि। हे भगवन्! हि यतः ते तव परमात्मनः व्यक्तिं व्यज्यते सर्वमस्यादिति व्यक्तिः, यद्वा व्यञ्जयति सर्वं जगत् इति व्यक्तिः तां त्वत्स्वरूपं देवाः दानवाः न विदुः न जानन्ति ॥१४॥

स्वयमिति = हे भूतभावन! भूतानि पृथिव्यादीनि भावयतीति भूतभावनः तत्संबुद्धौ हे भूतभावन! हे भूतेश! भूतानां पदार्थमात्राणां ईशः—

स्वामीति भूतेशः तत्संबुद्धौ हे भूतेश! हे भूतस्वामिन्! हे देवदेव! देवान् अग्न्यादीन् देवयति प्रकाशयति इति देवदेवः तत्संबुद्धौ हे देवदेव! हे जगत्पते! जगत् सर्वं पातीति जगत्पतिः जगत्स्वामी तत्संबुद्धौ हे जगत्पते! हे पुरुषोत्तम! हे परमात्मन्! स्वयमेव त्वमात्मना स्वस्वरूपेण आत्मानं वेत्थ जानासि न त्वन्यः अल्पज्ञः कश्चित् ॥१५॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥
स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम।
भूतभावन! भूतेश! देवदेव! जगत्पते ॥१५॥

"मूरा अमूर न वयं चिकित्वो महित्वमग्ने! त्वमङ्ग वित्से ॥ ~~ऋ०~~ ऋ० १०।४।४॥

~~मूरा इति = हे अमूर! हे अमूढ! हे सर्वज्ञ!~~

यद्वा = न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप। उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ ऋ० ७।९९।२॥

मूरा इति = हे अमूर! हे अमूढ! हे सर्वज्ञ! हे अग्ने! हे परमात्मन्! मूराः मूढाः मोहिताः अविवेकिनो वयं तव महित्वं महत्वं न चिकित्वः न विद्मः। हे अग्ने! हे परमात्मन्! स्वमहत्वं त्वं वित्से वेत्थ। यथाह यास्क आह = "मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्वमग्ने! त्वं तु वेत्थ॥

यद्वा = न ते इति = हे विष्णो! हे सर्वव्यापक परमात्मन्! त्वम् ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकं उदस्तभ्नाः ऊर्ध्वम् अधारयः। तथा पृथिव्याः भूमेः संबन्धिनीं प्राचीं प्राच्यादि सकलां ककुभं दिशं दाधर्थ धारितवानसि। हे देव! ज्योतिःस्वरूप परमात्मन्! ते तव व्यक्तेः पूर्वप्रतिपादितस्य महिम्नः महत्वस्य परं विप्रकृष्टं अन्तम् अवसानं जायमानः उत्पद्यमानः मनुष्यः न आप न प्राप्नोति। यद्वा जातः प्रादुर्भूतः देवादिः अपि अन्तं न आप न प्राप्नोति। ~~प्रादुर्भूतः देवादिः अपि~~ अतः तव महत्वस्य अवसानं नास्ति। तव व्यक्तिः केनापि न ज्ञायते। त्वं स्वं स्वयमेव जानासीति भावः।

वक्तुमिति = हे भगवन्! दिव्याः तेजोमयाः या आत्मविभूतयः स्वमहत्वविस्ताराः सन्ति ताः विभूतीः अविशेषेण सम्पूर्णतया त्वं वक्तुं कथयितुमर्हसि। त्वं याभिः विभूतिभिः आत्मनः विविधैः भावैः इमान् संमुखस्थान् लोकान् मर्त्यादीन् व्याप्य आपूर्य तिष्ठसि ॥१६॥

कथमिति = हे योगिन्! हे ऐश्वर्यवन्! त्वां परमात्मानं परिचिन्तयन् सदा ध्यायन् अहं भक्तः त्वां निर्विशेषं परं ब्रह्म कथं केन प्रकारेण विद्यां जानीयाम्। हे भगवन्! मया केषु केषु भावेषु पदार्थेषु चिन्त्यः ध्येयः असि। विस्तरेणेति = हे जनार्दन! हे विष्णो! आत्मनः परमात्मनः योगं ऐश्वर्य-विशेषं विभूतिञ्च स्वमहत्वविस्तारं च भूयः पुनः विस्तरेण नामरूप-

विस्तरेण कथय वद । हि = यतः अमृतं ज्ञानामृतवचनं शृण्वतः मे मम
भक्तस्य तृप्तिः परिपूर्तिः नास्ति न विद्यते ॥१८॥
श्रीभगवानुवाच = हन्तेति = हन्त खेदे हे कुरुश्रेष्ठ ! हे अर्जुन ! दिव्याः
दिव्यगुणयुक्ताः अप्राकृताः आत्मविभूतयः स्वस्वरूपविशेषाः याः सन्ति
ताः विभूतीः प्राधान्यतः मुख्यतया ते तुभ्यं कथयिष्यामि वक्ष्यामि ।
मे मम विभूतीनां विस्तरस्य बहुत्वस्य अन्तः समाप्तिः नास्ति ॥१९॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥
श्रीभगवानुवाच = हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥
( वेदमन्त्रो न लभ्यते )

अहमिति = हे गुडाकेश ! गुडाका निद्रा तस्याः ईशः स्वामी
गुडाकेशः तत्संबुद्धौ हे गुडाकेश ! हे अर्जुन ! सर्वभूताशय-
स्थितः सर्वप्राणिगुहास्थितः आत्मा प्रत्यगात्मा अहमस्मि । अहं
भूतानामाकाशादीनां आदिः मूलकारणं मध्यं स्थितिः अन्तः
प्रलयः अहमस्मि । २०॥

अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

स एव मृत्युः सो३मृतं सो३भ्वं३ स रक्षः ॥२५॥
स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारो नु संहितः ॥२६॥ अथ० १३।४।२५-२६

स एवेति = सोऽहं परमात्मा एव मृत्युः सर्वेषां प्राणिनां मध्ये तिष्ठन् दण्डदाय-
कोऽस्मि । यद्वा तत्तद्देहात् पृथक्कर्ताऽस्मि । सोऽहमेव अमृतं सर्वेषां प्राणप्रदः
आत्माऽस्मि । सोऽहम् अभ्वम् उत्पत्तिरहितोऽस्मि, सर्वेषामादिरस्मीति भावः ।
सोऽहमेव रक्षः सर्वेषां स्थावरजंगमानां रक्षकः स्थापकोऽस्मि । मध्यवर्ती
अपि अहमेवास्मीति भावः । सोऽहं रुद्रः अन्तकः विनाशकोऽस्मि । सोऽहं वसुवनिः
सर्वेषां वासभूतः सर्वभूताशयस्थितोऽस्मि । सोऽहमेव वसुदेये यज्ञादौ देये पदार्थे
नमोवाके नमस्करणीये ब्रह्मयज्ञे वषट्कारः नमः स्वाहा वषट् वौषडाद्याकार
वोन सन् अनुसंहितः सततमनुसन्धीयते अनुस्मर्यते इति भावः । २५।२६।
~~आदित्यानामिति = आदित्यानाम् अखण्डनीयानां पदार्थानां मध्ये~~
यथा तैत्तिरी० उप० भृगुवल्ली अध्या० ३ अ० १ = "यतो वा इमानि भूतानि-

जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व — तद्ब्रह्मेति ॥

आदित्यानामिति = आदित्यानां अखण्डनीयानां पदार्थानां मध्ये अहं विष्णुः सर्वत्र व्याप्तः परमात्माऽस्मि ।

" आदित्यानामहं विष्णुः "

विष्णुं युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा ।अथ० ५।२६।७

~~अथ० ५।२६।७~~ " आदित्यो वै विष्णुः " ।

यद्वा = " ऋतेनादित्यास्तिष्ठन्ति " । ऋ० १०।८५।१ ॥

यद्वा = " सोमेनादित्या बलिनः " । ऋ० १०।८५।२ "

विष्णुरिति = हे सुयुजः! सम्यग् योगाभ्यासकर्तारः मुमुक्षवः! अस्मिन् यज्ञे विभूतिसमूहयज्ञे विष्णुः विष्णुरूप आदित्यः तपांसि आदित्यात्मनः तपःकर्माणि बहुधा बहुप्रकारं युनक्तु त्वयि मुमुक्षौ संयोजयतु स्वाहा सम्यक्तयाऽऽह्वानमस्ति ।७।

यथा ब्राह्मणे = " आदित्यो वै विष्णुः " । हरिवंश पं० १ अध्या० ३ श्लो० ५९ —

" मरीचात्कश्यपात् जाताः आदित्याः दक्षकन्यया । तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव हि ॥१॥ अर्यमा चैव धाता च त्वष्टा पूषा च भारत । विवस्वान् सविता चैव मित्रो वरुण एव च । अंशो भगश्चातितेजाः आदित्या द्वादश स्मृताः ।२॥

ज्योतिषामिति = ज्योतिषां प्रकाशवतां पदार्थानां मध्ये अंशुमान् रश्मिवान् रविः सूर्यः अहमस्मि ।

" ज्योतिषां रविरंशुमान् " ।

यो अदधा ज्योतिषि ज्योतिरन्तर्योऽसृजन्मधुना सं मधूनि । ऋ० १०।५४।६

अहं मनुरभवं सूर्यश्चाहम् " । ऋ० ४।२६।१

यद्वा = अहं सूर्य इवाजनि " अथ० २०।११५।१

य इति = यः परमात्मा ज्योतिषि अग्न्यादिज्योतिःपदार्थे अन्तः मध्ये ज्योतिः प्रकाशमयं तेजः अदधात् धारितवान् यत् रव्यादिषु तेजोऽस्ति तत्परमात्मविभूतिरेव । यश्च मधुना स्वस्वकार्यसम्पादनाय सेव्यमानेन आदित्येन रविणा इति यावत् सह मधूनि उदकानि समसृजत् ।६"

यद्वा = अहमिति = अहं परमात्मा सूर्य इव सूर्य एव अजनि भवामि ॥

मरीचिरिति = मरुतां वायूनां मध्ये मरीचिः नाम वायुः अस्मि ।

' मरीचिर्मरुतामस्मि '

वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ॥

ऋ० १।३८।१५

" नमो वात्याय च रेष्म्याय च " । यजु० १६।३९ ।

वन्दस्वेति = हे मुमुक्षो ! मारुतं मरुतां श्रेष्ठं मरीचिनामकं मरुतं यद्वा मरुत्संबन्धिनं मरीचिनामकं प्रभुविभूतिं वन्दस्व नमस्कुरु स्तुहि। कीदृशं तम् = त्वेषं = दीप्तम्। पनस्युम् = स्तुतियोग्यम्। अर्किणम् = अर्चनोपेतम्। अस्मे अस्माकं इह अस्मिन् कर्मणि वृद्धाः प्रवृद्धाः सखायः असन् सन्ति। वन्दस्व = वदि अभिवादनस्तुत्योः। पनस्युम् = पन चेति स्तुत्यर्थो धातुः। असुन् प्रत्ययः। पनः स्तोत्रम् इच्छतीति पनस्युः। सुप आत्मनः क्यच्। "क्याच्छन्दसि" इत्युः प्रत्ययः। अर्किणम् = ऋच् स्तुतौ "पुंसि संज्ञायाम्" इति घः। अर्कोऽस्यास्तीति अर्की। अत इनिठनौ"। असन् = बहुलं छन्दसीति शपो लुगभावः। "इतश्च" इतीकारलोपः।

नक्षत्राणामिति = नक्षत्राणाम् अश्विनी भरणीत्यादीनां नक्षत्राणां मध्ये शशी चन्द्रमा अहमस्मि॥२१॥

'नक्षत्राणामहं शशी' ॥२१॥

"चन्द्रमा नक्षत्राणामधिपतिः स मोऽवतु"। अथ० ५।२४।१०॥

यद्वा = "चन्द्रमा नक्षत्राणामीशे"। अथ० ६।८६।२॥

चन्द्रमा इति = चन्द्रमाः शशी नक्षत्राणाम् अश्विनीभरणीप्रभृतितारागणानाम् अधिपतिः स्वामी अस्ति।

वेदानामिति = वेदानाम् ऋग्यजुःसामाथर्ववेदानां मध्ये ऽहं सामवेदोऽस्मि। देवानां मध्ये वासवोऽहमस्मि। इन्द्रियाणां वागादीन्द्रियाणां मध्ये मनः चित्तमहमस्मि। भूतानां पृथिव्यादिभूतानां मध्ये चेतना चेतनशक्तिरूपा बुद्धिरहमस्मि॥२२॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥२२॥

१ "सामानि यस्य लोमानि" ॥ अथ० १०।७।२०॥

२ "आगच्छत आगतस्य नाम गृह्णाम्यायतः। इन्द्रस्य वृत्रघ्नो वन्वे वासवस्य शतक्रतोः"। अथ० ६।८२।१॥

३ "अर्वाचीनं सु ते मनः उत चक्षुः शतक्रतो। इन्द्र कृण्वन्तु वाघतः"। ऋ० ३।३७।२॥ अथ० २०।१९।२॥

४ "एवा रुखा उ इहैमखा उ इमध्ये तदुपरि। बर्हे वेनुद्धवं पितरो मरुतां मनं इच्छत ॥ अथ० ४।१५।१५॥

५ "चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान्। राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य॥ ऋ० ४।२।११॥

६ "चिदसि मनासि"॥ यजु० ४।१९॥

७ "साम ते तनूः"। यजु० १२।४॥

१. सामानीति = यस्य परमात्मनः सामानि सामवेदमन्त्राः गायनाधारत्वात् -

विभूतिरूपाः सन्तः लोमानि विराड्देहे लोमवत् सन्ति।

२ आगच्छतेति = हे मुमुक्षवः! हे योगिनः! वन्वे भगवन्नामस्मरणात्मके सेवनीये यज्ञे आगच्छत प्राप्नुत। आयतः सर्वत्र संसारे विस्तृतस्य वृत्रघ्नः पापहन्तुः शतक्रतोः शतशः क्रतवः सर्जनस्थितिलयादीनि कर्माणि यस्य तथाभूतस्य अंगतस्य सर्वत्र प्राप्तस्य इन्द्रस्य सर्वैश्वर्यवतः वासवस्य सर्वेषां स्थावर-जंगमानां वासभूतस्य परमात्मनः विभूतेः नाम अभिधानं गृह्णामि = गृह्णीमः उच्चा-रयामः। वचनव्यत्ययः॥

३ अर्वाचीनमिति = हे शतक्रतो! शतं क्रतवो सर्जनादीनिकर्माणि यस्य स शतक्रतुः तत्संबुद्धौ हे शतक्रतो! हे इन्द्र! हे परमात्मन्! वाघतः वहन्ति यज्ञियांधुरमिति - वाघतः स्तोतारः, मुमुक्षवः जनाः ते तव परमात्मनः सु = स्वस्वाभिमतफलसम्पादनेन शोभनं त्वद्विभूतिस्वरूपं मनः अर्वाचीनं स्वाभिमुखं कृण्वन्तु कुर्वन्तु, उत अपि च चक्षुः त्वदीयं दर्शनं मुमुक्षुषु अनुग्रहबुद्धिं कृण्वन्तु कुर्वन्तु।

४ खण्वखा इति = हे खण्वखे! कण्वे आत्मानं खनति इति काण्वखा "छान्दसः खकारः" हे खण्वखे, यद्वा खण्वे छिद्रे खजति गच्छति सा खण्वखा ब्रह्मरन्ध्रगामिनी हे इडानाडि! हे खैमखे! हे पिङ्गले नाडि! हे तदुरि! हे मध्ये! हे सुषुम्णे! तिस्रः यूयं वर्षं आनन्दरसप्रवाहं वनुध्वं प्रयच्छत। हे पितरः! स्वस्वविषयपाल-यितारः! इन्द्रियगणाः "वाक् च मनश्च पितरो युवानः" शतपथ ब्रा० १६।६।-३।३२॥ मरुताम् अन्तर्वसतां प्राणानां मध्ये मनः परमात्मविभूतिस्वरूपं मनः इच्छत प्राप्तुं यतध्वम्।

५. चित्तिमिति = विद्वान् ज्ञानवान् यतिः पापपुण्यकर्माणि जानन् चित्तिं ज्ञानश-क्तिम् अचित्तिम् अज्ञानं विचिनवत् विचिनोतु प्रभुविभूतिं प्रभवविभूतिं वा पृथक् करोतु। तत्र दृष्टान्तः = पृष्ठेव - यथाऽश्वपालोऽश्वानां वीताकान्ता-नि वृजिना वृजिनानि दुर्वहाणि पृष्ठा पृष्ठानि ज्ञेयानि यत्नेन पृथक् करोति तद्वत् च अपि च मर्तान् मरणधर्माणि पंचभूतानि चित्तिं च पृथक् जानाति। स्व-पत्याय = सम्यक्त्वयाऽपतनशीलाय नित्यायेत्यर्थः। राये ज्ञानाय नः अस्मान् मुमु-क्षून् कुरु। तथा दितिं दातारं दानकर्तारं रास्व स्वविभूतिं चित्तिं ज्ञानं देहि। तथा च अचितिं "पंचम्यर्थे द्वितीया" अदातुः सकाशात् अरुष्व रक्ष।

रुद्राणामिति = रुद्राणां क्रोधरूपाणां मध्ये यद्वा एकादश रुद्राणां रोदयि-तॄणां प्राणानां मध्ये शङ्करः कल्याणकरः शङ्करनामाऽहमस्मि।

रुद्राणां शङ्करश्चास्मि।

रुद्राणामाधिपत्यम्। यजुः ३८।३५॥ "नमः शङ्कराय च"। यजुः १६।४१॥

यद्वा = रुद्राणां दश प्राणाः एकादशः जीवः तेषां एकादश रुद्राणाम् आधिपत्यं स्वामि-त्वं शङ्करस्य परमात्मनः एवास्ति॥७॥

वित्तेश इति = यक्षरक्षसां मध्ये वित्तेशः धनस्वामी कुबेरोऽहमस्मि।

वित्तेशो यक्षरक्षसाम् ॥

"तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम्" । अथ० ८।१०।१०॥

"श्रीणामुदारो धरुणो रयीणाम्" । ऋ० १०।४५।५ ॥

तस्या इति = तस्याः यक्षरक्षःसृष्टयाः मध्ये वैश्रवणः विश्रवसोऽपत्यं वैश्रवणः कुबेरः एव वत्सः भगवत्प्रियः अतः विभूतिश्चासीत् अस्ति। आमपात्रम् ईषत्पक्वं पात्रं बुद्धिर्यस्य तथाभूतं पात्रं ब्राह्मणः। "ब्राह्मणं पात्रमित्याहुः" इत्युक्तेः। तद्विभूति सेवकः स्यादिति भावः। वैश्रवणः=विश्रवसोऽपत्यं — "अण् विश्र वणादेशः। कुबेरः एरकु नलोपश्च। आमपात्रम् = अम्यते पच्यते, अ+अम + घञ्। पाति रक्षति आधेयं ष्ट्रन् प्रत्ययः।

वसूनामिति = वसूनामष्टनिधानां वसूनां मध्ये पावकः पवित्रकर्ता अग्निः अहमस्मि। 'वसूनां पावकश्चास्मि'।

शुचिः पावक ईड्यः ॥ अथ० २।३।२६॥

यद्वा = "वसूनां भागोऽसि"। यजु० १४।२५॥ यद्वा "अग्निरस्मि जन्मना जातवेदाः" ऋ० ३।२६।७॥ अथ० ४।३१।२॥ यद्वा = उषिक् पावको अरतिः सुमेधाः मर्त्येषु अग्निरमृतो निधायि॥ ऋ० १०।४५।७॥

शुचिरिति = स परमेश्वरः वसूनां मध्ये पावकः पावकनाम्ना शुचिः शुद्धः ईड्यः स्तुत्यः वर्तते।

वसूनामिति = वसूनाम् "अष्टौ वसवः" अग्निश्च पृथिवी च, वायुश्चान्तरिक्षं च आदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः" एते हीदं सर्वं वासयन्ते" शतपथ ब्रा० ११।६।३।६। वसूनामष्टनिधानां वसूनां मध्ये भागः भजनीयः अग्निरसि।

अग्निरिति = अहं परमात्मा जन्मना श्रवणमननादि साधनैरपेक्षेण स्वभावत एव जातवेदाः समस्त पदार्थ ज्ञाता वसूनां मध्ये अग्निरस्मि।

मेरुरिति = शिखरिणां शिखरं रत्नमेदः रत्नवतां मध्ये मेरुः रत्नमहमस्मि।

मेरुः शिखरिणामहम् ॥२३॥

"उत वा शक्रो रत्नं दधात्यूर्जया वा यत्सचते हविर्दाः। अथ० ७।१।७॥

उत वेति = उत वा अपि च शक्रः अयमात्मा एव रत्नं सर्वरत्नमेरुस्वरूपं परं ब्रह्म चित्ते दधाति धारयति। यत् येन हेतुना स च मुमुक्षुः हविर्दाः प्राणादिकं हविः आत्मज्ञानाग्नौ जुह्वन् ऊर्जया परया भक्त्या सचते मोक्षं प्राप्नोति॥७॥

पुरोधसामिति = हे पार्थ! हे पृथासुत! हे अर्जुन! पुरोधसां पुरा अग्रे धीयते इति पुरोधाः। धा धातोः "असि किच्च" तेषां पुरोधसाम् अग्रे स्थापितानां मध्ये मुख्यं सर्वोत्तमं मां परमात्मानं बृहस्पतिं बृहतां इन्द्रियाणां पतिः पालकः नियन्ताऽन्तरात्मा इति बृहस्पतिः। यद्वा बृहत्याः वाचः पतिः बृहस्पतिः तं बृहस्पतिं मां विद्धि जानीहि॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।

"सोमं राजानं वरुणमग्निं मन्वारभामहे। आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्"। साम० ९१॥ ऋ० १०।१४१।३॥ यजु० ९।२६॥ अथ० ३।२०।४॥

यद्वा = अग्निमीळे पुरोहितम्"। ऋ० १।१।१॥

"बृहस्पतिर्वै देवानां पुरोहितः। "बृहस्पतिं यं सुभृतं बिभर्त्ति"। ऐत० ब्रा०॥

सोममिति = राजानं राजमानम् ईश्वरं "सोमोऽस्माकं ब्राह्मणानां राजा" तैत्ति० सं० १।८।१०।२" तादृशं सोमं शान्तिदायकं सर्वसंसारोत्पादकं च वरुणं वृणोति सर्वं जगत् इति वरुणः तम्। यद्वा = सर्वेषां पापानां निवारकम्। अग्निं ज्ञानस्वरूपं सन्मार्गप्रदर्शकं च आदित्यं सर्वरसग्राहकं विष्णुं सर्वत्र व्याप्तम्। सूर्यं सर्वस्य प्रेरकं ब्रह्माणं सर्वतो महान्तं बृहस्पतिं बृहतां पतिं पालकं यद्वा विज्ञानप्रभुम् अन्वारभामहे प्रतिदिनं स्मराम।

सेनानीनामिति = सेनानीनाम् = सेनां नयतीति सेनानीस्तेषां सेनापतीनां मध्ये स्कन्दः स्कन्दते इति स्कन्दः अत्यन्तगतिमान् अहमस्मि।

'सेनानीमहं स्कन्दः।

"अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व। अथ० ४।३१।२। ऋ० १०।८४।२॥

अग्निरिति = हे मन्यो! सर्वं गुरूपदिष्टं मन्यते इति मन्युः जिज्ञासुः तत्सम्बुद्धौ हे मन्यो! हे मननशील! हे योगिन्! हे मुमुक्षो! अग्निरिव अग्निवत् त्विषितः प्रदीप्तः सन् सहस्व कामक्रोधादिशत्रून् अभिभव तिरस्कुरु। हे सहुरे! हे परमात्मन्! "सहेः औणादिकः उरिन् प्रत्ययः। हूतः अस्माभिः भक्तैः आहूतः त्वं नोऽस्माकं सांसारिकजीवानां सेनानीः सेनायाः इन्द्रियवृत्तिसेनायाः नेता अधिपतिः स्कन्दस्वरूपः एधि = भव॥ शत्रून् अस्माकं कामक्रोधादिरिपून् हत्वाय = हत्वा वेदः ज्ञानं विभजस्व अस्मभ्यं विभज्य प्रयच्छ। किंच ओजः ज्ञानबलं मिमानः कुर्वन् सन् त्वं सेनानीरूपः परमात्मा मृधः विषयरूपान् शत्रून् विनुदस्व विविधेन प्रकारेण जहि घातय। एधिभव। असोर्लोटि "घ्वसोरेद्धौ" इत्येत्वम्। तस्य च "असिद्धवदत्राभात्" इत्यसिद्धत्वात् झलन्तलक्षणो धिभावः।

सरसामिति = सरसां जलाशयानां मध्ये सागरः समुद्रः अहमस्मि॥२४॥

सरसामस्मि सागरः॥२४॥

"समुद्र ईशे स्रवताम्"। अथ० ६।८६।२॥

यद्वा = "समुद्रो नदीभिरुदक्रामत्"॥ अथ० १९।१९।७॥

समुद्र इति = समुद्रः सागरः स्रवतां द्रवीभूतानां जलानां ईशे स्वामी अस्ति। यद्वा = समुद्र इति = समुद्रः सागरः नदीभिः सह उदक्रामत् उच्चगतिं प्राप्नोति।

महर्षीणामिति = महर्षीणां महाज्ञानिनां मध्ये भृगुः परिपक्वज्ञानी अहमस्मि।

महर्षीणां भृगुरहम्।

"अग्ने प्रेहि प्रथमो देवतानां चक्षुर्देवानामुत मानुषाणाम्। इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति"। अथ० ४।१४।५॥ यजु० १७।६९॥

यद्वा = "ऋषिर्विप्राणाम्"। ऋ० ९।९६।६॥

अग्ने इति = हे परमात्मन्! देवतानां प्रकाशमानपदार्थानां मध्ये प्रथमः सर्वश्रेष्ठः आदिमः असि। यः त्वं देवानां ब्रह्मादिदेवानां विदुषां ज्ञानिनां वा उत अपि मानुषाणां मनोरथभूतानां सर्वसाधारणानां मनुष्याणां चक्षुः यथार्थप्रकाशकः असि। अतः प्रेहि अस्माकं हृदयदेशं प्राप्नुहि। यजमानाः तव पूजां कुर्वाणाः पुण्यात्मानः जीवाः भृगुभिः सह महर्षीणां मध्ये परिपक्वविज्ञानैः भृगुनामकैः महर्षिभिः सह = "भृगुग्रहणमार्षेयानूचानब्राह्मणोपलक्षणार्थमित्युव्वटः"। इयक्षमाणाः यज्ञं चिकीर्षमाणाः सजोषाः समानप्रीतिसेवनाः सन्तः स्वस्ति कल्याणात्मकं स्वः दुःखशून्यं सुखधाम यन्तु प्राप्नुवन्तु।

यद्वा = ऋषिरिति = हे जीवात्मन्! विप्राणां विशेषज्ञानिनां ऋषीणां मध्ये ऋषिः अतीन्द्रियार्थद्रष्टा भृगुः ऋषिः अहमस्मि।

गिरामिति = गिरामर्थवतां वाचां मध्ये एकम् अक्षरम् "ओम्" इत्यक्षरम् अहमस्मि।

गिरामस्म्येकमक्षरम्।

"अग्निरेकाक्षरेण प्राणमुदजयत् तमुज्जेषम्"। यजु० ९।३१॥

अग्निरिति = अग्निः परमात्मा एकाक्षरेण "ओम्" इत्येकाक्षरेण प्राणं प्रजाजनं "यद्धि प्राणेन अन्नमात्मनि प्रणयते तत् प्राणस्य प्राणत्वम्"। शत० ब्रा० १२।८।१।१४॥ उदजयत् अत्युत्तमतया अपालयत्। तथा अहम् उत=अपि तं परमात्मानं एकाक्षरेण अजेषम् प्राप्नुयाम्॥ यथा माण्डू० उप० श्रु० १ = "ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योंकार एव"॥ योगदर्शने = "तस्य वाचकः प्रणवः"। यथा नृसिंहोत्तरतापिन्युप० खं ३ श्रु० १ = "प्रणवस्य या पूर्वा मात्रा सा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः द्वितीयान्तरिक्षं स उकारः, स यजुर्भिः यजुर्वेदो विष्णुः रुद्रस्त्रिष्टुब्दक्षिणाग्निः सा द्वितीयः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिस्तृतीया द्यौः स मकारः, स सामभिः सामवेदो रुद्रादित्या जगत्याहवनीयः सा तृतीयः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता चतुर्थः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः"॥

यज्ञानामिति = यज्ञानाम् अग्निष्टोमादियज्ञानां मध्ये जपयज्ञः भगवन्नामो- -च्चारणात्मकः जपयज्ञः अहमस्मि।

'यज्ञानां जपयज्ञोऽस्मि'।

"एष यज्ञानां विततो वहिष्ठो विष्टारिणं पक्त्वा दिवमाविवेश। अथ० ४।३४।५॥

एष इति = एषः भगवन्नामो जपयज्ञः विततः स्वनाममहिम्ना संसारे विस्तृतः यज्ञानाम् अग्निष्टोमादियज्ञानां मध्ये वहिष्ठः सर्वतो महत्तमः अस्ति। भगवन्नामजापकः मुमुक्षुः जनः विष्टारिणं विस्तीर्यमाणावयवं सर्वव्यापकं परमेश्वरं पक्त्वा हृदि परिपूर्णतया धृत्वा दिवं स्वर्गं सुखधाम वा आविवेश प्रविशति परं ब्रह्म प्राप्नोतीत्यर्थः।

स्थावराणामिति = स्थावराणाम् अचलानां मध्ये हिमालयः पर्वतः अहमस्मि॥२५॥

स्थावराणां हिमालयः॥२५॥

"यदाञ्जनं त्रैककुदं जातं हिमवतस्परि। यातूंश्च सर्वान् जम्भयत्सर्वाश्च यातुधान्यः॥ अथ० ४।९।९॥

यदिति = हिमवतः हिमाच्छन्नपर्वतेभ्यः परि उपरि उत्कृष्टमित्यर्थः। त्रैककुदं हिमालयशिखरभूतः त्रिककुन्नाम पर्वतभागः तत्सम्बन्धि यत् आञ्जनं श्यामं भगवद्- विभूतिस्वरूपं जातम् उत्पन्नम्। तद्विभूतिमयम् आञ्जनं ज्ञानं सर्वान् सकलान् यातून् पीडाप्रदान् विषयान् सर्वाश्च यातुधान्यः यातुधानी मोक्षविघ्नकारिणीः कुप्रवृत्तीः जम्भयत् विनाशयति। हिमवतस्परि = "पञ्चम्याः परावध्यर्थे" इति विसर्जनीयस्य सत्वम्। यातुधान्यः = "वा छन्दसि" इति शसि पूर्वसवर्णदीर्घाभावः।

अश्वत्थ इति = सर्ववृक्षाणां मध्ये अश्वत्थः पिप्पलः अहमस्मि।

'अश्वत्थः सर्ववृक्षाणाम्'।

१ "अश्वत्थः खदिरादधि। अथ० ३।६।१॥ (२) शमीमश्वत्थ आरूढः। अथ० ६।११।१॥

३ "अश्वत्थो देवसदनः तृतीयस्यामितो दिवि। तत्रामृतस्य चक्षणं देवाः कुष्ठ- मवन्वत। अथ० ५।४।३॥ अथ० ६।९५।१॥ अथ० १९।३९।६॥

१ अश्वत्थ इति = अश्वत्थः खदिरात् "खदिर शब्दः वृक्षमात्रज्ञापकः" सर्ववृक्षेभ्य इत्यर्थः। अधि उत्कृष्टः वर्तते, अतः अश्वत्थः परमात्मनः विभूतिरेव॥

२ शमीमिति = अश्वत्थः पिप्पलः शमीम् = शमीशब्दः वृक्षमात्रज्ञापकः सर्ववृक्षान् आरूढः अश्वत्थः सर्वोपरि विराजते।

३ अश्वत्थ इति = अश्वत्थः पिप्पलः परमात्मा वा देवसदनः देवानां ब्रह्मादिदेवानां सदनं वासस्थानं यद्वा = देवानां ज्ञानेन प्रकाशमानानां विदुषां सदनं गृहं स च अश्वत्थः इतः अस्मात् लोकात् तृतीयस्यां दिवि तृतीये प्रकाशे परब्रह्मणि वर्तते। तत्र अश्वत्थे एव अमृतस्य परब्रह्मणः चक्षणं दर्शनं भवति देवाः ज्ञानिनः मुमुक्षवः कुष्ठम् = कौ पार्थिवे देहे यद्वा कौ पृथिव्युद्भूते स्वविभूतिमये अश्वत्थे स्थितं परमात्मानम् अवन्वत अभिलषन्ति॥

यथा पद्मपुराणे ६ अध्याये = "अश्वत्थरूपो भगवान् विष्णुरेव न संशयः"॥

देवर्षीणामिति = देवर्षीणाञ्च महाज्ञानिनां मध्ये नारदः ब्रह्मशक्त्यन्वेषकः अहमस्मि।

" देवर्षीणाञ्च नारदः।

" देवा वशामयाचन् यस्मिन्नग्रे अजायत। तामेतां विद्यान्नारदः सह देवैरुदाजत॥ अथ० १२।४।२४॥

देवा इति = अग्रे सर्वेभ्यः पूर्वं यस्मिन् ब्रह्मवेत्तरि यतो ब्रह्मशक्तिज्ञानम् अजायत प्रादुर्भूत। देवाः योगिनः मुमुक्षवः वशां ब्रह्मशक्तिं अयाचन् ब्रह्मशक्तिज्ञानार्थं प्रार्थयन्। नारदः = नारम् अज्ञानं द्यति खण्डयति "दो अवखण्डने" इति नारदः। यद्वा नारं परमेश्वरसम्बन्धि ज्ञानं ददाति "डुदाञ् दाने" क प्रत्ययः। नारदः परमेश्वरज्ञानप्रदाता विद्यात् जानीयात्। स नारदः ताम् एतां वशां ब्रह्मशक्तिं देवैः सह विद्वद्भिः सह उदाजत = अग्रेकृत्वा अयच्छत्।

गन्धर्वाणामिति = गन्धर्वाणां गायकानां वेदवाणीधारकाणां मध्ये चित्ररथः नाम गायकः वेदार्थवित् सोऽहमस्मि।

गन्धर्वाणां चित्ररथः।

" तस्यांश्चित्ररथः सौर्यवर्चसो वत्स आसीत्। पुष्करपर्णपात्रम्। अथ० ८।१०।५(६)

तस्या इति = तस्याः गन्धर्वसृष्ट्याः मध्ये सौर्यवर्चसः ब्रह्मज्ञानबलः चित्ररथः चित्रः ज्ञानाय चायनीयः रथः ब्रह्मणः रममाणस्थानं यस्य सः प्राप्तव्यज्ञानस्थानः यतिः वत्सः प्रियः आसीत् अस्ति। स च पुष्करपर्णं पुष्करं वपुष्करं ज्ञानेन शरीरभूषकं पर्णं पत्रमेव पात्रं भाजनमस्ति। यथा च यास्कः = "पुष्करमन्तरिक्षं पोषयति भूतानि। उदकं पुष्करं पूजाकरं पूजयितव्यम्। इदमपीतरत्पुष्करमेतस्मादेव, पुष्करं वपुष्करं वा"॥

सिद्धानामिति = सिद्धानां धर्मज्ञानादिश्वर्यसिद्धहस्तानां मध्ये कपिलः मुनिः अहमस्मि।२६॥

सिद्धानां कपिलो मुनिः॥२६॥

" दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय। गर्भं माता सुधितं वक्षणासु अवेनन्तं तुषयन्ती बिभर्ति। ऋ० १०।२७।१६॥

दशानामिति = माता देवहूतिः दशानां परब्रह्मांशेन अवतीर्णानां दशानां अवताराणां मध्ये एकं मुख्यं प्रसिद्धं कपिलं ऋषिं समानं सर्वत्र समानदृष्ट्या वर्तमानं क्रतवे जगति यज्ञादि कर्मणः उपदेशाय प्रवर्तनकर्मणे यद्वा सम्यक् ज्ञानलक्षणप्रज्ञानाय अथ च पार्याय परिसमापयितव्याय प्रणेतव्याय वा यज्ञादिकर्मणः उपदेशनाय हिन्वन्ति संसारे प्रेरयन्ति — प्रेषयन्ति वा "वचनव्यत्ययः"। माता प्रकृतिरूपा देवहूतिः वक्षणासु नदीरूपासु स्वनाडीषु सुधितं = सुहितं सम्यक्तया स्थापितं अवेनन्तं अकान्तिमन्तं प्राकृतिकबालकसदृशमित्यर्थः। "वेनतिः कान्तिकर्मा" यद्वा गतिनिवासम् अकामयमानं तं प्रसिद्धं कपिलं मुनिं तुषयन्ती

तुष्यन्ती सम्यक् ज्ञानानि उपदेष्टुं योग्योऽयमिति मत्वा प्रीता सती गर्भं स्वोदरे प्रजापतेः नियोगात् बिभर्त्ति धारयति।

उच्चैःश्रवसमिति = हे अर्जुन! अश्वानां हयानां मध्ये माम् अमृतोद्भवं "अमृतात् उद्भवः उत्पत्तिः यस्य तथाभूतम् उच्चैःश्रवसं विद्धि जानीहि।

उच्चैःश्रवसमश्वानां विद्धि मामममृतोद्भवम्।

पाठभेदः हूयेते || "युक्ताः श्वेता औच्चैःश्रवसं हर्यो युञ्जन्ति दक्षिणम्। पूर्वतमं स देवानां बिभ्रदिन्द्रं महीयते। अथ० २०।१२८।१६॥

युक्ता इति = श्वेताः शुक्लवर्णाः युक्ताः रथे वाहनादौ वा संयुक्ताः (युक्त्वा = रथे वाहनादौ वा संयोज्य) हर्योः अश्वयोः मध्ये दक्षिणं दक्षिणभागे स्थितं निपुणं गतिशीलं वा उच्चैःश्रवसम् उन्नतकर्णम् अमृतोद्भवम् उच्चैःश्रवोनामानम् अश्वं वा आयुञ्जन्ति रथे योजयन्ति। स उच्चैःश्रवाः उत्तमः अश्वः देवानां द्योतमानानां सर्वत्र विजिगीषूणां पुरुषाणां पूर्वतमं सर्वश्रेष्ठं इन्द्रं स्वामिनं सेनापतिं बिभ्रत् धारयन् महीयते लोकैः लोके पूज्यते॥

ऐरावतमिति = गजेन्द्राणां गजोत्तमानां मध्ये माम् ऐरावतं गजं मां विद्धि जानीहि॥ "ऐरावतं गजेन्द्राणाम्"।

"तां धृतराष्ट्र ऐरावतोऽधोक् तां विषमेवाऽधोक्। अथ० ८।१०।१५॥

तामिति = धृतराष्ट्रः = धृतं राष्ट्रं येन तथाभूतः धृतराष्ट्रः राष्ट्रस्य आश्रयः ऐरावतो नाम गजः तां सकलां गजसृष्टिं अधोक् दुदोह अधश्चकार इत्यर्थः। तां विषं मलभूतां अधोक् निष्फलाम् अकरोत्। विषम = विष प्रयोगे, विषप् स्त्रियाम्॥ नराणामिति = नराणां मनुष्याणां मध्ये नराधिपं मनुष्यस्वामिनं राजानं मां विद्धि॥२७॥

नराणां च नराधिपम्॥२७॥

१ "राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु। ऋ०७।३४।११॥

२ यद्वा = सम्राडस्य सुराणां ककुन्मनुष्याणाम्॥ अथ० ६।८६।३॥

३ "इन्द्रो राजा जगतश्चर्षणीनाम्॥ ऋ०७।२७।३॥

४ "त्वं हि शश्वतीनां पती राजा विशामसि। ऋ०८।९५।३॥

५ "त्वमग्ने! राजा"। ऋ० २।१।४॥

६ "त्वं विश्वेषां वरुणासि राजा"। ऋ० २।२७।१०॥

७ यद्वा = "पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा॥ ऋ० ६।३६।४

१ राजेति = राष्ट्राणां जनपदानां पेशः रूपं राजा नराधिपः अस्ति। नदीनां स्वराज्ये वर्तमानानां, नदीनामर्थे पेशः हिरण्यम्, तन्मध्यात् कृत्रिम प्रवाह संचालनहेतोः तासां नदीनां रूपं स्वर्णमयं करोतीत्यर्थः। पेशः रूपं, पेशः हिरण्यम्। यथा निघण्टौ = "पिशं पेशः कृशनं कनकम्' इति हिरण्य नामसु पाठः (निघ० १।२२)। "पेश इति रूपनाम। पिंशतेर्विपिशितं

भवति" (निरु० ८।११)। अस्मै = षष्ठ्यर्थे चतुर्थी। अस्य राज्ञः क्षत्रं क्षात्रं बलं अनुत्तमं अन्यैरबाधितं विश्वायु सर्वतो गन्तृ भवतीति। राष्ट्रानाम् = णत्वाभावः छान्दसः।

२. यद्वा = सम्राडिति = हे परमात्मन्। असुराणां प्राणप्रदानां मनुष्याणां जीवमात्राणां मध्ये ककुत् श्रेष्ठः सम्राट् चक्रवर्ती नराधिपः असि।

आयुधानामिति = अहं श्रीकृष्णः परमात्मा आयुधानां शस्त्रास्त्राणां मध्ये वज्रमस्मि॥ "आयुधानामहं वज्रम्"।

"वज्रमेको बिभर्ति हस्त आहितम्। तेन वृत्राणि जिघ्नते। ऋ० ८।२९।४॥

वज्रमिति = एकः राजा हस्ते आहितं स्वकीये हस्ते निहितं वज्रं एतन्नामकं भगवतः विभूतिभूतं आयुधं बिभर्ति धारयति। स एव राजा तेनवज्रेण वृत्राणि न्यायविरोधीनि यद्वा शत्रून् जिघ्नते भृशं हन्ति।

धेनूनामिति = धेनूनां गवां मध्ये कामधुक् कामधेनुः अहमस्मि।

धेनूनामस्मि कामधुक्।

"एतास्ते असौ धेनवः कामदुघाः भवन्तु। एनीः श्येनीः सरूपाः विरूपास्तिल-वत्सा उपतिष्ठन्तु त्वात्र। अथ० १८।४।३३"

एता इति = एता अग्रे निर्दिश्यमानाः धेनवः गावः ते तव जीवस्य असौ = प्राणनिमित्ते कामदुघाः कामान् दुग्धे इति कामदुघा ताः कामदुघाः कामानां दोग्ध्र्यः अभिलषितफलस्य दोग्ध्र्यः भवन्तु। याः धेनवः एनीः कपिलाः सन्ति, याः श्येनीः श्वेतवर्णविशिष्टाः सन्ति। याः सरूपाः समानरूपाः, याः विरूपाः विविधरूपाः चित्रकाः इत्यर्थः। याः तिलवत्साः तिलसदृश[illegible] पहितवत्सा एताः सन्ति। ताः सर्वाः त्वा त्वाम् अत्र अस्मिन् असौ = जन्मनि प्राणे सति जीवनकाल एव इति भावः। "असवः प्राणा उच्यन्ते"। उपतिष्ठन्तु प्राप्नुवन्तु। कामदुघाः = दुहः कब्धश्च इति कब्धत्वे।

प्रजन इति = प्रजनः यथाशास्त्रं सन्तानोत्पादकः कन्दर्पः कामदेवः अहमस्मि।

'प्रजनश्चास्मि कन्दर्पः।

"यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद् वृणीषे। ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः॥ अथ० ९।२।२५।

यास्ते इति = हे काम! हे सन्तानोत्पादक! कन्दर्प! ते तव याः भद्राः कल्याणकाः शिवाः सन्तानसुखप्रदात्र्यः तन्वः शरीराणि सन्ति। गृहस्थः यत् पुत्रफलं वृणीषे "वृणोति" पुरुषव्यत्ययः तत्पुत्रप्राप्तिरूपं फलं सत्यं भवति। त्वं कामः ताभिः पुत्रप्रदात्रीभिः शिवाभिः तनूभिः अस्मान् यथाशास्त्रं पुत्राभिलाषिणः जीवान् अभिसंविशस्व प्रविष्टो भव। अस्माकं पापीः धियः पापस्वरूपाः बुद्धीः अन्यत्र दूरदेशे अपवेशय प्रापय। २५।

सर्पाणामिति = सर्पाणां मध्ये वासुकिः सर्पराजः अहमस्मि॥ २८॥

सर्पाणामस्मि वासुकिः ॥२८॥

सर्प are different from नाग

"नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।

नम इति = ये के च सर्पाः सर्पन्ति उरसा गच्छन्ति ते सर्पाः उरगाः पृथिवीम् अनुव्यवस्थिताः सन्ति ये च अन्तरिक्षे आकाशे ये च दिवि प्रकाशमये प्रदेशे वासुकि रूपतया व्यवस्थिताः सन्ति तेभ्यः वासुकिसहितेभ्यः सर्पेभ्यः नमः नमस्कारोऽस्तु।

अनन्त इति = नागानां मध्ये अनन्तः शेषनागः अहमस्मि। यादसां जलचरजीवानां मध्ये वरुणः अहमस्मि।

अनन्तश्चास्मि नागानां वरुणो यादसामहम्।

"वरुणोऽपामधिपतिः स मामवतु" अथ० ५।२४।४॥

वरुण इति = अपां जलानां जलचराणां च अधिपतिः वरुणः = वृणोतेः = वृणोति सर्वं जगत् इति वरुणः अस्ति स वरुणः माम् यजमानं जीवात्मानम् अवतु रक्षतु।

पितॄणामिति = पितॄणां मध्ये अर्यमा अहमस्मि। संयमवतां दुष्टनिग्रहं कुर्वतां मध्ये यमः अहमस्मि ॥२९॥

पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥

१ "सोऽर्यमा स वरुणः स रुद्रः स महादेवः ॥ अथ० १३।४।४॥

२ "यमः परोऽवरो विवस्वान् ततः परं नाति पश्यामि किञ्चन। यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान" ॥ अथ० १८।२।३२॥

३ "त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देव भाजयुः ॥ ऋ० २।१।४॥

४ "स उ एव महायमः। अथ० १३।४।५॥

१ स इति = स परमात्मा अर्यमा पितॄणां नियन्ताऽस्ति। स वरुणः, स परमात्मा एव रुद्रः, स एव महादेवः।

२. यम इति = यमः संयमतामपि नियन्ता यमः परः सर्वेभ्यः नियन्तृभ्यः उत्कृष्टः अस्ति। विवस्वान् विविधलोकानां वासकः संनियन्ता सूर्यः अवरः अल्पशक्तिकः अस्ति। ततः परं यमात्परं किञ्चन किमपि नातिपश्यामि नावलोकयामि, मे मम अध्वरः यज्ञात्मकसंबन्धः अधिनिविष्टः प्रविष्टः अस्ति। विवस्वान् सूर्यः भुवः लोकान् अन्वाततान स्वनियन्तुः ईश्वरस्य आज्ञया स्वस्वस्थाने स्थापयति।

प्रह्लाद इति = दैत्यानां मध्ये अहं प्रह्लादः अस्मि।

प्रह्लादश्चास्मि दैत्यानाम् ॥

"तस्याः विरोचनः प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम्। अथ० ८।१०(४)।२॥ V.V.R.9. ८।२३।२

तस्या इति = तस्याः दैत्यसृष्ट्याः मध्ये विरोचनः = "यद्यपि विरोचनः प्रह्लादपुत्र आसीत् तद्ग्रहणेन तातिता प्रह्लादः गृह्यते"—

विरोचन: विशेषेण रोचमान: प्रकाशमान: प्रह्लाद: प्राह्लादि: प्रकर्षेण भगवद् भक्त्याऽऽनन्दकाने भक्त: प्रह्लाद वत्स: प्रिय: भक्त: आसीत् अस्ति।
अयस्पात्रम = अयस: तेजस: प्रकाशस्वरूपस्य परब्रह्मण: पात्रं अधिकारी भूत्वा पात्रं स्ववंशाश्रय: अस्ति।
काल इति = कलयतां शुभम् अशुभं क्षणादिभेदादिं कलयतां मध्ये काल: अहमस्मि।

"काल: कलयतामहम्।

"सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्ष:। स इमा विश्वा भुवनान्यञ्जत् काल: स ईयते प्रथमो नु देव:। अथ० १९।५३।२॥
सप्तेति = एष: काल: सप्त संख्याकान् चक्रान् चक्रवद्गतिशीलान् ऋतून् वहति धारयति प्रेरयति वा। अस्य कालस्य सप्त नाभी: सप्तलोका: नाभिस्थानभूता: सन्ति। काल: अक्ष: व्याप्त: अमृतं मरणधर्मरहितोऽस्ति। स: सर्वसंहारकारी काल: इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि लोकान् अञ्जत् व्याप्य वर्तते स एव काल: प्रथम: मुख्य: देव: ईयते भक्तै: भक्त्या ज्ञायते।
मृगाणामिति = मृगाणां वन्यपशूनां मध्ये मृगेन्द्र: सिंह: अहमस्मि। पक्षिणां विहगानां मध्ये वैनतेय: सुपर्ण: गरुत्मान् वा अहमस्मि।३०

मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्।३०॥

"महिषो मृगाणाम्। ऋ० ९।९६।६

स सुपर्णो गरुत्मान्। अथ० ९।१०।२८॥ ऋ० १।१६४।४६"

महिष इति = स परमात्मा मृगाणां वन्यपशूनां मध्ये महिष: महान् सिंह: अस्ति।
महिषशब्दस्य महत्सु पाठ: (निघ० ३।७)
स इति = स परमात्मा सुपर्ण: सुपतनशील: गरुत्मान् गरुड: अस्ति।
पवन इति = पवतां पावनकर्तॄणां मध्ये पवन: वायु: अहमस्मि।

"पवन: पवतामस्मि।

वायुरेना: समाकरत्। अथ० ६।१४१।१"

यद्वा = वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम्। अस्मे वृद्धा असन्निह। ऋ० १।३८।१५"
यद्वा = वायुरन्तरिक्षस्याधिपति: स मां भवतु। अथ० ५।२४।८॥
वायुरिति = वायु: पवतां मध्ये पवन: वायु: एना: एनांसि पापानि समाकरत् दूरे प्रक्षिप्तवान्।
यद्वा = वन्दस्वेति = हे जीवात्मन्। त्वं त्वेषं स्वपावकत्वेन प्रकाशमानं पनस्युं पन: स्तोत्रं आत्मन इच्छति इति पनस्यु: तं पनस्युं स्तुतियोग्यं, अर्किणम् अर्कोऽस्यास्तीति अर्की, "अत इनिठनौ" तम् अर्किणम् अर्चनोपेतम् मारुतं मरुत्सम्बन्धिनं गणं वायुगणं वन्दस्व नमस्कुरु। अस्मे = अस्माकं

इह नमस्कारकर्मणि वृद्धाः आसन् वायवः प्रवृद्धा भवन्तु। मरुत् = मितं निर्मितं अन्तरिक्षं प्राप्य रौति शब्दं करोति इति मरुत्, यद्वा अमितं भृशं शब्दं करोतीति मरुत्। यद्वा मितं स्वैर्निर्मितं मेघं प्राप्य विद्युदात्मना रोचमानः, अथवा "महति अन्तरिक्षे द्रवतीति मरुत्। वन्दस्व = वदि अभिवादनस्तुत्योः। पनस्युः = पनः स्तुत्यर्थो धातुः। असुन् प्रत्ययः। "सुप आत्मनः क्यच्" — "क्याच्छन्दसि" इत्युः प्रत्ययः। आर्कीणम = ऋच स्तुतौ। असन = 'बहुलं छन्दसि' इति शपो लुगभावः। "इतश्च — लोपः" इतीकारलोपः।*

राम इति = शस्त्रभृतां शस्त्रधारिणां मध्ये रामः श्रीरामचन्द्रः यद्वा परशुरामः अहमस्मि।

रामः शस्त्रभृतामहम्।

"वाशीमेको बिभर्ति हस्त आयसीमन्तर्देवेषु निध्रुविः॥
ऋ० ८।२९।३॥

यद्वा = तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो यामस्यन्ति शरव्यां न सा मृषा। अनुहाय तपसा मन्युना चोत दूरादव भिन्दन्त्येनम्। अथ० ५।१८।९

वाशीमिति = देवेषु अन्तः = देवानां स्वतेजसा प्रकाशमानानां शस्त्रभृतां मध्ये प्रकाशमानः निध्रुविः सर्वदा गच्छन् अथवा संग्रामेषु शत्रूणां पुरतोऽतिशयेन स्थैर्यवान् एकः परशुरामः अथवा रामचन्द्रः आयसीं अयोमयधारां वाशीं = "वाशृ शब्दे" शब्दयति आक्रन्दयति शत्रून् अनया इति वाशी लक्षणसाधनं कुठारः तां वाशीं कुठारं हस्ते स्वकीये हस्ते बिभर्ति धारयति।

यद्वा = तीक्ष्णेषव इति = तीक्ष्णाः इषवः येषां तथाभूताः तीक्ष्णबाणयुक्ताः हेतिमन्तः = हेतिः अस्यास्तीति हेतिमान् ते हेतिमन्तः अस्त्रयुक्ताः ब्राह्मणाः परशुरामादयः यां शरव्यां शरप्रवाहं अस्यन्ति क्षिपन्ति, सा शरव्या मृषा मिथ्या न ~~व्यर्था~~ भवति। तपसा उत अपि च मन्युना क्रोधेन अनुहाय अनुगत्य एनं पापयुक्तं क्षत्रियं दूरात् एव भिन्दन्ति नाशयन्ति।

झषाणामिति = झषाणां मत्स्यानां जलचरजीवानां ~~वा~~ मध्ये मकरः ग्राहः चाहमस्मि।

झषाणां मकरश्चास्मि।

शिंशुमारा अजगराः पुरीकया जषा मत्स्या रजसा येभ्यो अस्यसि। न ते दूरं न परिष्ठास्ति ते भव सद्यः सर्वान् परि पश्यसि भूमिं पूर्वस्माद्धंस्युत्तरस्मिन् समुद्रे। अथ० ११।२।२५॥

शिंशुमारा इति = शिंशुमाराः मकराः, अजगराः सर्पविशेषाः पुरीकयाः पुरीचयाः पुरीषयाः जलचरप्राणिविशेषाः जषाः झषाः महामत्स्याः

* यद्वा = वायुरिति = अन्तरिक्षस्य आकाशस्य अधिपतिः स्वामी सर्वाकाशवर्ती वायुः अस्ति। स च परमात्मविभूतिः वायुः माम् प्राणिनम् अवतु रक्षतु।

मत्स्याः साधारणमीनाः भगवद्विभूतयः सन्ति। रजसा आत्मीयेन रजोमयेन तेजसा येभ्यः प्राणिभ्यः अस्यासि संसारे प्रक्षिपसि। हे भव! हे परमात्मन्! ते सर्वे दूरं विप्रकृष्टं नैव सन्ति। ते परिक्षा परिहृत्य स्थिताः न विद्यन्ते किन्तु त्वं सर्वान् प्राणिनः अप्राणिनश्च सद्यः सर्वदा तत्क्षणमेव परिपश्यसि परितः अवलोकयसि। तथा पूर्वस्मात् पुरोवर्त्तिनः समुद्रात् उत्तरस्मिन् उत्तरदिग्वर्तिनि समुद्रे जलधौ भूमिं सर्वां भूमिं हंसि क्षणादेव गच्छसि। हन्तिरत्र गत्यर्थकः। अतः सर्वगतस्य तव विप्रकृष्टं नैवास्ति तथा च शिंशुमारादयः विभूतयः सन्तः तव नित्यसंनिहिताः वर्तन्ते इत्यर्थः।

स्रोतसामिति = स्रोतसां स्रोतोवतीनां नदीनां मध्ये जाह्नवी गंगानदी अहमस्मि।

स्रोतसामस्मि जाह्नवी ॥ ३१॥

" ता अपः शिवा अपोऽयक्ष्मं करणीरपः। यथैव तृप्यते मयस्तास्त आदत्त भेषजीः। अथ० १९।२।५॥

ता इति = हे जीवाः! ताः गंगाः अपः जलानि शिवाः कल्याणकराः अपः जलानि कथ्यन्ते। याः आपः सलिलानि अयक्ष्मकरणीः राजयक्ष्मादिरोगाणां अनुत्पादकाः सन्ति। ते तादृशाः जलसेवकाः गंगाजलपातारः यूयं मुमुक्षवः जनाः ताः तादृशीः भेषजीः औषधिरूपाणि गंगाजलानि आदत्त गृह्णीत। यथैव येन प्रकारेण यद्वा यैः गंगाजलैः मयः सुखं तृप्यते परिपूर्यते, "औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः"।

सर्गाणामिति = हे अर्जुन! अहं सर्गाणां "सृज्यन्ते इति सर्गाः" महदादिस्थूलान्ताः विकाराः तेषामादिः मूलकारणं तथा अन्तः विनाशः कार्यपदार्थस्य लयः तथा मध्यं कार्यस्यस्थितिश्च अहं परमात्मा एवास्मि।

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।

मध्यमेतदनडुहो यत्रैष वह आहितः। एतावदस्य प्राचीनं यावान् प्रत्यङ्(क्) समाहितः। अथ० ४।११।८॥

मध्यमिति = अनडुहः अनः ब्रह्माण्डरूपं वहतीति अनड्वान् ब्रह्माण्डधारकः तस्य अनडुहः जगद्धारकस्य परमात्मनः एतत् जगद्रक्षणं मध्यं मध्यभाग एव अस्ति। यत्र यस्मिन् मध्यभागे कार्यरूपस्थिताविभावः एषः वहः विश्वभारः आहितः स्थापितः अस्ति। एतावत् मध्यभागवत् अस्य परमात्मनः प्राचीनं प्रागभावः सर्गाणामादिभागः अस्ति। यावान् प्रत्यग्भागः सर्गाणाम् अन्तः समाहितः सम्यक् स्थापितः अस्ति। अतः परमात्मा एव सर्गाणाम् आदिः अन्तः मध्यमेवास्ति।

अध्यात्मेति = विद्यानां विद्याः ज्ञानहेतवः सर्वे वेदाः शास्त्राणि च तासां विद्यानां मध्ये अध्यात्मविद्या उपनिषद्विद्या अहमेवास्मि।

अध्यात्मविद्या विद्यानाम्।

" तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते। तस्मिन् यद् यक्षमात्मन्वत् - तद्वै ब्रह्मविदो विदुः॥ अथ० १०।२।३२"

तस्मिन्निति = तस्मिन् हिरण्यये सुवर्णमये सात्विके त्र्यरे त्रयः सत्वरजस्तमो गुणाः अराः यत्र तथाभूते त्रिप्रतिष्ठिते त्रिषु वातपित्तकफेषु प्रतिष्ठा स्थितिः यस्य तथाभूते त्रिप्रतिष्ठिते कोशे देहे यत् यक्षं पूजनीयं तत्वम् आत्मन्वत् आत्मज्ञान स्वरूपमस्ति तदध्यात्म ज्ञानं "वै निश्चये" ब्रह्मविदः ब्रह्मज्ञानिनः यतयः विदुः जानन्ति।

वाद इति = प्रवदतां प्रकर्षेण विवादं कुर्वतां मध्ये वादः अर्थनिर्णय हेतुः वादः अहमेवास्मि।

~~इति~~ वादः प्रवदतामहम्॥३२॥

ज्यायस्वन्तश्चित्तिनो मा वियौष्ट संराधयन्तः सधुराश्चरन्तः। अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनस्कृणोमि। अथ० ३।३०।५

ज्यायस्वन्त इति = ज्यायस्वन्तः 'अहं ज्येष्ठः त्वं कनिष्ठः' इति विवादोत्पन्नेन ज्येष्ठकनिष्ठभावेन परस्परम् अनुसरन्तः; चित्तिनः वाक्जल्पवितण्डाभिः समानचित्तयुक्ताः समानसंसिद्धिकाः सन्तः सधुराः समानकार्योद्धारः चरन्तः वल्गु शोभनं वादं प्रियवाक्यं वदन्तः भाषमाणाः यूयम् एत आगच्छत, हे वादेन विवदमानाः जनाः! अहं वः युष्मान् सध्रीचीनान् वादकार्येषु सह प्रवृत्तान् संमनसः समीचीनमनस्कान् कृणोमि करोमि। सधुराः "ऋक्पूरब्धूःपथाम्" इत्यकारः समासान्तः। वियौष्ट = वि + यु मिश्रणामिश्रणयोः "माङि लुङ्" मध्यमबहुवचने रूपम्। इड भावश्छान्दसः। सध्रीचीनान् = सह अञ्चतीति विगृह्य अञ्चतेः = "ऋत्विग्दधृक् -" इत्यादिना क्विन्। "सहस्य सध्रिः" इति सध्र्यादेशः। "विभाषाञ्चेरदिक् स्त्रियाम्" इति स्वार्थिकः खः। ततो भसंज्ञायां "अचः" इत्यकारलोपे "चौ" इति दीर्घः।

अक्षराणामिति = अक्षराणां वर्णानां मध्येऽहम् अकारोऽस्मि।

अक्षराणामकारोऽस्मि।

" येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः। अथ० २०।३४।४"

येनेति = येन परमात्मना इमा इमानि विश्वा विश्वानि च्यवना च्यवनानि गतिशीलानि स्थावरजंगमानि विनश्वराणि कृतानि निर्मितानि। कः = सः कः असि। यः परमात्मा दासम् उपक्षयशीलं विनश्वर स्वभावं पुनः पुनरुच्चारणीयम् - अधरम् = अः अकारः धरः धारकः यस्य तथाभूतं वर्णम् अक्षरसमूहं गुहा - गुहायां हृदयाकाशे उत्पादयति। यथा चोपनिषद्युक्तम् = "अकारो वै सर्ववाक्"। तथा कामधेनुतंत्रेऽपि = " शृणु तत्त्वमकारस्य अतिगोप्यं वरानने। शरच्चन्द्रप्रतीकाशं पञ्चकोशमयं सदा॥१॥

पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम्। निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्तिमान्। बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणीम्॥२॥

द्वन्द्व इति = सामासिकस्य समाससमूहमध्ये द्वन्द्वः द्विपदप्रधानत्वात् द्वन्द्वः समासोऽहमस्मि।

द्वन्द्वः सामासिकस्य च।

" को विराजो मिथुनत्वं प्रवेद"। अथ० ८।९।१०॥

क इति = विराजः विराट् पुरुषस्य परमात्मनः मिथुनत्वं द्वन्द्वत्वं कः प्रवेद प्रकर्षेण जानाति।

अहमिति = अहं परमात्मा अक्षयः अविनश्वरः कालः अस्मि।

अहमेवाक्षयः कालः।

१ " कालो ह सर्वस्येश्वरो यः पिता सीत् प्रजापतेः। अथ० १९।५३।८॥

२ यद्वा = कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम्॥ अथ० १९।५३।९॥

१ काल इति = यः परमात्मा प्रजापतेः प्रजापालकस्य सूर्यादिदेवस्य पिता जनकः उत्पादकः उपादानकारण आसीत् अस्ति। स कालः कालाख्यः परमात्मा ह=एव सर्वस्य समग्रब्रह्माण्डस्य ईश्वरः स्वामी अस्ति। यथा च नृसिंहतापि० उप० खं० ४ श्रु० २२ = "यो हवै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमो-नमः॥

धातेति = विश्वतोमुखः सर्वतोमुखः धाता सर्वेषां धारकः पालको वाऽहमस्मि॥३३॥

धाताऽहं विश्वतोमुखः॥३३॥

१ " स धाता स विधर्ता। अथ० १३।४।३॥

२ यद्वा = सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। ऋ० १०।१९०।३॥

३ यद्वा = " धाता विधाता भुवनस्य यस्पतिः। अथ० ५।३।९॥ ऋ० १०।१२८।७॥

१ स इति = सः परमात्मा धाता सर्वेषां कर्मफलप्रदाता धारकः पालकश्च, स परमात्मा विधर्ता विशेषेण प्रकारेण धारयिताऽस्ति।

२ यद्वा - सूर्या इति = धाता सृष्टिकर्ता परमात्मा सूर्याचन्द्रमसौ यथापूर्वं पूर्वकल्पवत् अकल्पयत् विरचयति।

मृत्युरिति = सर्वहरः सर्वेषां स्थावरजंगमानां पदार्थानां हर्ता विनाशकः मृत्युः अहमस्मि। भविष्यतां भाविनां कार्याणां मध्ये उद्भवः जन्मकारणम् अहमस्मि।

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।

१ " स एव मृत्युः"। अथ० १३।४।२५॥

२ " अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न (आरोहाथा- इति यजुषि) आसीदथा नो वर्धया रयिम्। ऋ० ३।२९।१०॥ यजु० ३।१४॥

१ स इति = सः परमात्मा मृत्युः सर्वहरः मृत्युः अस्ति।

२ अयमिति = हे अग्ने! हे अग्निवत् जीवात्मन्! ते तवजीवात्मनः योनिः -

जन्मकारणम् ऋत्वियः सर्वव्यापकः ऋत्वनुकूलः वा अयं परमात्माऽस्ति। यतः यस्मात् परमात्मनः जातः मनुष्यजन्मनि एव जातः उत्पन्नः सन् त्वम् अरोचथाः जगति प्रकाशसे। तं परमात्मानं जानन् जानानः आरोह स्वाभ्युदयं प्राप्नुहि। हे परमात्मन्! अध = अनन्तरं नोऽस्माकं जीवानां रयिं स्वसम्बन्धि ज्ञानं वर्धय सर्वोत्कृष्टतां सम्पादय। योनिः = यु मिश्रणामिश्रणयोः "वहिश्री —" इत्यादिना नि प्रत्ययः। ऋत्वियः = "छन्दसि घस्" ५।१०।१०६ इति ऋतुशब्दात् प्राप्तेऽर्थे घस् प्रत्ययः। "सितीति पदसंज्ञा। "ओर्गुणः" इति भसंज्ञाधीनो गुणो न भवति। अरोचथाः = रुच् दीप्तौ' अस्य लङि रूपम्। 'वृधु वर्धने' — हेतुमति णिच्।

कीर्तिरिति = नारीणां स्त्रीणां मध्ये कीर्तिः श्रीः शोभा वाक् वाणी, स्मृतिः स्मरणशक्तिः, मेधा सत्यासत्यविवेकात्मिका बुद्धिः, धृतिः धैर्यम्, क्षमा क्षमता अहमस्मि ३४॥

कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

'सुमंगली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः। स्योना श्वश्र्वै प्र गृहान् विशेमान्' ॥ अथ० १४।२।२६।(~~सन्देहः~~

बृहदिति = साम्नां सामवेदमंत्राणां मध्ये यानि रथान्तरादीनि सामानि सन्ति तन्मध्ये बृहत् साम अहमस्मि।

बृहत्साम तथा साम्नाम्।

" इन्द्राय साम गायत विप्राय बृहते बृहत्। धर्मकृते विपश्चिते पनस्यवे। अथ० २०।६२।५॥ साम० ३८८। साम० १०२५। ऋ० ८।९८।१॥ निरु० ७।२॥

इन्द्रायेति = हे मुमुक्षवः जनाः! विप्राय विशिष्ट ज्ञानवते बृहते महते धर्मकृते जगदाधारकं पालकं कर्म करोतीति धर्मकृत् तस्मै धर्मकृते जगदाधारकपोषककर्मकर्त्रे विपश्चिते सर्वज्ञाय पनस्यवे स्तुतियोग्याय इन्द्राय परमैश्वर्यसम्पन्नाय परमात्मने परमस्य प्राप्तये बृहत् साम बृहन्नामकं साम गायत पठत।

गायत्रीति = छन्दसां मध्ये गायत्री छन्दः अहमस्मि।

गायत्री छन्दसामहम्।

यस्मात् पक्काद् मृतं सम्बभूव यो गायत्र्या अधिपतिर्बभूव। यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनाति तराणि मृत्युम्। अथ० ४।३५।६॥ " प्राणा वै गायत्री। यजु० १३।५४॥

नूतनः मंत्रः = ऋ० परिशिष्ट = ३३।१९ = " यो वेदादिषु गायत्री सर्वव्यापी महेश्वरः। तदुक्तं च यदा ज्ञेयं तन्मे मनः शिवसंकल्पमस्तु ॥ तथा च = " गायत्री वा इदं सर्वम् " छान्दो० ३।१२।१॥

"ब्रह्म हि गायत्री" । ताण्ड्य ब्रा० ११।११।८ ॥

यस्मादिति = यस्मात् पक्वात् परिपूर्णात् ब्रह्मण: अमृतं मुक्ति: संबभूव संभवति । य: परमात्मा गायत्र्या: स्वविभूतितत्त्वेन उत्पन्नस्य गायत्री-मंत्रस्य अधिपति: स्वामी बभूव अस्ति । यस्मिन् परमात्मनि विश्वरूपा: सकल-ज्ञानस्वरूपा: वेदा: ऋगादय: निहिता: स्थिता: सन्ति । तेन ओदनेन सर्वग्राह्य-त्वेन परमात्मना मृत्युम् अतितराणि मृत्युसागरं तराणि पारं यामीत्यर्थ: ।
य इति = य: सर्वव्यापी महेश्वर: परमात्मा वेदादिषु वेदादिसत्यशास्त्रेषु गायत्री गायत्रीस्वरूप: अस्ति । तदुक्तं = तेन ब्रह्मणा प्रोक्तं गायत्रीवचनं यदा यस्मिन् काले ज्ञेयं ज्ञातुं योग्यमस्ति तत् तस्मात् कारणात् मे मम जीवस्य मन: शिवसंकल्पं कल्याणविचारवत् अस्तु ।
मासानामिति = मासानां चैत्र वैशाखादि मासानां मध्ये मार्गशीर्ष: मास: अहमस्मि ॥

मासानां मार्गशीर्षोऽहम् ।

"सहश्च सहस्यश्च हैमन्तिकावृतू अग्नेरन्त: श्लेषोऽसि । यजु० १४।२७
सह इति = सह: मार्गशीर्ष: मास: अग्ने: सर्वप्रकाशकस्य परमात्मन: अन्त: श्लेष: विभूतिस्वरूपोऽन्तर्लग्न: असि अस्ति — "पुरुषव्यत्यय:" ।
ऋतूनामिति = ऋतूनां शिशिरादिऋतूनां मध्ये कुसुमाकर: वसन्त: अहमस्मि

ऋतूनां कुसुमाकर: ।

"अयं पुरोभुवस्तस्य प्राणो भौवायनो वसन्त: । यजु० १३।५४ ॥
अयमिति = अयं वसन्त: वसन्तर्तु: पुरोभुव: पूर्वं भवतीति पुरोभू: सना-तन: तस्य पुरोभुव: सनातनस्य परमात्मन: प्राण: प्राणस्वरूप: विभूतिस्वरूप: भौवायन: स्वसत्तास्वरूपेण स्थितोऽस्ति ।
द्यूतमिति = छलयतां छलकपटं कुर्वतां जनानां मध्ये द्यूतं द्यूतक्रिया ऽहमस्मि ।

द्यूतं छलयतामस्मि ।

1 "अजैषं त्वा संलिखितमजैषमुत संरुधम् । अविं वृको यथा मथदेवा मथ्नामि ते कृतम् । अथ० ७।५२।५ ॥
2 "त्वं मायाभिरनवद्य मायिनं श्रवस्यता मनसा वृत्रमर्दय: ॥ ऋ० १०।१४७।२ ॥
3 यद्वा = "मायाभिरिन्द्र ! मायिनं त्वं शुष्णमवातिर । विदुष्टे तस्य मेधिरा: ॥ ऋ० १।११।७ ॥
1 अजैषमिति = हे छलकर्त: पुरुष ! संलिखितं छलयतां मध्ये सम्यक्तया लिखितं अपि त्वा त्वां छलकर्तारम् अजैषम् जयामि । वृक: अरण्यश्वा अहं परमा-त्मैव जयामि । उत = अपिच संरुधम् = सर्वशुभकर्मणां संरोद्धारमपि त्वां अजैषम् जयामि । वृक: अरण्यश्वा अविं अजं यथा मथत् अजमिव मथ्नाति एवमेव ते तव छलकर्तु: कृतं छलकर्म मथ्नामि विनाशयामि ।

२ त्वामिति = हे अनवद्य! प्रशस्य! परमात्मन्! त्वं मायिनं छलं कुर्वन्तं वृत्रं पापिजनं छलिनं मायाभिः वञ्चनाभिः बुद्धिविशेषैः अवस्यता श्रवणीयं वचनमिच्छता मनसा अर्दयः अहिंसीः।

२ मायाभिरिति = हे इन्द्र! त्वं मायाभिः मायिनं छलकर्तारं शुष्णं परशोषकं पापं अवातिरः जितवानसि। मेधिरः मेधाविनः तस्य तादृशस्य ते (तादृशं त्वां) विदुः जानन्ति।

तेज इति = तेजस्विनां तेजोवतां वस्तूनां मध्ये तेजः अहमस्मि। जेतॄणां मध्ये जयः अहमस्मि। व्यवसायिनां पुरुषाणां मध्ये व्यवसायः उद्यमः अहमस्मि। सत्त्ववतां बलवतां जनानां मध्ये सत्वं बलमहमस्मि॥३६॥

"तेजस्तेजस्विनामहम्। जयोऽस्मि व्यवसायोऽस्मि सत्वं सत्ववतामहम्"॥३६॥

१ "तेजोऽसि तेजो मयि धेहि।" यजु० १९।९॥

२ यशा विश्वस्य भूतस्याहमस्मि यशस्तमः। अथ० ६।३९।३॥

३ जेता नृभि रिन्द्रः पृत्सु शूरः। ऋ० १।१७८।३॥

४ दाशुषः उपाके उद्यन्ता।

५ बलमसि बलं मयि धेहि। यजु० १९।९॥

१ तेज इति = हे परमात्मन्! त्वं तेजस्विनां मध्ये तेजः असि। तेजः प्रागल्भ्यं मयि मुमुक्षौ धेहि धारणं कुरु।

३ जेता इति = इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा पृत्सु जयकर्त्रीषु सेनासु मध्ये शूरः शौर्यगुणसम्पन्नः नृभिः = नृणाम् इत्यत्र विभक्तिव्यत्ययः जेतॄणां नृणां मनुष्याणां मध्ये जेता जयकर्ताऽस्ति।

४ दाशुष इति = हे परमात्मन्! दाशुषः दानं दत्तवतः यजमानस्य उपाके समीपे उद्यन्ता व्यवसायस्वरूपः असि।

५ बलमिति = हे परमात्मन्! त्वं बलं सत्ववतां सत्वं बलमसि। अतः बलं सत्वं मयि धेहि धारय।

वृष्णीनामिति = वृष्णीनां ज्ञानवर्षणशीलानां यादवानां मध्ये वासुदेवः सर्वदेववासकः कृष्णो वाऽहमस्मि। पाण्डवानां पाण्डुपुत्राणां युधिष्ठिरादीनां मध्ये धनञ्जयः अर्जुनः अहमस्मि।

"वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः॥

१ समिन्द्रो यो धनंजयो मयि पुष्यत यद्वसु। अथ० ३।१४।२॥

२ नूतनो मंत्रः = विद्मा हि त्वा धनञ्जयं वाजेषु दधृषं कवे। अधा ते सुम्नमीमहे। अथ० २०।२४।६॥

१ समिन्द्र इति = यः इन्द्रः परमात्माऽस्ति स एव धनञ्जयः शत्रूणां धनं जयतीति धनंजयः शत्रुधनजेता अर्जुनो वा भगवद्विभूतिरस्ति। अत एव मयि परमात्मनि वसु धनधान्यादि पदार्थजातं संपुष्यत सम्यक्तया दानेन वर्धयत।

विद्मा इति = हे कवे! क्रान्तदर्शिन्! हे परमात्मन्! वयं वाजेषु युद्धेषु दधृषं शत्रूणां धर्षकं त्वा त्वां परमात्मानं धनञ्जयं धनस्य जेतारं अर्जुनं वा हि = निश्चयेन विद्मा = जानीमहे। अधा = अथ ते त्वत्तः सुम्नं सुखम् ईमहे = इच्छामः।

मुनीनामिति = मुनीनां मननशीलानां मुनीनां मध्ये अपि व्यासः वेदविभागकर्ता ऽहमस्मि। कवीनां तत्त्वज्ञानां क्रान्तदर्शिनां मध्ये उशनाः शुक्रः कविरहमस्मि ॥३७॥

मुनीनामप्यहं व्यासः कवीनामुशना कविः॥३७॥

1 अहं कविरुशना पश्यता मा ॥ ऋ० ४।२६।१॥

2 यद्वा - "आ गा आजदुशना काव्यः। अथ० २०।२५।५॥

1 अहमिति = अहं परमात्मा उशना एतदाख्यः ऋषिः कविः क्रान्तदर्शी अहमस्मि। हे जनाः! मा मां सर्वात्मकं पश्यत॥

2 आ गा इति = काव्यः क्रान्तदर्शी यद्वा ज्ञानी उशना गाः वाणीः आ-आजत् = उत्तमे पथि चालयति।

दण्ड इति = दमयतां दुष्टशिक्षां कुर्वतां दण्डः दण्डक्रियाऽहमस्मि। जिगीषतां जेतुमिच्छतां नीतिः न्यायः अहमस्मि। गुह्यानां गोप्यानां मध्ये मौनं मननशीलत्वं तूष्णीत्वमहमस्मि। ज्ञानवतां ज्ञानिनां ज्ञानम् अहमस्मि।

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्॥३८॥

1 दण्डा इवेद् गो अजनास आसन्। ऋ० ७।३३।६॥

2 जयतामिव तन्यतुर्मरुतामेति धृष्णुया। ऋ० १।२३।११॥

3 मंत्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा। ऋ० ७।३२।१३॥

4 ब्रह्म पदवायं ब्राह्मणोऽधिपतिः। अथ० १२।५।४॥

1 दण्डा इति = गोसंचालकाः इत् एव दण्डा आसन् तथाहं परमात्मा संसारसंचालनाय दण्डोऽस्मि।

2 जयतामिति = जयतां जयिनां मरुतां मनुष्याणां तन्यतुः नीतिमयः शब्दः धृष्णुया धर्षकया वीरतया सह एति प्राप्नोति।

3 यज्ञियेषु इति = यज्ञियेषु राजकार्यादियज्ञेषु यद्वा सत्संगतियज्ञेषु अखर्वं अतीक्ष्णं सुधितं उत्तमबुद्ध्या धारितं सुपेशसं सुन्दरं मंत्रं मननशीलं गुप्तमंत्रं मौनं आदधात धारयत।

4 ब्रह्मेति = ब्रह्मज्ञानिनां ज्ञानं पदवायं ब्रह्मपदप्रापकं अस्ति। ब्राह्मणः ब्रह्मज्ञानी परमात्मा अधिपतिः तस्य अधिपतिः अस्ति।

यादेति = हे अर्जुन! यत् च अपि सर्वभूतानां सर्वेषां

आकाशादीनां बीजं उत्पत्तिकारणं तदेव अहमस्मि। मया परमात्मना विना भूतं चराचरं जंगमस्थावरात्मकं यद्वस्तु स्यात् तत् नास्ति। ३९।

यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत् स्यात् मया भूतं चराचरम्॥ ३९॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान्।
ऋ० १०।१८३।३॥

अहमिति = अहं परमात्मा एव ओषधीषु शाल्यादिधान्येषु पुष्पफलोत्पत्त्यर्थं गर्भं बीजं अदधाम धारयामि (कालव्ययः)। विश्वेषु सर्वेषु भुवनेषु भूतजातेषु अन्तर्मध्ये अहमेव गर्भं बीजम् अदधाम धारयामि तथा पृथिव्यां भूम्यां प्रजाः सर्वान् जीवमात्रान् तत्तत्कर्मभिः अहम् अजनयम् जनयामि। जनिभ्यः जायाभ्यः स्वस्मात् स्वजातिम् उत्पादयित्रीभ्यः अपरीषु अन्यासु अपि उत्पादकशक्तिमतीषु जातिषु पुत्रान् सन्ततीः अहमजनयम् उत्पादयामि। निमित्तभूतेन मया सर्वं वस्तुजातं उत्पाद्यते। अतः अहं सर्वपदार्थ हेतुरस्मि॥ यथा बृहदा० १।४।५= सोऽवेदहं वाव सृष्टिरस्मि अहं हीदं सर्वमसृक्षीति।

नान्त इति = हे परंतप! हे अर्जुन! मम परमात्मनः दिव्यानां दीव्यति क्रीडति इति दिव्या त्रिगुणात्मिका प्रकृतिः ततो जाताः दिव्याः तासां दिव्यानां विभूतीनां अन्तः नास्ति। प्रकृतिविकारानन्त्यात् मद्विभूत्यानन्त्यमस्ति। मया परमात्मना एषः संप्रति उपदिश्यमानः विभूतेः विस्तरः उद्देशतः संक्षेपेण प्रोक्तः कथितः॥४०

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया॥ ४०॥

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यैतावती महिम्ना संबभूव। ऋ० १०।१२५।८॥ अथ० ४।३०।८॥

अहमिति = अहं परमात्मैव विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणो बीजरूपेण अहमेव परमात्मा उत्पादयन् सहायरहित एव प्रवामि प्रवर्ते। तत्र दृष्टान्तः = वात इव वातः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वदहमेव स्वेच्छया बीजरूपत्वात् प्रवामि। परो दिवा = परस् सकारान्तः शब्दः। अधस = अधस्तात् इति शब्दवत्। परः परस्तात् इत्यर्थो भवति। अधस्तात् इव परस्तात् शब्दयोगेऽपि तृतीया। दिवा - आकाशेन परस्तात्। एना पृथिव्या - "द्वितीया टौस्स्वेनः" इति इदमः एनादेशः। "सुपां सुलुक्" इति तृतीयायाः आच् आदेशः। एना पृथिव्या

परः परस्तात्। द्यावापृथिव्योरुपादानम् उपलक्षणम्। एतदुपलक्षितात् सर्वस्मात् विकारजातात् परस्तात् वर्तमानोऽहं चैतन्यस्वरूपं ब्रह्म महिना महिम्ना माहात्म्येन एतावती एतावान् महान् बीजरूपोऽस्मि। आत्मभाष्य - एतावती द्वयोः लिङ्गव्यत्ययः। एतावत् = एतच्छब्दात् "यत्तदेतेभ्यः" इति वतुप्। "आ सर्वनाम्नः" इत्यात्वम्।

यद्यदिति = यत् यत् सत्वं चेतनमचेतनं वा वस्तु विभूतिमत् समृद्धिमत् वा श्रीमत् शोभनम् ऊर्जितं तपोभिर्महत्तरं दृश्यते, हे अर्जुन! त्वं तत् तत् एव वस्तु मम परमात्मनः तेजोंऽशसम्भवं तेजयति प्रकाशयति इति तेजः शक्तिः तस्याः अंशः कला, स एव संभवः उत्पत्तिकारणं यस्य तत् मम परमात्मनः तेजोंऽशसम्भवं अवगच्छ निश्चिनुहि जानीहि ॥४१॥

यद् यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥४१॥

सो अंगिरोभिरंगिरस्तमो भूद् वृषा वृषभिः सखिभिः सखा सन्। ऋग्मिभिऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥ ऋ० १।१००।४॥

यद्वा = कृष्णं त एम रुशतः पुरो भाश्चरिष्णवर्चिर्वपुषामिदेकम्। ऋ० ४।७।९

स इति = अंगिरोभिः सप्तम्यर्थे तृतीया। अंगिरःसु = अंगन्ति सर्वेषु कार्येषु प्रधानतां गच्छन्ति इति अंगिरसः सर्वकार्यप्रधानाः तेषु अंगिरःसु मध्ये अंगिरस्तमः प्रधानाग्रेसरः योऽस्ति स मम विभूतिरस्ति। तथा वृषभिः - सप्तम्यर्थे तृतीया। वृषेषु धर्मात्मसु वृषा धर्मात्मा योऽभूत् भवति। सखिभिः - सप्तम्यर्थे तृतीया। सखिषु मित्रेषु सखा हितकारी सन् यः वर्तते। ऋग्मिभिः = सप्तम्यर्थे तृतीया। ऋग्मिषु स्तोतृषु मध्ये ऋग्मी स्तोता परमभक्तः यः अतिगातुभिः - सप्तम्यर्थे तृतीया। गातृषु गायकेषु मध्ये यः ज्येष्ठः भगवद्विभूतिस्वरूपोऽस्ति एवंविधविभूतिस्वरूपः मरुत्वान् सर्वात्मस्वरूपः इन्द्रः परमविभूतिमान् परमात्मा नः अस्माकं ऊती रक्षकः अस्ति। अंगिरोभिः = अगि रगि लगि गत्यर्थाः। "अंगिरा अप्सराः" (उणा० ४।२३५) इत्यौणादिकोऽसुन् प्रत्ययः निपात्यते। ऋग्मिभिः = ऋच स्तुतौ" संपदादिलक्षणो भावे क्विप्। मत्वर्थीयो मिनिः। पदत्वात् कुत्वं जश्त्वं च। गातुभिः = "गा स्तुतौ"। कमिमनिजनीत्यादिना कर्मणि 'तु' प्रत्ययः। मरुत्वान् 'झयः' इति मतुपो वत्वम्।

यद्वा = कृष्णमिति = हे परमात्मन्! तं कृष्णम् एम = वयं तव कृष्ण स्वरूपं शरणं प्राप्नुमः। कीदृशं स्वरूपम्? यस्य परमप्रकाशस्वरूपस्य शोभा भक्ताना मग्रे शोभते। पुनः "चरिष्णवर्चिः" यस्य तेजसः विस्फुलिंगः वपुषां शरीराणां इदमेकम् एकमेव विभूतेः मुख्यकारणम्।

अथवेति = हे अर्जुन! तव मुमुक्षोः बहुना बहुविधेन अनेन मद्विभूतिविषयकेण ज्ञानेन किं प्रयोजनं स्यात्। अहं परमात्मा कृत्स्नं

सर्वं स्थावरजंगमात्मकं इदं जगत् एकांशेन एकभागमात्रेण विष्टभ्य सर्वतो व्याप्य स्थितोऽस्मि ॥४२॥

इतिश्री जगन्नाथ शास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां दशमोऽध्यायः समाप्तः ॥१०॥

अथवा बहुनैतेन किं ज्ञानेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः समाप्तः ॥१०॥

"एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि। साम० ध्रुवगा० ११०७।३॥ अथ० १९।६।३॥ यजु० ३१।३॥

एतावानिति = यत् इदं देवतिर्यङ् मनुष्यात्मकं अतीतानागतवर्तमानम् अस्तिरूपं यावत् जगत् अस्ति, एतावान् सर्वोऽपि अस्य परमपुरुषस्य परब्रह्मणः महिमा महत् कर्म स्वकीय सामर्थ्यविशेषः इदं तु न तस्य वास्तवं स्वरूपम्। अतो महिम्नो यथोक्तात् मर्त्यामर्त्यलक्षणात् कार्यवर्गात् पुरुषः परमात्मा ज्यायान् अतिशयेन अधिकः वृद्धतरः अस्तीति भावः। विश्वा = विश्वानि सर्वाणि भूतानि कालत्रयवर्तीनि प्राण्यप्राणिजातानि अस्य परमात्मनः पादः चतुर्थांशः लेशो वा। अस्य परमात्मनः अवशिष्टं त्रिपाद अंशत्रयात्मकं स्वरूपं अमृतम् अमरणधर्मकं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे अवतिष्ठते।

इति श्री सारस्वतान्वय लेयावरत्तव्यन्यायभूषण जगन्नाथ शास्त्रि कृतायां वेदगीतार्थबोधिन्यां दशमोऽध्यायः समाप्तः ॥१०

अथैकादशोऽध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीतावचोऽमृतम्।
तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युद्धार्णवम्।
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥

अर्जुन उवाच = मदनुग्रहायेति = मदनुग्रहाय मम अनुग्रहाय कृपाकरणाय यत् अध्यात्मसंज्ञितम् आत्मनः नित्यत्वप्रकाशकं परमम् अत्युत्कृष्टं गुह्यं गोप्यं यद्वचः यद्वचनं त्वया श्रीमता श्रीकृष्णेन उक्तम् उपदिष्टम्। तेन यथार्थस्वरूपप्रकाशकेन वचसा मम शिष्यभूतस्य अर्जुनस्य अयं भ्रातृमातुलप्रभृतिरागमयः मोहः विगतः विशेषेण नाशं गतः।
भवाप्ययाविति = हे कमलपत्राक्ष! हे कमलपत्रनेत्र! यद्वा कं ब्रह्मसुखं स्वरूपानन्दः तम् अलति प्रकाशयति इति कमलं आत्मज्ञानं यत् तदेव पतनात् त्रायते इति पत्रम्। कमलञ्च तत्पत्रञ्च कमलपत्रं तेन अक्ष्यते प्राप्यते इति तत्सम्बुद्धौ हे कमलपत्राक्ष! ज्ञानैकगम्य! हे परमात्मन्! हे यस्मात् कारणात् त्वत्तः त्वत्परमात्मसकाशात् भूतानां आकाशादिपदार्थानां भवाप्ययौ = भवः आविर्भावः, अप्ययः तिरोभावः मया अर्जुनेन विस्तरशः विस्तरेण श्रुतौ आकर्णितौ। अव्ययं व्ययरहितं माहात्म्यं महान् सर्वव्यापकः आत्मा स्वरूपं यस्य स महात्मा तस्य भावः माहात्म्यं सार्वात्म्यं चकारात् सर्वेश्वरत्वं त्वत्तः श्रुतम्।
एवमेतदिति = हे परमेश्वर! हे परमात्मन्! त्वं आत्मानम् आत्मस्वरूपं यथा येन प्रकारेण आत्थ आख्यातवान् असि। एतत् एवमेवास्ति। हे पुरुषोत्तम! हे पुरुषश्रेष्ठ! ते तव पुरुषोत्तमस्य परमात्मनः ऐश्वर्यं सर्वसामर्थ्योपेतं रूपं स्वरूपं द्रष्टुं निरीक्षितुम् इच्छामि।३८

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम॥१॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष! माहात्म्यमपि चाव्ययम्॥२॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम॥३॥
(वेदमन्त्रा न लभ्यते)

मन्यसे इति- हे प्रभो हे स्वामिन्! तत् एव स्वरूपं मया शिष्येण अर्जुनेन द्रष्टुमवलोकयितुं शक्यम् इति यदि त्वं श्रीकृष्णः मन्यसे जानासि, हे योगेश्वर! योगः कर्मयोगः ज्ञानयोगश्च उपासनायोगश्च तेषामीश्वरः तत्सम्बुद्धौ हे योगेश्वर! ततो मे मह्यं त्वम् अव्ययं

विनाशरहितं आत्मानं स्वस्वरूपं दर्शय निरीक्षय ॥४॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर! ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

(वेदमंत्रो ऽत्र लभ्यते)

~~आविष्कृणुष्व रूपाणि मात्मानमपगूहथाः। अथो सहस्रचक्षो! त्वं प्रतिपश्याः किमीदिनं~~

आविष्कृणुष्व रूपाणि माऽऽत्मानमपगूहथाः। अथो सहस्रचक्षो त्वं प्रति पश्याः किमीदिनः। अथ० ४।२०।५॥

आविष्कृणुष्वेति = हे सहस्रचक्षो! हे सर्वतोद्रष्टः परमात्मन्! त्वं स्वस्वरूपं यदि मया द्रष्टुं शक्यं मन्यसे तर्हि रूपाणि स्वस्वरूपं आविष्कृणुष्व प्रकटीकुरु। आत्मानं स्वस्वरूपं मा अपगूहथाः मा पिधेहि। अथो अपि च त्वं ममोपदेष्टा परमात्मा किमीदिनः किमिदानीं किमिदानीमिति वासनामयं मम मनः प्रतिपश्याः अवलोकय ॥५॥

श्रीभगवानुवाच – पश्येति = हे पार्थ! हे अर्जुन! मे परमात्मनः दिव्यानि प्रकाशमयानि नानावर्णाकृतीनि नानावर्णानि नानाकाराणि नानाविधानि नाना प्रकाराणि शतशः सहस्रशः असंख्यातानि अथ इदानीमेव पश्य अवलोकय। हे भारत! हे अर्जुन! मयि आदित्यान् वसून् रुद्रान् अश्विनौ मरुतः पश्य। तथा तेनैव प्रकारेण बहूनि असंख्यातानि अदृष्टपूर्वाणि पूर्वं केनाप्यदृष्टानि आश्चर्याणि अद्भुतानि रूपाणि पश्य निरीक्षस्व ॥५-६॥

श्रीभगवानुवाच = पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि। एता जुषत मे गिरः। ऋ० १।२५।१८

दर्शमिति = हे जीवात्मन्! विश्वदर्शतं विश्वैः सर्वैः दर्शतं दर्शनीयं मदनुगृहार्थं सर्वत्राविर्भूतं मम परमात्मनः स्वरूपं नु = खलु दर्शं पश्य। लोटि लिङादेशः। क्षमि = क्षमायां पृथिव्यां रथं नानावर्णान् आदित्यादिकानां देहान् अधि आधिक्येन दर्शं पश्य। एता उच्यमानाः मे मम परमेश्वरस्य गिरः वचनानि जुषत पालयत। दर्शम् = "दृशेरिरितो वा" इति च्लेरङादेशः। "ऋदृशोऽङि गुणः" इति गुणः। विश्वदर्शतम् = "दृशेः "भृमृदृशि –" इत्यादिना औणादिकः अतच् प्रत्ययः। क्षमि = "आतो धातोः" इत्यत्र आतः इति योगविभागात् आकारलोपः ॥६॥

इहेति = हे गुडाकेश! हे अर्जुन! इह अस्मिन् मम देहे विराड्देहे सचराचरं चराचरसहितं एकस्थं एकस्मिन् स्थाने वर्तमानं कृत्स्नं समग्रं

जगत् अद्य पश्य अवलोकय। यत् च एतद्भिन्नं शत्रुपराजयं यत् द्रष्टुमिच्छसि अभिलषसि तदपि मम देहे पश्य।७॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि॥७॥

अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना। ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि॥ ऋ० ८।१००।४॥

अयमिति = हे जरितः! हे स्तोतः जीवात्मन्! अयमहं परमात्माऽस्मि। इह मद्विराट्स्वरूपे मा मां पश्य अवलोकय। अहमेव विराट्स्वरूपोऽहमेव विश्वा विश्वानि जातानि चराचराणि भूतजातानि मह्ना महत्वेन परमेश्वरत्वेन अभ्यस्मि अभिभवामि। मा मां परमात्मानं ऋतस्य सत्यस्वरूपस्य प्रदिशः प्रदेष्टारो विद्वांसः वर्धयन्ति स्तोत्रैर्वर्धयन्ति। अपि च आदर्दिरः सर्वं रादरणशीलोऽहं भुवना-भुवनानि लच्छगुभूतानि दर्दरीमि भृशं विदारयामि अर्थात् सर्वान् स्वकीयान् नाशभूतान् शत्रून् मयि पश्य।

नत्विति = हे अर्जुन! त्वम् अनेनैव स्वचक्षुषा प्राकृतदेहस्थेन अनेन चर्ममयेन नेत्रेण मां दिव्यं द्रष्टुम् अवलोकयितुं न शक्यसे न शक्नोषि। अतः ते तुभ्यं दिव्यं अप्राकृतं तेजोमयं चक्षुः नेत्रं ददामि यच्छामि। यच्चक्षुषा मां द्रष्टुं ईश्शो तेन चक्षुषा मे मम ऐश्वरम् ईश्वरसम्बन्धिनं योगं-स्वरूपं पश्य अवलोकय।८।

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्॥८॥

इमां नु कवितमस्य मायां मह्नीं देवस्य नकिरादधर्ष। एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्॥ ऋ० ५।८५।६॥

यद्वा = आपश्यति प्रतिपश्यति परापश्यति पश्यति। दिवमन्तरिक्षमाद्भूमिं सर्वं तद्देवि पश्यति। अथ० ४।२०।१॥

इमामिति = हे जीवात्मन्! कश्चिज्जनः चर्मचक्षुषा कवितमस्य प्रकृष्ट-प्रज्ञस्य देवस्य द्योतमानस्य परमात्मनः इमां प्रसिद्धां विराट्स्वरूपां मह्नीं महतीं मायां दिव्यशक्तिमतीं तनुं नकिः नैव आदधर्ष नैवधारयितुं द्रष्टुं वा शक्नोति। ऊ, नु इति पादपूरणौ। यत् यस्मात् कारणात् एकं परमात्मस्वरूपदर्शनात्मकं कर्म उद्ना = जलात्मकेन नेत्रेण न पृणन्ति-न पूरयन्ति। एनी एन्यः शुभ्राः सत्कर्मणि गमनशीलाः आसिञ्चन्तीः स्नेहात्मकेन दिव्यनेत्रेण आसिञ्चन्त्यः अवनयः भगवद्भक्तिपात्रभूताः भक्तजनाः समुद्रं परमेश्वरं समुद्रवन्ति एनं चराचराणि भूतानि इति इति समुद्रः परमेश्वरः तं समुद्रं परमेश्वरं पृणन्ति भक्त्या पूरयन्ति प्रसादयन्तीत्यर्थः॥

अपश्यतीति = दिव्यदृष्टिः जनः तत् सर्वं दिव्यं सर्वं पदार्थं आसमन्तात् पश्यति प्रतिपश्यति दिव्यं पदार्थं प्रति दिव्यदृष्ट्या पश्यति, परापश्यति दूरादूरतरं पश्यति, पश्यति सच दिवं द्युलोकं अन्तरिक्षं तथा भूमिं इत्यादिस्थं सर्वं पदार्थं पश्यति। "संजय उवाच" =

एवमिति = हे राजन्! धृतराष्ट्र! महायोगेश्वरः = योगो मायातस्य ईश्वरः अधिपतिः योगेश्वरः - महांश्चासौ योगेश्वरः महायोगेश्वरः हरिः = हरति पापानीति हरिः परमात्मा, ततः पुनः एवं पूर्वोक्तवचनं उक्त्वा कथयित्वा पार्थाय अर्जुनाय बहुमुखं बहुनयनं अनेकानि ~~दिव्यानि~~ असंख्यानि आश्चर्यकराणि दर्शनानि यस्य तथाभूतम्। अनेकानि दिव्यानि प्रकाशमानानि आभरणानि भूषणानि यस्य तथाभूतम्। दिव्यानि अतिप्रकाशवन्ति अनेकानि उद्यतानि उद्धृतानि आयुधानि चक्रादीनि यस्य तथाभूतम् दिव्यानेकोद्यतायुधम्। दिव्यस्रग्वस्त्रधारकं दिव्यगन्धलेपयुक्तं सर्वाश्चर्यस्वरूपं विश्वतोमुखं सर्वतोमुखं अनन्तं अपरिच्छिन्नं देवं ज्योतिःस्वरूपं ऐश्वरं ईश्वरसम्बन्धि परमम् अत्युत्कृष्टं रूपं स्वरूपं दर्शयामास। ९, १०, ११॥

सञ्जय उवाच = एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः।

दर्शयामास पार्थाय परमं रूपमैश्वरम्॥९॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।

अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्॥१०॥

दिव्यमाल्याम्बरधरं दिव्यगंधानुलेपनम्।

सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्॥११॥

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वतो विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्। ऋ० अष्ट० ८ अध्या० ४ व० १७ मं० १ यजु० ३१।१ ऋ० १०।९०।१॥

सहस्रशीर्षा इति = सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा सहस्रशब्दस्य उपलक्षणत्वात् अनन्तैः शिरोभिः युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयानि एवेति सहस्रशीर्षत्वम्, सहस्राक्षित्वम् सहस्रपादत्वम्। स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशांगुलं दशांगुलपरिमितं देशम् अत्यतिष्ठत् - अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्य अवस्थित इत्यर्थः।

दिवीति = दिवि आकाशे युगपत् समकालमेव सूर्यसहस्रस्य सूर्याणां सहस्रस्य युगपदुत्थिता समकालमेवोदयं प्राप्ता भाः प्रकाशः यदि भवेत् सा प्रभा तस्य महात्मनः परमात्मनः भासः प्रकाशस्य

सदृशी समानरूपा स्यात् ॥१२॥

तत्रेति = तदा तस्मिन् समये पाण्डवः अर्जुनः देवदेवस्य देवानां प्रकाशकस्य श्रीकृष्णस्य तत्र तस्मिन् शरीरे देहे एकस्थं एकस्मिन् स्थाने स्थितं अनेकधा प्रविभक्तं विभिन्नतया स्थितं कृत्स्नं जगत्प्रपञ्चं अपश्यत् अवालोकयत् ॥१३॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ॥१२

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥

"यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ ऋ० ८।७०।५॥ अथ० २०।८१।१॥ साम० २७८, ८६२॥ तैत्ति०सं० २, ४, १४, २॥ तैत्ति० आर० १, ७, ५॥ निरु० १३।२॥

यद इति = हे इन्द्र! हे परमैश्वर्ययुक्त परमात्मन्! ते तव परमात्मनः प्रतिमाना-र्थं यत् यदि द्यावः प्रकाशात्मकाः चन्द्रादयः पदार्थाः शतम् एकत्र शतशः स्युः एकत्रिताः स्युः तथापि न अष्ट = तव समतां न प्राप्नुवन्ति । हे शक्तिमन् हे वज्रिन्! हे शक्तिमन्। परमात्मन्! त्वा त्वां सहस्रं सूर्याः अगणिताः अपि सूर्याः न अन्वष्ट न अनुगच्छन्ति, त्वत्सदृशप्रकाशवन्तः न भवन्ति । "न तत्र सूर्यो भाति न चन्द्रतारकम् । नेमा विद्युतो भान्ति कुतोऽयमग्निः। किं बहुना, जातं प्रादुर्भूतं सर्ववस्तु नान्वष्ट न समतां प्राप्नुवन्ति । तथा रोदसी द्यावापृथि-व्यौ त्वत्समतां नाष्ट = नाप्नुवन्ति । भवान् सर्वेभ्योऽतिरिच्यते इत्यर्थः। "ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यः लोकेभ्यः" इति बृहदारण्यके ।

तत इति = ततः पुनः स धनञ्जयः अर्जुनः हृष्टरोमा पुलकिताङ्गः विस्मयाविष्टः विस्मितः सन् देवं द्योतमानं श्रीकृष्णं शिरसा मूर्ध्ना प्रणम्य नमस्कृत्य कृताञ्जलिः बद्धाञ्जलिः अभाषत अकथयत ॥१४॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु । नानाहनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः ॥ ऋ० १०।७९।१॥ निरु० ६।

अपश्यमिति = हे परमात्मन्! मर्त्यासु मनुष्यरूपासु विक्षु प्रजासु प्रजा-हृदये अमर्त्यस्य अमरणस्वभावस्य, परमात्मरूपेण वर्तमानस्य अस्य परमात्मनः महतो महनीयस्य महित्वं विराट्स्वरूपं अपश्यम् पश्यामि । अस्य परमात्मनः नानाहनू नाना मुखानि विभृते विभिन्नतया स्थिते सती संभरेते संभरतः जगद्भक्षणं कुरुतः। ते भावतः इन्दु प्रातः सूर्यम्-

इत्युभयकालौ असिन्वती असंखादयन्त्यौ स्वयं भोजनरहिते सती वप्सती स्तोतारं स्वस्मिन् गृहीतवत्यौ भूरि प्रभूतं यथास्यात्तथा अत्तः भक्षयतः इति पश्यामि।

पश्यामीति = हे देव! हे प्रकाशस्वरूप श्रीकृष्ण! तव देहे शरीरे भूतविशेषसंघान् भूतविशेषाः देवतिर्यगादिप्राणिविशेषाः तेषां संघान् समूहान् सर्वान् देवान् इन्द्रादिदेवान् कमलासनस्थं पद्मासने स्थितं ब्रह्माणं ईशं=शिवं ऋषीन् नारदादीन् दिव्यान् दिव्यस्वरूपान् सर्वान् उरगान् शेषादीन् पश्यामि ॥१५

अर्जुन उवाच = "पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् (संघान्)
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

" यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः। भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः। अथ० १०।७।२२॥

यद्वा = यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता। यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यर्पिताः। अथ० १०।७।१२॥

यत्रेति = यत्र यस्मिन् ब्रह्मविराड्देहे आदित्याः सूर्यादयः प्रकाशकाः लोकाः रुद्राः रुद्रा देवता वसवः अष्टौ वसुसंज्ञकाः देवाः समाहिताः सम्यक्तया स्थिताः विद्यमानाः सन्ति। यत्र यस्मिन् विराड्देहे भूतं प्रादुर्भूतं जगत् भव्यं भविष्यत् जगत् च सर्वे लोकाः सर्वे भूतविशेषसंघाः प्रतिष्ठिताः स्थिताः सन्ति। तं स्कम्भं परमात्मानं ब्रूहि कथय स कतमः स्विदेव अस्तीति।

अनेकेति = हे विश्वेश्वर! विश्वस्वामिन्! हे विश्वरूप! हे सर्वस्वरूप! अनेकबाहूदरवक्त्रनेत्रम् = अनेके बाहवः उदराश्च वक्त्राणि च यस्य तथाभूतं त्वाम् अनन्तरूपम् अनन्तानि असंख्यातानि रूपाणि यस्य तथाभूतं तं त्वां परमात्मानं पश्यामि अवलोकयामि। तव न अन्तं पश्यामि, तव न मध्यं पश्यामि, तव न आदिं पश्यामि।१६।

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप॥१६॥

अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति। कृतानि या च कर्त्वा। ऋ० १।२५।११

अतइति = चिकित्वान् प्रज्ञावान् जीवात्मा अतः अस्मिन् परब्रह्मणः विराड्देहे विश्वानि सर्वाणि अद्भुता अद्भुतानि अनेकबाहूदरवक्त्रनेत्राद्याश्चर्याणि या = यानि कृतानि आश्चर्यमयानि कर्माणि पूर्वं परब्रह्मणा कृतानि सन्ति, चकारात् अन्यानि यानि आश्चर्याणि कर्त्वा = इतः परं कर्तव्यानि भविष्याणि तानि सर्वाणि अभिपश्यति अवलोकयति। अद्भुता = "शेश्छन्दसि बहुलम्" इति शेर्लोपः। प्रत्ययलक्षणेन "नपुंसकस्य झलचः" -

इति नुम्। न लोपः। चिकित्वान् = 'कित ज्ञाने', लिटः क्वसुः। अभ्यासहलादिशेषचुत्वानि। "वस्वेकाजाद्घसाम्" इति नियमादिडभावः। "रुत्वानुनासिकाकुत्वौ संहितायाम्"। कर्त्वा = "कृत्यार्थे तवैकेन्केन्यत्वनः" इति करोतेस्त्वन्। "शेश्छन्दसि बहुलम्" इति शेर्लोपः।

किरीटिनमिति = तेजोराशिं तेजोनिधिं सर्वतो दीप्तिमन्तं प्रकाशस्वरूपं दीप्तानलार्कद्युतिं, दीप्तौ अतिशयेन ज्वलन्तौ वह्निसूर्यौ तत्सदृशद्युतिमन्तं अप्रमेयं अपरिच्छिन्नं समन्तात् सर्वतः दुर्निरीक्ष्यं दुःखेन निरीक्षितुं शक्यं किरीटिगदाचक्रयुक्तं त्वामहं पश्यामि अवलोकयामि॥१७॥

किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम्॥१७॥

"त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः। विश्वकर्मा विश्वदेवो महाँ असि॥ ऋ० ८।९८।२॥ अथ० २०।६२।६॥ साम० १०२६॥

त्वमिति = हे इन्द्र! हे परमात्मन्! त्वम् अभिभूः असि। सर्वेषां तेजसां अभिभविता असि अर्थात् सूर्यानलादितेजसोऽपि त्वम् अधिकतेजस्वी असि। त्वं सूर्यम् आदित्यम् अरोचयः स्वदत्तैः तेजोभिः अदीपयः। त्वं विश्वकर्मा विश्वं जगत् कर्म कृत्यं यस्य तथाभूतः विश्वकर्मा जगत्कर्ताऽसि। विश्वदेवः विश्वेषां वसूनां देवः उपास्यदेवः असि। अतः महान् पूज्यः महत्तरः वासि।

त्वमिति = हे इन्द्र! हे परमात्मन्! यत् अक्षरं नित्यं कूटस्थं परमम् अत्युत्कृष्टं वेदितव्यं भक्तजनैः ज्ञातव्यमस्ति तत् त्वमसि। विश्वस्य जगतः अत्यन्तं निधानं बीजं त्वमसि। अव्ययः विनाशरहितः शाश्वतधर्मगोप्ता शश्वत् भवतीति शाश्वतः वेदः तेन प्रतिपादिताः ये धर्माः ज्ञानकर्मोपासनाः सन्ति तेषां गोप्ता रक्षकः त्वमसि। सनातनः सदातनः पुरुषः अपि पुराणपुरुषोऽपि त्वं मे मतः।१८।

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे॥१८॥

उरुः कोशो वसुधानस्तवायं यस्मिन्निमा विश्वा भुवनान्यन्तः। स नो मृड पशुपते नमस्ते परः क्रोष्टारो अभिभाः श्वानः परो यन्त्वघरुदो विकेश्यः॥ अथ० ११।२।११॥

उरुः इति = हे मृड! हे सुखस्वरूप! परमात्मन्! हे पशुपते! पश्यतीति पशुः जीवः तस्य पतिः स्वामी पशुपतिः तत्संबुद्धौ हे पशुपते! हे जीवाधिपते! परमात्मन्! तव अयं विराड्देहः उरुः महान् कोशः सकलभुवननिधानम्, वसुधानः = वसूनां वसवः जीववासकाः सूर्यपृथिवीप्रभृतयः धानाः तेषु कणाः सन्ति। यस्मिन् विराड्देहे इमा इमानि सर्वतः परिदृश्यमानानि

विश्वा विश्वानि सर्वाणि भुवना भुवनानि लोकाः अन्तः मध्ये प्रविष्टाः सन्ति ते तुभ्यं परमात्मने नमः नमस्कारोऽस्तु। परःपराः अपरे क्रोष्टारः रोरुयमाणाः जीवाः शृगालादयो वा अभिमाः स्वतेजः प्रभावेण परतेजोऽभिभावकाः सिंहादयो जीवाः। श्वानः कुक्कुराः, अघरुदः = पापाचरणहेतोः रोरुयमाणाः ये दुष्टाः जीवाः सन्ति तथा परःपराः अपरे विकेश्यः केशशून्याः जीवाः सन्ति ते सर्वे त्वयि विद्यन्ते ऽतः त्वं पुरुषोत्तमोऽसि।

अनादीति = अनादिमध्यान्तम् आदिमध्यान्तहीनम् अनन्तवीर्यम् अनन्तम् अपारं वीर्यं पराक्रमः यस्य तादृशम् अनन्तबाहुम् अपरिसंख्य बाहुं शशिसूर्यनेत्रं शशी सूर्यश्च नेत्रे यस्य स शशिसूर्यनेत्रः तं तादृशं, दीप्तहुताशवक्त्रं दीप्तः प्रकाशमानः हुताशः अग्निः वक्त्रं मुखं यस्य तं दीप्तहुताशवक्त्रं स्वतेजसा स्वभासा इदं विश्वं जगत् तपन्तं प्रज्वलन्तं त्वां पश्यामि अवलोकयामि।१९।

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम्।१९।

यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः। अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥ अथ० १०।७।३३॥

यस्येति = यस्य ब्रह्मणः सूर्यः आदित्यः च तथा पुनर्नवः पुनः पुनरुत्पद्यमानः चन्द्रमाः शशी चक्षुः नेत्रे स्तः। यः परमात्मा अग्निं अनलं आस्यं मुखं चक्रे करोति तस्मै तादृशाय ज्येष्ठाय सर्वतो महते आदिमध्यान्तशून्याय ब्रह्मणे बृहत्स्वरूपाय परमात्मने नमः नमस्कारोऽस्तु।

द्यावेति = हि यस्मात् कारणात् त्वया एकेन विराडात्मना द्यावापृथिव्यो भूम्याकाशयोः अन्तरम् अन्तरालं व्याप्तम् पूर्णम्। सर्वाः प्राच्यादिकाः दिशः त्वया एकेन व्याप्ताः। चराचरात्मकं सर्वं विश्वं त्वया परिपूर्णमस्ति। हे महात्मन्! तव विश्वात्मनः तव अद्भुतं आश्चर्यकरम् उग्रं भयप्रदं इदं विराडात्मकं रूपं स्वरूपं दृष्ट्वा अवलोक्य लोकत्रयं लोकत्रये वर्तमानं प्राणिजातं प्रव्यथितं व्याकुलं भवतीति शेषः।२०॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्।२०।

"यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता। यत्राग्निश्चन्द्रमाः सूर्यो वातास्तिष्ठन्त्यर्पिताः। अथ० १०।७।१२॥

यद्वा = अग्निर्द्यावापृथिवी विश्वजन्ये आभाति देवी अमृते अमूरः।
क्षयन् वाजैः पुरुश्चन्द्रो नमोभिः। ऋ० ३।२५।३॥

यद्वा = यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः।
यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे। ऋ०१।१०१।३

१ यस्मिन्निति = यस्मिन् ब्रह्मणि भूमिः भूमिः पृथिवी अन्तरिक्षम् आकाशः यस्मिन् द्यौः प्रकाशमानाः दिशः अध्यर्पिताः व्याप्तत्वेन स्थिताः सन्ति यत्र ब्रह्मणि अग्निः प्रचण्डः अग्निः चन्द्रमाः शान्तिकरः शीतलस्वभावः शशी सूर्यः आदित्यः वातः वायुः आसमन्तात् अर्पिताः आश्रिताः सन्तः तिष्ठन्ति वर्तन्ते ॥

२ अग्निरिति = अमूरः अमूढः सर्वज्ञः क्षयन् सर्वस्य जगतः ईशानः अत एव पुरुः सर्वेभ्यः महान् चन्द्रः दीप्तस्वरूपः यद्वा पुरुश्चन्द्रः पुरु चन्द्रः बहुदीप्तस्वरूपः वाजैः बहुवेगवत्तरैः नमोभिः भक्तानां नमस्कारैः युतः अग्निः अग्निवत् सर्वत्र व्यापकः परमात्मा विश्वजन्ये विश्वस्य जनयित्र्यौ यद्वा विश्वं जन्यम् उत्पाद्यं याभ्यां ते देवी द्योतमाने अमृते मरणधर्मरहिते द्यावापृथिवी द्यावापृथिव्यौ आभाति आसमन्तात् प्रकाशयति । क्षयन् —"क्षि ऐश्वर्ये" पुरुश्चन्द्रः "ह्रस्वाच्चन्द्रोत्तरपदे — मंत्रे — इति सुडागमः । श्चुत्वेन शकारः ।

३ यस्येति = यस्य परमात्मनः महत् अत्यधिकं पौंस्यं व्याप्तिबलं द्यावापृथिवी द्यावापृथिव्योरन्तरं व्याप्य वर्तते, यस्य परमात्मनः व्रते नियमनरूपे कर्मणि वरुणः जलाभिमानी देवः अर्थात् जलं सूर्यः च वर्तते अर्थात् तदाज्ञायां सर्वे देवाः वर्तन्ते । सिन्धवः नद्यः यस्य इन्द्रस्य सर्वैश्वर्यसम्पन्नस्य परमात्मनः व्रतं आज्ञात्मकं कर्म सश्चति 'वचनव्यत्ययः' सश्चन्ति गच्छन्ति, ईश्वरेणानुशिष्टाः प्रवहन्तीति भावः । तं मरुत्वन्तं परमात्मानं सख्याय समानख्यानप्राप्तये हवामहे । सश्चतिः गतिकर्मा । तथा नृसिंहतापि० उप० ख०२ श्रु० ४ = "कस्मादुच्यते भीषणम् । यस्माद् भीषणं यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्च न बिभेति । भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चमः ।

अमीति = हे यस्मात् कारणात् अमी एते सुरसंघाः देवसमूहाः त्वां विशन्ति तव समीपं गच्छन्ति । केचित् जनाः भीताः त्वद्रूपदर्शनात् भयं प्राप्ताः सन्तः प्राञ्जलयः बद्धहस्ताः सन्तः त्वां गृणन्ति स्तुवन्ति । एतस्मिन् समये महर्षिसिद्धसंघाः महर्षियोगिवृन्दाः स्वस्ति कुशलम् अस्तु इत्युक्त्वा पुष्कलाभिः बहुभिः स्तुतिभिः स्तवनैः त्वां परमात्मानं स्तुवन्ति ।

अमी हि त्वां सुरसंघा विशन्ति केचिद् भीताः प्राञ्जलयो गृणन्ति । स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः । २१ ॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रतो उद्वंशमिव येमिरे । साम० ३४२, १३४४ । ऋ० १।१०।१ ॥

गायन्तीति = हे शतक्रतो ! हे बहुकर्मन् ! हे बहुप्रज्ञ ! हे परमात्मन् ! गायत्रिणः भवन्नामगातारः सुरसंघाः त्वा त्वां परमात्मानं गायन्ति – गानेन स्तुत्वा विशन्ति । अर्किणः अर्चनाप्रतिपादकैः मंत्रैः त्वां उपास्यमानाः महर्षिसिद्धसंघाः परमेश्वरोपासकाः त्वद्गुणगीताः अर्कम् अर्चनीयं त्वा त्वां परमात्मानं अर्चन्ति प्राञ्जलयः सन्तः पूजयन्ति प्रशंसन्ते च । ब्रह्माणः ब्रह्मणाः त्वा त्वां परमात्मानं वंशमिव स्ववंशोद्भवादिपुरुषमिव, "वंशः वनशयो भवति, वननात् श्रूयते इति वा" (निरु० ५।५।४) – उच्चतरं मन्यन्ते । गायत्रिणः गायत्रं साम येषामुद्गातॄणामस्ति ते गायत्रिणः "अत इनिठनौ" इति इन् प्रत्ययः । अर्चन्ति = "अर्कः देवो भवति – यदेनमर्चन्ति" (निरु० ५।४), अर्च पूजायाम् । अर्कमर्चन्त्येभिरित्यर्काः मन्त्राः तैः अर्चनीयतया तदात्मकः इन्द्रोऽपि लक्षणया अर्कः । "पुंसि संज्ञायां घः प्रायेण" पाणि० ३।३।११८ इतिकरणे घः । "चजोः कु घिण्यतोः" पाणि० ७।३।५२ इति चकारस्य कुत्वम् । अर्किणः = अर्काः मंत्रा ईश्वरो वा एषां सन्तीत्यर्किणः परमेश्वरोपासकाः । "एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ" पाणि० ३।२।११५ इति कृदन्तादिनिठनौ यद्यपि प्रतिषिद्धौ तथाप्यत्र व्यत्ययादिनिः । वंशमिव = इवेन समासो विभक्त्यलोपः । येमिरे = "यमु उपरमे" ।

रुद्रादित्या इति = रुद्राः एकादश रुद्रदेवताः, आदित्याः द्वादश आदित्याः, वसवः अष्टौ वसुदेवताः, तथा च ये साध्याः अन्ये विश्वे विश्वेदेवाः, अश्विनौ अश्विनीकुमारौ, मरुतः मरुत्देवताः, उष्मपाः पितरः, गन्धर्वाः यक्षाः असुराः सिद्धानां संघाः सर्वे विस्मिताः सन्तः आश्चर्यान्विताः त्वां वीक्षन्ते – अवलोकयन्ति ।

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

आदित्या रुद्रा वसवः जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः । शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः । अथ० ६।११।४ ॥ ऋ० ७।३५।१४ ॥

यद्वा = आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।
ते मा भद्राय शवसे ततक्षुः अपराजितमस्तृतम् अषाळ्हम् । ऋ० १०।४८।११

आदित्या इति = आदित्याः द्वादश आदित्याः रुद्राः एकादश रुद्राः देवताः वसवः अष्टौ वसुदेवताः दिव्याः दिवि भवाः अन्तरिक्षस्थाः साध्यमरुदादिदेवताः पार्थिवासः पृथिव्यामुत्पन्नाः यक्षासुरसिद्धसंघाः गोजाताः वाग्मिनः गंधर्वाः यद्वा गोः पृश्नेः जाताः मरुतो देवताः, यज्ञियासः यज्ञदीक्षिताः पुरुषाः सन्ति । ते सर्वे नः मदीयं क्रियमाणं विधीयमानं प्रादुर्भूतं वा नवीयः नवतरं अद्भुतं इदं ब्रह्म वृंहणशीलं विराट्स्वरूपं जुषन्तां सेवन्तां इति भावः ।

पार्थिवास: = "आजसे रसुक"

(२) आदित्यानामिति = देव: परमात्मा आदित्यानां रुद्रियाणां रुद्राणां देवानां इन्द्रादिदेवानां धाम स्थानं स न मिनाति न हिनस्ति। हे जीवात्मान:! ते आदित्यादयो देवा: अपराजितं केनाप्यजितं असृतम् अहिंसितम् अषाढ्हम् केनाप्यनभिभूतम् मा मां परमात्मानं भद्राय स्वकल्याण प्राप्तये शवसे आत्मिक शारीरिक बलप्राप्तये च ततक्षु: यतन्ते आत्मानं सज्जीकुर्वन्ति।

रूपमिति = हे महाबाहो! हे कृष्ण! ते तव बहुवक्त्रनेत्रं बहुमुखनयनं बहुबाहूरुपादं बहव: बाहव: भुजा: उरव: सक्थीनि पादा: चरणाश्च यस्य तथाभूतं तं बहुदंष्ट्राकरालं बहुभि: दंष्ट्राभि: करालं भयावहं महत् बहुपरिमाणं रूपं स्वरूपं दृष्ट्वा अवलोक्य लोका: जीवा: प्रव्यथिता: प्रकर्षेण दु:खं प्राप्ता: तथा तेनैव प्रकारेण अहमपि व्यथित: अस्मि ॥ २३॥

नभ:स्पृशमिति = हे विष्णो! हे सर्वव्यापक! परमात्मन्! हीति निश्चये। नभ:स्पृशं आकाशवत् सर्व स्पर्शिनं यद्वा अत्युच्चतरम् दीप्तं विशेष प्रकाशेन प्रकाशमानं अनेकवर्णं बहुविधरूपं व्यात्ताननं विस्फारितमुखं दीप्तविशालनेत्रं प्रकाशमानविशालचक्षुष्कं त्वां दृष्ट्वाऽवलोक्य प्रव्यथिता नरात्मा प्रकर्षेण व्यथित: दु:खित: अन्तरात्मा मन: यस्य तथाभूतोऽहं धृतिं धैर्यं शमं शान्तिं च न लभे न विन्दामि ॥२४॥

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोका: प्रव्यथितास्तथाहम्। २३॥
नभ:स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम्।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो।२४॥

" त्वद्भियेन्द्र पार्थिवानि विश्वाऽच्युताचिच्च्यावयन्ते रजांसि।
द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्नाते।" ऋ० ३।३१।२॥

त्वद्भियेति = हे इन्द्र! हे विष्णो! हे सर्वव्यापक! त्वत् त्वदेतादृशविराट् स्वरूपत: भिया भयेन विश्वा विश्वानि सर्वाणि पार्थिवानि रजांसि पृथिव्यादिलोकवर्तिन: सर्वे प्राणिन: अच्युताचित् न केनचिदपि च्यावयितुं शक्या: अपि च्यावयन्ते भयेन व्यथिता: पतन्ति। अपि च ते तव अज्मन् अज्मनि विराट्स्वरूपे प्रकटे सति द्यावाक्षामा = आकाशपृथिवीवासिन: स्थलचर नभश्चरजीवा: पर्वतास: पर्वतवत् दृढचित्ता: लोका: वनानि वनवासिन: सर्वे प्राणिन: भयते भयं प्राप्नुवन्ति। किं बहुना विश्वं सर्वं दृळ्हं दृढतरं प्राणिजातं भयते बिभेति।

दंष्ट्रेति = हे जगन्निवास! गच्छतीति जगत् तेषां जगतां निवास: जगन्निवास: तत्सम्बुद्धौ हे जगन्निवास! हे देवदेवेश! दीव्यति =

प्रकाशते इति देवः सर्वम् ईष्टे चेष्टयतीति ईशः स्वामी देवेशः तत्संबुद्धौ हे देवेश! ते तव दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि कालानल संनिभानि प्रलयकालीनाग्निसदृशानि मुखानि दृष्ट्वा अवलोक्य दिशो न जाने पूर्वादिदिशः न बोधामि, न च शर्म सुखं लभे प्राप्नोमि अतः प्रसीद त्वं प्रसन्नो भव। २५॥

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास॥ २५॥

"विश्वम्भर विश्वेन मा भरसा पाहि स्वाहा। अथ० २।१६।५॥"

विश्वम्भरेति = हे विश्वम्भर! विश्वं ब्रह्माण्डं बिभर्तीति विश्वम्भरः तत्सम्बुद्धौ हे विश्वम्भर! हे जगत्पालक! परमात्मन्! मा मां त्वद्विराट्स्वरूपदर्शनाद् भीतं मां विश्वेन सर्वेण भरसा भीतिनिवारणपूर्वकं पालनरक्षणशक्त्या पाहि पालनं कुरु। प्रसीद इति स्वाहा, इति सु सम्यक्तया आह निवेदयामि। यथा च यास्क आह:—

"स्वाहाकृतयः स्वाहेत्येतत् सु आहेति वा, स्वा वागाह इति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोति इति वा (निरु० ८।२०।५)"

अमीति = अमी इमे सर्वे धृतराष्ट्रस्य पुत्राः दुर्योधनादयः अवनिपालसंघैः नृपसमूहैः सह त्वां विशन्ति त्वयि प्रवेशं कुर्वन्ति। भीष्मः द्रोणः तथा अस्मदीयैः योधमुख्यैः द्रुपदधृष्टद्युम्नादिभिः सह असौ सूतपुत्रः कर्णः त्वरमाणाः शीघ्रतां कुर्वन्तः दंष्ट्राकरालानि दंष्ट्रैः विकृतानि विकृतानि भयानकानि भयंकराणि ते तव वक्त्राणि मुखानि प्रविशन्ति, तथा केचित् तत्र केचित् योधाः चूर्णितैः चूर्णीकृतैः उत्तमाङ्गैः मूर्धभिः उपलक्षिताः सन्तः दशनान्तरेषु दन्तच्छिद्रेषु संदृश्यन्ते। यथा येन प्रकारेण नदीनां बहवः अम्बुवेगाः जलप्रवाहाः समुद्रमेव अभिमुखाः द्रवन्ति तथा तेन प्रकारेण अमी नरलोकवीराः मर्त्यलोकशूराः भीष्मप्रभृतयः तव अभिविज्वलन्ति प्रकाशमानानि वक्त्राणि मुखानि विशन्ति॥ २६, २७, २८॥

यथेति = समृद्धवेगाः सम्यक्तया वृद्धिं प्राप्तः वेगः येषां ते समृद्धवेगाः पतंगाः शलभाः यथा येन प्रकारेण नाशाय मृत्यवे प्रदीप्तं प्रज्वलितं ज्वलनम् अग्निं विशन्ति तथैव तेनैव प्रकारेण समृद्धवेगाः लोकाः भीष्मादयः नाशाय मृत्यवे तव अपि वक्त्राणि विशन्ति प्रवेशं कुर्वन्ति॥ २९॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः॥ २६॥
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि॥
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः॥ २७॥
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति॥ २८॥

यथा प्रदीप्तं ज्वलनं पतंगाः विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

"सं मस्य मन्यवे विशो विश्वा नमंत कृष्टयः। समुद्रायेव सिन्धवः"
साम० १३७, १६५९॥ ऋ० ८।६।४॥

समस्येति = विशः त्वयि प्रविशन्त्यः विश्वाः सर्वाः कृष्टयः प्रजालोकाः अस्य इन्द्रस्य परमात्मनः मन्यवे मननं मननसाधनं स्तोत्रं तदर्थं यद्वा मन्यवे क्रोधाय संनमन्त सम्यक्तया स्वत एव नमन्ति त्वयि प्रवेशं कुर्वन्ति। तत्र दृष्टान्तः = समुद्रायेव सिन्धवः = यथा समुद्रं जलधिं प्रति सिन्धवः स्यन्दनशीलाः नद्यः स्वयमेव नमन्ति तद्वत्। नमन्त = नमतेः कर्मकर्तरि छान्दसो लुङ्। "न दुहस्नुनमाम्" इति यक्चिणोः प्रतिषेधः।

लेलिह्यसे इति = ज्वलद्भिः जाज्वल्यमानैः वदनैः मुखैः समन्तात् सर्वतः परिवर्तमानान् समग्रान् सर्वान् लोकान् शत्रुलोकान् ग्रसमानः ग्रासमात्रं कुर्वन् त्वं लेलिह्यसे अतिशयेन लेहनं करोषि। हे विष्णो! तेजोभिः स्वभाःभिः समग्रं सकलं जगत् विश्वं आपूर्य व्याप्य तव उग्राः प्रचण्डाः भासः तेजांसि प्रतपंति तापं कुर्वन्ति॥३०॥

लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥३०॥

"सहस्राक्षमतिपश्यं पुरस्तात् रुद्रमस्यन्तं बहुधा विपश्चितम्। मोपाराम जिह्वयेयमानम्। अथ० ११।२।१७॥

सहस्राक्षमिति = हे परमात्मन् अहं जीवात्मा पुरस्तात् स्वसम्मुखे सहस्राक्षं सहस्रैः नेत्रैः प्रकाशमानं रुद्रं रुद् दुःखं तस्य द्रावयितारं यद्वा रुत् स्तुतिः तया गन्तव्यं रुद्रं यद्वा रुद्रं भयानकस्वरूपं विपश्चितं विशेषेण पातीति विपा वाक् विपाः वाचः चिनोतीति विपश्चित् तं समग्रस्य विश्वस्य ज्ञातारं बहुधा बहुप्रकारेण अस्यन्तं सर्वान् लोकान् स्वतेजसा इतस्ततः प्रक्षिपन्तं जिह्वया स्ववदनस्थया जिह्वाशक्त्या ईयमानं सर्वान् लोकान् लेलिह्यमानं अपश्यम् पश्यामि अवलोकयामि। एवं विधं स्वरूपं मा उपाराम प्राप्तुं न शक्नोमि।

आख्याहि इति = हे देववर! देवाग्रगण्य! ते तुभ्यं नमस्कारोऽस्तु। प्रसीद त्वं प्रसन्नो भव। उग्ररूपः उग्रं भयावहं रूपं यस्य तथाभूतः भवान् कः? प्रलयाग्निरसि महाकालोऽसि महापुरुषोऽसि इति मे आख्याहि इति वद। आद्यम् आसमन्तात् अनु प्रवृत्तः आद्यः, यद्वा "आदौ भवः आद्यः" तं जगदाद्यं भवन्तं त्वां विज्ञातुं बोधयितुं इच्छामि। हि यस्मात् कारणात् अहं साधारणः मनुष्यः तव प्रवृत्तिं क्रूरस्वरूपं प्रवृत्तिं न जानामि।

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर! प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम्॥३१॥

" कुर्मस्त आयुरजरं यदग्ने यथायुक्तो जातवेदो न रिष्याः।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात॥ ऋ० १०।५१।७॥

कुर्म इति = हे अग्ने! हे ज्योतिःस्वरूप परमात्मन्! ते तुभ्यं आयुः अन्नं नमस्कारान् कुर्मः करोमि। "आयुषः अन्ननामसु पाठः" (निघं० २।७) हे जातवेद! जातानि जातानि वेद, जातानि एनं विदुः, जातप्रज्ञः जातधनः (निरु० ७।१९) हे देववर! हे सर्वज्ञ! यथायुक्तः सहस्राक्षादि स्वरूपयुक्तः त्वं न रिष्याः न विनाशय, युष्मच्छान्तिः माभूत् अर्थात् त्वां विज्ञातुं इच्छामि। अथ सुमनस्यमानः असि। प्रसन्नमनसा त्वं मयि प्रसन्नः असि भव। हे सुजात! हे दिव्यजन्मन्! त्वं हविषः प्रवृत्ति हविषः भागं देवेभ्यः स्वभक्तेभ्यः विद्वद्भ्यः वह धारय॥

श्री भगवानुवाच = काल इति = लोकक्षयकृत् लोकविनाशकृत प्रवृद्धः — प्रचण्डः कालः कालस्वरूपः परमात्मा लोकान् सकलान् मनुष्यान् इह अत्र समाहर्तुं संग्रहीतुं विनाशयितुं प्रवृत्तः लग्नः अस्मि। ये योधाः ये सैनिकाः प्रत्यनीकेषु शत्रुसेनासु अवस्थिताः सज्जीभूय तिष्ठन्तः वर्तन्ते ते सर्वे त्वां ऋतेऽपि त्वद्युद्ध प्रवृत्यभावेऽपि न भविष्यन्ति न स्थास्यन्ति" ३२"

श्रीभगवानुवाच = "कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः॥३२॥

" कालेऽयमङ्गिरा देवोऽथर्वा चाधितिष्ठतः। इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः। सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः। अथ० १९।५४।५॥

काले इति — अयं देवः प्रकाशमानः अंगिराः अंगारवद्भासमानः सूर्यः काले कालनाम्नि परमेश्वरे "कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः तस्मिन् काले परमेश्वरे अधितिष्ठति। अथर्वा शीतलत्वेन न कस्यापि हिंसकः चन्द्रमाः, यद्वा अथर्वा अहिंसान्न अपि काले परमेश्वरे अधितिष्ठति। स लोकक्षयकृत कालः परमात्मा ब्रह्मणा स्वमहत्तया इमं लोकं पुरोवर्तिनं जनं यद्वा सर्वकर्मार्जनस्थानं लोकं भूमिं परमं उत्कृष्टं कर्मफलभोगस्थानं स्वर्गलोकं यद्वाऽन्ये प्राणिवर्गाः पुण्यान् पुण्यकर्मभिः अर्जितान् लोकान् पुण्यान् पुण्यकर्मभिः आर्जितान् लोकान् पुण्यात्मनः जीवान् पुण्याः दुःखलेशाऽसंस्पृष्टाः विधृतीः लोकाधारकान् सर्वान् उत्कान् अनुत्कान् जीवान् अभिजित्य जित्वा वशीकृत्य स परमः सर्वोत्तमः कालः देवः द्योतनशीलः परमात्मा नु एव ईयते सर्वं स्थावरजंगमात्मकं जगत् व्याप्य वर्तते"

तस्मादिति — यस्मात् त्वम् एतस्याः बन्धुहत्यायाः भीतः सन् "न योत्स्ये इति वदसि तस्मात् कारणात् त्वमुत्तिष्ठ युद्धाय सन्नद्धो भव यशःकीर्ति-

XL



लभस्व प्राप्नुहि। शत्रून् दुर्योधनादीन् रिपून् जित्वा समृद्धं सम्पत्तिप्राज्यं भुंक्ष्व। एते तव शत्रवः पूर्वमेव एतेऽजाबलनिराकरणेन हेतुना पुरैव निहताः विनाशिताः सन्ति। हे सव्यसाचिन् सव्येन वामहस्तेन शरान् संधातुं प्रपातुं शीलमस्येति सव्यसाची तत्सम्बुद्धौ हे सव्यसाचिन्! हे अर्जुन! त्वं निमित्तमात्रं कारणमात्रं भव॥ ३३॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्॥ ३३॥

१ "उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः। सोममिन्द्र चमूसुतम्॥" ऋ० ८।७६।१०
अथ० २०।४२।३॥ यजु० ८।३९॥ तै० सं० १।४।३०।१॥

२ यद्वा = अनु त्वा रोदसी उभे यजस्व वीर प्रविहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये। हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आवृणीमहे। ऋ० २।२६।२॥

३ यद्वा = अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम्। इन्द्र यद्दस्युहाभवः॥ ऋ० ८।७६।११॥

४ यद्वा = भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः। वसु स्पार्हं तदा भर॥ अथ० २०।४३।१॥

१ उत्तिष्ठन्निति = हे इन्द्र! हे जीवात्मन्! त्वं चमूसुतं चम्वोः सेनयोः सुतं प्रादुर्भूतं सोमं युद्धोद्यमकरं सोमरसं पीत्वी पीत्वा ओजसा क्षात्रबलेन सह उत्तिष्ठन् युद्धाय सुसन्नद्धः सन् शिप्रे हनू दन्तौ अवेपयः शत्रुहननाय कम्पय॥

२ यजस्वेति = हे वीर! हे शूर! यजस्व युद्धभूमिं सेवस्व। मनायतः मन इव शीघ्रं प्रवर्तमानान् हिंसकान् यद्वा अभिमन्यमानान् शत्रून् प्रति प्रविहि प्रकर्षेण गच्छ। वी गतौ। छान्दसो ह्रस्वः। वृत्रतूर्ये वृत्राणां शत्रूणां हिंसाहेतुभूते संग्रामे भद्रं मनः चित्तं भद्रं कल्याणं यथा स्यात्तथा कृणुष्व कुरुष्व। ब्रह्मणस्पतेरनुग्रहात् तव एव जयो भविष्यति। तथा ब्रह्मणस्पतेः ब्रह्मणस्पतये हविः नमस्कृतिरूपं हविः कृणुष्व कुरुष्व। यथा त्वं सुभगः सुन्दरैश्वर्यसम्पन्नः अससि भवेः। अस्तेर्लेटयडागमः। ब्रह्मणस्पतेः योगेन शोभनफलः त्वं भविष्यसि। वयं सर्वे जीवात्मानः ब्रह्मणस्पतेः परमात्मनः अवः रक्षणम् आवृणीमहे आभिमुख्येन प्रार्थयामहे।

३ अनु इति = हे इन्द्र! हे जीवात्मन्! क्रक्षमाणे युद्धे शत्रून् घ्नन्तं त्वा त्वां उभे रोदसी द्यावापृथिव्यौ द्यावापृथिवीवासिन इत्यर्थः अन्वकृपेथी कृपां कुरुताम्। यत् यस्माद्धेतोः दस्युहा शत्रुहन्ता अभवः भवसि।

द्रोणमिति = हे अर्जुन! त्वं द्रोणं, भीष्मं, जयद्रथं, कर्णं तथा अन्यान् योधवीरान् अपि मया तेजोबलाकर्षणेन हतान् मृतप्रायान् जहि विनाशय। मा व्यथिष्ठाः "एते सर्वे बलवत्तराः" इति मा व्यथां प्राप्नुहि। त्वं रणे युद्धे सपत्नान् शत्रून् जेतासि जेष्यसि अतः युध्यस्व युद्धं कुरु। ३४॥

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्। [illegible]
मया हतांस्त्वं जहि मा व्यथिष्ठाः युध्यस्व जेतासि रणे सपत्नान्॥ ३४॥

"प्रसूत इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून्। जहि प्रतीचो अनूचः पराचो विष्वक् सत्यं कृणुहि चित्तमेषाम्॥ अथ० ३।१।४।।गर०३।१।६॥
यद्वा = यो जिनाति तमन्विच्छ यो जिनाति तमिज्जहि। जिनतो वज्र त्वं सीमन्तमन्वञ्चमनुपातय॥ अथ० ६।१३४।३"

प्रसूत इति = हे इन्द्र! हे जीवात्मन्! ते तव जयाभिलाषः वज्रः शत्रुघातकम् अस्त्रं हरिभ्यां शत्रुप्राणहारकाभ्यां भुजाभ्यां प्रसूतः प्रेरितः सन् अर्थात् विमुक्तः प्रवता प्रवणेन मार्गेण प्रैतु शत्रून् अभिलक्ष्य शीघ्रं गच्छतु। तथा ते वज्रः अशनिः प्राणहारकं शस्त्रं शत्रून् रिपून् प्रमृणन् हिंसन् प्रैतु प्रकर्षेण गच्छतु। त्वं प्रतीचः त्वदाभिमुख्यम् आगच्छतः शत्रून् जहि मारय। तथा अनूचः अनुगच्छतः पार्ष्णिग्राहान् रिपून् जहि। तथा पराचः दूराद्देशादागत्य आक्रमणकारिणः शत्रून् यद्वा पलायमानान् शत्रून् जहि मारय। एषां शत्रूणां चित्तं मनः विष्वक् समन्ततः सत्यं त्वमेव सर्वथा जेतासि इति सत्यमार्गपक्षगन्तृ-कृणुहि कुरु। प्रवता = प्रशब्दादुपसर्गाच्छन्दसि धात्वर्थे" इति वति प्रत्ययः। प्रमृणन् = मृण हिंसायाम्। जहि = हन् हिंसागत्योः इत्यस्य लोटि सिपो हिरादेशः। तस्मिन् "हन्तेर्जः" इत्यादेशः। "अतो हेः" इति लुकि प्राप्ते "असिद्धवदत्राभात्" इति शास्त्रस्यासिद्धत्वात् निवृत्तिः। कृणुहि = कृवि हिंसाकरणयोः।

२ यद्वा = य इति = हे वज्र! हे वज्रधारिन्! वीरपुरुष! यः शत्रुः जिनाति तव हानिं कुरुते तम् अन्विच्छ तदन्वेषणस्य इच्छां कुरु। यः शत्रुः जिनाति त्वां हन्ति तम् इत् तं शत्रुमेव जहि विनाशय। त्वं जिनतः घ्नतः शत्रोः सीमन्तं शिरस्कं अन्वञ्चं प्रत्यक्षमेव अनुपातय छित्त्वा पृथिव्यां पातय॥

संजय उवाच = एतदिति = किरीटी अर्जुनः वेपमानः विराट्स्वरूपदर्शनजनितभयेन कम्पमानः कृताञ्जलिः बद्धाञ्जलिः सन् केशवस्य श्रीकृष्णस्य एतद्वचनं श्रुत्वा आकर्ण्य नमस्कृत्वा नमस्कारं कृत्वा सगद्गदं आनन्दाश्रुजलप्रवाहावरुद्धकण्ठध्वनिः यथा स्यात्तथा भीतभीतः अतिशयेन भयं प्राप्तः सन् भूय एव पुनरेव कृष्णम् आह कथयामास।

स्थाने इति = हे हृषीकेश! हे श्रीकृष्ण! तव प्रकीर्त्या यशोगानेन जगत् सर्वो लोकः प्रहृष्यति प्रकर्षेण तुष्यति। तव स्तुतिकीर्तनेन जगत् लोकः अनुरज्यते अनुरक्तिं प्राप्नोति। इति यदस्ति तत् स्थाने = युक्तम्। इति तव प्रकीर्त्या तव स्तुतिकीर्तनेन भीतानि भयं प्राप्तानि रक्षांसि राक्षसाः दिशः सर्वतो दिशः द्रवन्ति पलायन्ते इति स्थाने इति युक्तम्। सर्वे सिद्धसंघाः सकलाः सिद्धसमूहाः त्वां नमस्यन्ति नमस्कारं कुर्वन्ति इति यदस्ति तत् स्थाने इति युक्तमस्ति॥ ३६॥

कस्माच्चेति = हे महात्मन्! महान् महत्तरः आत्मा यस्य स महात्मा तत्संबुद्धौ हे महात्मन्! सर्वे जनाः गरीयसे सर्वतो गुरुतराय ब्रह्मणः

हिरण्यगर्भस्यापि आदिकर्त्रे ते तुभ्यं कस्माच्च कस्माद्धेतोः न नमेरन् न नमस्कुर्युः। हे अनन्त! नास्ति अन्तः विनाशः यस्य सः अनन्तः तत्सं-बुद्धौ हे अनन्त! हे अन्तरहित! हे देवेश! हे देवानां स्वामिन्! हे जग-न्निवास! जगतां निवासः जगन्निवासः तत्संबुद्धौ हे जगन्निवास! सत् कार्यं, असत् कारणं तत् त्वमेव। तत्परं कार्यकारणाभ्यां यत्परं भिन्नं विलक्षणं अस्ति तत् अक्षरं सदैकरसात्मकम् ओंकारस्वरूपं त्वमसि॥ ३७

संजय उवाच = एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य॥ ३५॥

अर्जुन उवाच = स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च,
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः॥ ३६॥
कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त! देवेश! जगन्निवास! त्वमक्षरं सदसत्परं यत्॥ ३७॥

॰ बृहन्तो नाम ते देवा येऽसतः परिजज्ञिरे। एकं तदङ्गं स्कम्भस्य असदाहुः परो जनाः॥ अथ॰ १०।७।२५॥ (स्पष्टोऽर्थः)

यद्वा = असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितम्। भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद्विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि। अथ॰ १७।१।१९

त्वमिति = हे अनन्त! हे असंख्यस्वरूप! त्वम् आदिदेवः दीव्यते इति देवः आदि-श्चासौ देवः आदिदेवः सृष्टिकर्ता त्वं पुराणः पुरुषः त्वं सनातनः पुरुषः असि। त्वम् अस्य विश्वस्य अस्य जगतः निधानम् उत्पत्तिस्थानम् असि। वेत्ता सर्वज्ञाता त्वमसि, वेद्यं ज्ञेयं सर्वं दृश्यं जगत् त्वमसि। त्वं परम् अत्युत्कृष्टं धाम परं ज्योतिः त्वमसि। त्वया विश्वं सर्वं जगत् ततं व्याप्तं अस्ति। ३८॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप॥ ३८॥

१ त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव॥ ऋ॰ १।९४।६॥

२ यद्वा = उत शिक्षे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः।
उतेदं विश्वं भुवनं विराजसि श्यावाश्वस्ते सवितः स्तोममानशे। ऋ॰ ५।८१।५॥

१ त्वमिति = हे अग्ने ज्योतिःस्वरूप! हे परमात्मन्! त्वम् अध्वर्युः अध्वरस्य विश्वयज्ञस्य कर्ता आदिरसि। उत अपरं च त्वं होता सर्वेषामाह्वाता दाता वाऽसि। उत अपि च त्वं पूर्व्यः पुरातनः पुरुषः असि। त्वं प्रशास्ता प्रकर्षेण सर्वेषां शि-क्षकः असि। त्वं पोता पतितानां पावयिता शोधयिता ऽसि। त्वं जनुषा आरम्भ-तः पुरोहितः सर्वेभ्यः पुरःहितः स्थापितः असि। अतः वेद्यस्वरूपः असि। हे धीर! हे बुद्धिप्रदातः! विश्वा विश्वानि सर्वाणि आर्त्विज्या ऋत्विजानां

पूजकानां भक्तानां सम्बन्धीनि कर्माणि विद्वान् जानन् त्वं पुष्यसि। न्यूनाधिक्यभावराहित्येन सम्पूर्णानि करोषि। हे परमात्मन्! तव सख्ये अस्माकं त्वया सह सखित्वे वयं मा रिषाम पापैः हिंसिताः न भवाम। यतः त्वया सर्वं विश्वं ततमस्ति। अतः अस्मान् रक्षत इत्यर्थः। अनुष्टुप् = जने ऋषिः। पुरोहितः = दधातेः कर्मणि निष्ठा। आर्त्विज्या = ब्राह्मणादित्वात् ष्यञ्। रिषाम = रिष हिंसायाम्। व्यत्ययेन शः।

यद्वा = हे सवितः! हे जगदुत्पादक! परमात्मन्! त्वम् एक इत् एक एव प्रसवस्य सर्वकर्मानुज्ञाकरणस्य ईशिषे समर्थोऽसि। ये लौकिकं गमनादिरूपं वैदिकं अग्निहोत्रादिरूपं कर्म अनुतिष्ठन्ते तेषां सर्वेषां अनुज्ञातुं एक एव त्वं प्रभवसि। उतापि च पूषा जगत्पोषकस्त्वमसि। हे देव! हे ज्योतिःस्वरूप! परमात्मन्! यामभिः स्वव्याप्तिभिः इदं विश्वं सर्वं भुवनं प्रपञ्चं भूतजातं वा विराजसि शोभसे प्रकाशयसि। हे परमात्मन्! श्यावाश्वः परमभक्तः ते तव स्तोमं स्तुतिं आनशे करोति।

वायुरिति = हे कृष्ण! त्वं वायुः, त्वं यमः, त्वम् अग्निः, त्वं वरुणः, त्वं शशांकः चन्द्रः, त्वं प्रजापतिः ब्रह्मा, त्वं प्रपितामहः विष्णुः असि।

वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च।

"त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्रजापतिः। तुभ्यं यज्ञो वितायते तुभ्यं जुह्वति जुह्वतः। तवेद् विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः। सुधायां मा धेहि परमे व्योमन्। अथ० १७।१।१८॥

यद्वा = इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः। ऋ० १।१६४।४६॥ अथ० ९।१०।२८।

त्वमिति = हे परमात्मन्! त्वम् इन्द्रः असि, त्वं महेन्द्रः, इन्द्रस्यापि नियन्ताऽसि। अतः यमोऽसीत्यर्थः। त्वं लोकः "लोकृ दीप्तौ" प्रकाशस्वरूपः शशांकः असि। यद्वा त्वमेव लोकः सुकृतिभिः प्राप्यो लोकः स्वर्गादिलक्षणः त्वमेव। अथवा परब्रह्मस्वरूपत्वात् सर्वलोकात्मकस्त्वमसि। त्वं प्रजापतिः ब्रह्मोऽसि। यज्ञः "यज्ञो वै विष्णुः" अतः यज्ञः प्रपितामहः विष्णुः त्वमसि। यद्वा यज्ञः पूजा तुभ्यं त्वन्निमित्तं त्वत्प्रीतये वितायते त्वत्पूजकैः विस्तार्यते। जुह्वतः होमं कुर्वन्तः सर्वेऽपि ऋत्विजः तुभ्यं त्वदर्थमेव जुह्वति होमं कुर्वन्ति। अतः अग्निरपि त्वमेवासि। हे विष्णो! व्याप्नोति सर्वं जगत् इति विष्णुः तत्संबुद्धौ हे विष्णो! हे सर्वव्यापक परमात्मन्! तव इत् तवैव वीर्याणि बलानि शक्तयः इत्यर्थः, बहुधा बहुप्रकाराणि वर्तन्ते नान्यस्य कस्यचित्। यतस्त्वं विष्णुः अतस्तव वीर्याणि अनन्तानीत्यभिप्रायः। त्वं परमात्मा नः अस्मान् दासान् विश्वरूपैः गोमहिष्यजादिभिः पशुभिः प्राणिभिः पृणीहि पूरय। तथा मा माम् एतद्देहावसाने परमे निरतिशये व्योमन् व्योम्नि = विशेषेण अवतीति व्योम तस्मिन् व्योमनि मुक्तिस्थाने — "यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम्।

तस्मिन् मां धेहि पवमानमृते लोके अक्षिते ॥ ऋ० ९।११३।७॥ एतन्मंत्रोक्त-लक्षणे लोके सुधाम्नि अमृते धेहि स्थापय। धेहि = दधातेर्लोटि = "घ्वसोरेद्धा-वभ्यासलोपश्च" इत्येत्वाभ्यासलोपौ।

नम इति = हे कृष्ण ! भूयो भूयः सहस्रं वारं ते तुभ्यं नमः अस्तु । हे सर्व ! हे सर्वात्मन् ! ते सर्वात्मने तुभ्यं पुरस्तात् पृष्ठतः नमोऽस्तु। सर्वतः सर्वव्यापकाय सर्वत्र नमः अस्तु । अनन्तवीर्यामितविक्रमः अनन्तं अन्तरहितं वीर्यं तेजः यस्य तथा अमितः इयत्तारहितः विक्रमः पराक्रमः यस्य तथाभूतस्त्वं सर्वं प्रपञ्चं समाप्नोषि सम्यक् व्याप्तोऽसि । ततस्तस्मात् कारणात् सर्वः असि सर्वात्मकोऽसि।३९-४०॥

नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते॥३९॥
नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्याऽमितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः॥४०॥

1 "चतुर्नमो अष्टकृत्वो भवाय दशकृत्वः पशुपते नमस्ते।" अथ०११।२।९॥
2 "पुरस्तात् ते नमः कृण्मः उत्तराद् अधराद् उत। अभीवर्गाद् दिवस्पर्यन्तरिक्षाय ते नमः। अथ०११।२।४॥

चतुर्नम इति = हे पशुपते ! पश्यन्तीति पशवः जीवाः प्राणिनः तेषां पतिः स्वामी पशुपतिः तत्संबुद्धौ हे पशुपते ! हे संसारस्वामिन् ! परमात्मन् ! भवाय भवः = संसारोत्पत्तिस्थानं तस्मै भवाय संसारोत्पत्तिभवनाय संसारोत्पादकाय ते तुभ्यं परमात्मने पुरस्तात् उत्तरात् उत अपि च अधरात् नमः कृण्मः नमस्कारं कुर्मः। अभीवर्गात् अभितः वर्तमानात् अन्तरिक्षात् दिवः द्युलोकात् अधि परि दूरं विद्यमानाय अन्तरिक्षाय अन्तर्यामिणे ते तुभ्यं परमात्मने "शरीरेषु अन्तरक्षयम्" (नि०२।१०) नमः नमस्कारोऽस्तु।

सखेतीति = तव पुरुषोत्तमस्य इमं अवलोक्यमानं महिमानं विश्वात्मकं माहात्म्यम् अजानता अबोधयित्रा मया "अयं कृष्णः मम सखा समानख्यानः मातुलेयः" इत्यादि मत्वा ज्ञात्वा "हे कृष्ण ! हे यादव ! हे सखे ! इति प्रमादात् कर्तव्याकर्तव्यकर्मानवधानात् प्रणयेन स्नेहेन वापि प्रसभं हठात् यदुच्चावचं वचनमुक्तम् । हे अच्युत ! अथ च विहारशय्यासनभोजनेषु विहारे क्रीडायां शय्यायां शयने आसने सिंहासनोपवेशने भोजने अन्नादिभक्षणे एकः जनान्तरशून्यः अथवा बहूनां समक्षं संमुखे "हे कृष्ण ! हे मातुलेय ! इति यदवहासार्थं परिहासाय असत्कृतः असि निराहृतोऽसि अवमानितोऽसि ततत्तत् तदपराधार्थं त्वाम् अप्रमेयं अनिर्वचनीयं क्षामये 'क्षमस्व' इति प्रार्थये।४१-४२॥

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति।
अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि॥४१॥
यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।
एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम्॥४२॥

XI



१ इत्थं श्रेयो मन्यमानेदमागमं युष्माकं सख्ये अहमस्मि शेवा। समानजन्मा क्रतुरस्ति वः शिवः स वः सर्वाः संचरति प्रजानन्॥ अथ० ८।१४।२२

२ यद्वा = त्वं जामिर्जनानामग्ने मित्रो असि प्रियः। सखा सखिभ्य ईड्यः। ऋ० १।७५।४॥

३ यद्वा = सो अङ्गिरोभिरङ्गिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन्। ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो इन्द्र ऊती॥ ऋ० १।१००।४॥

१ इत्थमिति = स परमात्मा समानजन्मा समानं एकस्मिन् समये जन्म प्रादुर्भावः यस्य तथाभूतः समानजन्मा वयस्य इत्यर्थः। क्रतुः कर्म विहारशयनासनभोजनादिषु मया सह कर्मकर्ता अस्ति। स वः एव शिवः कल्याणरूपः अस्ति। मत्कल्याणकर्ता अस्ति। अयं मदीयः सखाऽयमस्ति। स वः सखाव सर्वाः मया सह सकलाः क्रियाः संचरते संकुरुते। अहं भक्तः प्रजानन् विदन् शेवा सुखमस्मि सुखभोक्ताऽस्मि। "शेव इति सुखनाम। शिष्यते विकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यस्य भवति" (निरु १०।१७)। इदं सर्वं विचारजातम् इत्थम् अनेनैव प्रकारेण श्रेयः कल्याणकरमिति मन्यमानः स्वबुद्धिविषयम् कुर्वन् युष्माकं भवतः भावतः सख्ये मैत्र्याम् आ समन्तात् आगमम् प्राप्नुवम्।

२ यद्वा = सइति = स परमात्मा अङ्गिरोभिः ज्ञानेन प्रज्वलद्भिः ज्ञानिभिः सह अङ्गिरस्तमः भूतः भवति, जाज्वल्यमानः ज्ञानी अस्ति, यद्वा सप्तमी अङ्गिरःसु अङ्गिरः। वृषभिः वीरैः सह यद्वा वीरेषु वृषा वीरः भूत् भवति। सखिभिः सह यद्वा सखिषु सखा सन् वर्तते। ऋग्मिभिः स्तोतृभिः सह यद्वा स्तोतृषु ऋग्मी स्तोता भवति। गातुभिः स्तुतिगायकैः सह यद्वा गायकेषु ज्येष्ठः सर्वश्रेष्ठः अस्ति। एवंविधः इन्द्रः परमात्मा मरुत्वान् भक्तजीवानां सहायकः सन् ऊती अस्माकं रक्षकः भवतु।

२. यद्वा = त्वमिति = हे अग्ने! ज्योतिःस्वरूप! परमात्मन्! त्वं जनानां मनुष्याणां जामिः बन्धुः असि। त्वं जनानां मित्रम् असि। त्वं जनानां प्रियः असि। त्वं सखा सन् सखिभ्यः ईड्यः स्तुत्यः असि।

पितासीति = त्वं चराचरस्य स्थावरजंगमस्य अस्य लोकस्य चराचरस्य अस्य पिता जनकः पालकः असि। त्वम् अस्य प्राणिजातस्य पूज्यः अर्चनीयः असि। त्वम् अस्य लोकस्य गरीयान् सर्वश्रेष्ठतरः गुरुः असि। त्वत्समः त्वत्सदृशः अपि कश्चित् नास्ति। हे अप्रतिमप्रभाव! हे अतुलमहिमन्! लोकत्रयेऽन्यः अपरः कुतः कस्माद्धेतोः अधिकः महान् स्यात्॥४३॥

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥४३॥

१ "प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः॥" अथ० ७।२०।१॥

२ यद्वा = नकिरिन्द्र त्वदुत्तरो न ज्यायो अस्ति वृत्रहन्। नकिरेवं यथा त्वम्॥

साम० २०३ ॥ ऋ० ८।३०।१ ॥

३ यद्वा - त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः । विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा न किरन्यस्त्वावान् ॥ ऋ० १।५२।१३ ॥

४ यद्वा = त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् । ऋ० ६।१।५ ॥

५. यद्वा = त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् । त्वं पुत्रो भवसि यस्तेऽविधत् त्वं सखा सुशेवः पास्याधृषः ॥ ऋ० २।१।९ ॥

६. यद्वा = अग्निं मन्ये पितरमग्निं आपिमग्निं भ्रातरं सदमित् सखायम् । ऋ० १०।७।३ ॥

१ प्रजापतिरिति = प्रजानां स्थावरजंगमानां पतिः स्रष्टा पालयिता पिता स परमात्मा इमाः प्रजाः स्थावरजंगमात्मिकाः स्रष्टीः जनयति उत्पादयति । धाता एकत्वात् सर्वेषां धारकः पोषकः परमात्मा सुमनस्यमानः गरीयस्त्वात् सौमनस्यं प्राप्नुः सन् दधातु दधाति । लकारव्यत्ययः । प्रजाः पोषयति ।

२ नेति = हे इन्द्र ! सर्वैश्वर्यसम्पन्न ! परमात्मन ! त्वदुत्तरं त्वत्तः उत्तरः उत्कृष्टतरः नकिः अस्ति न कश्चिदस्ति । हे वृत्रहन् ! हे वृत्राणां पापानां हन्तः ! हे पापहारिन ! परमात्मन ! त्वत् त्वत्तः ज्यायान प्रशस्ततरः नकिः अस्ति नकश्चिदस्ति । त्वं लोके यथा सर्वोत्तमः सर्वोत्कृष्टतरः असि एवं तथाविधः एकोऽपि नकिः एवास्ति नैव भवति - कश्चिदपि लोके त्वत्सदृशो नास्तीत्यर्थः । सुमनस्यमानः = सुमनाइवाचरन् " कर्तुः क्यङ् सलोपश्च " इति क्यङ् सलोपो व्यत्ययेन न प्रवर्तते ।

(●) मन्त्रान्तरं यथा = न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे नकिरन्यस्त्वावान् ॥

३ यद्वा - त्वमिति = हे परमात्मन ! त्वं पृथिव्याः प्रथितायाः विस्तीर्णायाः भूमेः प्रतिमानं भुवः प्रतिनिधिर्भवसि । यथा भूर्लोको महानचिन्त्यशक्तिः एवं त्वमपि इत्यर्थः । तथा ऋष्ववीरस्य दर्शनीयवीरस्य बृहतः प्रवृद्धस्य समग्रलोकस्य पतिर्भूः पालयिता असि । तथा अन्तरिक्षं अन्तरि द्यावापृथिव्योः मध्ये क्षान्तं वर्तमानं विश्वं सर्वमपि महित्वा महत्त्वेन सत्यं निश्चयेन आसमन्तात् अप्राः अपूरयः । अतः त्वावान् त्वत्सदृशोऽन्यः नकिः न कश्चिदस्ति । यत् एतत् तत् अद्धा सत्यमेव । भुवः = भवतेः लेटि सिप्यडागमः । आऊदेशः । भूः = छान्दसे वर्तमाने लुङि " बहुलं छन्दस्यमाङ्योगेऽपि " इत्यडभावः । अप्राः = प्रा पूरणे - आदादिकः लङ्यडागमः । महित्वा = " सुपां सुलुक् " इति तृतीयायाः डादेशः । त्वावान् = वतुप् प्रकरणे - " युष्मदस्मद्भ्यां छन्दस्युपसंख्यानम् " इति सादृश्यार्थे मतुप् । " प्रत्ययोत्तरपदयोश्च " इति मपर्यन्तस्य त्वादेशः । " आ सर्वनाम्नः " इत्यात्वम् ॥

४ यद्वा = त्वमिति = हे तरणे ! हे संसार दुःखसागरात्तारक ! परमात्मन ! त्वं परमात्मा चेत्यः पूज्यः स्तुत्यश्च सन् त्राता सर्वप्राणिरक्षकः भूः = भवसि । मानुषाणां यजमानानां सदमित् = सदैव पिता = पालकः माता च भूः = भवसि ।

५ यद्वा = त्वामिति = हे परमात्मन ! नरः मनुष्याः त्वां परमात्मानं इष्टिभिः =

पूजनसाधनैः यागैः पितरं पावकमाहुरिति शेषः। तनूरुचं = शरीर-प्रकाशकं जठरे प्रविष्टं वैश्वानररूपं त्वाम् आहुः। हे परमात्मन्! यः मनुष्यः ते = त्वाम् अवधत् = पूजयति तस्य त्वं पुत्रः पुंनामनरकाद् रक्षकः असि त्वं सखा हितकर्ता सुशेवः = सम्यक् सुखकारकः आधृषः पापाधर्षकः पासि = रक्षसि।

(६) यद्वा = अग्निमिति = हे जिज्ञासो! अग्निं ज्योतिःस्वरूपं परमात्मानं पितरं मन्ये अहमग्निं परमात्मानं आपिं = सर्वव्यापकं यथार्थवक्तारञ्च मन्ये। अग्निं परमात्मानं सदमित् = सदैव भ्रातरं = भरणपोषणकर्तारं सखायं = हितकर्तारं मित्रं मन्ये।

(७) न त्वेति = हे मघवन्! इन्द्र! हे पूज्य! परमात्मन्! दिव्यः दिवि भव्यः त्वावान् त्वत्सदृशः नास्ति। न कश्चित् पार्थिवः पृथिव्यामुत्पन्नः अपि अन्यः त्वावान् त्वत्सदृशः जनः नास्ति। न जायते वा न जनिष्यते उत्पत्स्यते त्रिषु लोकेषु अपि त्वत्सदृशः अन्यः कश्चिन्नास्ति इत्यर्थः। अश्वायन्तः = अश्वान् इच्छन्तः वाजिनः वाजमिच्छन्तः हविरिच्छन्तो वा, गव्यन्तः गाः इच्छन्तश्च वयं त्वा त्वां परमात्मानं हवामहे ह्वयामः॥

तस्मादिति = यस्मात् भवान् बहुमहत्वसम्पन्नोऽस्ति तस्मात् हेतोः कायं स्वदेहं प्रणिधाय भूमौ दण्डवत् संस्थाप्य प्रणम्य नमस्कारं कृत्वा ईड्यं सर्वैः स्तुत्यं ईशं सर्वसामर्थ्योपेतं परमेश्वरं त्वां प्रसादये = प्रसन्नं करोमि। हे देव! हे प्रकाशस्वरूप! पुत्रस्य सूनोः अपराधं पिता इव जनक इव, सख्युः सुहृदः सखा इव सुहृद् इव, प्रियायाः = प्रेयस्याः स्त्रियाः अपराधं प्रिय इव त्वं मम अपराधं सोढुं क्षन्तुमर्हसि इत्यत्र सन्धिरार्षः। ४४।

तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥ ४४॥

॰ इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन् पुरुहूत यामनि जीवाः ज्योतिरशीमहि॥ साम॰ २५९। साम॰ १४ पृष्ठ॥ ऋ॰ ७।३२।२६॥

इन्द्रेति = हे इन्द्र! सर्वैश्वर्यसम्पन्न! परमात्मन्! नः अस्माकं क्रतुं = दुष्कर्मकृतमपराधमयं कर्म आ समन्तात् भर = हर, दूरीकुरु। यथा येन प्रकारेण पिता जनकः पुत्रेभ्यः पुत्राणां अपराधं अपहरति, हे पुरुहूत! हे पुरुभिः बहुभिः आहूत! अस्मिन् यामनि यमनियमवति ब्रह्मप्राप्तिमार्गे नः अस्मभ्यं (अस्मान्) शिक्ष = अपराधक्षमापूर्वकं शिक्षां देहि। जीवाः = त्वद्दीक्षां कामयमानाः वयं प्राणिनः ज्योतिः त्वत्प्रदत्तं ज्ञानमयं प्रकाशं अशीमहि प्राप्नुयाम।

(अदृष्टपूर्वमिति = अदृष्टपूर्वं = पूर्वं कदाचिदपि दृष्टिपथमनागतं विराट्-रूपं दृष्ट्वा अवलोक्य हृषितोऽस्मि प्रसन्नोऽस्मि। तथापि मे मम मनः चित्तं भयेन व्यथितं दुःखितं भवति। हे देव! हे प्रकाशस्वरूप! हे देवेश!

हे देव स्वामिन्! हे जगन्निवास! हे विराट्स्वरूप! प्रसीद=त्वं प्रसन्नो भव।
तदेव पूर्वदृष्टं सौम्यं रूपं मे मह्यं दर्शय अवलोकय॥४५॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं प्रसीद देवेश! जगन्निवास!॥४५॥

"अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः। यदा ते मर्तो अनुभोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः॥ ऋ० १।१६३।७॥ यजु० २९।१८॥ तै० सं० ४।६।७।३॥ निरु० ६।८॥

अत्रा इति = हे परमात्मन्! ते तव उत्तमम् उत्कृष्टतमम् अत्र गोःपदेःपृथिव्याः स्थाने यद्वा गवां रश्मीनां पदे स्थाने आकाशे यद्वा युद्धस्थले इषः "कर्मणि षष्ठी" इषम् यद्वा इषः कर्माणि इषं गच्छत् "इष गतौ" क्विप्। आसमन्तात् जिगीषमाणं गन्तुमिच्छन्तं सर्वत्र व्यापनशीलं रूपं अत्र अस्मिन् विराट्स्वरूपदर्शनसमये अपश्यम् अवालोकयम् पश्यामि वा। यदा यस्मिन् काले मर्तः मनुष्यः ते तव भोगं सुन्दरं द्रष्टुमर्हं शरीरं अनु+आनट् = अनुक्रमेण अश्नोति प्राप्नोति पश्यतीति भावः। आत् = अनन्तरं इत् = एव तदानीमेव ग्रसिष्ठः त्वद्वास्तविकस्वरूपस्य ग्रसितृतमः यद्वा सर्वेभ्यः गरीयान् भक्तः ओषधीः त्वत्प्रसत्तिरूपाम् ओषधिम् अजीगः गिरति भक्षयतीत्यर्थः प्रकाशयतीति वा। अजीगः अत्र कालपुरुषव्यत्ययः।

किरीटिनमिति = हे सहस्रबाहो! सहस्रं बाहवो यस्य सः सहस्रबाहुः तत्संबुद्धौ हे सहस्रबाहो! हे विश्वमूर्ते! विश्वमेव मूर्त्तिः यस्य स विश्वमूर्तिः तत्संबुद्धौ हे विश्वमूर्ते! तथैव पूर्ववदेव किरीटिनं मुकुटधारिणं गदिनं गदाधारिणं चक्रहस्तं चक्रधारिणं त्वां द्रष्टुं निरीक्षितुमिच्छामि। चतुर्भुजेन चतुर्भुजस्वरूपेण तेनैव रूपेण युक्तो भव।४६।

श्रीभगवानुवाच = मयेति = हे अर्जुन! प्रसन्नेन परितुष्टेन मया तेजोमयं प्रकाशमयं विश्वं विराट् रूपं अतएव अनन्तम् अन्तविहीनं इदं दृश्यमानं रूपम् आत्मयोगात् स्वमायायोगबलात् दर्शितम् त्वद्दृष्टिचरं कृतम्। यत् मे मम आद्यं आदिकालं सर्वकारणं रूपं त्वदन्येन त्वत्तः भिन्नेन न दृष्टपूर्वं = पूर्वं केनापि न दृष्टम्॥४७॥

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्ते॥४६॥

श्रीभगवानुवाच = "मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम्॥४७॥

(वेदमन्त्रो न लभ्यते)

न वेदेति = हे कुरुप्रवीर! हे कुरुकुलशूरश्रेष्ठ! हे अर्जुन! अहं-

XI



परमात्मा नृलोके मनुष्यलोके न वेदयज्ञाध्ययनैः वेदानामध्ययनेन तद्वर्णितानां यज्ञानां करणेन च न च दानैः गवादिप्रदानैः न च क्रियाभिः श्रौतस्मार्तकर्मानुष्ठानैः न उग्रैः तपोभिः कठोरैः अग्न्यादितापैः च एवंरूपः एवंविधः विराट्स्वरूपः त्वदन्येन त्वत्तः भिन्नेन द्रष्टुं शक्यः द्रष्टुमशक्योऽहम्। इति।४८

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥

"अयं सोम इन्द्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि। त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम्॥ साम०१४७१॥ ऋ०९।८८।१॥

अयमिति = हे इन्द्र! हे जीवात्मन्! अयमहं सोमः परमात्मा विराड्रूपं प्रदर्श्य संप्रति तुभ्यं भक्ताय सोमं शान्तिसम्पन्नम् आकारं सुन्वे प्रकटयामि। अयम् आकारः तुभ्यं त्वां पवते पवित्रीकरोति। हे भक्त! त्वम् अस्य = अमुं 'द्वितीयास्थाने षष्ठी' आकारं पाहि स्वहृदयाकाशे रक्ष धारय। त्वं भक्तजनः ह निश्चयेन यं भगवत्कृपादृष्टिविस्तारं चकृषे आत्मनि करोषि। त्वं यं भगवदाकारं मदाय आनन्दप्राप्तये युज्याय भगवत्सायुज्यसंप्राप्तये ववृषे स्वसमीपे वृणुषे। सुन्वे = सुनोतेः कर्मार्थे लटि "लोपस्त आत्मनेपदेषु" इति तलोपः॥

मा ते इति = मम श्रीकृष्णस्य ईदृक् एवंविधं घोरं भयंकरं इदं रूपं विराट्स्वरूपं दृष्ट्वाऽवलोक्य ते तव व्यथा क्लेशः माऽस्तु। तथा च विमूढभावः किंकर्तव्यविमूढता माऽस्तु। अथ च व्यपेतभीः भयरहितः प्रीतमनाः प्रसन्नचित्तः सन् त्वम् अर्जुनः मम श्रीकृष्णस्य इदं रूपं चतुर्भुजस्वरूपं पुनः प्रपश्य पुनः सम्यक्तयाऽवलोकय।४९॥

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम्।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य॥४९॥

"इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि। यो भद्रो रोचनस्तमुदचामि।
अथ० १४।२।३८॥"

इदमिति = अहं परमात्मा श्रीकृष्णः रुशन्तं दुष्टहिंसकं घोरं तनूदूषिं महावीराणां तनूनां शरीराणां दूषि दूषकं कम्पनकरम् इदं दृश्यमानं ग्राभं ग्राहं सर्वविश्वग्रहणशीलम् विराट्स्वरूपं अपोहामि संहरामि दूरीकरोमि इत्यर्थः। यः भद्रः सुखकारी रोचमानः सुन्दरवर्णः चतुर्भुजः देहः अस्ति तं देहं उदचामि उत्कृष्टं यथा स्यात्तथा प्रापयामि प्रकटीकरोमि इत्यर्थः। अतः हे जीवात्मन्! त्वं तं पश्य।

संजय उवाच— इत्यर्जुनमिति— महात्मा महान् उत्कृष्टतरः आत्मा यस्य तथाभूतः महात्मा वासुदेवः श्रीकृष्णः "तथा पुनः मदीयं चतुर्भुजं रूपं प्रीतमनाः पश्य" इत्येवं कथयित्वा अर्जुनं स्वकं आत्मानं रूपं चतुर्भुजस्वरूपं भूयः पुनः दर्शयामास। पुनः सौम्यवपुः भूत्वा सुन्दरदेहः भूत्वा-

भीतं भयं प्राप्तं एनमर्जुनम् आश्वासयामास भयरहितं विदधे ।५०॥
सञ्जय उवाच = इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।
आश्वासयामासञ्च भीतमेनं भूत्वा पुनः सौम्यवपु महात्मा ॥ ५०॥
॥ वेदमन्त्रोऽन लभ्यते ॥

अर्जुन उवाच = 'दृष्ट्वेति = हे जनार्दन! हे श्रीकृष्ण! तव सौम्यं शान्तिसम्पन्नं इदं मानुषं रूपं स्वरूपं दृष्ट्वा ऽवलोक्य इदानीं सांप्रतं प्रकृतिं भयरहितं स्वभावं गतोऽस्मि प्राप्तोऽस्मि। अथापि सचेताः सावधानः संवृत्तोऽस्मि जातोऽस्मि।५१।
अर्जुन उवाच = दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः।५१॥

"अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आपदे गोः। यदा ते मर्तो अनु-भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः॥ ऋ० १।१६३।७॥
अत्रा इति = हे परमात्मन्! ते तव उत्तमम् उत्कृष्टतमं गोः पदे पृथिव्याः स्थाने यद्वा गवां रश्मीनां पदे स्थाने आकाशे यद्वा युद्धस्थले इषः "कर्मणि षष्ठी" इषं यद्वा "इषः कर्माणि इषं गच्छत" "इष गतौ" क्विप्, आ समन्तात् जिगीषमाणं मनुमिच्छन्तं सर्वत्रव्यापनशीलं रूपं अत्र अस्मिन् विराट् स्वरूप दर्शनसमये अपश्यम् अवालोकयम् पश्यामि वा। यदा यस्मिन् काले मर्तः मनुष्यः ते तव भोगं सुन्दरं द्रष्टुं योग्यं शरीरं अनु+आनट् अनुक्रमेण अरति प्राप्नोति पश्यतीति भावः। आत् = अनन्तरं इत् = एव तदानीमेव ग्रसिष्ठः त्वद्विराट् स्वरूपस्य ग्रसिततमः यद्वा सर्वेभ्यः गरीयान् भक्तः ओषधी त्वत्प्रसूतरूपाम् ओषधिं अजीगः गिरति भक्षयतीत्यर्थः। अजीगः "कालपुरुषव्यत्ययः"।

श्रीभगवानुवाच = सुदुर्दर्शमिति = हे अर्जुन! मम परमेश्वरस्य श्रीकृष्णस्य यत् सुदुर्दर्शं सुतरां दुःखेन द्रष्टुं शक्यम् इदं विराट्स्वरूपं यदस्ति तद् रूपं त्वं दृष्टवानसि। देवा अपि मम अस्य रूपस्य नित्यं सर्वदा दर्शनाकांक्षिणः दर्शनाभिलाषिणः भवन्ति। अतः देवानामपि तद् दर्शनं दुर्लभमस्ति।५२॥
श्रीभगवानुवाच = "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः॥५२॥

रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु। ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः॥ यजु० ७।४५॥
रूपेणेति = हे जीवात्मानः! वो युष्मदर्थं रूपेण चर्मचक्षुर्ग्राह्येण प्रियेण स्वरूपेण रूपं स्वस्वरूपम् अभि - त्वत्सम्मुखे आ समनात् आगाम प्राप्तोऽस्मि निज - स्वरूपेण अभ्यागत इत्यर्थः। विश्ववेदाः विश्वं सर्वं वेत्तीति विश्ववेदाः सर्वज्ञः अहं वो युष्मान् विभजतु - यथार्हं स्वरूपदर्शनाय विभागं करोमि। तुथः = तुथाः - वचनव्यत्ययः। सर्वेभ्यः भक्तेभ्यः श्रेष्ठाः यूयं ऋतस्य सत्यस्य पथा मार्गेण प्रेत प्रकर्षेण गच्छत। चन्द्रदक्षिणाः चन्द्रं सुवर्णं दक्षिणा दानं येषां ते चन्द्र-

दक्षिणा: दातार: त्यागिन: पुरुषा: "चन्द्रमिति हिरण्यनामसु पाठ: (नि० १।२)
स्व: सुखं पश्य = पश्यन्ति (लकारव्यत्यय:)। तथा च अन्तरिक्षम् अन्तर्यामिणं
परमात्मानं "अन्तरिक्षं कस्मात् शरीरेषु अन्तरक्षयम्" (निरु० २।१०)। सद-
स्यै: सह प्राप्तुं यतस्व प्रयत्नं कुरुत।

नाहमिति = एवंविध: विराट्स्वरूपोऽहं न वेदै: न वेदाध्ययनमात्रेण, न तपसा
न अग्नितापादिना तपसा, न दानेन भूम्यन्नगवादिदानेन, न च इज्यया
श्रौतस्मार्तकर्मानुष्ठानमात्रेण द्रष्टुं शक्योऽस्मि। यथा येन प्रकारेण मां मत्स्व-
रूपं दृष्टवान् असि अवलोकितवान् असि। हे अर्जुन! हे परंतप! एवंविध: अहं
तु अनन्यया विषयान्तररहितया भक्त्या भजनेन इदमेव मुक्तिपदमिति तत्त्वेन
याथातथ्येन ज्ञातुं निश्चेतुं द्रष्टुम् अवलोकयितुं साक्षात्कर्तुमित्यर्थ: प्रवेष्टुं तत्र
ब्रह्मणि अवस्थातुं च शक्योऽस्मि। ५३, ५४॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं
दृष्टवानसि मां यथा॥ ५३॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥ ५४॥

"न तमश्नोति कश्चन दिव इव सान्वारभम्। सावर्ण्यस्य दक्षिणा वि सि-
न्धुरिव पप्रथे। ऋ० १०।६२।९॥

न तमिति = कश्चन अपि जन: वेदाध्ययनमात्रेण केवलं दानेन तपसा
यज्ञानुष्ठानेन वा तं परमात्मानं न अश्नोति द्रष्टुं न व्याप्नोति न समर्थो भवतीति
भाव:। यथा दिव: इव सान्वारभम् = दिव: आकाशस्य सानु सानौ कन्दरायाम् आ-
रभम् आरब्धं तदन्तं न प्राप्नोति। सावर्ण्यस्य सवर्णस्य समानस्य भाव:
सावर्ण्यं तस्य सावर्ण्यस्य सर्वत्र समानतया वर्तमानस्य परमात्मन: दक्षिणा
दक्षिणया स्वप्रसत्तिदानेन सिन्धुरिव समुद्र इव सर्वत्र स्वभक्तिमाहात्म्येन
विपप्रथे विशेषेण प्रथित: प्रत्यक्षी भवितुं प्रसिद्ध: भवति।

मत्कर्मेति = य: मद्भक्त: जन: मत्कर्मकृत् मम निमित्ते कर्मकर्ता मत्परम: अहमेव
परम: अत्युत्तम: यस्य स: मत्परम:। मद्भक्त: मत्सेवक: संगवर्जित: धनपुत्रादिषु
रागरहित: सर्वभूतेषु सर्वप्राणिषु निर्वैर: वैरशून्य: अस्ति। हे पाण्डव! हे पाण्डुपुत्र!
अर्जुन! स भक्त: मां परमात्मानं एति प्राप्नोति। ५५॥

इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां एकादशोऽध्याय:
समाप्त:॥ ११॥

मत्कर्मकृन्मत्परमो मद्भक्त: संगवर्जित:।
निर्वैर: सर्वभूतेषु य: स मामेति पाण्डव॥ ५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु कृष्णार्जुनसंवादे विश्वरूपदर्शनं
नामैकादशोऽध्याय: समाप्त:। श्रीकृष्णार्पणमस्तु॥

१ य आनयत् परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नो युवा सखा ।
साम० १२७ । ऋ० ६।४५।१॥

२ यद्वा = अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत । मम वशे-
षु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत । अथ० ३।८।६॥

१ य इति = यः इन्द्रः भक्त्यैश्वर्यसम्पन्नः मद्भक्तः जीवात्मा सुनीती सुनीत्या
शोभनसाधननीतिरीत्या तुर्वशं हिंसकस्वभावं यद्वा तुर्वशं कामं संगं यदुं
कापथगामिनीं वृत्तिं यद्वा सर्वभूतेषु वैरनियमं परावतः दूरदेशम् आनयत्
आ समन्तात् प्रापयत् । स इन्द्रः भक्त्यैश्वर्यसम्पन्नः यजमानः युवा मद्भक्ति-
साधनात् हेतोः नित्यं तरुणः सन् नः अस्माकं मम परमात्मनः सखा समानख्यानः
मम सामीप्यमापन्नः सन् शोभते । तुर्वशम् = तुर्वी हिंसायाम् । यद्वा "तूर त्वरण-
हिंसनयोः" । यद्वा तुर्वशुः कामः । यदुम् = "यमेर्दुक्" यम्यते नियम्यते इति यदु ।

२ अहमिति = अहं परमात्मा मनसा स्वमननशक्त्या मनांसि युष्माकं भक्तानां मनां-
सि मननशक्तीः गृभ्णामि स्वायत्तीकरोमि अर्थात् युष्माकं मनांसि मयि आस-
क्तानि भवन्ति । मम परमात्मनः चित्तम् अनु चेतनशक्त्यनुकूलं चित्तेभिः स्वचे-
तनशक्तिभिः आ+इत समन्ततः आगच्छत । अत एवाहं मम परमात्मनः
वशे अधीनं वः युष्माकं प्रियभक्तानां हृदयानि अन्तःकरणानि कृणोमि
करोमि अर्थात् यथा ते मत्कर्मकर्तारः भवेयुः । अतः मम परमात्मनः यातं
मार्गं अनुवर्त्मानः अनुकूलं गच्छन्तः आ+इत = मम मुक्तिधाम आग-
च्छन्ति ॥

इति श्रीसारस्वतान्वयलैयाकास्तव्यन्यायभूषणजगन्नाथ-
शास्त्रिज्योतिषिकृतायां वेदगीतार्थबोधिन्यामेकादशोऽध्यायः
समाप्तः ॥११॥ श्रीकृष्णार्पणमस्तु ।

अथ द्वादशाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः याति कुरुक्षेत्रे युद्धर्दनम्।१। वेदो गीता तथा गीता वेद एव न संशयः। वेद-गीता पृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥२॥

अर्जुन उवाच = एवमिति = हे भगवन्! ये भक्ताः एवं त्वत्कर्मनिरताः सततयुक्ताः सर्वदाऽभेदभक्त्या युक्ताः सन्तः त्वां परमेश्वरं पर्युपासते उपासनां कुर्वन्ति, ये च अव्यक्तं सकलेन्द्रियातीतं अक्षरं अक्षरब्रह्म उपासते तेषां उभयविधानां भक्तानां मध्ये के योगवित्तमाः योगं वेत्तीति योगवित् तेषां मध्ये के श्रेष्ठाः यतयः सन्ति।१॥

अर्जुन उवाच = एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाऽप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥१॥
(वेदमन्त्रेण लभ्यते)

मय्यीति = ये भक्ताः मयि मम स्वरूपध्याने मनः चित्तं आवेश्य संस्थाप्य नित्ययुक्ताः मत्कर्मानुष्ठानुष्ठानादिषु लग्नाः सन्तः परया अत्युत्कृष्टया श्रद्धया ईश्वरोपासनेन मुक्तिं सेत्स्यतीति सत्यबुद्ध्या उपेताः मिलिताः सन्तः मां परमेश्वरं उपासते सेवन्ते। ते एव युक्ततमाः योग्याग्रगण्याः मे मताः निश्चिताः सन्ति॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥२॥

श्रद्धां देवा यजमाना वायुगोपा उपासते। श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु। ऋ० १०।१५१।४॥ तै०ब्रा०२।८।८।७॥

श्रद्धामिति = वायुगोपाः वायुः प्राणापानादिः रक्षितः यैः ते वायुगोपाः प्राणायामप्रवीणाः, यद्वा वायुना ईश्वरेण गोपाः रक्षिताः वायुगोपाः देवाः ज्ञानिनः यजमानाः सत्पूजायां नित्ययुक्ताः सन्तः श्रद्धां श्रद्धा पुरुषगतोऽभिलाषविशेषः तां श्रद्धां स्वान्तःस्थाभिलषितं माम् उपासते सेवन्ते। ये भक्ताः हृदय्यया हृदये भवा हृदय्या तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव उपासते परिचरन्ति यतः यस्मात् कारणात् श्रद्धया सत्यसंकल्पेन वसु ज्ञानं सर्ववासभूतं परमात्मानं वा विन्दते लभते इति।

~~ये इति = ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते सर्वत्रगमचिन्त्यञ्च~~

येइति = ये तु जनाः इन्द्रियग्रामं मनसा सहितं इन्द्रियसमूहं संनियम्य संनिरुध्य वशीकृत्य सर्वभूतहिते रताः सर्वेषां भूतानां प्राणिनां हिते कल्याणे रताः लग्नाः सन्तः सर्वत्र सर्वप्राणिषु समबुद्धयः समा एकस्वरूपा बुद्धिः येषां ते समबुद्धयः सन्तः सर्वत्रगं सर्ववस्तुषु व्याप्तं अचिन्त्यं चिन्ताशक्त्यप्राप्यं कूटस्थं कम्पनरहितं अचलं स्थिरं ध्रुवं शश्वद्वर्तमानं अनिर्देश्यम् "इदमेतत्, इदमेतत्" इति निर्देशरहितं अव्यक्तं सर्वेन्द्रियैः

अप्रत्यक्षं अक्षरम् अक्षरस्वरूपं ब्रह्म पर्युपासते सर्वतः भजन्ते ते मामेव परमात्मानं प्राप्नुवन्ति । ३, ४॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् । ऋ० २।२६।३॥ तै० सं० २।३।१४।३। तै० ब्रा० २।८।५।३॥

स इति = यः यजमानः जनः श्रद्धामनाः मत्पूजायै श्रद्धामनसि यस्य सः श्रद्धामनाः सन् देवानां ज्ञानज्योतिषा प्रकाशमानानां योगिनां पितरं पालयितारं ब्रह्मणस्पतिम् विश्वस्वामिनं परमात्मानं हविषा नमस्कारसचरुणा आविवासति आ समन्तात् परिचरति उपास्ते । विवासतिः परिचरणकर्मा । स इत् - स एव भक्तः जनेन जातेन सर्वेण लोकेन वाजम् अन्नादिपदार्थं भरते बिभर्ति । स एव विशा प्रजया आत्मीयेन बन्धुजनेन सह समभावत्वेन वाजं सर्वेन्द्रियबलं एकरसतया बिभर्ति । स एव जन्मना जात्या वाजं बलं भरते स एव नृभिः इन्द्रियप्रभृतिनेतृभिः सह धना धनानि अर्थात् विषयान् संभरते अर्थात् स च यजमानः भगवद्भक्तः स्वयं स्वेन्द्रियाधीनः न भवति ।

छान्दोग्योपनिषदि = यथा = "यत्तद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वमह्रस्वमदीर्घम्" । "न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनः" । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" ॥ यथा कठोप० अ० १ व० २ = "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" ॥ मुण्डकोप० ३।१।८ = "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा" तथा मुण्डकोप०- ३।१।५ = "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ तथा कठोप० १।३।१५ = "अनाद्यनन्तं महतः परं ध्रुवम्" ।

क्लेश इति = क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

"क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति" । कठोप० १।३।१४
"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूः ॥ यजु० ४०।८"

तथा तैत्ति० उप० भृगुवल्ली अनु० १० श्रु० ५ = "ओं स य एवंवित् । अस्मात् लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्य एतं प्राणमयमात्मानमुपसंक्रम्य, एतमानन्दमयमात्मानमुपसंक्रम्य इमाँल्लोकान् कामान्नी कामरूप्यनुसंचरन् एतत्साम

गायन्नासते ॥ हा०३ बुहा ३ बुहा ३ वु।

ये इति = ये जनाः तु मयि परमात्मनि सर्वाणि कर्माणि श्रौतस्मार्तानि सकलानि कर्माणि संन्यस्य समर्प्य मत्पराः मद्भक्तिसंलीनाः अनन्येन योगेन विषयान्तर-शून्येन भक्तियोगेन मां परमात्मानं ध्यायन्तः ध्यानं कुर्वन्तः उपासते सेवन्ते हे पार्थ! हे पृथासुत अर्जुन! अहं परमात्मा मयि विश्वात्मके ब्रह्मणि आवेशित चेतसां स्थापित मनसां तेषां स्वभक्तजनानां अचिरात् तूर्णमेव मृत्युसंसारसागरात् मृत्युसंसारसमुद्रात् समुद्धर्ता पारकर्ता भवामि ॥ ६, ७ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम् ॥ ७ ॥

" ये वध्यमानं मनुदीध्याना अन्वैक्षन्त मनसा चक्षुषा च। अग्निष्टानग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥ अथ० २।३४।३ ॥

मन्त्र = " यो वैतां ब्रह्मणो वेदामृतेनावृतां पुरम्। तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः। अथ० १०।२।२९ ॥

ये इति = ये यजमानाः जीवाः मुमुक्षवः अनुदीध्यानाः परमात्मानं ध्यायमानाः सन्तः मनसा मननशक्त्या यद्वा हृदयेन चक्षुषा स्नेहवशात् बुद्धिनेत्रेण ऐक्षन्त पश्यन्ति। अग्निः ज्योतिःस्वरूपः देवः स्वभासा देदीप्यमानः परमात्मा विश्वकर्मा विश्वं कर्म कर्तव्यं कर्म यस्य स विश्वकर्मा प्रजया स्वसृष्ट्या संरराणः सम्यक्तया रममाणः जगदीश्वरः अग्रे प्रथमम् एव तान् सर्वान् यजमानान् प्रमुमोक्तु देहक्लेशबन्धनात् विमुञ्चतु अर्थात् तान् जीवन्मुक्तान् करोति। ऐक्षन्त = ईक्ष दर्शने। छान्दसो लङ्। मुमोक्तु = मुञ्चतेश्छान्दसः शपः श्लुः। रराणः = रै धातोः लिटि कानच्। अग्निष्टान = "सुषामादिषु च" इति अग्निष्टान इत्यत्र षत्वम्।

मय्येवेति = मयि परमात्मनि मनः चित्तं आधत्स्व धारय। मयि परमात्मनि एव बुद्धिं मतिं निवेशय स्थिरी कुरु। मयि एव परमात्मनि एव निवसिष्यसि वासं करिष्यसि। अत ऊर्ध्वं एतत्करणानन्तरं मत्प्राप्तौ संशयः नास्ति ॥ ८ ॥

अथेति = हे धनंजय! हे अर्जुन! अथ यदि चित्तं स्वमनः मयि परमात्मनि स्थिरं समाधातुं निश्चलतया यथा स्यात्तथा स्थापयितुं न शक्नोषि समर्थः नासि ततः तु अभ्यासयोगेन मां परमात्मानं आप्तुं लब्धुम् इच्छ इच्छां कुरु ॥ ९ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥

"मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः।

देवा होतारः सनिषन् न एतदरिष्टाः स्याम तन्वा सुवीराः॥ ऋ०१०।१२८।३॥ अथ०५।-३।५॥

मयीति = देवाः ज्ञानिनः विद्वांसः जनाः मयि परमात्मनि द्रविणं सर्वत्र द्रवण-शीलं मनः आयजन्ताम् आसमन्तात् निदधतु। आशीः आशासमूहः यद्वा सर्वाश्रयमात्रं वस्तुजातं मयि परमात्मनि अस्तु अर्पितं भवतु। "आशीराश्रयणात् आशीराशास्तेः" (निरु० ६।८)। देवहूतिः देवानां ह्वानं देवपूजनं मयि परमात्मनि अर्पितमस्तु। होतारः मदाहोतारः देवाः सात्विकाः इन्द्रियगणाः नः मयि परमात्मनि एतत् सर्वम् अन्तःकरणचतुष्टयं सनिषन् मयि प्रवेशं कुर्वन्तु। सनिषन् = मूर्धन्य षकारः आदेशः सकारश्च निपातितः, यद्वा प्रयच्छन्तु। अतः तन्वा मद्भजनाभ्यासपरेण शरीरेण अरिष्टाः अपीडितात्मानः सन्तः सुवीराः सुष्ठु मद्गतवीर्योपेताः सर्वैः विद्वद्भिः सुवरणीया वा स्याम सन्तु। स्यामेत्यत्र पुरुषव्यत्ययः। अभ्यासे इति = हे अर्जुन! यदि त्वम् अभ्यासे प्रतीकोपासनाभ्यासेऽपि असमर्थः अशक्तः असि तदा मत्कर्मपरमः लौकिकं वैदिकंच सर्वं कर्म मत्परं मदर्थं भवतु सर्वविधः त्वं मदर्थं मन्निमित्तं कर्माणि लौकिकानि वैदिकानि च कर्माणि कुर्वन् सिद्धिं कैवल्यसिद्धिं आप्स्यसि लप्स्यसे॥१०॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।

मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि॥१०॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः। तं त्वा मन्यो अक्रतुर्जिहीडाहं स्वा तनूर्बलदावा न एहि॥ ऋ०१०।८३।५॥ अथ०४।३२।५॥

अभाग इति = हे प्रचेतः! हे प्रकृष्टज्ञानवन् परमात्मन्! हे मन्यो! हे प्रकाशात्मन्! 'मन्युर्मन्यतेः दीप्तिकर्मणः' (निरु०१०।२९)। तविषस्य महतः तव परमात्मनः क्रत्वा कर्मणा अभागः शून्यः सन् त्वत्कर्मभागशून्यः इत्यर्थः। त्वाम् अयजमान इति भावः। अपपरेतः अस्मि त्वत्तः पराग्गतोऽस्मि। तं सर्वतो महान्तं तादृशं त्वां परमात्मानं अक्रतुः कर्माभ्यासशून्यः त्वत्तोषकारककर्मवर्जितः अहं जिहीड त्वच्छरणमागतोऽस्मि। अथ इदानीं मम स्वा तनूः स्वकीयशरीरभूतः त्वं नः अस्माकं यजमानानां बलदाः बलदाता सन् एहि अस्मत्समीपमागच्छ। बलदावा = डुदाञ् -दाने। "आतो मनिन्क्वनिप्वनिपश्च" इति वनिप्।

अथैतदपीति = अथ यदि एतत् मन्निमित्तं कर्म कर्तुमपि अशक्तोऽसि असमर्थः असि ततः तर्हि यतात्मवान् यतः वशीकृतः आत्मा मनः येन तथाभूतः सन् मद्योगं मयि परमेश्वरे योगः अर्पणं मद्योगः तं मद्योगं मयि सर्वकर्मार्पणं आश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलस्य त्यागं कुरु विधेहि॥११॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।

सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्॥११॥

"अयं ते अस्म्युप न एह्यर्वाङ् प्रतीचीनः सहुरे विश्वदावन्। मन्यो वज्रिन्नभि न आ ववृत्स्व हनाव दस्यूँरुत बोध्यापेः॥ अथ०४।३२।६॥ ऋ०१०।-८३।६॥

अभीति = अहं किञ्चिदपि कर्म कर्तुमशक्तः अतः अयमहं यजमानः ते तव परमात्मनः योगं शरणं वा आस्थि। प्रतीचीनं स्वाचरणतः पाश्चिमीभूतान् विमुखान् इत्यर्थः नोऽस्मान् अर्वाङ् अस्मत्संमुखः सन् उपेहि आगच्छ। हे सद्गुरो! हे सहनशील! परमात्मन्! हे विश्वपावन! हे विश्वदातः! हे विश्वम्भर! हे मन्यो! हे प्रकाशात्मन्! हे वज्रिन् हे वज्रवत् संहारकारिन्! यद्वा क्रूरनिमित्ते वज्रधारिन्! हे ब्रह्मन्! नः अस्मान् अभि आ ववृत्स्व = अभिमुखम् आवर्तस्व अर्थात् दर्शनं देहि। दस्यून् भवदासत्त्युपक्षपयितॄन् कामक्रोधादिशत्रून् हनाव जहि। पुरुषवचनव्यत्ययौ। उत अपि च आपेः आपिम् बन्धुभूतं मां बोधि, 'रक्षणीयोऽयमिति बुध्यस्व'। ववृत्स्व = छान्दसः शपः श्लुः। हनाव = "आडुत्तमस्य पिच्च" इत्याडागमः।

श्रेय इति = हीति निश्चये। अभ्यासात् प्रतीकोपासनाऽभ्यासमात्रात् यद्वा श्रवणमात्राभ्यासात् ज्ञानं "सर्वं खल्विदं ब्रह्म" सर्वत्र ब्रह्म व्याप्तमस्तीति ज्ञानं श्रेयः मोक्षाय श्रेष्ठतरं साधनमस्ति। ज्ञानात् "ब्रह्म सर्वत्र व्याप्तमस्ति" इति केवलज्ञानमात्रात् ध्यानं भगवद्ध्यानं विशिष्यते विशेषतरं भवति। ध्यानात् ध्यानमात्रात् कर्मफलत्यागः लौकिकवैदिककर्मणां फलस्य त्यागः मोक्षसाधनाय श्रेयान् अस्ति। त्यागात् सर्वकर्मफलत्यागात् अनन्तरं पश्चात् शान्तिः आत्यन्तिकसंसारोपरतिः सिध्यति। १२।

श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात् कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम् ॥१२॥

इन्द्रो जातो मनुष्येष्वन्तर्घर्मस्तप्तश्चरति शोशुचानः। सुप्रजाः सन्त्स उदारे न सर्षद् यो नाश्नीयादनडुहो विजानन्। अथ०४।११।३॥

इन्द्र इति = इन्द्रः परमात्मा मनुष्येषु मनुष्याणां अन्तः हृदि जातः "सत्यं ज्ञानमनन्तं ब्रह्म" ज्ञानत्वेन जायते प्रादुर्भवति। अतोऽभ्यासात् ज्ञानं श्रेयः। ज्ञानस्वरूपः स च परमात्मा तप्तः तपःस्वरूपः घर्मः दीप्तः शोशुचानः ध्यानेन अत्यर्थं देदीप्यमानः चरति सर्वत्र वर्तते। अतः ज्ञानादपि भगवद्ध्यानं श्रेयोऽस्ति इति। अनडुहः परमात्मनः परमात्मनः माहात्म्यं विजानन् विशेषेण अवगच्छन् भगवद्भक्तः जनः न अश्नीयात् कर्मफलसंगं न भुनक्ति। स सुप्रजाः सन् विज्ञप्रजोपेतः मोहबन्धनविहीनसन्तानोपेतः सन् उदारे देहावसानकाले उत = अस्मात् शरीरात् उत्क्रान्तः न सर्षत् = न संसरति पुनः संसारधर्मान् न प्राप्नोति किन्तु भगवल्लोकं प्राप्नोति। तप्तः = कर्तरि क्तः। सुप्रजाः = नित्यमसिच् समासान्तः। 'प्रजामेधयोः' इत्यसिच् समासान्तः। सर्षत् = सृ गतौ इत्यस्माल्लेटि अडागमः। "सिब्बहुलम्" इति सिप्॥

अद्वेष्टेति = सर्वभूतानां सकलजीवानां अद्वेष्टा द्वेषकर्तृत्वरहितः सर्वभूतानां मैत्रः मित्रतायुक्तः सर्वभूतानां करुणः एव सर्वत्र करुणायुक्तः। निर्ममः "एतन्मम अस्ति" "एतन्मम अस्ति" इति ममतारहितः। निरहङ्कारः अहङ्काररहितः, सम-

दुःखसुखः, सुखे दुःखे च समबुद्धिः। क्षमी = शीतोष्णादिसहनशीलः सततं नित्यं सन्तुष्टः यथालाभेन सन्तोषवान्। योगी ब्रह्मानन्दयोगवान् यतात्मा संयतदेहः संयतमनाः च दृढनिश्चयः दृढः स्थिरः परिपक्वः निश्चयः यस्य स दृढनिश्चयः स्थिरनिश्चयः मयि परमात्मनि अर्पितमनोबुद्धिः अर्पिते स्थापिते मनः बुद्धिश्च येन सोऽर्पितमनोबुद्धिः यः मद्भक्तः मद्भक्तिकर्ता अस्ति, स जनः मे मम परमेश्वरस्य प्रियः स्निग्धः अस्ति। १३,१४।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी॥१३॥
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥१४॥

सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः। किल्बिष-स्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय। ऋ० १०।७१।१०॥

सर्वे इति = सखायः सर्वेषु भूतेषु मैत्री करुणा द्वेषत्वबुद्ध्या समानज्ञानाः समत्वेन वर्तमानाः सन्तः सर्वे यतयः सभासाहेन = भाः तेजः तां सोढुं शक्यः भासाहः, भासाहेन सह वर्तते इति सभासाहः तेन सभासाहेन उष्णत्वादिकं सोढुं शक्नुवता सख्या समानख्यानेन समानमित्रेण वा यतिना ज्ञान-कीर्त्या आगतेन प्राप्तेन यतात्मना नन्दन्ति सर्वे सुखदुःखादिषु हृष्टाः भवन्ति। किल्बिषस्पृत् = अहंकारादिपापरहितः पितुषणिः = 'पितुः' इत्यन्ननाम, दक्षिणा वा, तं सनोति इति पितुषणिः सर्वेभ्योऽन्नदाता दक्षिणादाता एषां हितः सर्वप्राणिनां हितः हितकारकः, वाजिनाय = वाजिनम् इन्द्रियं तस्मै वाजिनाय इन्द्रियदमनाय अरम् अलं समर्थः भवति। कठोप० २।३।१४ = "यदा सर्वे प्रमुच्यन्ते कामाः येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। तथा च मुं० उप० ३।२।१ = "उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः"।

यस्मादिति = लोकः जनः यस्मात् पुरुषात् न उद्विजते विक्षेपं न प्राप्नोति, यः प्राणी हर्षामर्षभयोद्वेगैः हर्षः प्रमोदः, अमर्षः असहिष्णुता, भयं चौरादि-भीतिः, तेषां उद्वेगैः विक्षेपैः मुक्तः अस्ति स च प्राणी मे मम प्रियः अस्ति।१५।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥१५॥

"तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः।" ऋ० १।१५४।५॥ तै० ब्रा० २,८,६,२

तदस्येति = देवयवः देवं द्योतनस्वभावं परमात्मानं यज्ञदानादिभिः इच्छन्तो नरः ज्ञान-नेतारः यतयः यत्र यस्यां अवस्थायां मदन्ति तृप्तिमनुभवन्ति। अस्य मुमुक्षोः यजमानस्य तत् पाथः मार्गं प्रियं श्रेष्ठं अभि अश्याम् अभिप्राप्नोमि। उरुक्रमस्य उरु अत्यधिकं क्रमः संक्रमणं यस्य तथाभूतस्य तस्य विष्णोः सर्वत्र व्यापकस्य

परमात्मनः परमे अत्युत्कृष्टे पदे स्थाने मध्वः आनन्दरसस्य उत्सः निष्यन्दो वर्तते। यत्र क्षुत्तृष्णाजरामृत्युपुनरावृत्त्यादिभयं नास्ति। यश्च हर्षशोकादिरहितः स च मुक्तो भवति। इत्था = इत्थं उक्त प्रकारेण स हि बन्धुः स खलु परमात्मनः बन्धुः प्रियः भवति।

अनपेक्ष इति = यः अनपेक्षः शुभाशुभवस्तुप्राप्तीच्छाशून्यः शुचिः शुद्धः दक्षः कर्मसु कुशलः उदासीनः युक्तायुक्तप्रवृत्तिषु तटस्थः गतव्यथः सन्तापरहितः सर्वारम्भपरित्यागी सर्वकर्म संन्यासी अस्ति स मद्भक्तः मे - मम प्रियः अस्ति। १६।

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥

प्रियास इत्ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः। नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन्। ऋ० ७।१८।८॥ अथ० २०।३७।८॥

प्रियास इति = हे मघवन्! हे परमैश्वर्यवन्! परमात्मन्! ते तव अभिष्टौ इच्छायां नरः मुमुक्षवः मनुष्याः वयं सखायः समानख्यातयः आकांक्षानाकांक्षाशुच्यशुचिप्रभृतिषु समानस्वभावाः प्रियासः भवत्प्रियाश्च सन्तः शरणे त्वदाश्रये मदेम प्रसन्नाः भूत्वा तिष्ठेम। त्वम् अतिथिग्वाय पूजयाऽतिथीन् गच्छतीति अतिथिग्वः तस्मै अतिथिग्वाय पूजनीयपुरुषाय शंस्यं प्रशंसनीयं कार्यं करिष्यन् तुर्वशं हिंसकवशवर्तारं याद्वं यत्नशीलं भक्तं जनं निशिशीहि स्वकर्तव्याय तीक्ष्णीकुरु। न इति पादपूर्तौ।

य इति = यः पुरुषः प्रियवस्तुनि प्राप्ते न हृष्यति हर्षं न प्राप्नोति, यश्च अनिष्टवस्तुनि प्राप्ते न द्वेष्टि द्वेषं न कुरुते। यः गतं पदार्थं न शोचति शोकं न करोति, अनागतं वस्तु यः न कांक्षति न इच्छति। यः शुभाशुभपरित्यागी इष्टानिष्टवस्तुपरित्यागशीलः भक्तिमान् भगवद्भक्तिकर्ता चास्ति स मुमुक्षुः मे मम प्रियोऽस्ति। १६॥

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः॥ १६॥

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः। प्रियाः स्वग्नयो वयम्। ऋ० १।२६।७॥ साम० १६१९॥

प्रिय इति = विश्पतिः विशां प्रजानां पतिः रक्षकः पालकः विश्पतिः। होता सर्वकर्मफलप्रदाता मन्द्रः सदा हृष्टः वरेण्यः वरणीयः परमात्मा नः हर्षशोकलोभशून्यानां अस्माकं प्रियः अस्तु। स्वग्नयः शोभनज्ञानाग्नियुक्ताः वयं मुमुक्षवः अपि प्रियाः भूयास्म इति। वरेण्यः = वृञ् संभक्तौ - एण्य प्रत्ययः।

सम इति = यः शत्रौ मित्रे च समः तुल्यः, तथा माने आदरे अपमाने अप्रतिष्ठायां च समः तुल्यः, शीतोष्णसुखदुःखेषु शीते उष्णे सुखे दुःखे च समः समदर्शी भवति। यश्च संगविवर्जितः सांसारिकसम्बन्धविरहितः सन्

तुल्यनिन्दास्तुतिः निन्दायां स्तुतौ च तुल्यः एकरसः अस्ति तथा मौनी वाच्ंयमः येन केनचित् वस्तुना सन्तुष्टः प्रसन्नः भवति, तथा अनिकेतः = नास्ति निकेतः निवासः यस्य स अनिकेतः स्थिरवासरहितः स्थिरमतिः निश्चलमतिः भक्तिमान् भगवन्निष्ठः अस्ति स ईदृशः भक्तः नरः मे मम प्रियः अस्ति। १८, १९॥

समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः॥१८॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिः भक्तिमान् मे प्रियो नरः॥१९॥

यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत। आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः। अथ० २०।६७।४॥ ऋ० २।३६।२॥

यज्ञैरिति = यज्ञैः स्वाध्याययज्ञानयज्ञैः शत्रुमित्रमानापमानादि समता दृष्टि— यज्ञैः संमिश्लाः संमिश्राः संयुक्ताः सन्तः पृषतीभिः प्रकाशमानैः ऋष्टिभिः शीतोष्णसुखदुःखभयायुधैः यामन् यामनि पथे स्थिताः सन्तोऽपि शुभ्रासः एकरसत्वेन शोभमानाः अञ्जिषु स्तुतिमयाभरणेषु प्रियाः उत = अपि भरतस्य = सर्वस्य जगतः भर्तुः पालकस्य परमात्मनः ~~प्रियाः जनाः पोत्रात् पोतुः संतुष्टियागात् सोमं~~ सूनवः पुत्राः भक्ताः भूत्वा बर्हिः दर्भमये आसने उपविश्य दिवः द्योतनशीलस्य परमात्मनः नरः प्रियाः जनाः पोत्रात् पोतुः संतुष्टियागात् सोमं ब्रह्मभक्तिरसम् आ समन्तात् पिबत पानं कुरुत॥ परमहंसोप० श्रु० २ = "न शीतं न चोष्णं न सुखं न दुःखं न मानावमाने इति षडूर्मिवर्जितो निन्दागर्वमत्सरदम्भदर्पेच्छासुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते"।

येतु इति = ये तु मद्भावमापन्नाः मत्परमाः मत्पराः भूत्वा इदं मोक्षसाधनम् इति श्रद्दधानाः श्रद्धां धारयन्तः धर्म्यामृतं धर्मादनपेतम् अमृतं यथोक्तं यथारीतिप्रतिपादितं पर्युपासते नित्यं सेवन्ते ते भक्ताः मद्भावनास्थिताः मे मम परमेश्वरस्य अतीव अत्यर्थमेव प्रियाः परमप्रेमाश्रयाः भवन्ति॥ २०

इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां द्वादशोऽध्यायः समाप्तः। १२॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥२०॥

आगाद् दुर्दगादयं जीवानां व्रातमप्यगात्। अभूदु पुत्राणां पिता नृणां च भगवत्तमः। अथ० २।९।२॥

आगादिति = अनेन पूर्वप्रतिपादितफलसिद्धिं दर्शयति। अयं भक्तः धर्म्यामृतं वेदगीतोपदेशं सेवमानः लौकिकबन्धनात् विनिर्मुक्तः आगात्

XII



मतिप्रयत्नमागच्छति। उद्गात् प्राकृत पदार्थेभ्यः उदस्थात् सर्वत्र सुखदुःखादिरहितः सन् उद्गच्छति संचारक्षमो भवति इति भावः। अयं भक्तः जीवानां संसारे जीवतां जनानां व्रातं समूहं अपि अगात् प्राप्नोति बन्धुजनैः सह निर्लेप इव व्यवहारं करोति। उ= अपि च अयं भगवद् भक्तः पुत्राणां आत्मीयानां रक्तिमयानां नरकरक्षकाणां विचाराणां पिता स्वाधीनरक्षकः अभूत् भवति। च= अपि च नृणां सांसारिक मनुष्याणां मध्ये भगवत्मः भगवतः अतिप्रियः भक्तः भवति॥

इति श्री सारस्वतान्वय लैयावस्तव्यन्यायभूषण जगन्नाथ शास्त्रि कृतायां वेदगीतार्थ बोधिन्यां द्वादशोऽध्यायः समाप्तः

श्रीकृष्णार्पणमस्तु। श्रीरस्तु॥

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे सुदुर्लभम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो द्वयोः ब्रह्म प्रकीर्तनात्॥२॥

इदमिति = हे कौन्तेय! हे कुन्तीसुत! हे अर्जुन! इदं पाञ्चभौतिकं शरीरं देहः क्षेत्रं रागद्वेषादिदोषविशिष्टः पुमान् क्षीयतेऽनेनेति क्षेत्रं यद्वा क्षितेः संसारात्मकात् अनर्थात् शमादियुक्तं पुरुषं त्रायते इति क्षेत्रम्। यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रम्। यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रम्। यद्वा सुखदुःखादिफलोत्पादने क्षेत्रवदाचरतीति क्षेत्रमिति विज्ञैः अभिधीयते कथ्यते। एतत् क्षेत्रं यः पुरुषः वेत्ति जानाति तद्विदः क्षेत्रविदः पुरुषाः, क्षेत्रज्ञः क्षेत्रं प्रकृतिः प्राकृतं सर्वं दृश्यं स्वतोऽभिन्नं जानाति इति क्षेत्रज्ञः आत्मा इति तं प्राहुः कथयन्ति।

अर्जुन उवाच - प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च। एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव॥ श्रीकृष्ण उवाच=

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥१॥

अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः। एतद् वै भद्रमनुशासनस्योत स्रुतिं विन्दत्यञ्जसीनाम्॥ ऋ० १०।३२।७॥

अक्षेत्रविदिति = अक्षेत्रविद् - क्षि निवासगत्योः। क्षीयते गम्यतेऽनेनेति क्षेत्रं देहः यद्वा क्षितेः संसारात्मकात् अनर्थात् शमादियुक्तं पुरुषं त्रायते इति क्षेत्रं देहः, यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रं देहः यद्वा सुखदुःखादिफलोत्पादने क्षेत्रवदाचरतीति क्षेत्रं देहः तं क्षेत्रं देहं वेत्तीति क्षेत्रवित् - न क्षेत्रवित् अक्षेत्रवित् देहमजानन् पुरुषः क्षेत्रविदं क्षेत्रज्ञं पुरुषमप्राट् पृष्टवान्। स क्षेत्रस्य अज्ञाता अज्ञानी पुरुषः क्षेत्रविदा क्षेत्रज्ञेन अनुशिष्टः देहं क्षेत्रं, आत्मा क्षेत्रज्ञ इति शिक्षां प्राप्तः सन् प्रैति स्वाभिलषित पदवीं गच्छति मृत्युं याति। अनुशासनस्य देहोऽयमात्मा इत्युपदेशस्य एतत् वै वचनमस्य भद्रं कल्याणकरम् उत अपि च अञ्जसीनां ऋजुना मार्गेण गन्तव्यानां प्राणिनां स्रुतिं मार्गं विन्दति लभते यद्वा "अञ्जसीनामित्यत्र द्वितीया ज्ञेया। अञ्जसीनाम् ऋजुम् अकुटिलम् अप्रयासेन गन्तव्यां स्रुतिं मार्गं विन्दति लभते।

क्षेत्रज्ञमिति = हे भारत! हे भरतकुलोत्पन्न! हे अर्जुन! सर्वक्षेत्रेषु समस्तपिण्डेषु क्षेत्रज्ञं क्षेत्रस्य देहस्य - क्षेत्रं देहः रागद्वेषादिदोषविशिष्टः पुमान् क्षीयतेऽनेनेति क्षेत्रम्। यद्वा क्षितेः संसारात्मकात् अनर्थात् शमादियुक्तं पुरुषं त्रायते इति क्षेत्रम्। यद्वा सदा दीपशिखावत् स्वयं क्षिणोति इति क्षेत्रम्। यद्वा सुखदुःखादिफलोत्पादने क्षेत्रवदाचरतीति क्षेत्रं तस्य क्षेत्रस्य देहस्य ज्ञातारं

आत्मानं मां विद्धि जानीहि। क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः यत् याथातथ्य-वेदनम् अस्ति तत् ज्ञानं मम सर्वज्ञस्य परमेश्वरस्य मतम् अभिमतं निश्चयोऽस्ति।

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥२॥

यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः। अत्रा नो विश्पतिः पिता पुराणाँ अनुवेनति। ऋ० १०।१३५।१॥ तै० आ० ६।५।३॥

यस्मिन्निति = यस्मिन् सुपलाशे शोभनाङ्गप्रत्यङ्गपर्णे पीते वृक्षे वृश्चनशीले क्षेत्रे पिण्डे वर्तमानः यमः नियन्ता आत्मा देवैः अन्तःकरणादिभिः एकादशेन्द्रियैः संपिबते सम्यक्तया कर्मफलं भुङ्क्ते। पिता पालकः वेदज्ञानप्रदानेन पालयिता विश्पतिः विशां प्रजानां पतिः स्वामी परमेश्वरः अत्र अस्मिन् क्षेत्रे स्थितान् पुराणान् पुरातनान् चिरन्तनान् भक्तात्मनः नोऽस्मानपि अनुवेनति अनुग्राह्यत्वेन कामयते स्वसमीपं करोति इत्यर्थः।

तत्क्षेत्रमिति = तत् क्षेत्रं शरीरं यत् यत्स्वरूपं यादृक् स्वस्वरूपेण यादृशमस्ति यद्विकारि यैः स्वपरिणामैः विकृतं भवति। यतश्च यस्मात् कारणात् यत् कार्यं संभवति। स च क्षेत्रज्ञः यः यत्स्वरूपः यत्प्रभावः यादृशस्वभावः भवति तत् क्षेत्रस्वरूपं च समासेन संक्षेपेण मे मत्तः शृणु श्रवणं कुरु॥३॥

ऋषिभिरिति = क्षेत्रक्षेत्रज्ञस्वरूपम् ऋषिभिः वसिष्ठादिभिः ऋषिभिः तथा विविधैः नानाप्रकारैः छन्दोभिः ऋग्यजुःप्रभृतिभिः वेदैः पृथक् पृथक् हेतुमद्भिः अर्थसाधकयुक्तिमद्भिः विनिश्चितैः निश्चितार्थैः ब्रह्मसूत्रपदैः वेदान्तसूत्रैः यथार्थस्वरूपं गीतं सम्यक्तया वर्णितम्।

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥३॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥४॥

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्॥ ऋ० १०।११४।३॥

चतुष्कपर्दा इति = चतुष्कपर्दाः चत्वारः ऋग्यजुःसामाथर्वनामानः वेदाः युवतिः तरुणी नित्या सुपेशा शोभनालंकृता घृतप्रतीका दीप्यमानवर्णाऽवयवा एषा ऋषिप्रोक्ता औपनिषदी वाक् वयुनानि क्षेत्रक्षेत्रज्ञज्ञानं वस्ते आच्छादयति। तस्यां वाचि वृषणा = वृषणौ स्वस्वमहत्त्ववर्षितारौ सुपर्णा सुपर्णौ सुपतनौ जायापती क्षेत्रक्षेत्रज्ञौ प्रकृतिपुरुषौ निषेदतुः निषण्णौ भवतः। यत्र "इतराभ्योऽपि दृश्यन्ते" इति तृतीयार्थे त्रल् प्रत्ययः। यत्र यया वाचा देवाः क्षेत्रक्षेत्रज्ञविदः भागधेयम् स्वार्थिको धेय प्रत्ययः। स्वस्वभागं "अयं भागः प्रकृतेः अयं भागः पुरुषस्य अस्ति" इति पृथक् पृथक् भागं धारयन्ति॥

महाभूतानीति — भवन्ति इति भूतानि आकाशादीनि महान्ति च तानि भूतानि महाभूतानि अहंकारः महाभूतकारणम् 'अहंकारात् पंच तन्मात्राण्युद्भवन्ति, बुद्धिः महत्तत्वम् अहंकारकारणम्। अव्यक्तम् = मूलप्रकृतिः न व्यज्यते इत्यव्यक्तम्। अव्याकृतं जगद्बीजं त्रिगुणात्मकं परमेश्वर शक्तिः अपरा दशैकम् एकादशसंख्यात्मकानि इन्द्रियाणि — चक्षूरसना घ्राणत्वक् श्रोत्र वाक् पाणिपादपायूपस्थ मनांसि इन्द्रियगोचराः रूपरसगन्धस्पर्शशब्दाः पञ्च। इच्छा रागः द्वेषः मोहजनितपरिणामः, सुखं सानुकूलवस्तुदर्शनात् सुखमुपजायते, स्वप्रतिकूलवस्तुदर्शनात् दुःखमुपजायेत। संघातः करचरणादिसंहतिरूपो देहः। चेतनाबुद्धिवृत्तिविशेषं धैर्यं एतत्सर्वं क्षेत्रमेव सविकारं विकारैः विकृतिशीलैः महदादिभिः सह वर्तते इति सविकारं समासेन संक्षेपेण ते तुभ्यं उदाहृतं सम्यकृतया कथितमिति। ५,६।

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः॥५॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥६॥

यद्वा प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या। व्यानोदानौ वाङ्मनः शरीरेण ते ईयन्ते।२६। आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः। चित्तानि सर्वे संकल्पाः शरीरमनुप्राविशन्।२७। या आपो याश्च देवता यो विराड् ब्रह्मणा सह। शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः। सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य विभेजिरे। अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये॥ अथ० ११।१०(पूना-८) बी.बी. आर.आई.। २८, २६, २७, ३०, ३१

यद्वा = चतुर्दशान्यं महिमानो अस्य तं धीरा वाचा प्रणयन्ति सप्त। आप्नान तीर्थं क इह प्रवोचद्येन पथा प्रपिबन्ते सुतस्य। ऋ०१०।११४।७॥

यद्वा = यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः। गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन्॥

प्राणापानाविति — त्वष्टुः मनुष्यगवादिरूपस्य पिता उत्पादकः उत्तरः यः त्वष्टा विचित्रजगन्निर्माताऽस्ति। स यदा यस्मिन् काले व्यतृणत् विविधं चक्षुःश्रोत्रादीनि छिद्राणि पुरुषशरीरे तदनेन अकरोत्। तदा मर्त्यं मरणधर्मकं त्वष्टृदेवेन वितृण्णं बहुछिद्रं पुरुषशरीरं गृहं कृत्वा आवासस्थानं कृत्वा देवाः चक्षुरादीनि इन्द्रियाणि प्राणापानौ वायुविशेषौ व्यानोदानौ चक्षुः श्रोत्रम् अक्षितिः अक्षीयमाणा ज्ञानशक्तिः क्षितिः क्षीयमाणा निवासहेतुभूता क्रियाशक्तिः, यद्वा — देहश्च वाक् वाणी, मनः चित्तम् आशिषः आशासनानि इष्टफलप्रार्थनानि "आशासः भवो" इति वचनात् इत्यम्। प्रशिषः प्रशासनानि, संशिषः संशासनानि, विशिषः विविधानि शासनानि, यास्ता आशीराद्याः सन्ति। चित्तानि

नुप्रवचनेन मनोनुप्रवेश अहंकारा: तथा संकल्पा: सर्वा: अन्त:करणवृत्तय:। या: आप: याश्च देवता: इन्द्रियाभिमानिन्य: याश्च विराड् विराड् वा इदमग्र आसीत्" इत्यादिना सार्धान्येन उक्ता: विराड् संज्ञा देवता ब्रह्मणा सह ब्रह्मतेजसा सह वर्तमाना: ता: सर्वा: शरीरं पुरुषशरीरं क्षेत्रं अनुप्राविशन्। तदनन्तरं यत् जगत्कारणं परं ब्रह्म तदपि अन्तर्यामिरूपेण तच्छरीरं प्राविशत्। तस्मिन् शरीरे अधि प्रजापति: प्रजानां पालयिता पुत्राद्युत्पादको जीव:वर्तते। सूर्य: चक्षुरभिमानी देव:। पुरुषस्य सम्बन्धि चक्षुरिन्द्रियम् आत्मीयभावेन स्वीकृतवान्। वात: वायु: प्राणं प्राणेन्द्रियं भागत्वेन स्वीचकार। एवमन्यान्यपि इन्द्रियाणि पुरुषसम्बन्धीनि तत्तदधि देवता विभेजिरे विभज्य स्वीकृतवत्य:। अथ अनन्तरं प्राणेन्द्रियव्यतिरिक्तम् आत्मानं षाट्कौशिकं स्थूलशरीरं अग्नये सर्वे देवा: भागत्वेन प्रायच्छन्। अग्निना मरणानन्तरं स्थूलशरीरं एव केवलं दह्यते। "ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि। वायव: पञ्च बुद्धिश्च मन: सप्तदशं विदु:" इति यत् सप्तदशात्मकं लिङ्गशरीरं उक्तम् तस्य मुक्तिपर्यन्तं विनाशाभावात् तत्तद्देवतारूपेण अवस्थानमेव इत्यर्थ:। १८, २६, २७, ३०, ३१"

यद्वा-"चतुर्दशेति = अस्य क्षेत्रस्य देहस्य अन्ये भिन्नभिन्नत्वेन स्थिता: चतुर्दश = १ महाभूतानि, २ अहंकार:, ३, बुद्धि:, ४, अव्यक्तम्, ५ इन्द्रियविषया: रूपरसादय: ६ इच्छा, ७ द्वेष:, ८ सुखम्, ९ दु:खम्, १० एषां संघातश्च, ११ चेतना, १२ धृति: १३ इन्द्रियाणि दश, १४ मन: एवच्चतुर्दश महिमान: देहविभूतय: देहमहत्त्वस्य वक्तार: सन्ति। धीरा: बुद्धिमन्त: ज्ञानिन: तम् देहं वाचा वाण्या सप्त = १ इच्छां, २ ~~सुखं~~ द्वेषं, ३ सुखं, ४ दु:खं, ५ संघातम्, ६ चेतनां, ७ धृतिम् प्रणयन्ति प्रकर्षतया प्राप्नुवन्ति परं च इह अस्मिन् देहे आत्मानं सर्वव्यापकं तीर्थं संसारदु:खतारकं परमात्मानं क: ज्ञानी पुरुष: प्रवोचत् प्रकर्षेण वर्णयति। येन पथा येन ज्ञानमार्गेण यद्वा येन मानुषीदेह मार्गेण सुतस्य संसारोत्पादकस्य परमात्मन: ज्ञानरसं प्रपिबन्तो प्रकर्षेण पानं कुर्वन्ति।

अमानित्वमिति = अमानित्वं मान: स्वस्मिन् प्रतिष्ठास्थापनं सोऽस्यास्तीति मानी तस्य भाव: मानित्वम्, न मानित्वम् अमानित्वं मानाभाव इत्यर्थ:।१। अदम्भित्वम् - दुर्गुणं पिधाय स्वमहत्त्वप्रकटनं दम्भ: सोऽस्यास्तीति दम्भी तस्य भाव: दम्भित्वं, न दम्भित्वम् अदम्भित्वम्।२। अहिंसा = मनोवाक्कायकर्मभि: कस्य अपि अपीडनम्।३। क्षान्ति: आध्यात्मिकाद्युपद्रवसहनम्।४। आर्जवं सरलत्वम्।५। आचार्योपासनं गुरुशुश्रूषणं ६। शौचम् बाह्याभ्यन्तर शुद्धि: ७। स्थैर्यं निगृहीतस्य मनस: स्थिरता ८। आत्मविनिग्रह: आत्मन: अन्त:करणस्य विषयध्यानश्रवणादौ सुतरां प्रवृत्तिप्रतिबन्ध: ९, इन्द्रियार्थेषु वैराग्यं इन्द्रियाणामर्थेषु शब्दादिषु वैराग्यं विरागता अनिच्छा १०, अनहंकार एव च = वर्णाश्रमादयाभि-

XIII

मानशून्यत्वम् ११, जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् वीक्षणम् १२, असक्तिः = सक्तिः भोगेषु मनसः रागः तदभावः असक्तिः १३, पुत्रदारगृहादिषु पुत्रे दारेषु गृहे आदिपदात् धनादिषु अनभिष्वङ्गः ममत्वरहितत्वम् १४, इष्टानिष्टोपपत्तिषु इष्टं सुखं तत्साधनं च, अनिष्टं दुःखं तत्साधनञ्च तेषाम् उपपत्तिषु इष्टं सुखं प्राप्तिषु नित्यं सदा समचित्तत्वं समानचित्तत्वम् १५, मयि सर्वेश्वरे परमात्मनि अनन्ययोगेन न विद्यते परमेश्वरात् अन्यः आश्रयः भगवत्यनन्यः योगः भक्तियोगः अनन्यश्चासौ योगः अनन्ययोगः तेन अनन्ययोगेन सम्बन्धान्तरशून्येन अव्यभिचारिणी व्यभिचारशून्या परमेश्वरनियता भक्तिः भजनम् १६, विविक्तदेशसेवित्वम् एकान्तदेशवासः १७, जनसंसदि जनानां बहिर्मुखपुरुषाणां संसदि समूहे अरतिः अरुचिः १८, अध्यात्मज्ञाननित्यत्वम् अध्यात्मज्ञाने आत्मानं अधिकृत्य प्रवृत्तम् अध्यात्मम् 'ज्ञायते आत्मतत्त्वं मनेनेति ज्ञानम् अध्यात्मं तज्ज्ञानञ्च अध्यात्मज्ञानं वेदान्तशास्त्रं तत्र नित्यत्वं सदा प्रवृत्तित्वम् १९ तत्त्वज्ञानार्थदर्शनम् तत्त्वज्ञानस्य अर्थः फलस्वरूपः मोक्षः तस्य दर्शनं तत्सिद्धिपर्यन्तमलोकनम् २० एतत् ज्ञानमस्ति इति प्रोक्तं कथितमस्ति। अतः एवंविंशतिसाधनेभ्यः अन्यथा विपरीतं यद् अस्ति तत् अज्ञानं भवति। ७, ८, ९, १०, ११॥

"अमानित्वम्[1] अदम्भित्वम्[2] अहिंसा[3] क्षान्तिः[4] आर्जवम्[5]। आचार्योपासनं[6] शौचं[7] स्थैर्यम्[8] आत्मविनिग्रहः[9]॥७॥ इन्द्रियार्थेषु वैराग्यम्[10] अनहङ्कार[11] एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्[12]॥८॥ असक्तिः[13] अनभिष्वङ्गः[14] पुत्रदारगृहादिषु। नित्यं च समचित्तत्वम्[15] इष्टानिष्टोपपत्तिषु॥९॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी[16]। विविक्तदेशसेवित्वम्[17] अरतिर्जनसंसदि[18]॥१०॥ अध्यात्मज्ञाननित्यत्वं[19] तत्त्वज्ञानार्थदर्शनम्[20]। एतत् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥११॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम्। भद्रं भल त्यस्या अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः॥ अथ० २०।१२६।२३॥

पर्शुरिति — पर्शुः स्पृशतेः पर्शुः भवति, ज्ञानस्पर्शकर्त्री विचारकर्त्री पर्शुनाम्ना प्रसिद्धा मानवी मननशीलस्य मनुष्यस्य इयं विचारशक्तिः इति मानवी आत्मनः विचारशक्तिः साकं युगपदेव विंशतिम् — अमानित्वम् १, अदम्भित्वम् २, अहिंसा ३, क्षान्तिः ४, ऋजुता ५, आचार्यसेवा ६, शौचम् ७, स्थैर्यम् ८, आत्मविनिग्रहः ९, इन्द्रियार्थेषु वैराग्यम् १०, अहंकाररहित्यम् ११, जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् १२, पुत्रदारैः असक्तिः १३, पुत्रदारगृहादिषु अनभिष्वङ्गः १४, इष्टानिष्टोपपत्तिषु नित्यं समचित्तत्वम् १५, परमात्मनि

अनन्ययोगेन अव्यभिचारिणी भक्तिः १६, विविक्तदेशसेवित्वम् १७, जन संसदि अरतिः १८, अध्यात्मज्ञाननित्यत्वम् १९, तत्त्वज्ञानार्थदर्शनम् २०, एतद्विंशतिसंख्याकं सस्रुव सुनोति उत्पादयति। हे मल! हे ज्ञानिन्! आत्मन्! त्यस्याः पर्शुनाम्न्याः विचारशक्त्याः भद्रं कल्याणं अमृतं भवति उत्पद्यते। यस्याः विचारशक्त्याः उदरं मध्ये आमयत् देवासुरसंग्रामः सदा क्षोभम् उत्पादयति। विश्वस्मात् सर्वस्मात् मानवप्राणिनः इन्द्रः सदसद्विवेकी जीवात्मा उत्तरः उत्कृष्टतरः अस्ति।

ज्ञेयमिति = मुमुक्षोः पुरुषस्य संसारे यत् ज्ञेयं ज्ञातुं योग्यं वस्तु अस्ति तत् वस्तु प्रवक्ष्यामि उपदेक्ष्यामि। विद्वान् यद् वस्तु ज्ञात्वा अवबुध्य अमृतं नित्यस्वरूपं परं ब्रह्म अश्नुते प्राप्नोति। किं तद् ब्रह्म अनादिमत् आदिः जन्म यस्यास्तीति आदिमत्, न आदिमत् अनादिमत् जन्मरहितम्। तत् ब्रह्म न सत् "एतद् इदम्, एतत् इदम्" इति नामरूपात्मकं महदादिकार्यजातम् सर्वं सत् उच्यते। तद् ब्रह्म सत् नास्ति अर्थात्--महदादिसकलविकारेभ्यः भिन्नम् अस्ति। न च तत् असत् उच्यते सद्विलक्षणं सर्वजगत्कारणं अव्यक्तम् इत्यपि नोच्यते॥१२"

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते"१२"

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर एकमाहुः। ~~ऋ०~~ १०।८२।२॥ ~~यजुः~~
यजुः १७।२६। निरु० १०।२५॥ तै० सं० ४।६।२।१॥

विश्वकर्मेति = विश्वकर्मा विश्वं जगत् एव कर्म कार्यं यस्य स विश्वकर्मा, बहुकर्मा। विमनाः विभूतमनाः "आत् इत्यनर्थकः। यद्वा आत् सर्वतः विहायाः वस्तुतो महान्। धाता सृष्टिधारकः विधाता = जगतः कर्ता। परमा परमः सर्वोत्कृष्टः। संदृक् = सम्यक्तया सर्वद्रष्टा। तेषां सप्तर्षीणाम्। इन्द्रियाणां इष्टानि स्वरूपाणि इषा अनेन सह संमदन्ति संमोदन्ते। यत्र ज्ञेये तं परमात्मानं सप्त ऋषीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यः परं परस्तात् वर्तमानम् इन्द्रियाद्यतीतम् एकं परमात्मानं तत्त्वविदः ज्ञानिनः आहुः कथयन्ति॥ मुंडकोप० २।१।२ = "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। ह्यप्राणो ह्यमनो ह्यमनाः शुभ्रो-ह्यक्षरात् परतः परः।

सर्वत इति = यत् ज्ञेयं ब्रह्म अस्ति तत् ब्रह्म सर्वतः पाणिपादं सर्वतः पाणयः पादाश्च यस्य तत्सर्वतः पाणिपादम्। सर्वतः अक्षिशिरोमुखम् = अक्षीणि चक्षूंषि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमत् श्रुतयः श्रोत्राणि यस्य तत् सर्वतः श्रुतिमत्। लोके = लोक्यते इति लोकः प्राणिवर्गः तस्मिन् लोके इति द्वितीयार्थे सप्तमी। लोकं प्राणिसमुदायं प्रकृतिं प्राकृतं च सर्वम् आवृत्य सर्वाः चैतन्येन स्वरूपेण व्याप्य तिष्ठति॥

XIII

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वतस्पृथः। संबाहुभ्यां भरति संपतत्रैर्द्यावापृथिवी जनयन् देव एकः॥ अथ० १३।२।२६

यः विश्वत इति = यः परमात्मा विश्वचर्षणिः विश्वस्य सर्वस्य चराचरस्य जगतः चर्षणिः द्रष्टास्ति। यद्वा विश्वे सर्वे चर्षणयो मनुष्याः यस्य वशे वर्तन्ते तथाभूतः स परमात्मा अस्ति। यः विश्वतोमुखः विश्वतः सर्वतः मुखानि यस्य स विश्वतोमुखः सर्वतोमुखः अस्ति। उत अपि च यः विश्वतस्पाणिः विश्वतः सर्वतः पाणयः हस्ताः यस्य स विश्वतस्पाणिः। उत अपि च विश्वतस्पथः = विश्वतस्पादः एवंविधः परमात्मा बाहुभ्यां बाहुवीर्येण दिवं द्युलोकं संभरति भरतिः पूर्तिकर्मा, सम्यक्तया पूरयति। तथा संपतत्रैः गमनशीलैः पादैः स्वांशैः पृथिवीं पृथिवीं लोकं संभरति संपूरयति। एवं द्यावापृथिवी जनयन् दिवं च पृथिवीं च उत्पादयन् देवः द्योतमानः स्वयंप्रकाशः परमेश्वरः एकः असहाय एव वर्तते। "सहस्रशीर्षा" ऋ० १०।९०।१॥ "विश्वतश्चक्षुः" यजुः १७।१९॥ ऋ० १०।८१।३। यथा कठोप० २।२।११ = "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ तथा कठोप० १।२।२१ = "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्"।

सर्वेन्द्रियेति = तत् ज्ञेयं ब्रह्म सर्वेन्द्रियगुणाभासं स्वस्वविषयान् शब्दादीन् इन्द्रियन्ति बोधयन्ति इति इन्द्रियाणि सर्वाणि श्रोत्रादीनि वागादीनि च सर्वविषयिकं मनश्च एतेषामिन्द्रियाणां गुणा अवभासन्ते येन तत् सर्वेन्द्रियगुणाभासं यद्वा सर्वेन्द्रियगुणैः श्रवणादिभिः अवभासते इति सर्वेन्द्रियगुणाभासम्। सर्वेन्द्रियविवर्जितं सर्वैः इन्द्रियैः तत्कृतैः पुण्यपापादिभिश्च वर्जितं रहितं प्राकृतिकदेहेन्द्रियसंबन्धशून्यम्। असक्तम् = असंगम्। सर्वभृत् सर्वम् अव्यक्तादि स्थूलान्तं बिभर्ति इति सर्वभृत् सर्वाधारः निर्गुणं प्राकृतगुणशून्यम्। गुणभोक्तृ गुणानां सत्वादिगुणोत्पन्नानां सुखदुःखादीनां भोक्तृ अस्ति।

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

"यो विश्वचर्षणिरुत — (पूर्वपृष्ठेऽलेखि) तथा कठोप० १।३।१५ = "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" तथा — मुंडकोप० २।२।११ = "ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्॥

बहिरिति = हे अर्जुन ! तद् ब्रह्म भूतानां वस्तुमात्राणां बहिः अन्तः मध्ये चास्ति तदेव अचरं स्थिरं तदेव चरं जंगमं चास्ति । तद् दूरस्थम् अविवेकिपुरुषेभ्यः दूरेऽस्ति । तदेव ज्ञानिपुरुषस्य अन्तिके समीपे अस्ति ।१५॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु —
सर्वस्यास्य बाह्यतः ॥ यजु० ४०।५॥

तदेजति इति = तद् ज्ञेयं ब्रह्म एजति कम्पते मूढदृष्ट्या । तत् एव सर्वप्राणिरूपेण अवस्थितं सत् एजति चलति । तद् ब्रह्म चरमस्तीत्यर्थः । तत् न एजति स्थावररूपावस्थितं सत् न चलति तदेव अचरमित्यर्थः । तद् ब्रह्म दूरे अविवेकिपुरुषेभ्यः दूरेऽस्ति । तदु तदेव ब्रह्म अन्तिके ज्ञानिपुरुषाणां समीपे अस्ति । तद् ब्रह्म अस्य सर्वस्य जगतः प्राणिजातस्य वा अन्तः मध्येऽन्तर्यामिरूपतयाऽवस्थितमस्ति, चेतनाचेतनरूपम् अनन्तं सर्वगं ब्रह्मेत्यर्थः । यथा मुंडकोप० २।२।५ = "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ" । अन्यत्राप्युक्तम् = "स बाह्याभ्यन्तरो ह्यजः"। तथा ऐतरेयोप० ३।३ = "एष ब्रह्मैष इन्द्रः एषः प्रजापतिरेते सर्वे देवाः इमानि च पंच महाभूतानि, पृथिवी वायुराकाश आपो ज्योतींषि इत्येतानि इमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जरायुजानि च स्वेदजानि चोद्भिज्जानि चाश्वाः गावः पुरुषाः हस्तिनो यत्किञ्चेदं प्राणिजंगमं च पतत्रि च यच्च स्थावरं सर्वं तत्" । तथा च "दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" ॥

अविभक्तमिति = भूतेषु ब्रह्मादिस्तम्बान्तेषु व्याप्यत्वादपि अविभक्तं विभक्तुं न शक्यमस्ति । ब्रह्मादिस्तम्बान्तेषु विभक्तमिव विभक्ततां प्राप्तमिव स्थितं न तु वस्तुतः विभक्तमस्ति । तद् ब्रह्म भूतभर्तृ व्योमादिभूतानां भर्तृ पालकं धारकं चास्ति । तदेव ज्ञेयं ब्रह्म ग्रसिष्णु ग्रसनशीलमस्ति । तदेव ब्रह्म प्रभविष्णु उत्पादकमस्ति ।।१६॥

अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तद् ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

वेनस्तत्पश्यन्निहितं गुहा सद् यत्र विश्वं भवत्येकनीडम् । तस्मिन्निदं सं च वि चैति सर्वं स ओतः प्रोतश्च विभूः प्रजासु । यजु० ३२।८

वेन इति = वेनः पण्डितः विदितवेदान्तरहस्यः "गृत्सः धीरः वेनः" इति मेधाविनामसु पाठः (निघं० ३।१५) सद्भावनया तत् ब्रह्म पश्यत् पश्यति किं तत् - भूतेषु अविभक्तम् । यत्र यस्मिन् ब्रह्मणि विश्वं चराचरं जगत् एकनीडम् एकस्थानस्थम् अविभक्तं भवति । तद् ब्रह्म गुहा गुहायां

बुद्धौ गुहे कारणे वा सत् निहितं स्थितं नित्यं वर्तमानमपि विभक्तमिव भवति। तस्मिन् परकालीन इदं विकारजातं सर्वं चराचरं जगत् समेति उपसंहृतिकाले ग्रासमात्रं भवति। अनेन ब्रह्म ग्रसिष्णु अस्ति। सं=समेत्य। च वि+एति=व्येति। सृष्टिकाले सर्वमेव जगत् उद्भवति, अनेन ब्रह्म प्रभविष्णु अस्ति। स च परमेश्वरः विभुः बिभर्ति कार्यकारणभावेनेति विभुः= विविधप्रकारेण व्याप्तः सन् प्रजासु सृष्टिषु ओतः शरीरभावेन, प्रोतः चेतनभावेन। अनेन ब्रह्म भूतभर्तृ अस्ति॥ यथा चोपनिषदि="अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च। तथा प्रश्नोप० ४।९="एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता, रसयिता, मन्ता, बोद्धा, कर्ता विज्ञानात्मा पुरुषः।"

ज्योतिषामिति=तद् ब्रह्म ज्योतिषां प्रकाशकर्तॄणां आदित्यादीनां अपि ज्योतिः प्रकाशकम् अस्ति। अत एव तद् ब्रह्म तमसः अन्धकारात् अज्ञानाद्वा परं दूरतरं उच्यते कथ्यते। ज्ञानं तद् ब्रह्म स्वप्रकाशं सर्वप्रकाशकं यतिना ज्ञेयं यत् तद् ज्ञानं ब्रह्म अस्ति। ज्ञानगम्यं ज्ञानेन गम्यं प्राप्यं ज्ञेयं अपि गम्यं ब्रह्म अस्ति। यत् ब्रह्म सर्वस्य वस्तुप्राणिमात्रस्य हृदि स्थितमस्ति॥१७॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्॥१७॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्। विश्वभ्राड् भ्राजो महि सूर्यो दृशे उरु पप्रथे सह ओजो अच्युतम्। साम० १४५१।
ऋ० १०।१७०।३।

इदमिति=इदं ब्रह्म श्रेष्ठं प्रशस्यतमं ज्योतिषां प्रकाशकर्तॄणाम् आदित्यादीनामपि ज्योतिः प्रकाशकमस्ति। अत एव उत्तमम् उत्कृष्टम् अस्ति। तत् ब्रह्म विश्वजित् विश्वस्य सर्वस्य जेतृ जयशीलमस्ति। अतः तमसः परमस्ति। धनजित् धिनोति तर्पयति सर्वान् इति धनम् (धिवि=स्वादि० पर०) धनं तृप्तिकर्तॄनपि जयति इति धनजित्। तृप्तिकर्तॄणामपि तृप्तिकृत् अस्ति। तत्तु ज्ञानमेवास्ति। बृहत् प्रभूततरं तद् ब्रह्म उच्यते। अपि च तदेव ब्रह्म विश्वभ्राट् विश्वस्य प्रकाशयितृ तद् ब्रह्म विभ्राजमानमित्यर्थः। भ्राजः प्रकाशस्वरूपं महि महत् सूर्यः सरति सर्वत्र व्याप्नोति इति सूर्यः। यद्वा सुवति प्रेरयति सर्वं जगत् स्वशक्त्या इति सूर्यः। ब्रह्म दृशे=द्रष्टुं उरु विस्तीर्णं तमसोऽभिभवितृ अच्युतं च्युतिरहितम् अविनश्वरं ओजः तेजोरूपं बलस्वरूपं च पप्रथे=जगति प्रसृतमस्ति।

मन्त्रान्तरं च="ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित्। यजु०५।३५॥ समित्=आनन्ददातासि। यथा चोपनिषदि="तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः"। यथा च मुण्डकोपनिषदि="न तत्र सूर्यो भाति न चन्द्रतारकम्। नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति;"

तथा बृहदा० ३।७।१४ "यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।" तथा बृहदा० ३।९ = "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्य आदित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः।" तथा च बृहदा० ४।४।१६ = "तद्देवा ज्योतिषां ज्योतिः"

इति क्षेत्रमिति = हे अर्जुन! इत्येवं प्रकारेण समासतः संक्षेपतः क्षेत्रं शरीरं तथा ज्ञानं श्रवणमननादमानित्वादिलक्षणं तथा ज्ञेयं ज्ञातुं योग्यं वस्तु परं ब्रह्म उक्तं प्रतिपादितम्। मद्भक्तः मद्भजनकर्ता मुमुक्षुः विद्वान् एतत् क्षेत्रक्षेत्रज्ञयोः स्वरूपं विज्ञाय सम्यग् विविच्य मद्भावाय मद्भावः कैवल्यम् उपपद्यते प्राप्नोति॥१८॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।

मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥१८॥

तस्माद् वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते। अथ० ११।८।३२॥

तस्मादिति = शरीरं तज्ज्ञानप्रतिपादनकारणात् मुमुक्षुः मद्भक्तः इदं सर्वं क्षेत्रं ज्ञानं, ज्ञेयं विद्वान् सम्यक्तया जानन् पुरुषम् इदम् अपरोक्षं पुरुषशरीरं व्याप्य अवस्थितं ब्रह्म इत्येवं प्रकारेण मन्यते जानाति। हि यस्मात् कारणात् सर्वा देवताः प्राणापानादिवायवः सर्वेन्द्रियाणि तदधिष्ठातारः सूर्यादयः अस्मिन् ब्रह्मणि आसते निवसन्ति। तत्र दृष्टान्तः = गावः गोष्ठ इव = यथा गावः स्वकीये गोष्ठे स्वकीये स्थाने विस्रम्भेण निवसन्ति। तस्मात् सर्वाभिः देवताभिः आश्रितम् अन्तर्यामिरूपेण जीवरूपेण च ब्रह्मणा प्रविष्टं पुरुषशरीरं पश्यति।

प्रकृतिमिति = प्रकृतिं त्रिगुणात्मिकां ईश्वरशक्तिं मायां चैव तथैव पुरुषं क्षेत्रज्ञं, तौ उभौ प्रकृतिपुरुषौ अपि अनादी कारणरहितौ विद्धि जानीहि। तथा विकारान् देहेन्द्रियप्राणमनोबुद्ध्यादीन् सर्वान् विकारान् तथा गुणान् सुखदुःखादीन् प्रकृतिसंभवान् प्रकृतिसकाशादुत्पन्नान् विद्धि जानीहि।१९।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।

विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥१९॥

१ बालादेकमणीयस्कमुतैकं नेव दृश्यते। ततः परिष्वजीयसी देवता सा मम प्रिया॥ अथ० १०।८।२५॥

२ यद्वा = सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः। अहोरात्रे प्रजायेते अन्यो अन्यस्य रूपयोः॥ अथ० १०।८।२३।

१ बालादिति = एकं वस्तु बालात् केशादपि अणीयस्कम् अतिशयेन सूक्ष्मम् अस्ति। उत = अपि च एकं न = इव नास्तिवत् दृश्यते प्रतीयते एका प्रकृतिः अस्ति,

ततः तस्मात् अपि सूक्ष्मतरं वस्तु परिच्छजीयसी प्रकृतिमध्ये व्याप्तरूपेण स्थिता देवता देवत्वं प्रकाशत्वम् अस्ति। सा देवता मे मम प्रिया इति। यथा च "वालाग्रशत-भागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते। श्वेताश्व० ५।७॥ तथा च "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोऽप्यपरोऽपि दृष्टः"। श्वेताश्व० ५।८॥

२ यद्वा = सनातनमीति = एनं पुरुषं सनातनं सदाभवः सनातनः तं सनातनं नित्यमाहुः कथयन्ति। उत अपि अद्य पुनर्नवः पुनर्नूतनः अस्ति। अहो-रात्रे दिवानिशम् यद्वा ज्ञानाज्ञाने प्रकृतिपुरुषौ प्रजायेते उत्पद्येते। तथा अन्यः एकः अन्यस्य अपरस्य रूपयोः सदृशमस्ति। एवं प्रकृतिपुरुषौ अपि सदृशौ नित्यौ स्तः। यथा श्वेताश्व० ४।५॥ = "अजामेकां लोहितकृष्णशुक्लां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्"। कठोप० २।६।७। "नैव वाचा न तपसा प्राप्तुं शक्यो न चक्षुषा। अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते"। कठोप० २।६।१२॥ "न दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥

कार्यकारणेति = कार्यं शरीरं कारणमिन्द्रियमनोबुद्ध्यहंकारचित्तानि तेषां कर्तृत्वे जनकत्वे हेतुः उपादानकारणं प्रकृतिः एव उच्यते विद्वद्भिः कथ्यते पुरुषः पुरि शयनात् पुरा सदैकरूपेणास्ते इति वा स्वाज्ञानात् पुरमुषति इति वा पुरुषः जीवात्मा सुखदुःखानां सुखदुःखादिप्रत्ययानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुः सुखदुःखादिप्रत्ययानुभवकारणम् उच्यते कथ्यते॥२०॥

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते।२०।

यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः। अत्रा नो विश्पतिः पिता पुराणान् अनुवेनति॥ ऋ० १०।१३५।१॥

२ यद्वा = "इदं यमस्य सादनं देवमानं यदुच्यते। इयमस्य धम्यते नाडीरयं गीर्भिः परिष्कृतः॥ ऋ० १०।१३५।७॥

यस्मिन्निति = यस्मिन् सुपलाशे इन्द्रियमनोबुद्ध्यहंकारचित्तसामग्री पर्णोपेते वृक्षे शरीरे संसारे वा यमः इन्द्रियादेर्नियमनकर्ता क्षेत्रज्ञः जीवात्मा देवैः इन्द्रियैः संपिबते सुखदुःखानि उपभुंक्ते। अत्र क्षेत्रे चिरं निवसतः पुराणान् पुरातनवासिनः नोऽस्मान् जीवान् अनुवेनति अनुकूलं करोति

२ यद्वा = इदमिति = इदं क्षेत्रं यमसदनं जीवात्मगृहमास्ति। यद् गृहं शरीरं देवमानं परमात्मबोधः स्थान मुच्यते। प्रायः सर्वेषु इन्द्रियेषु मूकेषु सत्सु देहे गीर्भिः वाणीमात्रेण जीवात्मा परिष्कृतः सिद्धः प्रतीयते। तथा वाणीस्तम्भे सति देहेऽस्यालनः अस्तित्वं इयं नाडी प्राणनाडी धमते

XIII



तदपि प्रतीयते जीवात्मा देहे ऽस्ति। सर्वेन्द्रियेषु मूकेषु जीवात्मा देहात् पृथक् भूत इति ज्ञायेत"

पुरुष इति = पुरुषः जीवात्मा प्रकृतिस्थः कार्यकारणसंघातस्थितः प्रकृतिजान् गुणान् स्थूल सूक्ष्म कारण देह धर्मान् स्वीयत्वेन भुंक्ते भुनक्ति। अस्य आत्मनः गुणसंगः गुणेषु दृष्टादृष्टेषु भोग्येषु प्राकृतगुणेषु सज्यते पुमान सक्तो भवतीत्येनेन संगकारणः सदसद्योनिजन्मसु उच्चावच योनिजन्मसु कारणं हेतुः भवति। २१

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु॥ २१

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम्। ऋ० १।१६४।३८॥

अपाङिति = अमर्त्यः अमरणधर्मा अयमात्मा पुरुषः मर्त्येन मरणधर्मणा देहेन प्रकृत्या इति भावः। सयोनिः समानस्थानत्रय परिच्छेदको देहोऽस्ति। तत्र सर्वत्र सोऽयमपि तिष्ठतीत्यर्थः। देहस्य इति भावः। यद्वा सयोनिः समानोत्पत्तिः सहकासेन स्वस्मिन्नुत्पत्ति रूपच्यते। एवं भूतः सन् स्वधया अन्नोपलक्षित तत्तद्भोगेन गृभीतः गृहीतः यद्वा स्वधा शब्देन अन्नमयं शरीरं लक्ष्यते तेन गृहीतः सन् अपाङ् आयुष्कलं कर्म कृत्वाऽधो गच्छति। प्राङेति ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। सदसद्योनिषु प्राप्नोतीत्यर्थः। नित्यः जीवः सूक्ष्मशरीरोपाधिकः सन् नानाविधं कर्म कृत्वा तत्तद् भोगाय तत्तज्जन्म लब्ध्वा शरीरत्रयेण संबद्धो लोकलोकान्तरेषु सञ्चरति। स्थूल सूक्ष्मोभय शरीर परिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते = "गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः"। ता = तौ प्रकृतिपुरुषौ शश्वन्ता शश्वन्तौ अविभावेन सर्वदा वर्तमानौ अनादी विषूचीना विषूचीनौ सर्वत्रगमनौ, वियन्ता वियन्तौ तत्तत्फलोपभोगाय सर्वत्र लोकान्तरेषु गच्छन्तौ वर्तेते। विवेकिनः पुरुषाः अन्यं भूतात्मानं प्रकृतिमित्यर्थः। निचिक्युः = नितरां विशेषेण विकृतिमन्तं पश्यन्ति जानन्ति। अन्ये मूढाः पुरुषाः अन्यं अपरं देह व्यतिरिक्तं न निचिक्युः न जानन्ति। केचन पामराः देहव्यतिरिक्तं अन्यत् किञ्चिन्न जानन्ति। केचन विवेकिनः कर्तृ भोक्तृत्वोपेतो देहातिरिक्तः कश्चिदन्योऽस्तीति अनुमिनन्ते। यथा मनुः १।३२ = "द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत्। अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः"। तथा बृहदा० १।४।३ = "स वै नैव रेमे तस्मादेकाकी न रमते। स द्वितीयमैच्छत्, स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ। स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव 'स्वः' इति स्माह याज्ञवल्क्यः

तस्माद् यस्मात्कृशः स्त्रिया पूयते स्व तां सम्भवन्ततो मनुष्या अजायन्त॥

उपद्रष्टेति = अस्मिन् देहे कार्यकारणसंघाते पुरुषः परमात्मा परः देहेन्द्रियादिभ्यः भिन्न एवास्ति। स चोपद्रष्टा साक्षित्वेन पश्यति उपद्रष्टाऽस्ति। उपद्रष्टा दृश्येभ्यः भिन्नः भवति। "साक्षी चेता केवलो निर्गुणश्च" अनेन वेदान्तदर्शनसिद्धान्तः सिद्धः। अनुमन्ता बुद्ध्यादीनां प्रवृत्तिनिवृत्ति तत्तत्फल ज्ञाताऽस्ति। अयं प्रकृतिकार्यसमर्थकः सांख्यसिद्धान्तोऽस्ति। स च भर्ता महदादि सर्वविकारान् सत्तास्फूर्तिप्रदानेन बिभर्तीति भर्ता, अयं कर्मफलसंग्राही न्यायदर्शनसिद्धान्तः। भोक्ता स्वस्मिन् अव्यक्तादिस्थूलानां सर्वं स्वशक्त्या भुंक्ते स्वस्मिन्नेव तिरोभवतीति भोक्ता, 'शरीरमेवात्मा' इति चार्वाकसिद्धान्तं भोक्तृशब्दः प्रतिपादयति। महेश्वरः महान् चासौ ईश्वरः महेश्वरः अव्यक्तादपि महान्। अयं ईश्वरजीवैकत्वसम्पादकः सिद्धान्तः। परमात्मा सोऽयमात्मा देहादिभ्यः भिन्नः सन् परमात्मा अस्ति अतः परमात्मा ब्रह्मैवास्ति। ब्रह्मात्मैकत्वसम्पादकोऽयं सिद्धान्तः। २२।

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥२२॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वर-सदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। यजु॰ १०।२४ ऋ॰ ४।४०।५॥

हंस इति = स च परमात्मा हंसः "हन्तिः गत्यर्थः" सर्वत्र सर्वदा गन्ता सर्वप्राणिनां हृदि चिद्रूपः स्थितः। यद्वा संहन्ति सर्वान् पदार्थान् इति हंसः उपद्रष्टा इति भावः। शुचिषद् = शुचिषु बुद्ध्यादिषु पदार्थेषु सीदतीति शुचिषद् बुद्ध्यादीनां प्रवृत्तिनिवृत्ति तत्तत्फलानुमन्ताऽस्ति। वसुः सर्वस्य वासयिता। अन्तरिक्षसद् = अन्तरिक्षे आकाशे हृदये सीदतीति अन्तरिक्षसद् सर्वान्तर्यामी अस्ति। होता दाता सर्वपदार्थशक्तिप्रदाता यद्वा देवानां वस्वादित्रयस्त्रिंशद्देवानां स्वशक्त्या आह्वाताऽस्ति। अतिथिः अतिथिवत्सर्वदा पूज्यः। दुरोणसद् = दुरोण इति गृहनाम (निघं॰ ३।४) दुरोणे गृहे पिण्डे सीदतीति दुरोणसद् सर्वव्यापीत्यर्थः। नृषद् = नृषु मनुष्येषु चैतन्यरूपेण सीदतीति नृषद्। वरसत् = वरणीये मण्डले सीदतीति वरसत् भक्तवत्सलः। ऋतसत् = ऋतेषु प्रकृत्यादिपदार्थेषु सीदतीति ऋतसद्, महतो महीयान्। व्योमसद् = सूक्ष्मात् सूक्ष्मतरे आकाशे सीदतीति व्योमसद्। अणोरणीयान्। अब्जाः = योऽपो जनयतीति अब्जाः। गोजाः = गाः पृथिव्यादीन् जनयतीति गोजाः। ऋतजाः = ऋतं सत्यं जनयतीति ऋतजाः। अद्रिजाः = मेघपर्वतवृक्षादीन् जनयतीति अद्रिजाः। ऋतं सत्यं अबाध्यं सर्वाधिष्ठाने ब्रह्म बृहत् सर्वतो बृहत्तमम् अस्ति इति। अतः परमात्मा देहादिपदार्थेभ्यः परः भिन्नः अस्तीति। यथा प्रश्नोप॰ ४।९ = "एष हि द्रष्टा, स्प्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्ता, विज्ञानात्मा पुरुषः। तथा च "द्वा सुपर्णा सयुजा-

सखाया समानं वृक्षं परिषस्वजाते"।
य एवमिति = यः मुमुक्षुः पुरुषं क्षेत्रज्ञं विवेकरसं परमात्मानं प्रकृतिं क्षेत्रं गुणैः सह महदादिस्थूलान्तैः गुणकार्यैः सह एवम् उत्तम कार्यकारणकर्तृत्वहेतुः प्रकृतिः अस्ति। सुखदुःख भोक्तृत्वहेतुः पुरुषः अस्ति इत्येवं रूपेण वेत्ति जानाति स विवेकी पुरुषः सर्वथा सर्वप्रकारेण संसारे वर्तमानोऽपि वसन्नपि भूयः पुनः न अभिजायते कर्मफलोपभोगाय जन्म न धारयति। २३॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते। २३॥

उभावन्तौ समर्षसि वत्सः संमातराविव। नन्वेतदितः पुरा ब्रह्म देवा अमी विदुः॥ अथ० १३।२।१३॥
उभाविति = वत्सः शिशुः मातरौ मातापितरौ प्रकृतिपुरुषौ इव सम समत्वेन जानाति तथा हे मुमुक्षो! त्वम् अन्तौ जगतः सिद्धान्त स्वरूपौ उभौ प्रकृति-पुरुषौ समर्षसि सम्यक्तया जानासि। ननु = निश्चयोऽस्ति। अमी देवाः ज्ञानिनः पुरुषाः एतत् ज्ञेयं ध्येयस्वरूपं ब्रह्म इतः प्रकृतिपुरुषज्ञानात् पुरा पूर्वं अपि ब्रह्म परमेश्वरं विदुः जानन्ति साक्षात् कुर्वन्ति। मुंडकोप० २।२।८ = "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" तथा मुंडकोप० ३।१।३ = "तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति"। छान्दो० ६।१४। २ = "एवमेवेहाचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति"। तथा छान्दो० ५।२४।३ = "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते"।
ध्यानेनेति = केचित् यतयः एकाग्रेण मनसा आत्मनि बुद्ध्यां आत्मानं परमात्मानं आत्मना स्वस्वरूपत्वेन पश्यन्ति निरीक्षन्ते। अन्ये अपरे मुमुक्षवः सांख्येन योगेन प्रकृतिः अन्या, पुरुषश्चान्यः इति संसारमोक्षोपायत्वेन सांख्येन योगेन आत्मनि बुद्धौ आत्मानं परमात्मानं पश्यन्ति। अपरे सांख्ययोगानधिकारिणः गृहस्थाः कर्मयोगेन "नित्यनैमित्तिककर्मानुष्ठानं कर्मयोगः, चित्तशुद्धिसम्पादनकारणेन परमेश्वरार्पणबुद्ध्या निष्कामकर्मानुष्ठानयोगेन आत्मनि आत्मानं पश्यन्ति, अन्ये तु एतद्व्यतिरिक्ताः पामराः स्त्रीशूद्रादयः तु अजानन्तः पूर्वोक्तं किमपि साधनम् जानन्तः अन्येभ्यः ब्राह्मणेभ्यः सदसद्विवेकि गुरुभ्यो वा "एतत्-कर्म एवं कुरु, इदं कर्म इत्थं कुरु" इति श्रुत्वा आकर्ण्य आत्मानमुपासते। तेऽपि श्रुतिपरायणाः श्रुतार्थैकप्रवणाः सन्तः मृत्युं मृत्युदुःखप्रधानं संसारसागरं अतितरन्ति एव उल्लंघयन्ति एव। २४॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे॥२४॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः।
२५॥

१ "त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनुप्रजानन्। वर्षिष्ठं रत्नमकृत स्वधाभिरादिद् द्यावापृथिवी पर्यपश्यत्॥" ऋ० ३।२६।८॥
२ "शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम्। मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम्॥" ऋ० ३।२६।९॥

१ त्रिभिरिति = पवित्रैः ध्यानयोगेन सांख्ययोगेन कर्मयोगेन पावनभूतैः त्रिभिः ध्यानसांख्यकर्मयोगिभिः उत्तममध्यमाधमैः अर्कम् अर्चनीयं निरतिशयानन्दलक्षणं हृदा अन्तःकरणवृत्त्या मतिं सर्वैः माननीयं ज्योतिः प्रकाशस्वरूपं परब्रह्मतेजः अनुप्रजानन् श्रवणमननादिक्रमेण प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः मुमुक्षुः पुरुषः अपुपोत् इति निश्चये। अवश्यमेव निर्मलतां प्राप्नोति कैवल्यमधिगच्छतीत्यर्थः। एवं जानानः मुमुक्षुः पुरुषः स्वधाभिः स्वेन आत्मना ब्रह्मस्वरूपधारणशीलाभिः बुद्धिवृत्तिभिः रत्नं रमणीयं वर्षिष्ठं सर्वेभ्यः श्रेष्ठम् आत्मानम् अकृत करोति। आत् इत् = अनन्तरमेव आत्मस्वरूपे विज्ञाते सति द्यावापृथिवी द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगत् पर्यपश्यत् परितः सर्वतः स्वात्मतया पश्यति। आत्मनि विज्ञाते सति द्यावापृथिवी द्यावापृथिव्यौ तदुपलक्षितं सर्वं जगत् पर्यपश्यत् परितः सर्वतः स्वात्मतया पश्यति। आत्मनि विज्ञाते सर्वं विज्ञातमिति वचनात्

२ शतधारमिति = हे रोदसी द्यावापृथिव्यौ तदुपलक्षितं द्यावापृथिव्यन्तर्वर्तिन् ज्ञानध्यानाऽनुष्ठानाशक्त! शिष्य! शतधारं शतशो ज्ञानोपदेशधारायुक्तम् अक्षीयमाणं न कदापि विच्छिन्नप्रवाहं उत्सं "लुप्तोपममेतत्" सततप्रवाहोपेतम् स्रोत इवावच्छिन्नवाक्सरणीसमेतं विपश्चितं मेधाविनं सकलशास्त्राभिज्ञं पितरं शिष्याणां विद्योपदेशेन पालयितारं वक्त्वानां वाक्यानां वेदान्त मेळिं मेलकं नानाशाखागतानां वाक्यानां एकस्मिन्नर्थे संकलय्य वक्तारं पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्तं ज्ञानातिशयेन हृष्यन्तं अत एव सत्यवाचं परं ब्रह्मणः "ओं तत्सद् ब्रह्म" इति वदनपरं यद्वा सत्यवादिनं तम् इमं वेदान्तवाक्योपदेष्टारं गुरुं पिपृतम् अपेक्षितसेवाभावेन सम्पूर्णं कुरुतम्। यद्वा तदाज्ञां पालयतम्। पवित्रैः "पूञ् पवने" "कर्तरि चर्षिदेवतयोः" इति देवतायां अभिधेयायां कर्तरि इत्र प्रत्ययः। पुनन्तीति पवित्राः। अपुपोत् = 'पूञ् पवने' इत्यस्य यङ्लुगन्तस्य रूपम्। संज्ञापूर्वकस्य विधेः अनित्यत्वात् अभ्यासस्य गुणाभावः। अर्कम् = अर्च पूजायाम् "कृदाधारार्चिकलिभ्यः कः" इति क प्रत्ययः। अर्कः जगत्स्रष्टा सोऽर्चन्नचरत् आपोऽजायन्त अर्चते वै मे कमभूत् इति तदेवार्कस्यार्कत्वम्। हृदा = हृदयशब्दस्य "पद्दन्नो —" इत्यादिना हृदादेशः। मतिम् = 'मन ज्ञाने' इत्यस्मात् "मन्त्रे वृषेषपच" इत्यादिना कर्मणि क्तिन् प्रत्ययः। अकृत = करोतेर्लुङि सिच् तस्य 'ह्रस्वादङ्गात्' इति लोपः। उत्सम् = "उन्दी क्लेदने" अस्मात् "उन्दिगुधि-

ग्रधिकुशिभ्यः क्नित्" इति क्नित् प्रत्ययः। क्नित्वान्नकार लोपः। विपश्चितम् = विशेषेण पातीति विपा = वाक्, विपो वाचः चिनोतीति क्विप्। "ह्रस्वस्य पिति कृति तुक्" "तत्पुरुषे पिति कृति बहुलम्" इति वचनात् द्वितीया, अलुक्, कृदुत्तर पदस्वरः। वक्त्वानां = 'वच परिभाषणे' अस्मात् कृत्यार्थे – "तवैकेन्केन्यत्वन" इतित्वन प्रत्ययः। "चोः कुः" इति कुत्वम्। मेलिं = 'मिलि संपर्के' अस्मादौणादिकः इ प्रत्ययः। पिपृतम् = 'पॄ पालनपूरणयोः' छान्दसो जुहोत्यादिः। "अर्तिपिपर्त्योश्च" इत्यभ्यासस्य इत्वम्॥

यावदिति = हे भरतर्षभ! हे अर्जुन! स्थावरजंगमं चराचरं यावत् यावत्परिमाणमात्रं यत्किञ्चित् सत्वं = प्राणिमात्रम् संजायते समुद्भवति तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रं प्रकृतिः क्षेत्रज्ञः पुरुषः तयोः संयोगः सम्बन्धः तस्मात् क्षेत्रक्षेत्रज्ञसंयोगात् प्रकृतिपुरुषसंबन्धात् संजायते इति विद्धि त्वं जानीहि। २६।

यावत्संजायते किंचित् सत्वं स्थावरजंगमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥ २६॥

प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति। अद एकेन गच्छत्यद एकेन गच्छत्यद एकेन गच्छती हैकेन निषेवते॥ अथ० ११।८।३३॥

प्रथमेनेति = त्रेधा सत्वरजस्तमोगुणानामवलंबनात् अवलोकनात् त्रिप्रकारेण विष्वङ् समन्ततः प्रचलन् स्थावरजंगमात्मकः संसारः प्रथमेन आदिस्वरूपेण प्रमारेण मारकेण शेषज्ञेन अर्थात् यदा आत्मा क्षेत्रात् निर्गच्छति तदा क्षेत्रं मृतं कथ्यते अतः प्रमारः आत्मा गच्छति आत्मना सह क्षेत्रं गतिं करोति, जडत्वात् स्वयं कर्तुं न शक्नोति, अतः आत्मापि एकेन रजोगुणेन अदः सुखमयं स्वर्गलोकं गच्छति, एकेन तमोगुणेन अदः दुःखमयं नरकलोकं गच्छति। एकेन सत्वगुणेन इह एव अस्मिन् मर्त्यलोके एव निषेवते कर्मफलं भुंक्ते॥ यथा च = पुण्येन पुण्यलोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्॥ छान्दो०॥

सममिति = यः पुरुषः सर्वेषु भूतेषु" भजन्ति जन्मलक्षणं विकारं भजन्ति इति भूतानि ब्रह्मादिस्थावरान्तानि, तेषु भूतेषु समम् एकरसम् निर्विशेषमिति भावः तिष्ठन्तं वर्तमानं परमेश्वरं विनश्यत्सु उत्पत्तिमत्वात् सर्वेषु पदार्थेषु नश्यत्सु अपि अविनश्यन्तं विनाशरहितं पश्यति अवलोकते, वस्तुतः स मुमुक्षुः एव परमात्मानं पश्यति॥ २७॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥ २७॥

५ धीरास्सः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम्।

सिषासन्तः पर्यपश्यन्त सिन्धुं मानिरेभ्यो अभवत्सूर्यो
नृन् ॥ ऋ० १। १४६। ४॥

धीरास इति = धीरासः धीमन्तः कवयः ज्ञानिनः हृद्गा शुद्धान्तःकरणेन नाना पदार्थेषु जीर्णतां गतेष्वपि रक्षमाणाः प्राकृतिकपदार्थेभ्यः आत्मना आत्मानं प्राप्यन्ति। अतएव सर्वत्र तदेव सिन्धुं स्यन्दनशीलं ब्रह्म पर्यपश्यन्त परिपश्यन्ति। सूर्यः सर्वस्य प्रसविता परमात्मा एभ्यः नृन् = नृभ्यः भक्तेभ्यः आविरभवत् आविर्भवति। कठोप० १। २। २२ = "अशरीरं शरीरेषु अनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति"। तथा कठोप० १। ३। १२ = "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"। तथा मुण्डकोप० ३। १। ५ = "अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः"। तथा मुण्डकोप० ३। १। ८ = "ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः"॥

सममिति = विवेकी पुरुषः सर्वत्र सर्वेषु भूतेषु समवस्थितं समानावस्थया व्याप्तं समम् एकरसम् ईश्वरं परमात्मानं पश्यन् आत्मना स्वेनैव आत्मना स्वं न हिनस्ति न नाशयति। ततः सज्ज्ञाननिष्ठया परां गतिं परं पदं मुक्तिमित्यर्थः याति प्राप्नोति ॥ २८॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८॥

बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्। अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा ॥ ऋ० १०। १२४। ९॥

बीभत्सूनामिति = कवयः क्रान्तदर्शिनः ब्रह्मवादिनः ऋषयः बीभत्सूनां "यद्भयात् वाति वातोऽयं सूर्यस्तपति यद्भयात्" इत्युक्तेः कम्पमानानां वाय्वादिपञ्चभूतानां सयुजं समानभावमापन्नं सखायं व्याप्तं वा"। दिव्यानां दिव्यगुणविशिष्टानां अपां व्याप्तिमतां परमकाशानां सख्ये सखित्वे चरन्तं सहचारिणम् आकाशवत्सर्वत्र अवस्थितम्। हंसं = हन्ति सर्वत्र गच्छतीति हंसः सर्वव्यापकः परमेश्वरः तं हंसं परमात्मानमाहुः कथयन्ति। अत एव कवयः क्रान्तदर्शिनः ब्रह्मवादिनः मनीषा मनीषया सर्वत्र ब्रह्मबुद्ध्या अनुष्टुभं अनुस्तोमनीयं स्तोतव्यं चर्चूर्यमाणं सर्वत्र पुनः पुनः चरन्तं गच्छन्तं एवं गुणविशिष्टं इन्द्रं परमेश्वरं निचिक्युः जानन्ति। चर्चूर्यमाणम् = चरतेर्यङि "उत्परस्यातः" इत्यभ्यासात् उत्तरस्य अकारस्य उत्वम्। "चरफलोश्च" इति नुकि प्राप्ते व्यत्ययेन अभ्यासस्य रुगागमः। मनीषा = मनीषाशब्दात् तृतीयायाः "सुपां सुलुगिति" लुक्। चिक्युः = चायृ पूजानिशामनयोः इत्यस्मात् छान्दसे लिटि "चायः की" इति प्रकृतेः कीभावः "एरनेकाचः" इति यण्। तथा ईशोप० "असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ॥

प्रकृत्यैवेति = यः पुरुषः प्रकृत्या कार्यकारणकर्तृत्वहेतुभूतया प्रकृत्या सर्वशः सर्वप्रकारैः क्रियमाणानि विधीयमानानि कर्माणि विहिताः प्रतिषिद्धाः वा सर्वाः क्रियाः पश्यति। तथा तेनैव प्रकारेण आत्मना आत्मविवेकज्ञानशक्त्या आत्मानं अकर्तारं अभोक्तारं च यः पश्यति स स्व सर्वत्र आत्मानमेकरसं पश्यति॥ २९॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥ २९॥

"मया सो अन्नमत्ति" — ऋ० १०।१२५।४। गीता ३।२७। पारकालपूर्णम्

यदेति = तत्त्वज्ञानी यदा यस्मिन् काले भूतपृथग्भावं भूतानामाकाशादीनां पृथग्भावं पार्थक्यं एकस्थम् एकस्मिन् आत्मनि स्थितं वस्त्रे चित्रमिव प्रलये अनुपश्यति अवलोकयति। सृष्ट्यादौ च ततः तस्मात् परमात्मनः एव विस्तारं विस्तृतं कार्यभावं आपन्नं सर्वं प्रपञ्चं च अनुपश्यति तदा अयमेव ब्रह्म संपद्यते ब्रह्म प्राप्नोति। ब्रह्मभावं गच्छतीति वा। उन

यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म संपद्यते तदा॥ ३०॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति। छन्दांसि च दधतो अध्वरेषु ग्रहान् सोमस्य मिमते द्वादश। ऋ० १०।११४।५॥

सुपर्णमिति = विप्राः मेधाविनः कवयः तत्त्वज्ञाः ज्ञानिनः सुपर्णं शोभनं पतनं सर्वत्र व्याप्तिः यस्य स सुपतनः तं सुपतनं सर्वत्र सुष्ठु व्याप्तम् एकम् असहायं सन्तं वर्तमानं परमात्मानं वचोभिः स्तुतिलक्षणैः वचनैः बहुधा बहुप्रकारं पार्थक्यप्रकारं कल्पयन्ति कथयन्ति। ते एव तत्त्वज्ञाः मुनयः अध्वरेषु ज्ञानयज्ञेषु छन्दांसि वेदवाक्यानि दधतः धारयन्तः द्वादश बहुविधं सोमस्य परमात्मनः ग्रहान् स्वरूपान् मुक्तिपदग्रहणसाधनानि पात्राणि वा उपांशु अन्तर्याम्यादीनि मिमते निर्मिमते। ग्रहान् = गृह्यते एभिरिति ग्रहः। "ग्रहवृदृनिश्चिगमश्च" इति करणे अप् प्रत्ययः। सोमस्य इति कर्मणि षष्ठी॥ तथा कठोप० २।५।१२ = "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" तथा = छान्दो० ७।२६।२ = "तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः"। तथा छान्दो० ७।२६।१ = "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो मन्त्रा आत्मतः कर्माणि आत्मत एवेदं सर्वमिति। तथा ईशोप० "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते"॥

अनादित्वादिति = हे कौन्तेय! हे अर्जुन! अनादित्वात् न विद्यते आदिः —

XIII



आदिमविकारो जन्म यस्य सोऽनादिः, अनादेर्भावोऽनादित्वं तस्मादनादित्वात्। निर्गुणत्वात् गुणाः सत्वादयः शब्दादयश्च तेभ्यो निर्गतः यः स निर्गुणः। यद्वा गुणाः गुणकार्यभूताः प्राणादयः षोडशकलाशब्दवाच्यास्तेभ्यो निर्गतत्वात् निर्गुणः तस्य भावः निर्गुणत्वम् तस्मात् निर्गुणत्वात् अव्ययः आश्रयविनाशे सति आकाशवत् न व्येति इत्यव्ययः। अयं परमात्मा परमश्चासौ आत्मा परमात्मा शरीरस्थः अपि शरीरेषु ब्रह्मादिस्तम्बान्तेषु पदार्थेषु तिष्ठति इति शरीरस्थः अपि न करोति पाप पुण्यलक्षणं कर्म न करोति न च तत्कर्मफलैः लिप्यते संबद्धो न भवति।

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः। ऋ० १।१६४।१५। अथ० ९।९।१६॥

साकंजानामिति = साकंजानां सहजातानां षण्णाम् इन्द्रियाणामात्मा सप्तमः। ते षामिष्टानि वा कान्तानि वा ज्ञानानि वा गतानि वा मतानि वा संमोदन्ते यत्र इमानि सप्त ऋषीणानि वा इन्द्रियाणि एभ्यः परः आत्मा तानि एतस्मिन् एकं भवन्तीति॥

यथेति = यथा येन प्रकारेण सौक्ष्म्यात् स्वव्याप्तद्रव्यापेक्षया स्वयमतिसूक्ष्मत्वात् सर्वगतं सर्वमूर्तद्रव्येषु बहिरन्तर्व्याप्य वर्तमानं आकाशं नोपलिप्यते संगदोषेण लिप्तं न भवति, तथा तेनैव प्रकारेण आत्मा सर्वत्र देहे सर्वेषु देहेषु अवस्थितः वर्तमानः नोपलिप्यते तत्संगदोषं नाप्नोति। ३२।

यथा सर्वगतं सौक्ष्म्यात् आकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२॥

१ ऊर्ध्वो नु सृष्टा ३स्तिर्यङ् नु सृष्टा ३ः सर्वा दिशः पुरुष आबभूवाँ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते। अथ० १०।२।२८॥

२ यद्वा = "इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः।" अथ० २०।७१।१॥

३ नूतनो मंत्रः = महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः।
ऋ० १।८१।१॥

१ ऊर्ध्व इति = पुरुषः = पुरि + वस, पुर + उस = पुरुष; पुरि शरीरे वसतीति पुरुषः आत्मा ऊर्ध्वः देहस्य उपरि भागे नु निश्चयेन सृष्टाः प्रसृतः अस्ति। पुरुषः तिर्यङ् देहस्य तिर्यग्भागेषु नु निश्चयेन सृष्टाः प्रसृतः अस्ति। पुरुषः सर्वा दिशः देहस्य सर्वांगेषु आबभूव व्याप्तः अस्ति प्रकाशयति वा। यः पुरुषः ब्रह्मणः देहे व्याप्तस्य आत्मनः पुरं नगरीं अर्थात् देहं वेद जानाति। यस्याः यस्याः पुरः हेतोः पुरुषः अयं जीवात्मा पुरुष इति उच्यते इति कथ्यते॥ यथा च = "अथ अर्वाङ् एनम् एतासु अप्सु अन्विच्छ"। गोपथ ब्रा० १।४॥ तथा च छान्दो० उप० = "स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते"।

२ यद्वा = इन्द्रमिति = विश्वाः सर्वाः प्रजाः इन्द्रं परमात्मानं समुद्रव्यचसं आकाशवद्

व्याप्नुत — "समुद्र इति अन्तरिक्षनाम" (नि० १।३) अनीवृधत् वर्धितवन्त:।
३ महानिति = प्रथिना स्वविस्तारेण विस्तृत: द्यौ: न = आकाश इव
इन्द्र: आत्मा महान् अस्ति च पर: सर्वेभ्य: पर: सूक्ष्म: अस्ति।
वज्रिणे दण्डात्मकवज्रधारिणे महित्वं महिमा अस्तु अस्ति तस्य
शव: बलं महान् अस्ति।

यथेति = यथा येन प्रकारेण एक: अन्यमनपेक्षमाण: असहाय: रवि:
सूर्य: कृत्स्नं समग्रं लोकं संसारं प्रकाशयति स्वतेजसा भासयति। हे भारत!
हे अर्जुन! तथा तेनैव प्रकारेण क्षेत्री आत्मा कृत्स्नं समग्रं क्षेत्रं महदादि सर्वविकारोपेतं प्राकृतं प्रकाशयति। ३३॥

यथा प्रकाशयत्येक: कृत्स्नं लोकमिमं रवि:।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ ३३॥

अग्निर्नेता भग इव क्षितीनां दैवीनां देव ऋतुपा ऋतावा। स वृत्रहा सनयो विश्ववेदा: पर्षद्विश्वाति दुरिता गृणन्तम्॥ ऋ० ३।२०।४॥
२ यद्धा = रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृत:। अथ० १३।४।२॥
अग्निरिति = ऋतुपा भग इव = यथा ऋतुपा: वसन्ताद्यृतूनां पालक: देव:
द्योतनशील: भग: सूर्य: दैवीनां क्षितीनां आकाशपृथिव्यादीनां प्रकाशक:
अस्ति। तथा क्षितीनां आत्मनिवासानां देहानां दैवीनां इन्द्रियाणां इदं दैवम्,
स्त्री च दैवी, तासां दैवीनाम् इन्द्रियाधिष्ठानमयीनां क्षितीनां तनूनां नेता
अन्तर्यामितया नियामक: सर्वस्य प्रकाशदानेन प्रवर्तक:। ऋतावा सत्यकर्मा,
वृत्रहा वृत्रस्य पापस्य हन्ता, सनय: सनातन: पुराण:, विश्ववेदा: सर्वविषयज्ञाता
सर्वज्ञो देव: द्योतमान: अग्नि: परमात्मा गृणन्तं तद्विषयां स्तुतिं कुर्वन्तं स्तोतारं
विश्वा विश्वानि सर्वाणि दुरिता दुरितानि पापानि अति पर्षत् = अतिक्रम्य
पारं नयतु॥ नेता = णीञ् प्रापणे इत्यस्य तृचि रूपम्। क्षितीनां = क्षि निवासगत्यो: "क्तिच्क्तौ च संज्ञायाम्" इति क्तिच्। दैवीनाम् = देवशब्दात् सम्बन्धार्थे "देवाद् यञञौ" इति अञ्। "टिड्ढाणञ्" इत्यादिना
ङीप्। ऋतुपा: = पा रक्षणे। अन्येभ्योऽपि दृश्यते इति विच्। ऋतून् पातीति उपपदम् इति ङिति समास:। वृत्रहा = हन् हिंसागत्यो:। ब्रह्म-
भ्रूणवृत्रेषु क्विप्"। पर्षत् = "पॄ पालनपूरणयो:" इति लेटि "सिब्बहुलम्" इति सिप् अडागमश्च। "इतश्च लोप:" इतीकारलोप:।
गृणन्तम् = गॄ शब्दे। लट: शतृ। क्र्यादित्वात् श्ना। प्वादित्वात् ह्रस्व:। "श्नाभ्यस्तयोरात:" इत्याकारलोप:। शतृ प्रत्यय:।
२ रश्मिभिरिति = रश्मिभि: सूर्यस्य किरणै: नभ: आकाशम् आभृतं
परिपूर्णं अस्ति। तथा महेन्द्र: जीवात्मा आवृत: सर्वस्मिन् देहे स्वप्रकाशेन आवृत: एति चलति।

क्षेत्रक्षेत्रज्ञयोरेवं = ये मुमुक्षवः क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः एव अन्तरं भेदं ज्ञानचक्षुषा "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ एतज्ज्ञानमेव चक्षुः तेन ज्ञानचक्षुषा विदुः जानन्ति च तथा भूतप्रकृतिमोक्षं भूतं तत्स्वरूपं व्यक्तस्वरूपमित्यर्थः। प्रकृतिः मूलकारणमव्यक्तस्वरूपम्-तयोः द्वयोः भूतप्रकृत्योः स्वाभाविककर्मणः मोक्षं विदुः जानन्ति ते परमं पदं विदेहकैवल्यं यान्ति प्राप्नुवन्ति ॥३४॥

इति श्री जगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां त्रयोदशोऽध्यायः।१३

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा।

भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्॥३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञनिर्देशयोगो नाम त्रयोदशोऽध्यायः समाप्तः॥१३॥

क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम्। न ता अगृभ्रन्नजनिष्ट हि षः पलिक्नीरिद्युवतयो भवन्ति। ऋ० ५।२।४॥

क्षेत्रादिति = अहं मुमुक्षुः क्षेत्रात् क्षेत्रे देहे प्रपञ्चे वा सनुतः-अन्तर्हितनामैतत्-अन्तर्हितं निगूढं चरन्तं वर्तमानं यूथं न, यूथे देहेन्द्रियसंघाते इव पुरु बहु शोभमानं स्वभासा प्रकाशमानं सुमत् सर्वेकप्रसन्नं आत्मानं अपश्यम् पश्यामि। ये ज्ञानिनः ताः क्षेत्रप्रकृतीः न अगृभ्रन् न अगृह्णन् न गृह्णन्ति, तदर्थे स परमेश्वरः, हीति निश्चये, अजनिष्ट प्रादुर्भवति ‡ भगवत्साक्षात्कारः भवतीति भावः॥ अत एव पलिक्नीः इत पलिक्न्यः पलिताः भगवत्प्रकाशाः एव युवतयः परंपदप्राप्तये मिश्रीभूताः भवन्ति।

इति श्री सारस्वतान्वयलैयावास्तव्यन्यायभूषणजगन्नाथशास्त्रिज्योतिषिकृतायां वेदगीतार्थबोधिन्यां क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः-समाप्तः॥१३॥ श्रीकृष्णार्पणमस्तु। श्रीरस्तु॥

# अथ चतुर्दशाध्यायारम्भः



यस्य निःश्वसितं वेदा यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युदर्कवम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीता पृथक्त्वं नो द्वयोः ब्रह्म प्रकीर्तनात् ॥२॥

श्रीभगवानुवाच = परमिति = हे अर्जुन! ज्ञानानां सांख्ययोगकर्मसम्बन्धि ज्ञानानां मध्ये उत्तमं परं श्रेष्ठं ज्ञानं भूयः पुनः प्रवक्ष्यामि कथयिष्ये। सर्वे मुनयः यत् ज्ञानं ज्ञात्वा इतोऽस्मात् संसारात् परां सिद्धिं उत्तमां सिद्धिं विदेह-मुक्तिं गताः प्राप्ताः ॥१॥

श्रीभगवानुवाच = "परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥
(वेदमंत्रो न लभ्येत)

इदमिति = मुनयः इदं मुक्तिकारणं ज्ञानं प्रकृतिपुरुषविवेकं आश्रित्य आश्रयं कृत्वा मम परमात्मनः साधर्म्यं समानधर्मतां आगताः सर्गे पुनर्जन्मनि न उपजायन्ते न प्राप्नुवन्ति, प्रलये महाप्रलये हिरण्यगर्भनाशेऽपि न व्यथन्ति न नश्यन्ति ॥२॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

बोधश्च त्वा प्रतिबोधश्च रक्षतामस्वप्नश्च त्वा नवद्राणश्च रक्षताम्। गोपायंश्च त्वा जागृविश्च रक्षताम्। अथ० ८।१।१३॥

बोधश्चेति = हे मुमुक्षो! हे यते! बोधः प्रकृतिपुरुषज्ञानं, प्रतिबोधः! प्रकृतिपुरुषज्ञानानुभवश्च त्वा त्वां तत्त्वज्ञानिनं रक्षताम्! अस्मात् संसार-जन्मतः रक्षां कुरुताम्। तथा अस्वप्नः = स्वप्नः मिथ्यासृष्टिः, न स्वप्नः अस्वप्नः मिथ्यासृष्टिरहितः च तथा अनवद्राणः निद्राशून्यता सावधानता अपि त्वा त्वां मुमुक्षुं रक्षताम् संसाराद् दूरे संस्थापयताम्। च तथा गोपायन् सर्वदा संसारविषयेभ्यः स्वात्मानं गोपायिता रक्षिता। तथा जागृविः सर्वदा परमा-त्मनः ज्ञानध्याने जागरणशीलः बोधप्रतिबोधौ रक्षताम् संसारार्णवात् गोपायेताम् ॥

ममेति = हे भारत! हे अर्जुन! मम मदीया गुणत्रयसाम्यावस्थापन्ना महद् ब्रह्म प्रकृतिः योनिः सर्वभूतोत्पत्तिकारणम् अस्ति, यतः सर्वेभ्यः सर्वकार्येभ्यः महत्त्वेन महत् इत्युच्यते। स्वकार्याणां बृहकत्वेन ब्रह्मेत्युच्यते। तस्मिन् जगद्-बीजे महद्ब्रह्मणि अहं परमात्मा गर्भं स्वाभासं बीजं दधामि निक्षिपामि। ततः मदाभाससामर्थ्यसमन्वितात् महद्ब्रह्मणः प्रकृतेः सर्वभूतानां सकल-भूतकार्याणां चतुर्विध प्राणिशरीराणां च संभवः उत्पत्तिः भवति ॥३॥

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत ॥३॥

यत् प्राणः स्तनयित्नुनाभिक्रन्दत्योषधीः।
प्रवीयन्ते गर्भान् दधतेऽथो बह्वीर्वि जायन्ते। अथ० ११।४।३॥

यदिति = यत् यस्मिन् काले प्राणः प्रकर्षेण अनिति सर्वं चराचरं व्याप्य चेष्टते इति प्राणः परमेश्वरः। स्तनयित्नुना स्वप्रेरणाध्वनिना ओषधीः स्थूल जगद्वल्लरीः प्रकृतिं अभिक्रन्दति अभिलक्ष्य स्वाभासप्रदानाय शब्दं करोति आह्वयति, तदा प्रकृतिः गर्भान् गर्भं भगवदाभासबीजं प्रवीयन्ते प्राणाभिक्रन्दनमात्रादेव गर्भं गृह्णातीत्यर्थः। तदानीमेव गर्भं दधते धारयन्ति अथो अनन्तरमेव बह्वीः बह्व्यः बहुप्रकाराः सकलभूतकार्याणि चतुर्विधप्राणिशरीराणि च विजायन्ते विविधम् उत्पद्यन्ते।

सर्वेति = हे कौन्तेय! हे कुन्तीसुत! अर्जुन! सर्वयोनिषु देवमनुष्यादि-सकलयोनिषु याः मूर्तयः देहाः संभवन्ति जायन्ते तासां मूर्तीनां देहानां महद् ब्रह्म प्रकृतिः योनिः उत्पादयित्री भवति। अहं परमेश्वरः बीजप्रदः गर्भदाता पिता भवामि॥४॥

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ऋ० १०।१८४।१॥

विष्णुरिति = विष्णुः सर्वव्यापकः परमात्मा योनिं गर्भाधानस्थानं प्रकृतिं कल्पयतु प्रकर्षीकुरुते। त्वष्टा तनुकर्ता प्रकृतिरिति भावः। रूपाणि – रूपाणीत्युपलक्षितम्। रूपाणि रूपयुतानि शरीराणि स्त्रीत्वपुंस्त्वाभिव्यञ्जकानि चिह्नानि इति वा इति के पिंशतु पिनष्टि अवयवीकरोति। पिंश अवयवे मुचादित्वात् नुम्। एवं प्रकल्प्तायां योन्यां प्रजापतिः प्रजारक्षकः स्वामी परमात्मा आसिंचतु रेत आसिञ्चति विसृजतीत्यर्थः। धाता गर्भधारकः देवः तं गर्भं मनुष्यादियोनिं दधातु धारयति।

सत्वमिति = हे महाबाहो! सत्वं रजः तम इति त्रयः गुणाः प्रकृतिसंभवाः प्रकृतिः एव संभवः उत्पत्तिस्थानं येषां ते ऽस्मिन् देहे अव्ययं व्ययरहितं देहिनम् आत्मानं निबध्नन्ति, अहं ममाभिमानाभिनिवेशरज्वा बध्नन्ति।

सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥

"त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः। त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा। ऋ० १।३४।२॥

त्रय इति = मधुवाहने = मधुनः जीवन माधुर्यस्य वहनेन युक्ते अश्विनोः आत्ममनसोः रथे शरीरे पवयः वज्रवद्विनाशकाः त्रयः सत्वं, रजः, तमः इति त्रिसंख्याकाः गुणाः सन्ति। इत्थं विश्वे सर्वे विवेकिनः पुरुषाः सोमस्य

आत्मनः वेनां कमनीयतां मे धाविलं वा अनुविदुः जानन्ति। तत्र शरीरस्थे स्कंभासः स्तंभविशेषाः त्रयः त्रिसंख्याकाः सत्वं, रजः, तम इति त्रयः गुणाः आरभे आरब्धं तत् शरीरं अवलम्बितुम् स्कभितासः स्थापिताः सन्ति। हे अश्विनौ! आत्ममनसी युवां तादृशेन शरीररथेन नक्तं रात्रौ त्रियोधः बहुवारं गच्छथः। तथा दिवा दिवसोऽपि त्रियोधः अर्थात् अहर्निशं शरीररथम् आरुह्य पुनः पुनः क्रीडथः इत्यर्थः। मधुवाहने = मधु वाह्यतेऽनेनेति मधुवाहनः, करणे ल्युट्। विदुः = वेत्तर्लिटि 'विदो लटो वा' इति मेः उसादेशः। स्कंभासः = ष्टभि स्कभि गतिप्रतिबन्धे। स्कम्भन्ते प्रतिबद्धाः भवन्ति इति स्कम्भाः। "पचाद्यच्"। स्कंभितासः = स्कम्भुः सौत्रो धातुः। अस्मान्निष्ठायां "यस्य विभाषा" इतीट् प्रतिषेधे प्राप्ते "ग्रसित स्कभितेत्यादिना इडागमः निपातितः। आरभे—'रभ् राभस्ये' अस्मात् आङ्पूर्वात् संपदादिलक्षणो भावे क्विप्।

तत्रेति = हे अनघ! हे निष्पाप! हे अर्जुन! तत्र तेषु गुणत्रयेषु सत्वं सत्वगुणः निर्मलत्वात् रजस्तमोमलरहितत्वात् प्रकाशकं सर्ववस्तुज्ञान प्रभासकं अनामयं रजस्तमोगुणरोगशून्यं सत् सुखसंगेन पारलौकिक सुखस्य संगेन — सज्यते अनेनेति संगः कामः तेन कामेन बध्नाति संयोजयति च। तथा ज्ञानसंगेन = ज्ञायते परमेश्वरोऽनेनेति ज्ञानम् - परमेश्वरमहत्वप्रतिपादकं शास्त्रं तस्मिन् संगः आसक्तिः तेन बध्नाति ब्रह्मनिष्ठायां संयोजयति।

तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६॥
(वेदमंत्रो न लभ्यते)

रज इति = हे अर्जुन! रजः रजोगुणं तृष्णासंगसमुद्भवम् अप्राप्ते वस्तुनि प्राप्त्याशा, तृष्णा संगः प्राप्तेषु ग्रहणेच्छा संगः। तयोः तृष्णासंगयोः संभवः उत्पत्तिर्यस्मात् तत् तृष्णासंगसमुद्भवं यद्वा तृष्णायाः संगेन समुद्भवं रागात्मकं रज्यतेऽनेनेति रागः स्नेहः अनुरक्तिरिति यावत्। स राग एव आत्मा स्वरूपं यस्य तद्रागात्मकं स्नेहस्वरूपं विद्धि जानीहि। हे कौन्तेय! हे कुन्तीसुत! हे अर्जुन! तत् रजः देहिनम् आत्मानं ज्ञानिनं पुरुषं कर्मसंगेन कर्मसु लौकिक वैदिककर्मसु संगः तत्परता कर्मसंगः तेन कर्मसंगेन कर्मतत्परत्वेन बध्नाति संयोजयति, ब्रह्मज्ञानिनमपि कर्महं करोतीति भावः।

रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥ ७॥

यस्येदमो रजो युजस्तुजे जनो वनं स्वः। इन्द्रस्य रन्त्यम् बृहत्।
साम० ५८८। अथ० ६। ३३। १॥

यस्येति = युजः ब्रह्मज्ञानरतस्य यस्य इन्द्रस्य आत्मनः इदं रजः रजोगुणः अस्ति। तद्रजः रजोगुणः जने जीवात्मनि, पुरुषे वनं वननीयं संभजनीयं बृहत् प्रभूतं

रन्त्यं अत्यन्तरमणीयं कर्म स्वः विहितशुभंकर्म फलात्मकं सुष्ठु प्राप्तव्यं निरतिशयं सुखं भवति। रजः = रञ्ज् रागे इत्यस्मात् असुनि—"रञ्जक रञ्जन रजः सूपसंख्यानम्" इत्युपधालोपः। युजः = युजिर् योगे 'अस्माच्छन्दसि लुङि—"च्लेः अङ्"। स्वः = सुपूर्वात् अर्तेर्विच्। रन्त्यम् = रमु क्रीडायाम्। अस्मात् "क्तिच्क्तौ च संज्ञायाम्" इति क्तिच्। "न क्तिचि दीर्घश्च" इत्यनुनासिकलोपदीर्घयोरभावः। अत एव अन्यत्राम्नातम्—"रन्तिर्नामासि दिव्यो गन्धर्वः" इति तै० आर० ४।११।५ तत्र भवं रन्त्यम्।

तम इति = हे अर्जुन! तमोगुणम् अज्ञानजं ज्ञानसत्त्वाभावात् जातं सर्वदेहिनां सकलप्राणिनां मोहनं मोहयति सदसद्विवेकज्ञानं तिरोभावयतीति मोहनं ज्ञानावरकं विद्धि जानीहि। हे भारत! हे अर्जुन! तत् तमोगुणः प्रमादालस्यनिद्राः—ताभिः प्रमादालस्यनिद्राभिः निबध्नाति नितरां ब्रह्मज्ञानिनमपि मोहबन्धनेन संयोजयति।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥ ८॥

१ यदि स्थ तमसावृता जालेनाभिहिता इव। सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्रहिण्मसि॥ अथ० १०।१।३०॥

२ यद्वा— मैतं पन्थामनुगा भीम एष येन पूर्वं नेयथ तं ब्रवीमि। तम एतत् पुरुष मा प्रपत्था भयं परस्तादभयं ते अर्वाक्"। अथ० ८।१।१०॥

१ यदीति = हे पुरुषाः! यूयं यदि जालेन पाशेन अभिहिताः समन्तात् धारिताः इव तमसा तमोगुणेन आवृताः संलिप्ताः स्थ। तर्हि युष्माकं सर्वाः सकलाः कृत्याः (सुकर्माणि इतः अस्मात् लोकात् संलुप्य विनश्य पुनः कर्त्रे कर्मकर्त्रे कर्मकर्तारं (पुरुषं प्रहिण्मसि विनाशयति। पुरुषव्यत्ययः।

२ यद्वा— मैतमिति = हे पुरुष! हे मुमुक्षो! त्वम् एतं तमोगुणवन्तं पन्थां मार्गं मा अनुगाः मा गच्छ। एषः तमोगुणमार्गः भीमः भयानकः अस्ति। अतः एतं तमोगुणं मा गच्छ इति ब्रवीमि कथयामि। हे पुरुष! एतत् भयावहं अधोगतिकारकं तमः तमोगुणं मा प्रपत्थाः प्रपदनं मा कार्षीः। परस्तात् पुरस्तात् अग्रे स्थिते तमोगुणसेवनात् संमुखस्थं मे तुभ्यं भयं पतनभयं भवतीति शेषः। अर्वाक् तमोगुणतः अर्वाक् सत्वगुणे ते तव अभयं भयाभावः क्षेमं भवतीत्यर्थः॥

सत्वमिति = हे भारत! हे अर्जुन! सत्वं सत्वगुणः सुखे इन्द्रियजन्ये सुखे संजयति संयोजयति लगयति। रजः रजोगुणः कर्मणि लौकिकवैदिककर्मणि संजयति संयोजयति, तमस्तु तमोगुणस्तु ज्ञानं ब्रह्मज्ञानम् आवृत्य आच्छाद्य प्रमादे उत अपि आलस्यनिद्रयोः अपि संजयति संयुक्तं करोति।

सत्वं सुखे संजयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥ ९॥
(योजयति ... ) 

XIV



रज इति = हे भारत! हे अर्जुन! सत्वं सत्वगुणः रजः रजोगुणं च तमः तमोगुणम् अभिभूय प्रधर्ष्य भवति। रजः रजोगुणः सत्वं सत्वगुणं चैव तमः तमोगुणं प्रधर्ष्य भवति स्वकार्यं करोति। तथा तेनैव प्रकारेण तमः तमोगुणः सत्वं सत्वगुणं रजोगुणम् अभिभूय भवति स्वकार्यं करोति ॥१०॥

रजस्तमश्चाभिभूय सत्वं भवति भारत।
रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥१०॥

आरभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते। असुं त आयुः पुनराभरामि रजस्तमो मोपगा मा प्रमेष्ठाः। अथ० ८।२।१॥

आरभस्वेति = हे मुमुक्षु पुरुष! इमां तत्वज्ञानिभिरुपदिश्यमानाम् अमृतस्य अमरणत्वस्य मुक्तेः श्नुष्टिं रसपानं प्रस्तुतिं आरभस्व अनुभवितुमुपक्रमस्व। त्वं रजः रागं सत्वगुणप्रतिबन्धकं रजोगुणं मोपगाः = मा+उपगाः मा प्राप्नुहि। एतत्सर्वं ज्ञात्वा मा प्रमेष्ठाः संसारे पुनर्हिंसां मा प्राप्नुहि। रजोगुणतमोगुणपरित्यागात् तेतव अच्छिद्यमाना परैः विच्छेत्तुमनर्हा जरदष्टिः जरावस्थापर्यन्तम् अष्टि अशनम् अस्तु। तदर्थं ते तव असुं प्राणं मृत्युनाऽपहृतम् आयुश्च पुनः आभरामि आहरामि। मोपगाः = इण् गतौ 'इणो गा लुङि' इति गादेशः। मेष्ठाः = मीङ् हिंसायाम् - लुङि रूपम्।

सर्वद्वारेषु इति = यदि यस्मिन् कालेऽस्मिन् देहेऽस्मिन् शरीरे सर्वद्वारेषु सर्वेषु त्वक्चक्षुरादीन्द्रियेषु ज्ञानं ज्ञानप्रसतिलक्षणः प्रकाशः स्फुरणम् उपजायते उद्भवति। तदा तस्मिन् काले सत्वं सत्वगुणं विवृद्धं विशेषेण वृद्धिं प्राप्तं विद्यात् जानीयात् ॥११॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्वमित्युत ॥११॥

अप तस्य हतं तमो व्यावृत्तः स पाप्मना। सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ। अथ० १०।७।४०॥

अप इति = तस्य पुरुषस्य तमः तमोगुणः अपहतं विनष्टं दूरीभूतमित्यर्थः। सः पुरुषः पाप्मना पापकर्मप्रवर्तकेन रजोगुणेन व्यावृतः निवृत्तोऽस्ति। तस्मिन् रजस्तमोगुणरहिते पुरुषे सर्वाणि ज्योतींषि सर्वेन्द्रियप्रकाशाः यद्वा भगवत्साक्षात्कारप्रकाशाः भवन्ति। यानि त्रीणि कर्मोपासना ज्ञानानि ज्योतींषि प्रकाशः प्रजापतौ प्रजा अपत्यं तत्पतौ पूर्णज्ञानिनि भवति।

लोभ इति = हे भरतर्षभ! हे भरतकुलश्रेष्ठ! हे अर्जुन! लोभः लोलुपता प्रवृत्तिः सर्वेन्द्रियचेष्टा कर्मणां लौकिकवैदिककर्मणाम् आरम्भः उपक्रमः अशमः शान्त्यभावः स्पृहा विषयेच्छा रजसि रजोगुणे विवृद्धे वृद्धिं प्राप्ते सति एतानि लोभादीनि जायन्ते उत्पद्यन्ते।

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥१२॥

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति। ऋ० ३।५३।२३॥

न सायकस्येति = हे जनासः! हे जनाः! सायकस्य वज्रवन्नाशकस्य लोभादिकस्य तत्वं न चिकिते भवद्भिः न ज्ञायते। लोधं लोभं लोभोपहतं पुरुषं पशु मन्यमानाः पशुवन्मन्यमानाः सर्वे लोकाः नयन्ति रजोगुणगर्जनायां नयन्ति प्रापयन्ति। वाजिनाः = वाचाम् इनाः स्वामिनः वाजिनाः वागीशाः जनाः अवाजिनं वाचां इनः वाजिनः तं वाजिनं वागीशं सर्वज्ञं तद्विलक्षणं मूर्खजनं न हासयन्ति हास्यास्पदं न कुर्वन्ति। सात्विकाः राजसहास्यं न कुर्वन्ति, राजसाश्च सात्विकं तामसं च हासयन्तीति भावः। यथा शालिहोत्रकाः अश्वात् पुरः पुरस्तात् गर्दभं रासभं न नयन्ति।२३।

अप्रकाश इति = हे कुरुनन्दन! हे अर्जुन। तमसि तमोगुणे विवृद्धे वृद्धिं प्राप्ते ~~सति~~ अप्रकाशः स्फुरणाभावः, अप्रवृत्तिः प्रवृत्त्यभावः, आलस्यमित्यर्थः, प्रमादः कर्तव्यासाधनता मोहः मूढत्वं चकारात् निद्रादिकम् एतानि सर्वाणि जायन्ते प्रादुर्भवन्ति॥१३॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन॥१३॥
(वेदमन्त्रो न लभ्यते)

यदेति = यदा यस्मिन् काले सत्वगुणे प्रवृद्धे प्रकर्षेण वृद्धिं प्राप्ते सति देहभृत् प्राणी प्रलयं देहपरित्यागं याति तदा तस्मिन् काले देही उत्तमविदां ब्रह्मोपासकानां अमलान् विक्षेपावरणरहितान् शुद्धान् लोकान् हिरण्यगर्भादिलोकान् शुद्धजन्मानि वा प्रतिपद्यते प्राप्नोति॥१४॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते॥१४॥

उत् क्रतुना बृहता देव अग्नन्नपावृक् तमोभिर्ज्योतिरश्रैत्। दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भुवनानि विश्वा। अथ० १३।२।९॥

उत् क्रतुना = देवः सत्त्वप्रधानः मुक्तात्मा बृहता महत्तरेण क्रतुना प्रज्ञानेन उदागन उत्तमान लोकान् गच्छति। तमोभिः तामसैः आवरणैः अपावृक् सर्वथा मुक्तः सन् ज्योतिः प्रकाशात्मकं परमेश्वरं अश्रैत् आश्रयति। परमेश्वरशरणं प्राप्नोति। स सात्विकः जनः अदितेः अखण्डस्य परमेश्वरस्य पुत्रः पालयितव्यः पुत्रः दिव्यः दिव्यगुण युक्तः सुपर्णः सुष्ठु ज्ञानवान वीरः ज्ञानशूरः विश्वा विश्वानि सर्वाणि भुवनानि लोकान् व्यख्यत विविधप्रकारेण स्वज्ञानप्रकाशेन प्रकाशयति।

रजसीति = पुरुषः रजसि रजोगुणप्रवृद्धे सति प्रलयं गत्वा मृत्युं प्राप्य कर्मसंगिषु कर्मयोगिमध्ये जायते जन्म गृह्णाति इति। तथा तेनैव –

XIV



प्रकारेण तमसि तमोगुणप्रवृद्धौ सत्यां प्रलयं गत्वा मृत्युं प्राप्य कर्मसंगि-षु कर्मयोगिमध्ये जायते जन्म गृह्णाति प्रलीनः मृत्युं प्राप्तः सन् मूढ-योनिषु पशुस्थावरयोनिषु जायते उत्पन्नो भवति ॥१५॥

रजसि प्रलयं गत्वा कर्मसंगिषु जायते।

तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

यत् ते नियानं रजसं मृत्यो अनवधर्ष्यम्। पथ इमं तस्माद् रक्षन्तो ब्रह्मास्मै वर्म कृण्मसि ॥ अथ० ८।२।१०॥

यत्ते इति = हे मृत्यो! हे मरणशील संसारिन्! यत् यदा ते तव अनव-धर्ष्यं सत्त्वतमसोर्मध्ये केनापि गुणेन धर्षितुमशक्यं रजसं रजोगुण-सम्बन्धि नियानं मार्गः भवति। तदा तस्मात् उक्तलक्षणात् पथः मार्गात् इमं त्वां संसारि जीवं रक्षन्तः बहवः तत्त्वज्ञानिनः पुरुषाः अस्मै रजोगुण-लीनाय पुरुषाय ब्रह्म परिवृढं शान्तिप्रदायकं वैदिककर्म प्रतिपादकमंत्र-समूहं वर्म रक्षकं कवचं कृण्मसि कुर्मः अर्थात् कर्मठः जीवो भवतीति भावः।

कर्मण इति = सुकृतस्य सुष्ठु कृतं सुकृतं पुण्यं तस्य सुकृतस्य पुण्यस्य कर्मणः सात्त्विकं सत्त्वगुणोपबृंहितं निर्मलं दुःखरहितं फलम् आहुः ब्रह्मविदः कथयन्ति। रजसः रजोगुणस्य कर्मणः फलं दुःखं, तमसः तमोगुणस्य कर्म-णः फलम् अज्ञानं प्रमादनिद्रालस्यादिकं आहुः कथयन्ति ॥१६॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।

रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

१ ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः। इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति। ऋ० १।१६४।१९॥

अथ० ९।९।१९॥

२ यद्वा = नूतनमंत्रः = "विद आत्मन्नन्यवर्णम् अपाजैत् कृष्णां रुशती पुनानो या लोहिनी तां ते अग्नौ जुहोमि॥ अथ० १२।३।१४॥

१ ये इति = हे जीवात्मन्! ये जीवात्मानः अर्वाञ्चः तमसि स्थिताः सन्ति तान् तामसान् जीवान् उ एव पराचः दूरस्थान् अर्थात् सन्मनुष्ययोनितः दूरस्थाः सन्ति तान् उ तानेव अर्वाचः परमात्मसमीपस्थान् आहुः सात्त्विकाः पुरुषाः कथयन्ति। हे-सोम! हे शान्तिमय सत्त्वगुणविशिष्ट जीवात्मन्! त्वं च इन्द्रः रजोगुणैश्वर्य-सम्पन्नः पुरुषः या यानि कर्माणि चक्रथुः = कुरुतः तानि कर्माणि धुरायुक्ता न धुरासम्मेलकान् इव रजसः रजोगुणसमीपस्थान् वहन्ति धारयन्ति।

२ यद्वा = विद इति = आत्मन् आत्मज्ञानी अर्थात् सात्त्विकपुरुषः अन्यवर्णं सत्त्वगु-णाद् भिन्नं स्वरूपं अपि वेद वेत्ति, रुशती सत्त्वगुणजन्यप्रकाशेन प्रकाशमानां स्वां तनूं पुनानः पवित्रीकुर्वन् कृष्णां कृष्णवर्णवत् तमोगुणम् अपाजैत् = दूरीकुरुते। या लोहिनी = यः रक्तगुणमयः रजोगुणोऽस्ति तां तं तमोगुणं

ते तव परमात्मनः अग्नौ तेजसि जुहोमि हवनं करोमि।

सत्त्वादिति = सत्त्वात् सत्त्वगुणात् ज्ञानं सदसद्वस्तुविवेकः संजायते समुत्पद्यते। रजसः रजोगुणात् लोभः वस्तुप्राप्त्यभिलाषः जायते। तमसः तमोगुणात् प्रमादमोहौ विस्मृतिः सदसद्वस्तुविवेकाभावश्च भवतः ।१७॥

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसः भवतोऽज्ञानमेव च ॥१७॥
(वेदमन्त्रो न लभ्येत)

ऊर्ध्वमिति = सत्त्वस्थाः सत्त्वे गुणे तिष्ठन्तीति सत्त्वस्थाः पुरुषाः ऊर्ध्वं ब्रह्मविष्ण्वादिस्थानं समुच्चतर ब्रह्मयोनिं वा गच्छन्ति यान्ति। राजसाः रजोगुणे वर्तमानाः जनाः मध्ये देवलोके मनुष्यलोके नृपादिक्षत्रिययोनौ तिष्ठन्ति प्रादुर्भवन्ति। जघन्यगुणवृत्तिस्थाः तामसाः पुरुषाः कृत्याकृत्यविवेकशून्याः अधो गच्छन्ति नरके तिर्यग्योनौ वा गच्छन्ति ॥१८॥

ऊर्ध्वं गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्थाः अधो गच्छन्ति तामसाः ॥१८॥

1 वरणेन प्रव्यथिताः भ्रातृव्याः मे सबन्धवः। असूर्तं रजो अप्यगुस्ते येन्त्वधमं तमः ॥ अथ० १०।३।९॥

2 यद्वा = तिस्रो ह प्रजा अत्यायमायन्न्य१न्या अर्कमभितोऽविशन्त। बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश। अथ० १०।८।३॥

1 वरणेनेति = हे विद्वन्! वरणेन = सर्वैः वरीतुं योग्येन श्रेष्ठतमेन वा सत्त्वगुणेन मे मम परमात्मजिज्ञासोः सबन्धवः बन्धुभ्यां रजस्तमोभ्यां सहिताः भ्रातृव्याः मोक्षपराङ्मुखकर्तारः कामक्रोधादयः शत्रवः व्यथिताः दुःखिताः अभवन्। ते रजः रजोगुणविशिष्टाः पुरुषाः अधमं अधोलोकं यन्तु प्राप्नुवन्ति। (लकारव्यत्ययः)॥

2 यद्वा = तिस्र इति = हे जीवात्मन्! ह इति निश्चये। तिस्रः त्रिविधाः प्रजाः अत्यायम् लोके अतिक्रमणं प्राप्नुवन्ति। अन्या एका सत्त्वगुणविशिष्टा प्रजा अर्कं सूर्यलोकम् अर्थात् सूर्यवत् प्रकाशमानमूर्ध्वलोकं यद्वा सर्वैः अर्चनीयं परमात्मानम् अभितः सर्वथा न्यविशन्त प्रविशन्ति। अपरा प्रजा अर्थात् रजोगुणविशिष्टा प्रजा विमानः विशेषेण स्वधनं स्वमहत्त्वं च मानं च धारयन् ह = निश्चयोऽस्ति, तस्थौ तिष्ठति। हरिणीः सर्वान् शुभगुणान् (शुभकर्माणि च हरन् विनाशयन्तीति यावत्, हरितः हरिद्वर्णः भवति अर्थात् नीचवर्णः भवति।

नान्यमिति = यदा यस्मिन् काले द्रष्टा आत्मा गुणेभ्यः गुणकार्यभूतेभ्यः देहेन्द्रियादिभ्यः अन्यं भिन्नं कर्तारं न अनुपश्यति न विलोकयति कर्तृत्वादिकं प्रकृतिगुणं च पश्यति। गुणेभ्यः गुणकार्येभ्यः अहंकारादिभ्यः परं विलक्षणं वेत्ति जानाति स पुरुषः मद्भावं मत्स्वरूपं अधिगच्छति ॥१९॥

नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

"तं प्रत्नथा: ------" ऋ० ५।४४।१ (एतन्मंत्रव्याख्या १४।२९ श्लोके द्रष्टव्या)

गुणानिति = देही ब्रह्मवित् पुरुषः देहसमुद्भवान् देहस्य समुद्भवः उत्पत्तिर्येभ्यः तान् देहसमुद्भवान् देहस्योत्पादकान् एतान् त्रीन् सत्त्वरज स्तमोगुणान् अतीत्य उल्लंघ्य जन्ममृत्युजरादुःखैः आत्मनः देहसंबन्धः जन्म, आत्मनः देहात् निःसरणं मृत्युः, जरा = देहस्य शीर्णता, जन्ममृत्युजराजन्यैः दुःखैः विमुक्तः अस्पृशन् सन् अमृतं विदेहकैवल्यं अपवर्गं अश्नुते प्राप्नोति ॥२०॥

* जरा देहस्य शीर्णता

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान्।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः। प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा। अथ० ५।२८।८॥

त्रय इति = त्रयः सत्त्वरजस्तमो गुणाः सुपर्णाः स्वविषये पतनशीलाः त्रिवृताः ज्ञान-लोभमोहाः एभिः त्रिभिः वृताः युक्ताः शक्राः सकलप्रपञ्चधारणे पूर्णतया शक्ताः आपन्न संसारे प्राप्ताः सन्ति। यद् इति यस्मिन् काले प्रकृतिगुणविवेकिनः मुमुक्षवः जनाः जानन्ति तदा एकाक्षरं एकमविनाशिनं आत्मानं अभिसंभूय संप्राप्य अमृतेन अमरणशीलेन आत्मना विश्वा विश्वानि सर्वाणि दुरितानि पापपुण्यजन्य जन्ममृत्युजरादुःखानि साकं युगपदेव अन्तर्दधानाः विनाशयन्तः। मृत्युं प्रत्यौहन् स्ववशं कुर्वन्ति

अर्जुन उवाच— कैरिति = हे प्रभो! हे स्वामिन! एतान् त्रीन् त्रिसंख्याकान् गुणान् अतीतः समतिक्रम्य वर्तमानः कैः लिङ्गैः कैः चिह्नैः भवति। किमाचारं लौकिकवैदिककर्मसु किमाचरन् एतान् त्रीन् गुणान् कथं केन प्रकारेण अतिवर्तते केनोपायेन गुणत्रयातिक्रमणं करोति। २१।

अर्जुन उवाच = "कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥२१॥

"तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्। प्रतीचीनं वृजिनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे। ऋ० ५।४४।१॥

तमिति = यः जिज्ञासुः तं द्रष्टारं आत्मानं प्रत्नथा पुराणवत् पूर्वथा सर्वपूर्ववत् विश्वथेमथा विराड्वत् ज्येष्ठतातिं सर्वेभ्यो ज्येष्ठं बर्हिषदं महत्पदे स्थितं महान्तमिति यावत्। स्वर्विदं सूर्यादिज्योतिषामपि वेत्तारं प्रतीचीनं सर्वेभ्यः प्राचीनं वृजिनं बलवन्तं "बलमसि, बलं मयि धेहि" इत्युक्तेः। गिरा स्तुत्या दोहसे दोग्धि यासु स्तुतिषु आशुं सर्वव्यापकं जयन्तं जयशीलं आत्मानं वर्धसे वृद्धिं कुरुषे।

प्रकाशमिति = हे पाण्डव! हे पाण्डुपुत्र! हे अर्जुन! यः पुरुषः प्रकाशं सत्त्वगुणोद्भवं विषयजन्यं सुखं तथा प्रवृत्तिं रजोगुणसमुद्भवं विषयप्रवृत्तिं

च पुनः मोहं तमोगुणजन्यं सर्व विकारञ्च संप्रवृत्तानि सम्यक्तया प्रवृत्तिं प्राप्तानि सत्त्वरजस्तमोगुणकार्यभूतानि न द्वेष्टि द्वेषबुद्ध्या न पश्यति, तथा निवृत्तानि निवृत्तिं प्राप्तानि च न कांक्षति नेच्छति ॥ २२ ॥

उदासीनवदिति = उदासीनवत् तटस्थपुरुष इव आसीनः प्रवृत्तिनिवृत्त्योः दूरे वर्तमानः यः गुणैः गुणकार्यैः प्रकाशरागमोहैः न विचाल्यते ब्रह्माकारवृत्त्याः न प्रच्याव्यते। गुणाः सत्त्वरजस्तमोगुणाः त्रय एव देहकार्याय यथासमयं गुणेषु वर्तन्ते इत्येवं रूपः योऽवतिष्ठति न इङ्गते गुणकार्येभ्यः न चलति ॥ २३ ॥

समदुःखसुख इति = दुष्टानि खानि इन्द्रियाणि यत्रेति दुःखम्। सुष्ठो मनोज्ञानि खानि इन्द्रियाणि यत्र तत् सुखम्। दुःखञ्च सुखञ्च दुःखसुखे ते समे तुल्ये दुःखसुखे यस्य स समदुःखसुखः - सुखे दुःखेच एकरसः, स्वस्थः स्वे आत्मनि तिष्ठतीति स्वस्थः, समलोष्ठाश्मकाञ्चनः - लोष्ठं मृत्पिण्डम्, अश्म पाषाणः, काञ्चनं सुवर्णम्, लोष्ठं च अश्म च कांचनं चेति लोष्ठाश्मकाञ्चनानि, समानि तुल्यानि लोष्ठाश्मकाञ्चनानि यस्य सः समलोष्ठाश्मकांचनः, तुल्यप्रियाप्रियः - प्रियम् अभिमतम् अप्रियम् अनभिमतम् - प्रियं च अप्रियं च प्रियाप्रिये, तुल्ये प्रियाप्रिये यस्य स तुल्यप्रियाप्रियः, धीरः = धियं राति निगृह्णातीति धीरः। तुल्यनिन्दात्मसंस्तुतिः = निन्दा परदोषाविष्करणम्, आत्मसंस्तुतिः आत्मश्लाघा, निन्दा च आत्मसंस्तुतिः च इति निन्दात्मसंस्तुती, तुल्ये निन्दात्मसंस्तुती यस्य स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

मानावमानयोरिति = मानम् आदरः, अवमानम् अवहेलनम् तयोः मानावमानयोः तुल्यः एकरसः। मित्रारिपक्षयोः मित्रपक्षे अरिपक्षे शत्रुपक्षे च तुल्यः समः। सर्वारम्भपरित्यागी = 'एतेन कर्मणा ममैतच्छुभं भविष्यति' इति आरम्भक्रिया, सर्वे आरम्भाः सर्वारम्भाः तेषां परित्यागः सर्वारम्भपरित्यागः स एव शीलमस्येति सर्वारम्भपरित्यागी, स गुणातीतः प्रकाशरागमोहातीतः उच्यते कथ्यते ॥ २५

श्रीभगवानुवाच = प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणाः वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

1 " दृते दृंह मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्" ॥ यजु॰ ३६।१८ ॥

2 प्रतुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः। नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः। ऋ॰ ६।१८।१२ ॥

३ ते अज्येष्ठा अकनिष्ठास उद्भिदो ऽमध्यमासो महसा विवावृधुः। सुजातासो जनुषा पृश्निमातरो दिवो मर्या आनो अच्छा जिगातन ॥ ऋ० ५।५९।६॥

१ दृते इति = हे परमात्मन्! दृते - दृ विदारणे, जरया विदीर्णेऽपि शरीरे मां मां दृंह स्वपदप्राप्तये दृढीकुरु। सर्वाणि भूतानि सकलान् जीवान् प्राणिमात्राणि मां द्वेषादिद्वन्द्वरहितं मां मित्रस्य चक्षुषा मित्रस्य दृष्ट्या सर्वाणि भूतानि सकलान् जीवान् समीक्षे सम्यक्तया पश्येयम। "शान्तं हि मित्रस्य चक्षुः" "न वै मित्रं कश्चन हिनस्ति नामित्रं कश्चन हिनस्ति"। एवमहिंस्यमानाः अहिंसन्तश्च परस्परं अद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे पश्याम"

२ प्रतुविद्युम्नस्येति = तुविद्युम्नस्य तुवि बहु द्युम्नं यशो यस्य तथाभूतस्य बहुयशसः स्थविरस्य सर्वतो गुणातीतत्वे प्रवृद्धस्य धृष्वेः लोभमोहादिशत्रुधर्षकस्य शत्रुनाशकस्य गुणातीतस्य महिमा महत्वं दिवः द्युलोकादारभ्य पृथिव्याः भूमेश्च परस्ते प्ररिरिचे अतिशयत्वेन वर्तते। पुरुमायस्य बहुप्रज्ञस्य सह्योः गुणत्रयाभिभवितुः अस्य उदासीनस्य पुरुषस्य शत्रुः शातयिता वैरी नास्ति। अस्य प्रतिमानं तुल्यः नास्ति। अस्य प्रतिष्ठाः कश्चिद् गुणोऽपि आश्रयकर्ता नास्ति।

३ ते अज्येष्ठा इति = ते समदुःखसुखाः ते जीवाः अज्येष्ठाः कस्मादपि स्वं ज्येष्ठं न मन्यन्ते, अतः अज्येष्ठास्ते ऽकनिष्ठासः समवृत्तित्वात् स्वं कनिष्ठं न मन्यन्ते। अतः अकनिष्ठासः सन्तः उद्भिदः उच्चतानीचतात्मशत्रूणाम् उद्भेदयितारः। अमध्यमासः मध्यमता शून्याः अतः सर्वप्रकारैः समाः, महसा समतेजसा विवावृधुः विवर्धन्ते, सर्वोत्कृष्टत्वेन वर्तन्ते। हे मर्याः! हे मनुष्याः! ये सुजातासः मित्रारिपक्षशून्यत्वेन सुष्ठु संभूताः जनुषा जन्मना पृश्निमातरः = पृश्निः पालकः ईश्वरः एव माता ज्ञानप्रदाता अनुमापको वा येषां ते पृश्निमातरः सन्ति तान् दिव आगतान् दैवीजीवान् अच्छ सम्यक्तया आजिगातन जानीत अथवा ते नोऽस्मान् अच्छ प्राप्नुवन्तु॥ २६॥

मामिति = यः मुमुक्षुः पुरुषः मां परमात्मानं अव्यभिचारेण व्यभिचारशून्यत्वेन एकरसेन भक्तियोगेन सेवते ध्यायति। स पुरुषः एतान् सत्वादिगुणान् समतीत्य सम्यक्तया ऽतिक्रम्य ब्रह्मभूयाय कल्पते शक्तो भवति॥ २६॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥ २६॥

इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु मायाः। ये मे धियं पनयन्त प्रशस्ताम्। ऋ० ७।१।१०॥

इमे इति = ये मनुष्याः मे मदीयां प्रशस्तां प्रकर्षेण श्रेष्ठां धियं ध्याननिमग्नां भक्तिं स्तुतिं वा पनयन्त कुर्वन्ति स्तुवन्ति वा। ते इमे मयि स्निग्धाः नराः मनुष्याः वृत्रहत्येषु पापविनाशनकर्मसु शूराः प्रवीणाः सन्तः अदेवीः आसुरीः

XIV



मिथ्याः सर्वाः मायाः गुणत्रयोद्भवाः विचारशक्तीः अभिसन्तु अभिभवन्तु।

ब्रह्मण इति = अहं परमात्मैव अमृतस्य अमरणधर्मस्य अव्ययस्य वृद्धिक्षयरहितस्य ब्रह्मणः निर्विशेष ब्रह्मस्वरूपस्य वेदस्य वा प्रतिष्ठा/स्थिति-स्थानमस्मि। अहञ्च शाश्वतस्य नित्यस्य धर्मस्य जन्ममरणदुःखप्रवाहे *पात्यमानः पुरुषो ध्रियतेऽनेनेति धर्मः, ज्ञानं प्रकृतिपुरुषविवेकः तस्य प्रतिष्ठा स्थितिस्थानमस्मि। तथा ऐकान्तिकस्य अत्यन्तमिदमेवेति निश्चीयते ऽनेनेति अन्तः, एकश्चासौ अन्तः इत्येकान्तः एकप्रत्ययः तेन अवगम्यते इत्यैकान्तिकं तस्य ऐकान्तिकस्य सुखस्य आनन्दस्वरूपस्य सुखस्य प्रतिष्ठा आश्रयो ऽस्मि॥ २७॥

* पात्यमानः

इति श्रीजगन्नाथशास्त्रि संकलितायां गीता वेदार्थबोधिन्यां चतुर्दशोऽध्यायः समाप्तः॥ १४॥

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥ २७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे ब्रह्मगुणत्रयविभाग-योगो नाम चतुर्दशोऽध्यायः समाप्तः॥ १४॥

१ स इत्तन्तुं स विजानात्योतुं स वक्त्वान्यृतुथा वदाति। य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन्॥ ऋ॰ ६।९।३॥

२ अथापि = 'विशि राजा प्रतिष्ठितः धर्मोऽस्मि' । यजु॰ २०।९॥

१ स इति = स परमात्मा इत एव तन्तुं तन्तुस्थानीयानि सूक्ष्मभूतानि विजानाति नान्यः कश्चित्। तथा स एव ओतुम् ओतस्थानीयानि स्थूलभूतानि विजानाति। स एव वक्त्वानि वक्तव्यानि उपदेष्टव्यानि इमानि छन्दांसि ऋतुथा सृष्ट्यादौ उपदेष्टव्यकाले वदाति वदति। अत एव स एव वेदस्य प्रतिष्ठाऽस्ति। यः परमात्मा अमृतस्य विनाशरहितस्य धर्मस्य ऐकान्तिकस्य आनन्दमय-सुखस्य गोपाः रक्षकः अस्ति। यश्च अवः अवस्तात् संसारदशायां चरन् सर्वव्यापकत्वेन संचरन् परः अविद्याऽस्मितादिभ्यः परस्तात् अन्येन सच्चिदानन्दलक्षणेन रूपेण पश्यन् सर्वं जगत् अवलोकयन् प्रकाशयन् वा ईम् धर्मसुखप्रतिष्ठं चिकेतत् जानाति॥

अथापि = विशि इति = विशि सर्वासु प्रजासु राजा प्रकाशं कुर्वन् विराजमानो वा धर्मः प्रतिष्ठितः साक्षात् स्थितः धर्मोऽस्मि।

इति श्रीसारस्वतान्वय लैया वास्तव्य न्यायभूषण जगन्नाथशास्त्रि ज्योतिर्विद् कृतायां वेदगीतार्थबोधिन्यां चतुर्दशोऽध्यायः समाप्तः॥

यस्य निःश्वसितं वेदा यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे मुदर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीता पृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥२॥

**श्रीभगवानुवाच = ऊर्ध्वमूलमिति = सर्वोत्कृष्टत्वात् ऊर्ध्वं ब्रह्मेत्युच्यते।** ऊर्ध्वं ब्रह्म मूलं मूलकारणं बीजं यस्य तथाभूतम्। अधःशाखम् अव्यक्तात् क्रमशः महदादयः आविर्भवन्ति। सर्वे कार्यपदार्थाः प्रकृतेरधःस्थाः सन्ति। अतः अधोऽधः शब्दवाच्याः महदादयः शाखा इव शाखा यस्य सोऽयमधःशाखः तमधःशाखम् अश्वत्थम् — श्वो न तिष्ठतीति अश्वत्थः क्षणभङ्गुरः, तम् अश्वत्थं संसाराश्वत्थवृक्षं, अव्ययः व्ययो नाशः तद्रहितम् अव्ययं नित्यं ब्रह्मरूपत्वान्नित्यमाहुः। यद्वाऽनादिप्रवाहत्वान्नित्यमाहुः। छन्दांसि ऋग्यजुःसामादीनि यस्य संसारवृक्षस्य पर्णानीव पर्णानि पत्राणि सन्ति। यः तम् एवं वेदपलाशं संसाराश्वत्थवृक्षं समूलं वेद जानाति स वेदवित् स वेदार्थज्ञाताऽस्ति।

श्रीभगवानुवाच = ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥१॥

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि। तत्रामृतस्य चक्षणं (ततः कुष्ठोऽजायत) देवाः कुष्ठमवन्वत। अथ० ६।९५।१॥ अथ० ५।४।३॥ अथ० १९।३९।६॥

अश्वत्थ इति = इतोऽस्या दृश्यमानायाः सृष्टेः तृतीयस्यां तृतीयस्मिन् स्थाने अहंकारमहतोः परम् अव्यक्तम् अस्ति। अतः दिवि द्योतमाने तृतीये स्थाने देवसदनः देवस्य परमात्मनः सदनं वासः यत्र तथाभूतः परमात्मवासस्थानभूतः अश्वत्थः संसाराश्वत्थवृक्षः अस्ति। तत्र संसाराश्वत्थवृक्षे अमृतस्य अमरणधर्मकस्य परमात्मनः चक्षणं प्रकाशनं स्फुटीभावो विद्यते। ततः तस्मात् कारणात् कुष्ठः = कुवते व्याप्नोतीति कुः, कौ सर्वव्यापके ब्रह्मणि तिष्ठतीति कुष्ठः ब्रह्मवित् अजायत भवति।

अध इति = तस्य संसाराश्वत्थस्य शाखाः पापपुण्यफलस्वरूपाः देहाः ~~गुणरूपरसादयः पदार्थाः प्रवालाः अङ्कुराः यत्र तथाभूताः शाखाः अधश्चोर्ध्वं~~ गुणप्रवृद्धाः गुणैः सत्त्वरजस्तमोभिः प्रकर्षेण वृद्धिं प्राप्ताः विषयप्रवालाः विषयाः रूपरसादयः पदार्थाः प्रवालाः अङ्कुराः यत्र तथाभूताः शाखाः अधश्चोर्ध्वं मनुष्यलोकादारभ्य ब्रह्मलोकपर्यन्तं प्रसृताः सर्वतो व्याप्ताः सन्ति। मनुष्यलोके मृत्युलोके कर्मानुबन्धीनि बहुविधशरीरारम्भकाणि कर्माणि अनुबध्नन्ति स्वोत्पत्तेरनन्तरमेव कारयन्तीति कर्मानुबन्धीनि मूलानि मूलस्वरूपाणि अधश्च स्थूललिंगशरीरेषु अनुसन्ततानि प्राणिकर्मानुरूपेण सर्वतः व्याप्तानि सन्ति॥२॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके॥२॥

अयं लोको जालमासीच्छक्रस्य महतो महान्। तेनाहमिन्द्रजालेनामूंस्तमसाऽभिदधामि सर्वान्। अथ० ८।८।८।

अयमिति = हे जीवात्मन्! शक्रस्य सर्वकार्येषु शक्तस्य महतः सर्वैः पूजनीयस्य सर्वोत्कृष्टस्य वा मम परमेश्वरस्य अयं लोकः अयं संसाराश्वत्थवृक्षः जालं जालवत् सत्त्वरजस्तमोगुणैः अधः ऊर्ध्वं प्रसृतः अस्ति। स्वस्वकर्मवशात् ब्रह्माण्डोत्पत्तिसमयतः प्रसृतः सर्वतः व्याप्तः अस्ति। अहं कर्मफलप्रदाता परमात्मा तेन कर्मानुबन्धेन इन्द्रजालेन इन्द्रजालवत्कौतुकेन सर्वान् अमून् प्राणिनः तमसा स्वस्वकर्ममोहेन अभिदधामि संयोजयामि इति॥

न रूपमिति — इहास्मिन् लोके अस्य संसारवृक्षस्य तथा "ध्रुवा द्यौः ध्रुवा पृथिवी" इति प्रकारेण ~~रूपं सोपलभ्यते~~ प्रतिपादितं रूपं यदस्ति तत् तेनैव प्रकारेण तद्रूपं नोपलभ्यते सूक्ष्मबुद्धिभिः पण्डितैः न प्रत्यक्षीक्रियते अस्य संसारवृक्षस्य अन्तः समाप्तिः न चादिः जन्मस्थानं न च संप्रतिष्ठा मध्यकालीना स्थितिः उपलभ्यते। सुविरूढमूलम् सम्यक्तया विशेषेण च दृढमूलं एनम् अश्वत्थं संसाराश्वत्थवृक्षं असंगशस्त्रेण संगो वैषयिको रागः न संगः असंगः विरागः स एव शस्त्रं तेन दृढेन असंगशस्त्रेण छित्त्वा विदार्य ततस्तदनन्तरं तत्पदं तद् ब्रह्मपदं परिमार्गितव्यम् अन्वेषणीयम्। यस्मिन् पदे गताः प्राप्ताः जीवाः भूयः न निवर्तन्ति पुनः संसाराय न निवर्तन्ते। तम् आद्यं मूलपुरुषं परमात्मानं प्रपद्ये शरणं गच्छामि, यतः यस्मात् ब्रह्मणः एतस्य संसारवृक्षस्य पुराणी प्राचीना प्रवृत्तिः विस्ताररूपरचना प्रसृता प्रकर्षेण विस्तृता अस्ति। ३,४॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा॥ ३॥
ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥ ४॥

1. यं कुमार नवं रथमचक्रं मनसा कृणोः। एकेषं विश्वतः प्राञ्चमपश्यन्नधितिष्ठसि।
ऋ० १०।१३५।३॥

२ ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुर एतारो अस्य। येभ्यो न ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु। यजु० १७।१४।

१ यमिति — हे कुमार! कुत्सितः मारः कामो यस्मिन् स कुमारः तत्संबुद्धौ हे कुमार! हे ब्रह्मवेत्तः ऋषे! अचक्रं नास्ति आदिमध्यान्तस्थितिचक्रं नास्ति उत्पत्ति-स्थितिप्रलयात्मकं चक्रं यस्य सः तम् अचक्रं चक्ररहितं एकेषं एकः परमात्मा एव ईषास्थानीयः यस्य सः तथाविधं ईदृशं नवं विश्वतः सर्वतः प्राञ्चं प्रकर्षेण गच्छन्तं भूयो भूयः प्राप्तत्वात् नूतनमिव शरीरात्मकं संसारात्मकं वा रथं रथवच्चलन्तं संसाररथं मनसाऽन्तःकरणेन अकृणोः अकरोः। संकल्पात्मकेन मनसा हि कामो जायते सत्यां हि कामनायां पुण्यापुण्यात्मकं कर्म क्रियते। तेन च भोग-

प्रयनाय इदं शरीरमारभ्यते इति परम्परया संसारनिष्पादकत्वं तं संसारात्मकं रूपमपश्यन् अजानन् ज्ञानविषयाद् दूरीकुर्वन् " लक्षणहेत्वोः " इति हेतौ शतृप्रत्ययः। सत्स्वरूपापरिज्ञानाद्धेतोः अधितिष्ठसि भोगायतनत्वेन न स्वीकरोषि ।३।

ये इति = ये देवाः ज्ञानिनः देवेषु अधिदेवत्वं देवाधिदेवं परमात्मानं आयन संसारवृक्षं ज्ञानासिना छित्वा प्राप्नुवन्ति । ये विवेकिनः अस्य ब्रह्मणः परमात्मनः पुरः अग्रे एतारः प्राप्तारः सन्ति । येभ्यः ज्ञानिभ्यः ऋते विना किञ्चन धाम किमपि जन्म न पवते न पवित्री भवति । ज्ञानेन ज्ञानिनां जन्म पवित्रं भवतीति सिद्धान्तः । ते विवेकिनः पुरुषाः दिवः सूर्यस्य लोके न वसन्ति । न च पृथिव्याः पृथिवीप्रदेशेषु अधिवसन्ति । तेन च अधि स्नुषु = "स्नु प्रस्रवणे" प्रस्राविणि स्रोतांसि चक्षुरादीनि प्राणायतनानि तेषु स्नुषु चक्षुराद्याकारेषु देहेषु वसन्ति किन्तु ब्रह्मणि वर्तन्ते न च भूयः ते संसारे जन्म गृह्णन्ति इति भावः ।४।

यद्वा = "सप्त प्राणानष्टौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा । अया यमस्य सादन-
मग्निदूतो अरंकृतः" । अथ० २।१२।७॥

सप्तेति = अहं परमात्मा ब्रह्मणा ज्ञानेन ते तव भक्तस्य सप्त प्राणान् = "प्राणाः इन्द्रियाणि" ताण्ड्य ब्राह्मण २।१४।२॥ "सप्त शिरसि प्राणाः" ताण्ड्० ब्रा० २२।४।३ "सप्त वै शीर्षन् प्राणाः" शत० ब्रा० ९।५।२।८॥ ऐत० ब्रा० १।१७॥ तै० ब्रा० १।२।३।३॥ सप्तेन्द्रियाणि = नेत्रे, नासिके, मुखम् वा कर्ण त्वङ् नेत्र रसना घ्राण पायूपस्थानि, सप्त विषयांश्च तथा = अष्टौ मन्यः अष्टौ ग्रन्थीन् = गुदानाभ्युदरहृदयकण्ठतालुभ्रूमध्य मस्तिष्कवर्तिनः प्रधानान् मज्जाग्रन्थीन् योगशास्त्रे प्रोक्तान् ग्रन्थिभेदान् चक्रभेदान् वा वृश्चामि छिनद्मि । त्वम् अरंकृतः ब्रह्मज्ञानेन अलंकृतः अग्निदूतः ज्ञानाग्निः दूतः सेवकः सन् यमस्य मृत्योः सादनं गृहं मुक्तिमार्गं अयाः याहि ॥

निर्मानमोहा इति = निर्मानमोहाः मानमोहरहिताः, जितसंगदोषाः जिताः स्वायत्तीकृताः संगदोषाः यैः ते जितसंगदोषाः । अध्यात्मनित्याः = अध्यात्मं आत्मज्ञानं तस्मिन् नित्याः नित्यमेव वर्तमानाः, विनिवृत्तकामाः इच्छाशून्याः सुखदुःखसंज्ञैः शीतोष्णप्रियाप्रियशत्रुमित्रादिसुखदुःखसंज्ञैः द्वन्द्वैः विमुक्ताः रहिताः अमूढाः विवेकिनः जीवाः तत् अव्ययं पदं नित्यं स्थानं मुक्तिधाम परं पदमिति भावः, गच्छन्ति "५॥

निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

1 "अमृ जानासः आयवो वृथा समुद्रमिन्दवः । अग्मन्नृतस्य योनिमा । ऋ० ऋ० ९।६४।१७॥

~~२ यद्वा = तं विप्रो विप्रो बचोविदः परिष्कृण्वन्ति धर्णसिम् ।~~

२ यद्वा = ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन । स चिद्विवेद निहितं

XV



यदो साममीच्यं गुह्यं नाम गोनाम। साम॰ ६२९ / ऋ॰ ९।८७।३॥

२ यद्वा = तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम्। सं त्वा मृजन्त्यायवः।
साम॰ १०७७। ऋ॰ ९।६४।२३॥

मर्मृजानास इति = मर्मृजानासः मर्मृजानाः सुखदुःखादिद्वन्द्वविमुक्ताः सन्तः स्वात्मानं अतिशयेन शोधयन्तः आयवः अध्यात्मविचारे गमनशीलाः इन्दवः योगसमाधिना चन्द्रवच्छुक्लाः भक्ताः वृथा सर्वं मोहजालं मिथ्यैव इति जानन्तः जनाः ऋतस्य चराचरप्रपञ्चस्य योनिं मूलकारणं समुद्रं सर्वप्रपञ्चमुद्रणकारकं परमात्मानं अगमन् गच्छन्तीति। मर्मृजानासः = मृजू शौचालंकारयोः। "मर्मृज्यागनीगन्तीति च" इति निपातनात् अभ्यासस्य रुगागमः। "आज्जसेरसुक्"।

२ यद्वा = ऋषिरिति = ऋषिः अतीन्द्रियद्रष्टा युक्तयोगी विप्रः मेधावी पुरएता = जनानां सामान्यमनुष्याणां पुरतोऽनुगन्ता ऋभुः स्वयोगसमाधिनाउरु भासमानः धीरः सुखदुःखादि द्वन्द्वेषु धैर्ययुक्तः उशनाः परमात्मभक्तिं कामयमानः यद्वा परमात्मभक्त्या प्रकाशमानः यो भक्तोऽस्ति स चित् स भक्त एव काव्येन स्तोत्रेण विवेद तद् भक्तवत्सलपदं लभते। किं तत्पदम्— "आसां गोनां गवां रश्मीनां इन्द्रियाणां वा संबन्धि अपीच्यं सर्वेषां दर्शनेभ्योऽन्तर्हितं गुह्यं गोपनीयं स्थानं च विवेद लभते।

३ यद्वा = तं त्वा इति = विप्राः मेधाविनः प्राज्ञाः वचोविदः ब्रह्मवाणीज्ञातारः स्तोतारः वा तं तादृशं जगत्प्रसिद्धं धर्णसिं विश्वस्य धर्तारं पालयितारं वा त्वा त्वां परमात्मानं परिष्कृण्वन्ति भक्त्या अलंकुर्वन्ति। आयवः मानमोहसंगदोषादिभिः विरहिताः मनुष्याः त्वा त्वां परमात्मानं मृजन्ति सर्वत्र शोधयन्ति सर्वत्र ~~अलंकुर्वन्ति~~ अवलोकयन्तीति भावः।

न तदिति = सूर्यः तद् धाम तत् पदं न भासयते न प्रकाशयति। शशांकः चन्द्रोऽपि तद्धाम न प्रकाशयति। पावकः अग्निः न च तद्धाम भासयते। भक्ताः यत्पदं गत्वा प्राप्य न निवर्तन्ते न प्रत्यागच्छन्ति, परमं ज्योतिर्मयं तद्धाम तत्पदं मम परमात्मनः अस्ति।६॥

न तद्भासयते सूर्यो न शशांको न पावकः।
यद् गत्वा न निवर्तन्ते तद्धाम परमं मम॥६॥

१ प्रतद्वोचेत् अमृतस्य विद्वान् गन्धर्वो धाम परमं गुहा यत्। त्रीणि पदानि निहिता गुहाऽस्य यस्तानि वेद स पितुष्पिता सत्॥ अथ॰ २।१।२॥

२ यद्वा = ऊर्ध्वा यस्या मतिर्भा अदिद्युतत् सवीमनि। हिरण्यपाणिरमिमीत सुक्रतुः कृपात् स्वः। अथ॰ ७।१४।२॥

१ प्रतदिति = हे जीवात्मन्! अमृतस्य न विद्यते मृतं मरणं यस्येति तद् अमृतं ब्रह्म तस्य अमृतस्य अविनाशिनः परब्रह्मणः विद्वान् जानन् "क्रियागृहणं—

कर्त्तव्यम्" इति कर्मणः संप्रदानत्वात् "चतुर्थ्यर्थे बहुलं छन्दसि" इति षष्ठी। न त्वत्र "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। "न लोकाव्ययनिष्ठाखलर्थ—" इति तस्याः प्रतिषेधविधानात्। स्वरूपपदाध्याहारेण वा सम्बन्धः। अमृतस्य स्वरूपं विद्वान् जानन्। गां वेदलक्षणां वाचं धारयतीति गन्धर्वः। वेदपथानुगः योगीतत् ब्रह्मपदं प्रवोचेत् ब्रवीतु। यत् पदं परमं क्रियाफलभूत विनश्वर स्वर्गाद्यपेक्षया उत्कृष्टं धाम पुनरावृत्तिरहितं स्थानम्। गुहा गुहायां हृदयरूपायां कन्दरायां स्थितं यत् तत्त्वं तद् वोचेत् इति सम्बन्धः। अस्य परमात्मनः त्रीणि त्रिसंख्याकानि पदानि गुहा गुहायां निहिता निहितानि सन्ति। यथा छान्दोग्ये = "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि"। छा० उ० ३।१२।६॥ अस्य परब्रह्मणः त्रीणि पदानि = पद्यन्ते गम्यन्ते मुमुक्षुभिः प्राप्यन्ते इति पदशब्देन अंशीभूताः विराड्-हिरण्यगर्भादयः उच्यन्ते। गुहा = गूहयति संवृणोति परिच्छिनत्ति परमात्मानम् इति गुहा माया। तत्र निहितानि समष्टिरूपेण उपहितानि। यः शमदमादिसंपन्नोऽधिकारी, तानि तत्पादत्रयोपलक्षितं निष्कलं ब्रह्म वेद। जीवेश्वरोपाधिपरित्यागेन साक्षात्करोति। अथ च तानि विराड्हिरण्यगर्भेश्वरतत्त्वानि वेद प्रणवावयवैः अकारादिभिः व्यष्टिरूपाणां विश्वतैजसप्राज्ञानां समष्टिरूपविराडादितादात्म्य-ज्ञानपुरस्सरं तुरीयं वस्तु यो वेद स पितुः जनकस्य अपि पिता कारणभूतः असत् भवति। सर्वजगदधिष्ठानभूतब्रह्मभावेन स्वस्यापि सर्वजगत्कारणत्वोपपत्तेः। गन्धर्वः = "गवि गन् धृञो वा" इति गोशब्दोपपदात् "धृञो व प्रत्ययः"। गोशब्दस्य गन् आदेशः। "व्यवहिताश्च" इति प्रोपसर्गस्य व्यवहितक्रियया संबन्धः। वोचेत् = ब्रूञः आशीर्लिङि वच्यादेशे "लिङ्याशिष्यङ्" इत्यङ् प्रत्ययः। 'वच उम्' इति उमागमः। निहिता इति = निपूर्वात् 'धाञ् धारणपोषणयोः' इति धातोः कर्मणि निष्ठा। "दधातेर्हिः" इति हि आदेशः। "शेश्छन्दसि बहुलम्" इति शेर्लोपः। वेद = विद् ज्ञाने। "विदो लटो वा" इति तिपो णलादेशः।

यद्भा = ऊर्ध्वेति = यस्य परमात्मनः अमितः अपरिमितं सर्वप्रकाशातीतं भाः = तेजः अस्ति। यत्तेजः सर्वाभिः परमात्माज्ञायां ऊर्ध्वा सर्वोत्कृष्टं भूत्वा अदिद्युतत् प्रकाशते। सुक्रतुः शोभनकर्मा हिरण्यपाणिः तेजोहस्तोऽयं परमात्मा कृपात् स्वशक्तितः स्वकृपातः वा स्वसुखमयप्रकाशस्वरूपं सूर्यचन्द्राग्न्यादिपदार्थं अभिमीत निर्माणं कुरुते।

ममेति = जीवलोके संसारे यद्वा जीवैन लोक्यते अनुभूयते इति जीवलोकः क्षेत्रं तत्र जीवलोके क्षेत्रे मम परमात्मनः अंशः अंश इव अंश एव सनातनः नित्यः जीवभूतः नामरूपव्याकरणाय क्षेत्रज्ञतां गतः मनः षष्ठानि मन एव षष्ठं षट्संख्यापूरकं यत्रेति मनःषष्ठानि प्रकृतिस्थानि प्रकृतिनिमित्तानि स्वाश्रयदेहनिष्ठानि इन्द्रियाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च कर्षति गमनागमने स्वैव नयति। गी॰ "ममैवांशो जीवलोके जीवभूतः सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥" गी॰

XV

300

1 अयुतो ऽहमयुतो म आत्माऽयुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणोऽयुतो मेऽपानोऽयुतो मे व्यानोऽयुतोऽहं सर्वः। अथ० १९।५१।१॥

२ यद्वा = इमानि यानि पंचेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि। यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः। अथ० १९।९।५॥

३ यद्वा = (मूलमंत्र) अजो ह्यग्नेरजनिष्ट शोकात् सो अपश्यज्जनितारमग्रे। अथ०४।१४।१

१ अयुत इति = अहं परमात्मा अयुतः अन्येन केनापि वस्तुना युतः संस्कृतः नास्मि। अपितु स्वयमेव परिपूर्णः अत एव सनातनः अस्मि। मे मम परमात्मनः आत्मा स्वरूपम् अंशः अयुतः नित्यः जीवभूतः नित्यः परिपूर्णः अस्ति। मे मम चक्षुः- दर्शनशक्तिः अयुतं परिपूर्णम् अस्ति। मे मम श्रोत्रं श्रवणशक्तिः अयुतं परि- पूर्णम् अस्ति। प्राणापानव्यानाः निःश्वासोच्छ्वासौ अयुताः परिपूर्णाः सन्ति। अतः अहं सर्वः सर्वप्रकारेण अयुतः परिपूर्णोऽस्मि।

२ इमानीति = मे मम जीवात्मनः हृदि हृदयप्रदेशे मनःषष्ठानि मन एव षष्ठं षट्संख्यापूरकं यत्र इति मनःषष्ठानि तानि मनःसहितानि इमानि यानि पंच ज्ञानेन्द्रियाणि वर्तन्ते। हृदयं हि आत्मनिवासस्थानं सुषुप्ति- काले मृत्युकाले वा स्वस्वकरणरहितानि सर्वेन्द्रियाणि आत्मनि लीयन्ते इति हृदीत्युक्तम्। तानि इन्द्रियाणि ब्रह्मणा चेतनेन आत्मना नियंत्रा संशितानि स्वस्वविषयेषु व्यापारितानि यैरेव इन्द्रियैः घोरं पापावहं कर्म ससृजे सृष्टम्। तैरेव इन्द्रियैः सृष्टस्य घोरकर्मणः नः अस्मदर्थं शान्तिः शमनम् अस्तु।

३ यद्वा = अज इति = अजः जीवात्मा अग्नेः सर्वप्रकाशक ज्योतिः स्वरूपपरमात्मनः शोकात् ज्ञानमयतेजसः अजनिष्ट प्रादुर्भूतः। स जीवात्मा अग्रे स्वतः प्रथमं रुरुहुः- प्राप्नुवन्ति। यस्माज्जाताः जीवाः तस्मिन् प्रविशन्ति इति भावः।

शरीरमिति = ईश्वरः देहेन्द्रियादेः प्रवृत्तिहेतुत्वात् तत्स्वामी जीवः यत् तु यदा तु शरीरम् अवाप्नोति प्राप्नोति। यत् च अपि यदा च शरीरम् उत्क्रामति उपात्तदे- हात् निष्क्रामति तदायं जीवात्मा वायुरिव आशयात् पुष्पवाटिकायाः गन्धान् अतिसूक्ष्मान् कुसुमावयवान् एतानि मनःप्राणमयेन्द्रियाणि गृहीत्वा आश्रय शरीरान्तरं गच्छति ॥८॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥८॥

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः। विश्वे देवाः समनसः सकेताः एकं क्रतुमभि वियन्ति साधु ॥ ऋ० ६।९।५॥

ध्रुवमिति = पतयत्सु शरीरान्तरं गच्छत्सु प्राणिषु अन्तर्मध्ये हृदये मनोज- विष्ठं मनसोऽप्यतिशयेन वेगयुक्तं ध्रुवं नित्यं ज्योतिः ब्रह्मचैतन्यं जीवम् आत्मस्वरूपं निहितं न केनचित् स्थापितं किन्तु स्वकर्मणा स्थितं कं किमर्थं केन प्रकारेण दृशये दर्शनार्थं विश्वेदेवाः दीव्यन्तीति देवाः इन्द्रियाणि

XV



विश्वे सर्वे देवाः सर्वाणि इन्द्रियाणि चक्षुराद्याः सम्मनसः मनसा सह वर्तमानाः सकेताः सतेजस्काः स्वस्वविषयसहिताः सन्तः एकं मुख्यं कृतं जीवात्मानं साधु सम्यक् अभिवियन्ति सम्मुखममभिगच्छन्ति। यथा बृहदारण्यके "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"॥

श्रोत्रमिति= अयं जीवात्मा श्रोत्र चक्षु त्वक् रसना घ्राणेन्द्रियं च तथा मनः अधिष्ठाय उपाश्रय विषयान् शब्दादीन् उपसेवते आलभते॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥

1. प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या। व्यानोदानौ वाङ्मनः शरीरेण त ईयन्ते ॥अथ० ११।८।२६॥

2 या आपो याश्च देवता या विराड् ब्रह्मणा सह। शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः अथ० ११।१०।३० (V.V.R.9. ११।८।३०)

1 प्राणापानाविति= ते प्राणापान चक्षुरादीनि सर्वाणि इन्द्रियाणि शरीरान्तरं प्रविश्य तेन सह ईयन्ते स्वस्वव्यापारेषु प्रवर्तन्ते।

2 या इति= या आपः याश्च देवता इन्द्रियाभिमानिन्यः या विराड् संज्ञकाः देवताः ब्रह्मणा ब्रह्मणस्तेजसा सह वर्तमानाः ताः सर्वाः शरीरे प्राविशन्। तदनन्तरं यत् जगत्कारणं परं ब्रह्म तदपि अन्तर्यामिरूपेण तच्छरीरं प्राविशत्। तस्मिन् शरीरे अधि प्रजापति प्रजानां पालयिता पुत्राद्युत्पादको जीवो वर्तते।

उत्क्रामन्तमिति= विमूढाः विवेकशून्याः मनुष्याः उत्क्रामन्तं शरीरं त्यक्त्वा गच्छन्तं स्थितं वापि अथवा शरीरे स्थितं भुञ्जानं वा अथवा भोगान् भुक्तवन्तं गुणान्वितं गुणैः सत्वादिगुणविकारैः सुखदुःखादिभिः समन्वितं न अनुपश्यन्ति न निरीक्षन्ते। ज्ञान चक्षुषः ज्ञानं विवेक एव चक्षुर्येषां ते ज्ञानचक्षुषः शुद्धात्मानः यतयः पश्यन्ति अवलोकयन्ति।

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥१०॥

1 ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम्। पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः। अथ० १०।८।१४॥

2 यत्रा= अपाङ् प्राङेति स्वधया गृभीतो मर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषूचीना वियन्तान्यन्यं चिक्युर्न नि चिक्युः। ऋ० १।१६४।३८॥

उत्क्रामन्तमिति= सर्वे शुद्धात्मानः यतयः ऊर्ध्वं ब्रह्मरन्ध्रोर्ध्वभागे भरन्तं

~~हरन्तं जीवात्मानं कुम्भेन कलशेन कलशेन उदहार्यं हर्तुं योग्यं~~

हरन्तं जीवात्मानं कुम्भेन कलशेन उदहार्यं हर्तुं योग्यं उदकं जलमिव चक्षुषा ज्ञाननेत्रेण पश्यन्ति। सर्वे साधारणाः पुरुषाः मनसा स्थूलमनसा न पश्यन्ति। यथा च मन्त्रान्तरम् = "पश्य दक्षणवान्न विचेतदन्धः"॥ ऋ० १०।१२९।२५

XV



२ अपाङिति = अमर्त्यः जीवात्मा मर्त्येन देहेन सह सयोनिः समानजन्मा समानस्थानः सन् स्वधया = स्वस्मिन् धारितसात्विकराजसतामसगुणजन्यकर्मफलधारणेन यद्वा अन्नमयकोशेन गृभीतः गृहीतः अपाङ् नीचयोनिः प्राङ् उच्चयोग्यादियोनिम् एति प्राप्नोति। ता तौ देहात्मानौ शश्वन्ता संसारे नित्यसंबन्धौ विषूचीना देहजीवात्मानौ स्वकर्मफलोपभोगाय लोकलोकान्तरगमनशीलौ वियन्ता सहगमनौ अन्ये योगिनः अन्यं देहात् भिन्नं जीवात्मानं निचिक्युः जानन्ति। अन्ये मूढाः न निचिक्युः देहात् भिन्नं जीवात्मानं न जानन्ति।

यतन्त इति = योगिनः यतयः यतन्तः शमदमादिसाधनैः आत्मानं द्रष्टुं यतन्तः यत्नं कुर्वन्तः एनं जीवात्मानं आत्मनि अवस्थितं स्वशरीरे यद्वा स्वान्तःकरणे स्थितं बुद्ध्यादिप्रकाशकं पश्यन्ति। अकृतात्मानः मलिनान्तःकरणाः अचेतसः विवेकरहिताः अतएव बहिर्मुखाः पुरुषाः यतन्तः अपि बहुधा यत्नं कुर्वन्तोऽपि एनं जीवात्मानं न पश्यन्ति॥११॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः॥११॥

१ अप क्रामन् पौरुषेयाद् वृणानो दैव्यं वचः। प्रणीती२रभ्यावर्तस्व विश्वेभिः सखिभिः सह। अथ० ७।१०५।१॥

२ यद्वा = आरोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति स्थ। तान् वस्त्वष्टा सुजनिमा सजोषाः सर्वमायुर्नयतु जीवनाय। अथ० १२।२।२४॥

३ यद्वा "अभि वेना अनूषत इयक्षन्ति प्रचेतसः। मज्जन्त्यविचेतसः। ऋ० ९।६४।२१॥

१ अपाक्रामदिति = हे योगिन्! हे जीवात्मन्! त्वं पौरुषेयात् पुरुषेभ्यो हितं तत्र वर्तमानं कामवादकामभक्षणादिकं लौकिकं कर्म तस्मात् लौकिकात् कर्मणः अपक्रामन् अपगच्छन् दूरीभवन् दैव्यं देवसम्बन्धि परमात्मसंबन्धि वचः वाक्यं वेदलक्षणं वचनं वृणानः संभजमानः स्वीकुर्वन् स्वाध्यायसंभजन्हेतोः विश्वेभिः सर्वैः सखिभिः समानख्यानैः मित्रभूतैः यतिभिः सह प्रणीती प्रकर्षेण जीवज्ञानप्राप्तौ अभ्यावर्तस्व अभिगच्छ। पौरुषेयात् — "सर्वपुरुषाभ्यां णढञौ" इति ढञ् प्रत्ययः। ढस्य एयादेशः। दैव्यम् = "देवाद् यञञौ" इति यञ्। वृणानाः — 'वृङ् संभक्तौ' क्र्यादिः, हेतौ शानच् प्रत्ययः।

२ यद्वा — आरोहतेति = हे मनुष्याः! जरसं वृद्धावस्थां वृणानाः प्राप्नुवन्तः वा यूयं आयुः दीर्घजीवनं आरोहत प्राप्नुत। तथा अनुपूर्वं शमदमादिरूपैः यथारीति यत्नं कुर्वन्तः यतिब्रह्मचर्यजीवनं स्थ। त्वष्टा परमात्मा सजोषाः प्रेमसहिताः वा सुजनिमा सुजातान् तान् साधनसम्पन्नान् वः युष्मान् जीवनाय प्राणरक्षणाय सर्वं समग्रं आयुः जीवनं नयतु चालयतु।

३ यद्वा = अभिवेना इति = वेनाः भगवतः स्तोतारः योगिनः अभ्यनूषत परमेश्वरं स्तुवन्ति। अत एव आत्मदर्शने कृतप्रयत्नाः प्रचेतसः सुमतयः ज्ञानिनः —

इयक्षन्ति यष्टुमिच्छन्ति। अप्रचेतसः दुर्बुद्धयः मूर्खाः भगवद्दर्शनाय यतमानाः
अपि मज्जन्ति जन्ममरणार्णवे मज्जन्ति नश्यन्ति।

यदादित्येति = आदित्यगतं सूर्यस्य अन्तर्बाह्यतो वर्तमानं यत् तेजः अखिलं सर्वं जगत् प्रपञ्चं भासयते प्रकाशयते। यत् तेजः चन्द्रमसि वर्तमानं सत् सर्वं जगत् भासयते। यत् तेजः अग्नौ वह्नौ वर्तमानं सत् जगत् भासयते तत् तेजः मामकं मत्सम्बन्धि विद्धि जानीहि।

यदादित्यगतं तेजो जगद् भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥१२॥

१ यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये। अथ० ७।९२।१॥

२ यद्वा = स एव सं भुवनान्याभरत् स एव सं भुवनानि पर्यैत्। पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत् परमस्ति तेजः। अथ० १९।५३।४॥

१ य इति = यः रुद्रः रुद् दुःखं तस्य द्रावयिता, प्रकाशः यद्वा रुत् स्तुतिः तया गन्तव्यः रुद्रः परमात्मा। यद्वा रोदयति पापान् इति रुद्रः परमात्मा अग्नौ अन्तर्मध्ये आविवेश अग्नौ स्वतेजः अधारयत्। यश्च प्रकाशः परमात्मा च अप्सु जललोके चन्द्रमसि अन्तर्मध्ये आविवेश प्रविष्टः। यश्च परमात्मप्रकाशः वीरुधः विशेषेण विविधं वा रोहति ओषधीः। ओषः फलपाकः धीयते निधीयते आसु इति ताः फलपाकान्ताः लताः आविवेश चन्द्रात्मनाविष्टः यः परमात्मा इमा इमानि नामरूपात्मना परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतानि स्रष्टुमिति शेषः चाक्लृपे समर्थो भवति। तस्मै सर्वजगत्स्रष्ट्रे सर्वं जगत् अनुप्रविष्टाय आग्नेय प्रकाशमयाय परमात्मने नमः नमस्कारोऽस्तु। रुद्रः = "रोदेर्णिलुक्च" (उणा० २।२२) इति रक् प्रत्ययः। णेर्लुक्। वीरुधः = विपूर्वात् रोहतेः क्विपि - "नहिवृति—" इत्यादिना उपसर्गस्य दीर्घः। हकारस्य धकारोपजनश्छन्दसः। चाक्लृपे = कृपू सामर्थ्ये। लिटि - "कृपो रो लः" इति लत्वम्। अभ्यासस्य छान्दसः संहितिको दीर्घः।

२ यद्वा - स इति = स एव परमात्मा भुवनानि भूतजातानि सम् आ अभरत् सम्यक्तया पालयति आहरति उत्पादयति स्वेनोत्पादितानि भुवनानि संपर्यैत् सम्यक्तया परिगच्छति व्याप्नोति। स एव पिता एषां भुवनानां जनकः सन् एषां पुत्रोऽभवत् भवति। तस्मात् परमात्मनः अन्यत् परम् उत्कृष्टं तेजो नास्ति। वै शब्दः प्रसिद्धौ। तेजो नास्ति - इति निषेधात् स्वस्यापि तेजो रूपत्वम् अर्थसिद्धम्। तस्य भासा सर्वमिदं विभाति।

गामिति = अहं परमात्मा एव ओजसा निजशक्त्या गां भूमिं आविश्य सर्वतः प्रवेशं कृत्वा भूतानि स्थावरजंगमान् सर्वान् पदार्थान्

धारयामि। रसात्मकः अमृतरसमयः सोमः चन्द्रो भूत्वा चन्द्रस्वरूपमास्थितः सर्वाः ओषधीः व्रीहियवादीन् पुष्णामि पुष्टिमतीः करोमि॥१३॥

गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥१३॥

अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः। अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम्। ऋ० ६।४७।४॥

अयमिति = यः परमात्मा पृथिव्याः भूम्याः वरिमाणं उरुत्वं विस्तृतत्वं अकृणोत् अकरोत्। अयं स परमात्मा द्युलोकस्य वर्ष्माणं संहतत्वं दृढत्वं अकृणोत् अकरोत्। अयं परमात्मा सोमो भूत्वा तिसृषु ओषधिषु अप्सु गोषु प्रवत्सु प्रकृष्टासु एतासु पीयूषं रसं दधार धारयति। तथा च मन्त्रान्तरम् = "त्वमिमाः ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षम् त्वं ज्योतिषा वि तमो ववर्थ। ऋ० १।९१।२२॥

२ त्वमिति = हे सोम! हे परमात्मन्! त्वं चन्द्रो भूत्वा इमा ओषधीः वनस्पतीः अजनयः। तथा त्वं विश्वाः सर्वाः अपः जलानि अजनयः। त्वं गाः सूर्यचन्द्राग्निरश्मीन् अजनयः। त्वं उरु विस्तृतं अन्तरिक्षं ततन्थ विस्तृतवान्। त्वं ज्योतिषा स्वप्रकाशेन तमः अन्धकारं अज्ञानं वा विववर्थ = वि+अनाशयः।

अहमिति = अहं वैश्वानरः भूत्वा विश्वानररूपमास्थितः प्राणिनां जीवानां देहम् आश्रितः शरीरमास्थितः प्राणापानसमायुक्तः उच्छ्वासनिश्वासरूपाभ्यां प्राणापानवायुभ्यां समायुक्तः सन् चतुर्विधं पार्थिवं आप्यं तैजसं वायव्यं एवंरूपेण चतुर्विधं यद्वा भक्ष्यं भोज्यं लेह्यं चोष्यं इति चतुःप्रकारकं अन्नं पचामि पक्वं करोमि

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥१४॥

१ यः सोमे अन्तर्यो गोष्वन्तर्यः आविष्टो वयःसु यो मृगेषु। य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्। अथ० ३।२१।२॥

२ यद्वा = अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु। अयं स जज्ञे ध्रुव आनिषत्तोऽमर्त्यस्तन्वा ३ वर्धमानः। ऋ० ६।९।४॥

३ अथापि = "मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम्। नि यं दधुर्मनुष्यासु विक्षु स्वर्णं चित्रं वपुषे विभावम्। ऋ० १।१४८।१

४ यद्वा = य इन्द्रेण सरथं याति देवो वैश्वानर उत विश्वदाव्यः। यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत्" अथ० ३।२१।३॥

१ य इति = यः परमात्मा वैश्वानरो भूत्वा सोमे लतारूपे अमृतमयरसपरिपाकाय अन्तर्मध्ये आविष्टः प्रविष्टः। यश्च गोषु — उपलक्षणमेतत् — गोमहिष्यादिषु पशुषु यो वैश्वानरोऽग्निः आत्मनि अन्तः मध्ये प्रविष्टः पक्वं पयः करोति। तथा वयःसु पक्षिषु यः अग्निः वैश्वानरः अनुप्रविष्टः तथा यो मृगेषु

हरिणादिषु अनुप्रविष्टः किं बहुना यः अग्निः द्विपदः पादद्वयोपेतान् मनुष्यादीन् योऽग्निः चतुष्पदः पादचतुष्टयोपेतान् अन्यानपि प्राणिनः जठराग्न्यात्मना आविवेश- तेभ्यः सर्वजगदनुग्राहकेभ्यः वैश्वानररूपेभ्यः अग्निभ्यः एतत् हुतम् आह्वानं नमस्कारो वाऽस्तु।

२. अयमिति = मर्त्येषु मरणस्वभावेषु शरीरेषु अमृतं मरणरहितं इदं वैश्वानराख्यं ज्योतिः जठररूपेण वर्तते। अपि च सोऽयमग्निः ध्रुवो निश्चल- आसमन्तात् निषण्णः सर्वव्यापी अत एव अमर्त्यो मरणरहितोऽपि तन्वा शरीरेण सम्बधात् वर्धमानः जज्ञे।

३. मथीयदीमिति - होतारं हवनकर्तारं विश्वाप्सुं नानारूपधारकं विश्वदेव्यं सर्वदेवैर्युक्तं यत् ईम् एनम् आत्माग्निं विभ्वो व्यापकः मातरिश्वा शरीरान्तर व्याप्ता प्राणः प्राणवायुः मथीत् मथनेन उत्पादयति। यं वैश्वानरं देवाः मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासु प्राणिषु वपुषे स्वरूपाय शरीरधारणाय जाठराग्निरूपेण चित्रं विभावं स्वः विचित्रं प्रभावशालिनं गृहे दीपमिव विदधुः स्थापितवन्तः।

४. य इति = यः विश्वदान्यः देवः ज्योतिःस्वरूपः परमात्मा वैश्वानरः प्राणिजठराग्निः सन् इन्द्रेण आत्मना सह सरथं समानदेहं यं पृतनासु सांसारिक- युद्धे सासहिं सहायकं जोहवीमि आह्वयामि तेभ्योऽग्निभ्यः एतत् शुभाह्वानमस्तु।

सर्वस्येति = सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्य जीवमात्रस्य हृदि हृदयदेशेऽहं परमात्मा संनिविष्टः सम्यक्तया प्रविष्टः तिष्ठामि। मत्तः परमेश्वरात् एव स्मृतिः स्मरणसंस्कारः तथा ज्ञानम् अयमेवाहमस्मि। इयमेव प्रकृतिः इदं ब्रह्मेति- ज्ञानं मत्त एव भवति। तथा अपोहनं स्मृतिज्ञानयोर्गो मत्त एव भवति। सर्वैः वेदैः ऋग्यजुःप्रभृतिभिर्वेदैरहं परमात्मैव वेद्यः ज्ञातुं योग्योऽस्मि। तथा वेदान्तकृत् तथा वेदवित् अहमेवास्मि।

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्॥१५॥

"गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्। ऋ० ४।२७।१॥ऐत० ४।२७॥

गर्भे इति = अहं परमात्मा एषां देवानां स्वकर्मणा दीप्यमानानां जीवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदम् आनुपूर्व्येण अज्ञासिषम् जानामि। एषां जीवानां गर्भे नु मध्ये हृदि एव सन् वर्तमानः विद्यमानः सर्वं जानामि। तथा शतं बहूनि आयसीः लोहवद् दृढानि पुरः शरीराणि मां हृत्संनिविष्टं अरक्षन् आधारयन्। अध अधुना श्येनः श्येनवत् निर्भयः स्थितोऽहं जवसा वेगेन निरदीयम् शरीरात् निरगमम्। अनावरणमात्मानं जानन् निर्गतोऽस्मि इत्यर्थः।

द्वाविति = लोके संसारे क्षरः क्षरति नश्यति इति क्षरः महदादिस्थूलान्तः संसारलक्षणः एकः पुरुषः। अक्षरः न क्षरतीति अक्षरः नित्यः अविनाशी आत्मा इतीमौ द्वौ पुरुषौ स्तः। तत्र भवन्तीति भूतानि आकाशादीनि भूम्यन्तानि देहेन्द्रियादीनि भूतकार्याणि सर्वाणि क्षर इत्युच्यते। कूटस्थः कूटे दृढत्वे तिष्ठतीति कूटस्थः अविनाशी अक्षरः जीव इत्युच्यते। १६।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।

" द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति। ऋ० १।१६४।२०॥ अथ० ९।९।२०॥ निरु० १४।३०॥

द्वा इति = द्वा द्वौ सुपर्णा सुपर्णौ सुपतनौ शोभनगमनौ सयुजा सयुजौ समानयोगौ सखाया सखायौ समानख्यानौ 'पुरुष' इति समाननामानौ समानं वृक्षं एकमेव वृक्षं शरीरं परिषस्वजाते आश्रयतः। तयोः द्वयोः मध्ये एकः जीवात्मा पिप्पलं पक्वं कर्मफलं स्वादु स्वादुतरं अत्ति भक्षयति। अपरः पुरुषः अनश्नन् भोगादिरहितः अभिचाकशीति दीप्यति। तथा चोपनिषदि = " समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।

उत्तम इति = आभ्यां पुरुषाभ्यां भिन्नः उत्तमः सर्वोत्कृष्टतमः अस्ति यः परमात्मा इति उदाहृतः योगिभिः पुरुषैः कथितः। यः अव्ययः विकाररहितः व्ययरहितो वा ईश्वरः सर्वस्वामी लोकत्रयं लोक्यन्ते ज्ञायन्ते इति लोकाः स्थूलसूक्ष्मकारणदेहाः तेषां त्रयं लोकत्रयं स्थूलसूक्ष्मकारणाख्यं शरीरत्रयं स्वाधारं आविश्य बाहिरन्तश्च सर्वतो व्याप्य बिभर्ति धारयति। १७।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।

1 त्रयः केशिनः ऋतुथा विचक्षते संवत्सरे वपत एक एषाम्। विश्वमन्यो अभिचष्टे शचीभिः ध्राजिरेकस्य ददृशे न रूपम्॥ ऋ० - १।१६४।४४॥ अथ० ९।१०।२६॥ निरु० १२।२७॥

2 इमं च लोकं परमं च लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः। सर्वांल्लोकानभिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः। अथ० १९-५४।५।

1 त्रय इति = त्रयः त्रिसंख्याकाः प्रकृतिजीवपरमात्मानः इति त्रिसंख्याकाः केशिनः स्वस्वप्रकाशेन प्रकाशिताः पदार्थाः सन्ति। ये ऋतुथा यथाधिकारं यथासमयं विचक्षते प्रकाशन्ते। एषां त्रयाणां मध्ये एकः संवत्सरे क्षेत्रे वपत कर्मबीजं वपति। अन्यः द्वितीयः विश्वं जगत् स्थूलसूक्ष्मकारणं जगत् शचीभिः स्वशक्तिभिः अभिचष्टे।

XV



प्रकाशयति। एकस्य सर्वोत्तमस्य पुरुषस्य भ्राजिः वेगः धारणशक्तिः वा ददृशे दृष्टिपथे समायाति तद्रूपं सामान्यदृष्टिपथे न समायाति।

२ यद्वा - इममिति = इमं सर्वकर्मार्जनस्थानं लोकं लोक्यते ज्ञायते इति लोकः स्थूल सूक्ष्म कारणदेहः तं लोकं देहं परमं फलभोगस्थानं स्वर्गलोकं पुण्यान् पुण्यकर्मभिः अर्जितान् लोकान् पुण्याः दुःखलेशाऽसंस्पृष्टाः विष्टपीः लोकधारकान् सर्वान् उत्कान् अनुत्कान् च लोकान् ब्रह्मणा सर्वतो बृहत्तमेन व्यापकत्वेन अभिजित्य अभिव्याप्य स परमः सर्वोत्तमः कालः जगत् कलिता परमात्मा देवः द्योतनशीलः स्वयं प्रकाशः ईयते स्थावर जंगमात्मकं जगत् व्याप्य वर्तते।

यस्मात् इति = यस्मात् कारणात् क्षरं विनश्वरं जगत् अतीतः परं गतोऽस्मि अक्षरात् जीवादपि उत्तमः उत्कृष्टतरः अस्मि। अतोऽस्मात् कारणात् लोके संसारे वेदे ऋग्वेदादौ च पुरुषोत्तमः पुरुषोत्कृष्टतमः इति प्रथितः प्रसिद्धोऽस्मि।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥१८॥

१ यस्मान्न जातः परो अन्यो अस्ति यः आविवेश भुवनानि विश्वा।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी। यजु० ८। ३६॥

२ यद्वा = तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते॥ अथ० ११। ८। ३२॥

३ यद्वा = तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः। ऋ० १०।१२०।१
अथ० ५।२।१॥ अथ० २०।१०७।४॥ ऐत० आ० १।१२॥ निरु० १४।२४

१ यस्मादिति = यस्मात् परमात्मनः पुरुषोत्तमात् परः उत्तमः अन्यः अपरः जातः प्रादुर्भूतः देवो नास्ति न विद्यते। यः पुरुषोत्तमः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश आविशति। प्रजापतिः प्रजायाः पतिः प्रजाधीशः परमात्मा प्रजया संसारेण संरराणः संरममाणः क्रीडन् त्रीणि ज्योतींषि त्रिसंख्याकानि अग्निविद्युत्सूर्यलक्षणानि सचते सेवते। स च षोडशी इच्छा प्राणश्रद्धा पृथिवीजलाग्निवाय्वाकाशदशेन्द्रियमनोऽन्नवीर्यतपो मंत्र लोकनामानि च सचते सेवते।

२ यद्वा = तस्मादिति = तस्मात् पुरुषोत्तमत्वात् विद्वान् क्षराक्षरोत्तमात् उत्तमं पुरुषं जानन् इदं पुरुषं "पुरि देहे शेते इति पुरुषः सर्वप्राणिदेहावस्थितः पूर्णः तं पुरुषं पुरुषोत्तमं इदं अपरोक्षं अन्तर्बहिर्व्याप्य अवस्थितं ब्रह्म इति मन्यते जानाति। हि यस्मात् कारणात् सर्वाः देवताः प्राणापानादिवायवः सर्वेन्द्रियाणि तदधिष्ठातारोऽन्याद्दयश्च अस्मिन् पुरुषोत्तमे आसते निवसन्ति। गावो गोष्ठ इव यथा गावः स्वकीये गोष्ठे स्थाने विस्रम्भेण निवसन्ति।

३ य इति = असंमूढः विमोहः शुद्धात्मा यो मुमुक्षुः क्षराक्षरविलक्षणं पुरुषो-

तमं मां जानाति, हे भारत! हे अर्जुन! स सर्ववित् सर्वसंसारतत्त्वज्ञः सन् मां परमात्मानं सर्वभावेन सार्वात्म्येन भजति प्राप्नोति ॥१९॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद् भजति मां सर्वभावेन भारत ॥१९॥

ये च देवा अयजन्ताथो ये च पराददिः। सूर्यो दिवमिव गत्वाय मघवानो विरप्शते॥ अथ० २०। १२८। ५॥

ये इति = ये असंमूढा पुरुषाः देवाँ देवान् दिव्यगुणयुक्तान् इन्द्रादीनमरान् विदुषः वा अयजन्त अनन्यभावेन पूजयन्ति। अथो ये च पुरुषाः तत्त्वज्ञानिनः पराददिः परेभ्यः पुरुषेभ्यः अनन्यभक्तिभावस्य दानं कुर्वन्ति। ते नराः सूर्य इव दिवं स्वर्गं गत्वाय प्राप्य मघवानः पूज्याः सन्तः विरप्शते विविधां शोभां प्राप्नुवन्ति।

इतीति = हे अनघ! हे निष्पाप! हे अर्जुन! इति एवं प्रकारेण मया इदम् एतत् गुह्यतमं हृदये गोप्यतमं शास्त्रं उक्तम् कथितम्। हे भारत! यः एतच्छास्त्रं बुद्ध्वा ज्ञात्वा बुद्धिमान् ज्ञानवान् स्यात् भवति, कृतकृत्यः च सर्वकर्मानुष्ठाता स्यात् ॥२०॥

इति श्रीजगन्नाथ शास्त्रि संकलितायां गीतार्थ वेदार्थबोधिन्यां पञ्चदशोऽध्यायः समाप्तः ॥१५॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे ब्रह्मविद्यायां पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः समाप्तः ॥१५॥

गूहता गुह्यं तमो वियात विश्वमत्रिणम्। ज्योतिष्कर्ता यदुश्मसि॥ ऋ० १।८६।१०॥

गूहतेति = हे मुमुक्षवः! जीवात्मनः शरीरान्तर्गत गुहारूप हृदये वर्तमानं तमः अज्ञानं गूहत विनाशयत। तथा एतच्छास्त्रेण विश्वं सर्वम् अत्रिणम् पुरुषार्थस्य अपवर्गस्य अत्तारं कामक्रोधादिकं वियात विनिर्गमयत। यत् तत् ज्योतिः परमतत्त्वसाक्षात्कार रूपं ज्ञानं उश्मसि कामयामहे। हे मुमुक्षवः तत् कर्त = कुरुत। गूहता = गुहू संवरणे। शपि लघूपधगुण — "ऊदुपधाया गोहः" (पाणि० ६।४।८९) इत्युपधायाः ऊकारः। यात = या प्रापणे अस्मादन्तर्भावित ण्यर्थो लोट्। अत्रिणम् = "अदस्त्रिनिश्च" इति त्रिनिप्रत्ययः। इकारः नकार परित्राणार्थः। उश्मसि = वश कान्तौ। "इदं तो मसि" अदादित्वाच्छपो लुक्। "ग्रहिज्यावयि —" इति संप्रसारणम्। यत् यदि त्वं ज्योतिः परमात्मज्योतिः उश्मसि इच्छसि तदा कर्त = वैदिक ज्ञानप्राप्तिं कुरु गुह्यं सुरक्षितं वैदिक ज्ञानं गूहत हृदये सुरक्षितं —

वैदिकज्ञानं गूहत हृदये सुरक्षितं स्थापय। एतेन वैदिकशास्त्रज्ञानेन विश्वं संसारं अत्रिणं भक्षकं कामक्रोधलोभादिकं तमः अज्ञानान्धकारं विधाय दूरीकुरु।

इति श्री सारस्वतान्वय लैयावास्तव्य न्यायभूषण जगन्नाथशास्त्रि ज्योतिर्विकृतायां गीतार्थ वेदगीतार्थबोधिन्यां पंचदशोऽध्यायः समाप्तः॥१५॥

---

अथ षोडशोऽध्यायः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्।
तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे सुदर्शनम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः।
वेदगीतापृथक्त्वं नो ज्ञेयाः ब्रह्मप्रकीर्तनात्॥२॥

अभयमिति = अभयं भयाभावः, सत्वसंशुद्धिः मनसः शुद्धता, ज्ञानयोगव्यवस्थितिः सत्यासत्यविचारव्यवस्थितिः, योगव्यवस्थितिः वैदिककर्मानुष्ठानव्यवस्थितिः ४, दानम् अर्थिभ्यः यथाशक्ति अन्नादिसमर्पणम् ५, दमः इन्द्रियावरोधनम् ६, यज्ञश्च श्रौताग्न्याधानम् ७, चकारात् स्मार्तः स्थालीपाकादिः ८, स्वाध्यायः ब्रह्मयज्ञाद्यनुष्ठानम् ९, तपः ब्रह्मचर्यादिव्रतैः शरीरेन्द्रियादीनां वशीकरणम् १०, आर्जवं मनोवाक्कायकर्मणां सदैकरूपता ११, अहिंसा कस्यापि प्राणिनः शरीरवाङ्मनोभिः अपीडनम् १२, सत्यं यथार्थभाषणम् १३, अक्रोधः कोपाभावः १४, त्यागः कृतश्रौतस्मार्तकर्मफलत्यागः १५, यद्वा उदारता, शान्तिः अन्तःकरणस्य सर्वत्रोपरतिः १६, अपैशुनं परोक्षे परमर्माप्रकाशनम् १७, भूतेषु दया दीनेषु आर्तेषु च करुणा १८, अलोलुपत्वं विषयसन्निकर्षेऽपि इन्द्रियविकाररहित्यम् १९, मार्दवं मृदुता २०, ह्रीः लज्जा २१, अचापलम् चंचलताराहित्यम् २२, तेजः गुणगौरवैस्तेजस्वम् २३, क्षमा परकृतोपद्रवसहिष्णुत्वम् २४, धृतिः विक्षिप्ते सत्यपि धैर्यम् २५, शौचम् शरीरमनोवाग्भिः पवित्र्यम् २६, अद्रोहः स्वापकारकारिहननेच्छाराहित्यम् २७, नातिमानिता मानाभावः २८, दैवीं सम्पदमभिजातस्य पूर्वजन्मकृतपुण्याधिक्येन सात्विकयमनुस्मृत्य जातस्य पुरुषस्य एते अष्टाविंशतिः सात्विकाः धर्माः भवन्ति संभवन्ति॥१,२,३॥

" अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च —
स्वाध्यायस्तप आर्जवम्॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥२॥ तेजः क्षमा धृतिः शौचम-
द्रोहो नातिमानिता। भवन्ति संपदं दैवीमभिजातस्य भारत॥३॥"

" अष्टाविंशानि शिवानि शग्मानि सहयोगं भजन्तु मे। योगं
प्रपद्ये क्षेमं च, क्षेमं प्रपद्ये योगं च नमोऽहोरात्राभ्यामस्तु। अथ० १९।८।२॥"

अष्टाविंशानीति = हे परमात्मन्! अभयम् १, सत्त्वसंशुद्धिः २, ज्ञानम् ३, योगः ४, दानम् ५, दमः ६, द्विविधः यज्ञः — श्रौतः ७ स्मार्तश्च ८, स्वाध्यायः ९, तपः १०, आर्जवम् ११, अहिंसा १२, सत्यम् १३, अक्रोधः १४, त्यागः १५, शान्तिः १६, अपैशुन्यम् १७, भूतेषु दया १८, अलोलुप्त्वम् १९, मार्दवम् २० ह्रीः २१, अचापलम् २२, तेजः २३, क्षमा २४, धृतिः २५, शौचम् २६, अद्रोहः २७, नातिमानिता २८ इत्येवंविधानि अष्टाविंशानि प्रत्येकम् अष्टाविंशतेः संख्यायाः पूरणानीति सर्वाणि अष्टाविंशानि शिवानि सुखदर्शनानि सात्त्विकानि शग्मानि = सुखनामैतत् सुखप्रदानि मे मम सात्त्विकस्य पुरुषस्य सात्त्विकस्य पुरुषस्य सात्त्विकं फलं दातुं सहयोगं सहभावं भजन्तु प्राप्नुवन्तु। अहं सात्त्विकः पुरुषः दैवीसम्पत्तिमान् एषां प्रभावात् योगम् = " अलब्धवस्तुप्राप्तिः योगः " तं योगं प्रपद्ये प्राप्नुयाम्। योगक्षेमप्रधानतासिद्ध्यै योगक्षेमयोः द्विरावृत्तिः। अहनि रात्रौ च दैवीसंपदः संचरणात् तयोरानुकूल्यकरणं नमोऽहोरात्राभ्यामस्तु इति ताभ्यां नमः नमस्कारोऽस्तु। अष्टाविंशानि = पूरणार्थे डट्प्रत्यये कृते " ति विंशतेर्डिति " इति तिशब्दस्य लोपः। " द्व्यष्टनः संख्यायाम् " इत्यष्टशब्दस्य आत्वम्। अहोरात्राभ्याम् = अहश्च रात्रिश्च " अहः सर्वैकदेश— " इत्यच् समासान्तः।

स्वामिदयानन्दसरस्वतीत्थं व्याचष्टे = " हे परमेश्वर! हे भगवन्! कृपया अष्टाविंशानि शिवानि कल्याणानि कल्याणकारकाणि सन्तु अर्थात् दशेन्द्रियाणि दश प्राणाः मनो बुद्धिचित्ताहंकारविद्यास्वभावशरीरबलञ्चेति शग्मानि सुखकारकाणि भूत्वा अहोरात्राभ्यां दिवसे रात्रौ चोपासनाव्यवहारं योगं मे मम भजन्तु सेवन्ताम्। तथा भवत्कृपयाहं योगं प्रपद्ये प्राप्य क्षेमं च प्रपद्ये क्षेमं प्राप्य योगं च प्रपद्ये। यतोऽस्माकं सहकारी भवान् भवेदेतदर्थं सततं नमोऽस्तु।

दम्भ इति = हे पार्थ! हे अर्जुन! दम्भः स्वमहत्त्वसिद्ध्यै स्वदोषान् आच्छाद्य स्वमहत्त्वप्रकटनम् १, दर्पः सज्जनावज्ञानहेतुः विद्यादिभिश्च गर्वोद्रेकः २, अभिमानः स्वस्मिन्नोत्कृष्टबुद्धिः ३, क्रोधः चित्तक्षोभः ४, पारुष्यं निष्ठुरभाषणम् ५, अज्ञानं विपरीतबुद्धिः ६, चकारात् लोभः ७ इति सप्तसंख्याकाः दोषाः आसुरीं संपदं घोरं कर्म कारयितुं पुरुषस्य असून् प्राणेन्द्रियाणि राति आकर्षतीत्यसुरः, रजोगुणस्तमोगुणश्च तस्य सम्बन्धिनी आसुरी संपत् समृद्धिः उत्कर्षः ताम् आसुरीं सम्पदम् अभिजातस्य दुरात्मनः भाग्यनर्थपात्रस्य पुरुषस्य एते रजस्तमोधर्माः भवन्ति संभवन्ति।

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ! सम्पदमासुरीम् ॥४॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरोगात् । आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणेषु तस्थौ । ऋ० १०।५।६॥अथ० ५।१।६॥निरु० ६।२७॥

सप्तेति = कवयः मेधाविनः ऋषयः सप्त मर्यादाः "दम्भः १, दर्पः २, अभिमानः ३, क्रोधः ४, पारुष्यम् ५, अज्ञानम् ६, लोभः ७, यद्वा पानम् १, दुर्भक्ष्यम् २, स्त्रियः ३, मृगया ४, दण्डः ५, पारुष्यम् ६, अन्यदूषणम् ७, इति सप्त मर्यादाः । यद्वा "स्तेयम् १, गुरुतल्पारोहणम् २, ब्रह्महत्या ३, भ्रूणहत्या ४, सुरापानम् ५, दुष्कृतकर्मणः पुनः पुनः सेवनम् ६, पातकेऽनृतोद्यम् इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिताः ततक्षुः तक्षतिः करोतिकर्मा । सुष्ठु लंघनीयाश्चक्रुः त्यक्तवन्त इत्यर्थः । तासां सप्तासुरीमर्यादानां मध्ये एकाम् एव अंहुरः पापवान् आसुरी पुरुषस्य स्कंभः स्कम्भयिता निरोधकः परमेश्वरः उपमस्य समीपभूतस्य दैवीपुरुषस्य नीडे उत्सर्गे पथां सुमार्गाणां विसर्गे विसर्जनस्थाने दिवि धरुणेषु धर्मधारकेषु नृषु तस्थौ वर्तते ।

दैवीति = हे पाण्डव! हे पाण्डुपुत्र! अर्जुन! दैवी संपत् दैवी समृद्धिः विमोक्षाय विमुक्तये मता कथिता । आसुरी संपत् निबन्धाय पुनः पुनर्जन्मग्रहणाय मता कथितास्ति । हे अर्जुन! त्वं दैवीं संपदं गृहीत्वाऽभिजातोऽसि उत्पन्नोऽसि । अतः मा शुचः अस्मिन् विषये शोकं मा कुरु ।

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥५॥

इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत् । अथ० ३।८।४॥

इहेति = हे जीवात्मन्! इह दैवीसम्पत्तौ इत एव असाथ सर्वदा वासं कुरु । परः दूरे न गमाथ मा गच्छथ । इर्यः सदन्नेन युक्ताः सन्तः गोपाः गोपालः इन्द्रियरक्षकः पुष्टपतिः पोषणकर्ता स्वोपदेशेन वः युष्मान् दैवी सम्पत्तिमतः आजत् अत्रैवानयतु ॥

द्वाविति = अस्मिन् संसारे भूतसर्गो भवन्तीति भूतानि, सृज्यते संसृज्येत गन्धः पुष्पमिव प्राणिचित्तमनुबध्य तिष्ठतीति सर्गः स्वभावः भूतसर्गः भूतस्वभावौ (प्रकृती) दैवः आसुरः इति च द्वौ एव स्तः । हे पार्थ! हे अर्जुन! दैवः देवसम्बन्धि भूतसर्गः विस्तरशः विस्तारेण प्रोक्तः कथितः संप्रति मे मया वक्ष्यमाणं आसुरम् असुरसम्बन्धि सर्गं शृणु आकर्णय ॥६॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते । हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः । यजु० ३३।५॥ऋ० १।९५।१ तै० ब्रा० २।७।१२।२॥

द्वे इति = द्वे द्विसंख्याके दैवी आसुरी च सृष्टी विरूपे विरुद्धस्वभावे विषय-रूपे स्वर्थे स्वरणे शोभनगमनागमने यद्वा अर्थः प्रयोजनम् स्वस्वप्रयोजने चरतः संसारे आवर्तेते। अन्यान्या पृथक् पृथक् स्वरूपा एका एका वत्सं स्वं स्वं पुत्रं दैवं पुत्रं दैवी सृष्टिः आसुरं पुत्रं आसुरी सृष्टिः उपधापयेते स्वकीयं स्वकीयं स्वस्वरूपं कर्मफलं पाययतः। अन्यस्यां एकस्यां आसुरी सृष्ट्यां हरिः सर्वशुभकर्महरणशीलः आसुरः जीवः भवति उपद्यते। अन्यस्यामेकस्यां दैवीसृष्ट्यां स्वधावान् प्रशस्तशान्त्याद्य-मृतमयगुणयुक्तः सुवर्चाः शोभनं वर्चः तेजो यस्य स सुवर्चाः तेजस्वी शुक्रः निर्मलज्ञा-नवान् सत्त्वगुणविशिष्टः देवः जीवः ददृशे दृष्टिपथे समायाति। स्वर्थे = ऋ गतौ। "अवि-कुषि गार्ति भ्यस्थन्" इति भावे कर्मणि वा थन् प्रत्ययः। अन्यान्या = कर्मव्यतिहारे सर्व-नाम्नो द्वे भवतः" इति वक्तव्यम्। "समासवच्च बहुलम्" इति द्विर्भावः। धापयेते = ~~स्वयमपि~~ ~~पुत्रमपि~~ धेट् पाने। "आदेच" इत्यात्वम्। "हेतुमति णिच्" — "अर्ति ह्री—" इति पुगागमः। तत्र लक्षणप्रतिपदोक्तपरिभाषया पुक् न प्राप्नोति सोऽनर्थकः स्यात्। तस्माद्धयाप-यतीत्यादाविव "धापयेते" इत्यत्रापि पुगागमः सिद्धः। "निगरणचलनार्थेभ्यश्च" (पाणि० १।३।-८७) इति प्राप्तस्य परस्मैपदस्य — "पादिषु धेट उपसंख्यानम्" (पाणि. १।३।८९) इति प्रतिषेधात् आत्मनेपदम्। हरिः = हृञ् हरणे — औणादिकः इन् प्रत्ययः। ददृशे = "दृशेश्छन्द-सि लुङ्लङ्लिट" इति वर्तमाने लिट्।

प्रवृत्तिमिति = आसुराः = असून् प्राणान् लान्ति आददते अपहरन्तीत्यसुराः। "आतोऽनुपसर्गे कः" यद्वा अस्यन्ति क्षिपन्ति नरके शरीरं इत्यसुराः राक्षसाः। असुरस्वभावाः जनाः जीवाः प्रवृत्तिं शास्त्रानुकूले कर्तव्ये धर्मणि प्रवृत्तिं निवृत्तिं शास्त्रनिषिद्धात् अधर्मात् अपसरणं न विदुः न जानन्ति। तेषु आसुरेषु जीवेषु शौचं बाह्या-भ्यन्तरशुद्धिः आचारः सदाचारः दया सत्यं न विद्यते न वर्तते॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥७॥

नीचैः खनन्त्यसुराः अरुस्राणमिदं महत्। तदास्रावस्य भेषजं तदु रोगमनी-नशत्॥ अथ० २।३।३॥

नीचैरिति = असुराः असून् प्राणान् लान्ति, आददते अपहरन्ति इति असुराः। "आतोऽनुपसर्गे कः" इति क प्रत्ययः। अस्यन्ति क्षिपन्ति पातयन्ति शरीरं नरके इति असुराः राक्षसाः तमोगुणस्वभावाः जनाः इदं परिदृश्यमानं महत् स्वमहत्वेन विस्तीर्णम् अरुस्राणम् — अरुषा भास्रा स्राणं परिपक्वं कर्मफलस्थानम् नीचैः खनन्ति अवदारयन्ति यद्वा भूयो भूयः अधः स्थानं गच्छन्ति। तत् सर्वत्र व्यापकं ब्रह्मैव आस्रावस्य = आ समन्तात् स्रवतीत्यास्रवः पुनः पुनर्जन्ममयः रोगः तस्य पुनर्जन्म ~~रुज्यते~~ भज्यते रोगस्य भेषजम् औषधं निवर्तकमिति यावत्। तदु तत् ब्रह्म उ = एव रोगः रुज्यते भज्यते अनेन इति रोगः। आसुरं जन्म अनीनशत् समूलं नाशयति। असुरः = "असेरुरन्" इति उरन् प्रत्ययः। उरुस्राणम् =

श्रै पाके इत्यस्मात् अधिकरणे ल्युट्। उरु स्रवति पक्वं भवति उपशमनोन्मुखं भवति अनेन इति उरुस्राणम्। आस्रावस्य= स्रु गतौ इत्यस्मात् आङ्पूर्वात् "श्याद्व्यधास्रुसंस्रु—" इत्यादिना 'ण' प्रत्ययः। "अचो ञ्णिति" इति वृद्धिः। रोगम्= रुज्यते भज्यते पुरुषः अनेनेति रोगः। "हलश्च" इति करणे घञ्। "चजोः कु घिण्यतोः" इति कुत्वम्। अनीनशत्= "णशे" र्ण्यन्तात् लुङि चङि रूपम्॥

असत्यमिति= ते दयानन्दमहिताः ते आसुराः जनाः जगत् संसारम् अनीश्वरम् 'ईश्वरः यस्योत्पत्तिकारणं नास्ति तथाभूतम्'। असत्यम्= मिथ्या अप्रतिष्ठम् प्रतिकृति अनेनेति प्रतिष्ठा कारणं धर्माधर्मौ न प्रतिष्ठास्येत्यप्रतिष्ठम्। धर्माधर्मव्यवस्थाशून्यम् आहुः कथयन्ति, तथा अपरस्परसंभूतमस्ति। अपरश्च परश्च अपरस्परं मिथुनं तस्मात् संभूतम् अपरस्परसंभूतं स्त्रीपुंसयोः संयोगात् सर्वं जातमिति वदन्ति। अथ च कामहैतुकं जगत् इति मन्येत किमन्यत्। ततोऽन्यत् अदृष्टं कारणं किमस्तीति प्राहुः। दृष्टं विहाय अदृष्टधर्मादिकल्पना व्यर्था एव इति ज्ञेयम्। ८॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्॥ ८॥

~~प्र सु स्तोमं अस्तीति नेम उ त्व आह क ईं~~

प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति। नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभिष्टवाम। ऋ० ८।१००।३॥

प्र सु इति= हे जनाः! वाजयन्तः स्वोदरपालनाय अन्नमिच्छन्तः यूयं यद्वा संसारसंग्राममिच्छन्तो यूयं "पौंस्ये वाजे" इति संग्रामनामसु पाठात्। इन्द्राय परमैश्वर्यवते परमात्मने सत्यं सत्यभूतं स्तोमं स्तुतिं सुसुष्ठु प्रभरत प्रकुरुत। पामरा जनाः वदन्ति यदि सत्यमीश्वरोऽस्ति इति स्तुतिं कुर्मः। परञ्च नेमः विख्यातयशस्कः एव इन्द्रः परमेश्वरः लोकस्वामी त्वः कश्चित् नास्तीति। तत्र कारणं दर्शयति= कः पुरुषः ईम् एनं परमेश्वरं ददर्श अद्राक्षीत् पश्यतीति न कोऽप्यपश्यत् न कोऽप्यद्राक्षीत्। अतः अपरस्परसंभूतं कामहैतुकं अनीश्वरं असत्यं जगत् मन्यमानाः वयं कम् ओंकारनामानं परमेश्वरम् अभिष्टवाम अभिष्टुमः। तस्मात् परमेश्वरो नाम कश्चिद् विद्यते इति वादमात्रं न तु तत्सत्यमिति भावः।

एतामिति= एतां दृष्टिं नास्तिकविचारं अवष्टभ्य आश्रित्य नष्टात्मानः नष्टं गतः विनाशं गतः आत्मा विवेकबुद्धिर्येषां ते नष्टात्मानः अल्पबुद्धयः अल्पे तुच्छे देहे बुद्धिर्येषां तेऽल्पबुद्धयः उग्रकर्माणः उग्रं क्रूरं शास्त्रमर्यादाविरुद्धं कर्म येषां ते ~~ऽल्पबुद्धयः~~ उग्रकर्माणः अहिताः परहितशून्याः जगतः संसारस्य क्षयाय विनाशाय प्रभवन्ति समर्थाः भवन्ति॥ ९॥

XVI



एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥ ९॥

अयं लोकः प्रियतमो देवानामपराजितः। यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे। स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः। अथ० ५।३०।१७॥

अयमिति = हे पुरुष! हे जीवात्मन्! अयं लोकः इदं शरीरं प्रियतमः अतिशयेन प्रियः देवानां देवैः चक्षुरादिभिः अपराजितः पराजयरहितः अस्ति। यस्मै यन्निमित्ताय त्वं जीवात्मा इह अस्मिन् शरीरे स्थित्वा मृत्यवे मृत्युनिमित्ते दिष्टः क्षयितः सन् जज्ञिषे उत्पन्नः भवसि। स च त्वं जीवात्मा तस्मात् लोकात् शरीरात् पृथक् असि। त्वा त्वां जीवात्मानं अनु ह्वयामसि अनुहूय आहूय अनुबोधयामि। जरसः पुरा वृद्धावस्थातः पूर्वं मा मृथाः मृत्युं मा प्राप्नुहि।

काममिति = दुष्पूरं विषयभोगेनापि पूरयितुं अशक्यं कामं मनोरथं आश्रित्य अवलम्ब्य दम्भमानमदान्विताः दम्भः बाह्यतः धार्मिकचिह्नम् मानः स्वस्मिन्नुत्कृष्टतरत्वाभिनिवेशः, मदः धनबलाभिजनबलाभिजनितः चित्तविकारः, तैः दम्भमानमदैः अन्विताः मिलिताः मोहात् अविवेकात् असद्ग्राहान् ~~अनर्थनिश्चयान् गृहीत्वा~~ असत् अनर्थमेव ग्राहयन्ति संभावयन्ति इत्यसद्ग्राहाः तान् असद्ग्राहान् अनर्थनिश्चयान् गृहीत्वा आदाय अशुचिव्रताः अशुचीनि अपवित्राणि व्रतानि नियमाः येषां ते ऽशुचिव्रताः भूत्वा जगतो विनाशाय प्रवर्तन्ते। १०।

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः॥ १०॥

1 अन्यव्रतममानुषमयज्वानमदेवयुम्। अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः। ऋ० ८।७०।११॥

२ यद्वा = यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः। आपः इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता॥ अथ० ८।४।८॥ ऋ० ७।१०४।८॥ (अनेन चित्तनिमानां — १६।१८ श्लोके योज्या)॥

1 अन्यव्रतमिति = सखा समानस्वरूपः सर्वमित्रः पर्वतः पर्ववान् परमात्मा अन्यव्रतं ब्रह्मातिरिक्ते वस्तुनि व्रतम् आचरणनियमः यस्य तथाभूतं जनम् अमानुषं मनुष्यमर्यादातिक्रान्तम् अयज्वानम् अयष्टारम् अदेवयुम् अदेवकर्मिणम् पापिनं दस्युम् अनार्यम् सघ्नाय सुघ्नु इन्ते मृत्यवे पुनः पुनर्जन्मग्रहणाय पर्वतः कर्मग्रन्थिमतः स्वः स्वर्गात् मुक्तिसुखात् अवदुधुवीत अवधुनोति अवचालयति।

२ यद्वा = यो मन्त्रीत = हे इन्द्र! हे जीवात्मन्! दम्भमानमदान्विताः अशुचिव्रतः यः नास्तिकः जीवः पाकेन अन्ययागाचरणपरिपक्वेन

मनसा चेतसा एव चरन्तं सर्वत्र व्याप्नुवन्तं मा माम् परमात्मानं अन्तर्यामि-
अन्तरूपेः– "नास्ति कश्चित् ईश्वरः, नास्ति परो लोकः, नास्ति कर्म-
फलम्" इत्याद्यसत्यैः वचोभिः वचनैः अभिचष्टे अभिशंसति कथयति।
असतः अविद्यमानस्य विनश्वरस्य तद्विषयस्य च वक्ता कथयिता
असन् अविद्यमानः मुक्तिपदात् परिभ्रष्टः असत् अविद्यमानः न
किन्तु विद्यमानः भवति अर्थात् सर्वदा जगति विनश्यति यथा च काशिनां
मुष्टिना संगृभीताः संगृहीताः आपः इव जलानि इव अंगुलिविवरेभ्यः गलन्ति
विशीर्णाः भवन्ति।

चिन्तामिति – अपरिमेयाँ परिमातुं अशक्यां प्रलयान्तां प्रलयः मृत्युः
इव अन्तः अवसानं यस्याः तां मृत्युपर्यन्तां चिन्तां आश्रिताः अवलम्बि-
ताः सन्तः कामोपभोगपरमाः एतावत् विषयजन्यसुखमेव सुखम् अस्ति
नान्यत् किञ्चित् इति निश्चितः सिद्धान्तो येषां ते एतावदिति निश्चिताः
सिद्धान्तो येषां ते एतावदिति निश्चिताः सन्तः आशापाशशतैः बद्धाः बन्धनं
प्राप्ताः। कामक्रोधपरायणाः कामक्रोधौ परम अयनं येषां ते कामक्रोध-
परायणाः। कामभोगार्थं कामस्य विषयस्य भोगार्थं अन्यायेन शास्त्रवि-
रुद्धेन मार्गेण अर्थसञ्चयान् धनसंचयान् धनसंचयान् ईहन्ते इच्छन्ति।

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमाः एतावदिति निश्चिताः॥११॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्॥१२॥

तेऽधराञ्चः प्रप्लवन्तां छिन्ना नौरिव बन्धनात्। न वै बाधप्रणु-
त्तानां पुनरस्ति निवर्तनम्। अथ० ३।६।७॥

ते इति = ते पूर्वोक्ताः मरणान्तापरिमेयचिन्ताश्रिताः कामक्रोधपरायणाः
जनाः अधराञ्चः अधोमुखं विषयाद्युपभोगं गच्छन्तः परमात्मविमुखाः
प्रप्लवन्तां समुद्रप्रवाहे गच्छन्ति न तु संसारार्णवपारं गच्छन्ति। बन्ध-
नात् छिन्ना नौः इव बध्यते ऽस्मिन् इति बन्धनं तीरवृक्षादिकम्। बध्नाति
अनेन नावम् इति वा बन्धनं रज्जुः ततः छिन्ना वियुक्ता नौः नौका इव।
सा यथा तीरम् अप्राप्तः नदीप्रवाहेण अधो नीयते तद्वत्। तेऽपि परमात्म-
बन्धनविमुक्ताः संसारसमुद्रप्रवाहेण विमुक्तिपदात् दूरे नीयन्ते। वै बाधप्रणु-
त्तानां विशिष्टा कामोपभोगमयी बाधा बन्धनं विबाधा विबाधा एव वैबाधं
विशिष्ट सांसारिकविमोहः तेन प्रणुत्तानां प्रणुन्नानां अवाङ्मुखं प्रेरितानां
शतशः कामपाशबद्धानां पुनर्निवर्तनं पुनरुद्धारः नास्ति। अधराञ्चः अधर-
शब्दोपपदात् अञ्चतेः क्विन्। प्लवन्ताम् = प्लुङ् प्लुङ् गतौ। भ्वादिः।
भ्वादिः। प्रणुत्तानाम् = नुद विदोन्दत्रा[illegible] ह्रीभ्यो ऽन्यतरस्याम्

इति विकल्पनात् निष्ठायाः नत्वाभावः।

इदमिति = इदमेतद्वस्तु अद्य मया लब्धं प्राप्तम्। इमं मनोरथं अभिलाषं प्राप्स्ये लप्स्ये। इदं वस्तु संप्रति अस्ति इदं धनं मे मम पार्श्वे अग्रे भविष्यति॥१३

असौ इति = असौ शत्रुः रिपुः मया हतः विनाशितः। अपरान् शत्रून् अपि हनिष्ये मारयिष्यामि। अहम् ईश्वरः विधापनादिस्वामी अस्मि। अहं भोगी बहुपदार्थोपभोक्ताऽस्मि। अहं सिद्धः सिद्धयोगसम्पन्नः, अहं बलवान् अहं सुखी सुखसंयुक्तोऽस्मि।१४।

आढ्य इति = अहम् आढ्यः धनपरिपूर्णोऽस्मि। अहम् अभिजनवान् बहुपरिवारोऽस्मि। अन्यः कः पुरुषः मया सदृशः तुल्यः अस्ति। यक्ष्ये = स्वमानाभिवृद्धये यज्ञं करिष्यामि। ~~मोदिष्ये = दत्त्वा भुक्त्वा सन्तोषं~~ दास्यामि स्वनाम प्रसिद्धये नटादिभ्यो धनादिकस्य दानं करिष्यामि। मोदिष्ये दत्त्वा भुक्त्वा सन्तोषं प्राप्स्यामि इत्यज्ञानविमोहिताः एवंविधेन अज्ञानेन विविधप्रकारेण मोहिताः मोहं प्राप्ताः अनेकचित्तविभ्रान्ताः 'इदमद्य लब्धमिदं प्राप्स्ये' इत्येवंविधैः अनेकैः बहुविधैः चित्तविकारैः विभ्रान्ताः विविधं भ्रान्ताः मोहजालसमावृताः मोहः सदसद्विवेकशून्यता स मोह एव जालं बन्धनं तेन समावृताः सम्यक्तया मिलिताः तिरोहिताः वा कामभोगेषु कामानां विषयाणां भोगेषु सेवनेषु प्रसक्ताः प्रकर्षेण लग्नाः अशुचौ शुचिरहिते मलिने नरके रौरवादिनरके पतन्ति।१३—१६॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥१३॥ असौ मया हतः शत्रुः हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥१४॥ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥१५॥ अनेकचित्तविभ्रान्ताः मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ॥१६॥

१. "नहि मे रोदसी उभे अन्यं पक्षं चन प्रति। कुवित्सोमस्यापामिति। ऋ० १०।११९।७
२. "हन्ताहं पृथिवीमिमां निदधानीह वेह वा। कुवित्सोमस्यापामिति। ऋ० ऋ० १०।११९।९॥ निरु० ३।४॥
३. यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते। तावत् समैत्विन्द्रियं मयि तद्धस्तिवर्चसम्। अथ० ३।२२।५॥
४. "अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः। त्वं तस्यामित्रहन् वधर्दासस्य दम्भय॥ ऋ० १०।२२।८॥
५. नूतनमंत्रः = "अहं पंचाम्यहं ददामि ममेदु कर्मन् करुणेऽधि जाया। कौमारो लोको अजनिष्ट पुत्रोऽन्वारभेथां वय उत्तरावत्। अथ० १२।३।४७॥
६. इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः। त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः। ऋ० १०।७१।९॥

XVI



१. न हीति = उभे उभयोः रोदसी रोदस्योः मध्ये द्यावापृथिव्योः मध्ये "उभे रोदसी" द्वयोः विभक्तिवचनव्यत्ययः। मे मया सदृशं अन्यं प्रति पक्षं प्रतिद्वन्द्वी च न अपि न = नास्ति हीति निश्चये। इति शब्दो हेतौ अस्ति। यस्मात् कुवित् बहुवारं सोमस्य सोमं 'विभक्तिव्यत्ययः' पुष्टिकरम् ओषधिविशेषम् अपाम् पीतवान् अस्मि। 'क्रियाग्रहणं कर्तव्यम्' इति सोमस्य संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्' इति षष्ठी। पा पाने। लुङि "गातिस्था-" इति सिचो लुक्।

२. हन्ताहमिति = हन्त इति संभावनायाम् अनुज्ञायां वा। एतत्संभावयामि एतदनुजानामि वा। अहं बलवान् पुरुषः इमां पृथिवीं इमान् पृथिवीस्थानलोकान् इह-अस्मिन् लोके निदधानि स्वहस्ते धारयामि स्वायत्तीकरोमीति भावः। यस्मात् कुवित् बहुवारं सोमस्य = सोमं बलवर्धकं ओषधिविशेषं अपाम् पीतवानस्मि। ~~'क्रियाग्रहणं कर्तव्यम्'~~

३. यावदीति = चतस्रः चतुःसंख्याकाः प्रदिशः प्रकृष्टाः प्राच्याद्याः महादिशः यावत्परिमितं व्याप्नुवन्ति, तथा यावत्पर्यन्तं चक्षुः मदीयं नेत्रं रूपग्राहकमिन्द्रियं समश्नुते सम्यक् व्याप्नोति। तावत् तावन्मात्रं इन्द्रियं इन्द्रस्य ऐश्वर्ययुक्तस्य धनाढ्यस्य लिङ्गम् असाधारणं चिह्नं धनं सोमेन समेति ~~अस्मान्~~ धनाभिजनयुक्तान् पुरुषान् संप्राप्नोति। ततः धनजन्यं हस्तिवर्चसं हस्तिबलमिव बलं मयि विद्यते ऽतः मया सदृशः अन्यः कोऽस्ति।

४. अकर्मा इति = अकर्मा यज्ञानुष्ठानादिकर्मरहितः दस्युः अनार्यः अभिसम्मुखे एव नः अस्मान् साधून् सज्जनान् अमन्तुः अज्ञाता, यद्वा अत्र "अव-" इत्युपसर्गस्य वकारलोपो द्रष्टव्यः। अवमन्तः साधून् अवमन्तुः अवमन्ता अभिभविता। अन्यव्रतः = श्रुतिस्मृतिव्यतिरिक्तकर्मा कामभोगव्रतो वा। अमानुषः = मनुष्यसंख्याव्यवहाराद् बाह्यः असुरप्रकृतिरित्यर्थः। एवंभूतो यो नीचः पुरुषः अस्ति, हे अमित्रहन्! हे अमित्राणां पापिनां दुष्टानां वा हन्तः परमात्मन्! त्वं तस्य तादृशस्य दासस्य उपक्षपयितव्यस्य अनार्यस्य वधः हन्ता सन् दम्भय तं पापिनं जहि।

५. अहमिति = अहं धनाढ्यत्वात् पचामि लोकेभ्यः प्रदानाय अन्नं पाचयामि, अहं ददामि दीनेभ्यः धनादिकं यच्छामि, मम जाया पत्नी इत एव करुणे कर्मन् दयामये कर्मणि अपि प्रयत्नं कुरुते। मम कौमारः पुत्रः लोकः लोकानां कल्याणाय अजनिष्ट उत्पन्नः अस्ति। उत्तरावत् वयः उच्चावस्थां प्राप्नुवत् दीर्घजीवनम् अन्वारमे धाम उच्चकोटि तथा व्यतीतं भवतु।

६. इमे इति = ये अकर्मिणः अनार्याः विद्वांसः सन्ति, इमे ये न अब्राह्मणासः = अब्राह्मणासः ब्रह्मवेत्तारः न सन्ति। तथा न सुतेकरासः = सोमं सुतं अभिषुतं कुर्वन्तीति सुतेकराः ऋत्विजः अपि न सन्ति, ते मूढाः न अर्वाक् चरन्ति = अस्मिन् सुसुखं न विचरन्ति, न परः चरन्ति = न परस्मिन् लोके

सुसुखं विचरन्ति, अर्थात् द्वयोः लोकयोः तदर्थं सुखं न विद्येत। एते अप्रजज्ञयः = "जानातेरा(दृगमहन्-" इति कि प्रत्ययः। अप्रजज्ञयः = अविद्वांसः अनेकचित्तविभ्रान्ताः, ते एते मनुष्याः वाचं लौकिकीं भाषां अभिपद्य प्राप्य पापया पापकारिण्या वाचा युक्ताः सन्तः सिरीः = स्वैरिणः स्वतंत्रगामिनः भूत्वा तंत्रं स्वायत्तं सर्वं कर्म तन्वते विस्तारयन्ति कुर्वन्ति नतु वेदसिद्धं कर्म साधुवन्ति इति भावः। सिरीः = "छन्दसीव निपातितः प्रत्ययः।" "सुपां सुलुक्" इति जसः सुः॥

आत्मसंभाविता इति = आत्मसंभाविताः आत्मना स्वेनैव बहुकृताः नतु सज्जनैः अतः स्तब्धाः नम्रताविरहिताः धनमानमदान्विताः धनेन हेतुना मानो गर्वः मदो मत्तता, ताभ्यां समन्विताः ते असुराः जीवाः नामयज्ञैः नाममात्रैः यज्ञैः नतु वैदिकलक्षणयुक्तैः यज्ञैः दम्भेन स्वमहत्त्वप्रसिद्धये अविधिपूर्वकं शास्त्रोक्तविधिरहितं यजन्ते यजनं कुर्वन्ति। १७।

आत्मसंभाविताः स्तब्धाः धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्॥ १७॥

अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात्॥
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौः॥ ऋ० ६।५२।२॥
अथ० २।१२।६॥

अति वेति = हे मरुतः! हे मरणधर्माणः जीवात्मानः! यः आत्मसंभावितः स्तब्धः धनमानमदान्वितः पुरुषः अति मन्यते अतीत सर्वेभ्योऽधिकं महान्तं मन्यते। यः पामरः पुरुषः ब्रह्म वेदं वा क्रियमाणं ऋषिभिः क्रियमाणं ब्रह्म-वेदोपदिष्टं स्तोत्रं वा निनित्सात् निन्दितुमिच्छेत् तस्मै नीचाय स्तब्धाय पुरुषाय तपूंषि शुभलक्षणानि कर्माणि तेजांसि वा वृजिनानि बाधकानि सन्तु सन्ति भवन्ति। द्यौः आदित्यः सर्वप्रकाशकः परमेश्वरो वा तं ब्रह्मद्विषं वेदशत्रुं परमात्मशत्रुं वा अभिशोचतु अभिशोचति अभितपति अभिदहतीति भावः।

अहंकारमिति = अहंकारं सर्वशास्त्रपारगत्वाद्यभिमानं बलं विद्यासामर्थ्यं दर्पं दृप्ततां कामं संसारादिकमिथ्याऽभिलाषं क्रोधं कोपं च संश्रिताः आश्रिताः आत्मपरदेहेषु आत्मदेहे परदेहे च व्यापकं मां प्रद्विषन्तः प्रकर्षेण द्वेषं कुर्वन्तः अभ्यसूयकाः सत्पुरुषगुणनिन्दकाः आसुराः जीवाः ये सन्ति तान् दुष्टजनान् द्विषतः सर्वत्र मद्व्याप्तिमत्तां द्वेषं कुर्वतः यद्वा "नायमात्मा न परलोकः" इति भावमाश्रित्य आत्मनि परमात्मनि च द्वेषं कुर्वतः क्रूरान् क्रूरकर्मणः दयादिशून्यान् वा नराधमान् नरेषु नीचान् अशुभान् अशुभकर्मकर्तृन् संसारेषु संस्रियन्ते भुज्यन्ते इति संसाराः जननमरणादिखेदाः तेषु आसुरीषु योनिषु अतिक्रूरासु श्वशूकरादियोनिषु अजस्रं क्षिपामि पुनः पुनः अहं अहमीश्वरः प्रापयामि। १८, १९॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः॥१८॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥१९॥

मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः। अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभिसंयन्तु शोकाः। ऋ० १।१२५।७॥

मेति = सूरयः विद्वांसः परमात्मस्तोतारो वा ज्ञानिनो वा, सुव्रतासः = शोभनव्रतनियमवन्तः, पृणन्तः दीनेभ्यः धनादिकं यच्छन्तः, अग्निं हविरादिना प्रीणयन्तो वा मुमुक्षवः जीवाः दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखं = एनः तत्साधनं पापं च मा आ+अरन् = सर्वतः न प्राप्नुवन्ति। अत एव च मा जारिषुः जीर्णाः मा भवेयुः। तेषां सुव्रतानां दातॄणां सूरीणां वा अन्यः तेभ्योऽन्यः यः कश्चित् कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु अस्ति। यद्वा अन्यः अन्यः कश्चन पापदेवः तेषां परिधिः परिधिस्थानीयो व्यवधायकोऽस्तु अस्ति। तर्हि किं प्राप्नुवन्ति इत्युच्यते। अपृणन्तं देवादीन् अप्रीणयन्तं दीनेभ्योऽदातारं अविद्वांसं अव्रतं शोकाः चित्तपीडाः नीचयोनिप्राप्त्यथाः तत्साधनाः पाप्मानः अभि अभिमुखं संयन्तु सम्यक् प्राप्नुवन्ति॥ यथा च = मंत्रः = "अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम्। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। ऋ० अष्ट० ८।अध्या०७।व०११। अथ० ४।३१।७॥

आसुरीमिति = हे कौन्तेय! हे अर्जुन! कामभोग[illegible] लग्नाः लम्पटाः पुरुषाः मूढाः जन्मनि जन्मनि प्रतिजन्म आसुरीं असुरप्रकृतिमतीं योनिम् आपन्नाः प्राप्ताः मां मत्प्राप्तियोग्यं मानवं देहं अप्राप्यैव अलब्ध्वैव ततः आसुरयोन्याः अपि अधमां वृक्षपाषाणादिकां नीचगतिं यान्ति प्राप्नुवन्ति॥२०॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्॥२०॥

१. येना निचक्र आसुरीन्द्रं देवेभ्यस्परि। तेना नि कुर्वे त्वामहं यथा तेऽसानि सुप्रिया॥ अथ० ७।३८।२॥

२ यद्वा = ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः। अहये वा तान् प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे। ऋ० ७।१०४।९॥

१ येनेति = आसुरी असुरस्येयम् आसुरी "असुरस्य स्वम्" मायायाम् अण्" इति अण् प्रत्ययः। आसुरी असुरप्रकृतिः असुरसम्पत् वा देवेभ्यः परि विद्वद्भ्यः परि देवान् विदुषः ज्ञानिनः वर्जयित्वा इन्द्रं धनाद्यैश्वर्यसम्पन्नम् असुरप्रकृतिकं जीवं येन सम्बन्धेन निचक्रे स्वाधीनं कृतवती। हे असुरप्रकृते जीवात्मन्! तेन सम्बन्धेन अहं परमात्मा त्वां असुरप्रकृतिं जीवं निकुर्वे नीचयोन्यां करोमि। तव जन्म नीचयोन्यां भवतु इति सम्पादयामि। यथा येन प्रकारेण सा आसुरी प्रकृतिः ते तव आसुरस्य जीवस्य सुप्रिया जन्मनि जन्मनि अत्यन्तं प्रिया असाधारण्येन

प्रीतिजननी असानि भवतु। देवेभ्यस्परि = "अपपरी वर्जने" इति परिः कर्मप्रवचनीयः। "पञ्चम्यपाङ्परिभ्यः" इति पंचमी। असानि = "आडुत्तमस्य पिच्च" इत्याडागमः।
"भेर्लिः" इति लिः।

२ यश्चा = ये इति = ये दुष्प्रकृतयः मां पाकशंसं परिपक्ववचनं सत्यभाषिणं एवैः = एवकैः प्राप्नवैः आत्मीयतत्तत्कामैः विहरन्ते विशेषेण हरन्ति परिवदन्ति। ये वा स्वधाभिः स्वस्मिन् धृतैः यश्चा स्वस्य धारकैः धनधान्यादिभिः केवलैः भद्रं भद्रपुरुषं सज्जनं दूषयन्ति दुष्टं कुर्वन्ति तान् सर्वान् सोमः भगवान् ईश्वरः अहये वा सर्पाय वा प्रददातु। निर्ऋतेः पापदेवतायाः मृत्योः उपस्थे उत्सङ्गे वा आदधातु प्रक्षिपतु।

त्रिविधमिति = आत्मनः नाशनं योगम् आरूढस्य मुमुक्षोः आत्मनः नाशकं नरकस्य नराणाम् अतिशयं अकं = दुःखं यत्र तत् नरकम् "शकन्ध्वादिवत्पररूपमस्ति"। तस्य नरकस्य द्वारं प्रवेशमार्गः, इदम् कामः, क्रोधः, तथा लोभः इतीदं त्रिविधं त्रिप्रकारकं अस्ति। तस्मात् नरकद्वार प्रवेशकारणत्वात् एतत् त्रयं चाण्डालमिव कामं, कृष्णसर्पमिव क्रोधं, मलमिव लोभं त्यजेत् दूरत एव परिहरेत् ॥२१॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥२१॥

त्रिते देवा अमृजतैतदेनस्त्रित एनन्मनुष्येषु ममृजे। ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ॥ अथ० ६।११३।१॥

त्रिते इति = देवाः विद्वांसः ज्ञानिनः पुरुषाः त्रिते त्रिभिः कामक्रोधलोभैः युते आसुरप्रकृतौ जीवे एतत् नरकद्वारात्मकम् एनः पापम् अमृजत निमृष्टवन्तः निमार्जनेन स्थापितवन्तः। त्रितः कामक्रोधलोभसमन्वितः स च जन एव एतत् स्वात्मनि समवेतं कामक्रोधलोभमयं सर्वपापमयं दुर्व्यसनं मनुष्येषु सर्वेषु मनुष्येषु ममृजे मृष्टवान् निमार्जनेन स्थापयति। ततः तस्मात् हेतोः यदि = यच्छब्दार्थेऽस्ति। यदि = या ग्राहिः ग्रहणशीला ग्रासकर्त्री आसुरी प्रकृतिः त्वा त्वां दैवीसम्पदं जीवं आनशे व्याप प्राप्नोति। ते त्वदीयां तां ग्राहिं भूयो भूयः जन्मदात्रीं मूर्तिं पापदेवतां ब्रह्मणा ब्रह्मज्ञानेन तत्साधनेन च देवाः विद्वांसः योगिनः एव नाशयन्तु नाशयन्ति॥

एतैरिति = हे कौन्तेय! हे अर्जुन! नरः मुमुक्षुः विद्वान् तमोद्वारैः तमसः नरकस्य द्वारैः द्वारभूतैः त्रिभिः त्रिसंख्याकैः एतैः कामक्रोधलोभैः विमुक्तः विशेषेण निर्मुक्तः सन् आत्मनः स्वस्य श्रेयः स्वकल्याणं आचरति सम्यक्तया अनुतिष्ठति। तेन आचरणेन समुत्पन्न ज्ञानेन वा परां गतिं मोक्षं याति प्राप्नोति। २२॥

एतैर्विमुक्तः कौन्तेय! तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥

इमे उप्ताः मृत्युपाशाः यानाक्रम्य न मुच्यसे। अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥ अथ० ८।८।१६॥

XVI



इमे इति = हे मुमुक्षो! हे विद्वन्! इमे कामक्रोधलोभाः मृत्युपाशाः मृत्योः पुनः पुनर्मरणस्य पाशाः बन्धनरज्जवः सन्ति। यान् कामक्रोधलोभात्मकान् मृत्युपाशान् आक्रम्य प्रधर्ष्य विनाश्य न मुच्यसे मुक्तिं प्राप्तुं अशक्तोऽसि। अमुष्याः सेनायाः कामक्रोधलोभस्वरूपायाः सेनायाः इदं कूटं एतदनुभूयमानं स्वस्थैर्यं सहस्रशः सहस्रधा कृत्वा हनु जहि एतद्धननानन्तरं मोक्षं प्राप्स्यसीति सिद्धान्तः

य इति = यः नरः शास्त्रविधिं विधीयतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति विधिस्तं कर्तव्याकर्तव्यार्थप्रकाशकं चोदनाविधिं निषेधं च उत्सृज्य त्यक्त्वा अनमत्य वा कामकारतः स्वेच्छातः वर्तते स्वकर्तव्यकार्यानुष्ठानं करोति, सः स्वेच्छाधीनप्रवृत्तः पुरुषः सिद्धिं स्वेष्टकार्यसमाप्तिं न आप्नोति न प्राप्नोति। २३

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥ २३॥

परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम्।
ऋ० ७।१०४।११॥ अथ० ८।४।११॥

पर इति = हे देवाः! हे विद्वांसः! हे मुमुक्षवः! यः आसुरः मनुष्यः पुरुषः स्वेच्छाचारी सन् नः मां "वचनव्यत्ययः" परमात्मानं मत्प्रोक्तां वाणीं वा दिवा नक्तम् अहर्निशम् दिप्सति जिघांसति दूरीकर्तुमिच्छति दूरीकरोति च स रक्षःप्रकृतिः स्वेच्छाचारी आसुरः पुरुषः तना विस्तृतेन तन्वा स्वकीयेन शरीरेण परः अस्तु अस्ति। लकारव्यत्ययः। शरीरवियुक्तो भवति। अस्माच्छरीराद्वियुक्तो भवति भूत्वा शरीरान्तरं गृह्णाति गच्छति। एवं संसारार्णवे सर्वदा भ्रमतितमाम्। अथ च स एव कामकारी पुरुषः सर्वाः तिस्रः पृथिवीः त्रीन् लोकान् अधः अधो अस्तु अस्ति भवति - लोकत्रयादपि प्रच्युतो भवतीत्यर्थः। अर्थात् लोकत्रयादपि अधस्तात् नरके वर्तमानो भवति। अस्य स्वेच्छाचारिणः पुरुषस्य यशः अन्नं कीर्तिर्वा प्रतिशुष्यतु प्रतिशुष्यति विनश्यति - लकारव्यत्ययः॥

तस्मादिति = हे अर्जुन! शास्त्रविरुद्धाचरणवताम् अधःपातः तस्मात् कारणात् ते तव मुमुक्षोः कार्याकार्यव्यवस्थितौ एतत् कर्म कर्तव्यम् एतत्कर्म अकर्तव्यम् अस्ति इति व्यवस्थापने शास्त्रं श्रौतं स्मार्तं शास्त्रं प्रमाणं तत्तदर्थप्रमापकम् अस्ति इति ज्ञात्वा अवबुध्य शास्त्रविधानोक्तं शास्त्रविधानोक्तं शास्त्रविधानेन कथितं कर्म कर्तुं सम्पाद सम्पादयितुं इह अस्मिन् संसारे अर्हसि योग्योऽसि नान्यथा॥

इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां षोडशोऽध्यायः

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ २४॥

XVI



इति श्रीमद् भगवद् गीतासूपनिषत्सु देवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

इन्द्रो यज्वने गृणते च शिक्षत उपेद् ददाति न स्वं मुषायति।
भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुम्॥
अथ० ४।२१।२॥ ऋ० ६।२८।२॥ तै० ब्रा० २।८।८।११॥

इन्द्र इति = हे मुमुक्षो! इन्द्रः सर्वैश्वर्यवान् परमात्मा यज्वने अग्निहोत्रादियागं कुर्वते कर्मनिष्ठाय गृणते स्तुवते च मुमुक्षवे जनाय शिक्षते वेदशास्त्रशिक्षां यच्छति उपदिशति वा। उपेद् = स्वयं परमात्मैव तस्य मुमुक्षोः हृदये उपेत्य ददाति शास्त्रज्ञानं ददात्येव। तस्य यज्वनः स्तोतुश्च स्वं कर्तव्याकर्तव्यविचारधनं न मुषायति न मुष्णाति नापहरति, अपितु भूयो भूयः बहुवारं अस्य यज्वनः स्तोतुश्च रयिं ज्ञानं वर्धयन् समृद्धिं कुर्वन् इत एव वर्तते। एतत्तु ऐहिकफलम्। आमुष्मिकफलमप्युपदिशति परमात्मा। तं देवयुं देवं परमात्मानं इच्छन्तं यज्वानं स्तोतारं च अभिन्ने दुःखेन असंभिन्ने नित्यसुखोपेते खिल्ये खिलम् अप्रहतं स्थानं तत्र भवं खिल्यं तस्मिन् परमधाम्नि अयज्वभिः अगृणद्भिश्च अनाक्रान्ते पदे निदधाति स्थापयति। शिक्षते = शिक्ष विद्योपादाने। देवयुम् = देवशब्दात् "सुप आत्मनः क्यच्" - "न छन्दस्यपुत्रस्य" इतीत्वदीर्घयोः प्रतिषेधः। "क्याच्छन्दसि" इति उ प्रत्ययः।

इति श्री सारस्वतान्वय लैयावस्तव्य न्यायभूषण जगन्नाथशास्त्रि ज्योतिषिकृतायां वेदगीतार्थबोधिन्यां षोडशोऽध्यायः समाप्तः॥१६॥

अथ सप्तदशाध्यायारम्भः

यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपतोऽर्जुनो यातः कुरुक्षेत्रे युद्धर्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो ज्ञेयः ब्रह्मप्रकीर्तितात्॥२॥

अर्जुन उवाच = ये इति = हे कृष्ण! हे जनार्दन! ये साधारणाः पुरुषाः शास्त्रविधिं श्रौतस्मार्तादिशास्त्राणां विधानं उत्सृज्य त्यक्त्वा श्रद्धयान्विताः अत्यन्तविश्वासेन आस्तिकबुद्ध्या वा यजन्ते। यतया श्रौतं स्मार्तं कर्म कुर्वन्ति, तेषां श्रद्धामात्राश्रयाणां पुरुषाणां का निष्ठा कीदृशी श्रद्धाऽस्ति। सत्त्वं तन्निष्ठा इति सात्त्विकी। आहो = किमु वा रजः राजसी रजोगुणविशिष्टा, तामसी तमोगुणविशिष्टा इति त्रिविधा त्रिप्रकारा भवति। सा श्रद्धा च स्वभावजा = स्वेन स्तु भवतीति स्वभावः तस्मात् जाता इति स्वभावजा। यद्वा स्वभावः सत्त्वरजस्तमोगुणात्मिका प्रकृतिः। तस्मात् स्वभावात् प्रकृतेः जायते इति स्वभावजा। तां श्रद्धां शृणु आकर्णय। १,२।

सत्त्वानुरूपेति = हे भारत! हे भरतकुलोत्पन्न! अर्जुन! सर्वस्य प्राणिमात्रस्य सत्त्वानुरूपा सत्त्वरजस्तमोगुणानुरूपा यद्वा स्वान्तःकरणानुकूला श्रद्धा भवति। अयं पुरुषः श्रद्धामयः श्रद्धाप्राचुर्यः अस्ति। अतः यः पुरुषः यच्छ्रद्धः यद्गुणश्रद्धावान् स पुरुषः स एव तद्गुणः भवति। ३।

यजन्ते इति = सात्त्विकाः सत्त्वगुणविशिष्टाः विद्वांसः देवान् अग्न्यादिदेवान् यजन्ते पूजयन्ति। राजसाः रजोगुणविशिष्टाः पुरुषाः यक्षरक्षांसि यक्षरक्षःकुलसंभूतान् यजन्ते पूजयन्ति। ~~राजसाः रजोगुणविशिष्टाः पुरुषाः यक्षरक्षांसि~~ अन्ये सात्त्विकराजसेभ्यः भिन्नाः तामसाः तमोगुणप्रधानाः जनाः जीवाः प्रेतान् प्रेतयोनौ समागतान् भूतगणान् यजन्ते पूजयन्ति॥४॥

अर्जुन उवाच = ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण! सत्त्वमाहो रजस्तमः॥१॥

श्री भगवानुवाच = "त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥२॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥३॥
यजन्ते सात्त्विकाः देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसाः जनाः॥४॥

चत्वारि शृंगाः त्रयो अस्य पादाः द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥ ऋ. ४।५८।३॥

चत्वारीति = हे जीवात्मन्! अस्य देहिनः चत्वारि पृथिव्यप्तेजोमरुतः इमे चत्वारः शृंगरूपाः सन्ति, कामक्रोधलोभाः त्रयः पादाः जन्ममृत्युप्रदानाय पादरूपाः सन्ति। द्वे ज्ञानकर्मेन्द्रिये शीर्षे मूर्धस्वरूपे, सप्त हस्तासः = रक्तमज्जामांसादि सप्त धातवः शरीरधारकाः सन्ति। वृषभः = स्वमनसि कामनावर्षकः प्राणी त्रिधा बद्धः सत्त्वरज-

सत्त्वोगुणैः बद्धः सन् सात्त्विककर्मनिमित्ते राजसकर्मनिमित्ते वा तमो-गुणकर्मनिमित्ते वा अतिशयेन आलपति - महो देवः = महादेवः परमात्मा मर्त्यान् आविवेश मर्त्येषु व्यापकरूपेण प्रविष्टोऽस्ति।

अशास्त्रेति = दम्भाहंकारसंयुक्ताः दम्भः वेषभूषादि वा आडम्बरः, अहंकारः कुलाद्युत्कृष्टताजन्यः अभिमानः ताभ्यां संयुक्ताः। कामरागबलान्विताः = कामः शब्दस्पर्शादिविषयः, रागः शब्दाद्युपभोगेच्छा, बलं तदिच्छावेगः, तैः अन्विताः मिलिताः अचेतसः अज्ञानिनः मूढाः शरीरस्थं देहे विद्यमानं भूतग्रामं प्राणेन्द्रियग्रामं कर्षन्तः भोजनाद्यभावेन शोषयन्तः अन्तःशरीरस्थं माम् अन्तः शरीरं बुद्धिः तत्र सर्वप्रकाशकतया विद्यमानं मां परमात्मानं कर्षयन्तः उपवासाद्यतिश्रान्त्या कृशीकुर्वन्तः ये जनाः अशास्त्रविहितं शास्त्राप्रतिपादितं घोरं पीडाकरं तपः कृच्छ्रचान्द्रायणादिकं तपः तप्यन्ते उपवासादिना कायं ये शोषयन्ति तान् दम्भादियुक्तान् जनान् आसुरनिश्चयान् असुराणां निश्चयो येषां तान् आसुरनिश्चयान् विद्धि जानीहि। ५, ६॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः॥५॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान्॥६॥

अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति। बृहस्पते मा प्रणक् तस्य नो वधो निकर्म मन्युं दुरेवस्य शर्धतः। ऋ० २।२३।१२॥

अदेवेनेति = हे बृहस्पते! हे बुद्धिमन्! हे तत्त्वज्ञानिन्! यः पुमान् जनः अदेवेन देवान् अमन्यमानेन अप्रकाशमानेन वा शास्त्रमर्यादारहितेन वा मनसा रिषण्यति दैवीं वृत्तिं हिनस्ति। यश्च जनः उग्रः पापचित्तः मन्यमानः स्वकुलाद्यभिमानेन आत्मानं बहु मन्यमानः जनः शासां शास्त्रशिक्षां जिघांसति - हन्तुमिच्छति। तस्य आसुरवृत्तेः जनस्य वधः आयुधं शास्त्रमर्यादानाशकवृत्तिः नोऽस्मान् देवान्जीवान् मा प्रणक् मा संस्पृशतु। दुरेवस्य दुष्टगतिकस्य मन्युं दुष्टज्ञानं निष्कर्म = त्वत्प्रसादात् स्वस्मात् निराकुर्मः।

तुलना — गीतायां शास्त्रविधिं परित्यज्य दम्भेन कामरागबलैर्वा आत्मानं पीडयन्ति ते आसुरीजीवाः सन्ति, अर्थात् मनुष्याः सन्तोऽपि राक्षसाः भवन्तीत्युक्तम्। वेदेऽपि आत्महननं, दुष्टविचारः, दुष्कर्मव्यवहारः, अभिमानं दम्भः इत्यादिकं कर्म शास्त्रमर्यादां परित्यज्य मनुजः कुरुते। तथाविधैः पुरुषैः सङ्गोऽपि कदापि न कार्य इत्युक्तम्॥

आहार इति = सर्वस्य प्राणिमात्रस्य आहारः भोजनं त्रिविधः त्रिप्रकारः प्रियः भवति। एवं यज्ञः तपः तथा दानं सात्त्विकं, राजसं, तामसमिति त्रिविधः भवति। तेषाम् आहारयज्ञतपोदानानां इमम् अग्रे वक्ष्यमाणं भेदं शृणु

आयुरिति = आयुषः चिरजीवनस्य सत्वस्य अन्तःकरणस्य उत्साहस्य बलस्य देहेन्द्रियशक्तेः आरोग्यस्य रोगानुदयस्य सुखस्य चित्तप्रसन्नतायाः प्रीतेः रुच्याः विवर्धनाः वर्धकाः रस्याः रसोपेताः मधुराः स्निग्धाः स्नेहमिलिताः स्थिराः चिरस्थायिनः हृद्याः दुर्गन्धादि-दोषरहिताः मनोहराः आहाराः भोजनानि सात्त्विकप्रियाः सत्त्वगुणवि-शिष्टानां पुरुषाणां प्रियाः सन्ति ॥ ८॥

कट्विति = कटुः अतितिक्तः, अत्यम्लः आमलकरससदृशः, अतिलवणः बहुलवणोपेतः, अत्युष्णः अतितीक्ष्णः बहुमरिचादिः, रूक्षः स्नेहरहितः विदाही दाहोत्पादकः सर्षपादिः एते आहाराः भोजनानि राजसस्य रजोगुणविशिष्टस्य इष्टाः प्रियाः सन्ति। एते आहाराः दुःखशोका-मयप्रदाः तत्कालदुःखदायिनः पश्चात् शोकराजयक्ष्मादिरोगप्रदायिनः सन्ति ॥ ९॥

यातयाममिति = यातयामं याताः परिगताः यामाः प्रहराः यस्मात् तद् यातयामं, गतरसं शुष्करसं पूति दुर्गन्धि पर्युषितञ्च यत् बहुपुरा-तनं, उच्छिष्टं परभुक्तभोजनशेषम् अमेध्यम् अपवित्रं यज्ञशेष-रहितं भोजनं आहारः तामसप्रियं तमोगुणविशिष्टानां जनानां प्रियं भवति॥

अफलेति = यष्टव्यं ईश्वरप्रीत्यै अवश्यमेव यजनीयमिति मनः चित्तं समाधाय संकल्प्य अफलाकांक्षिभिः फलाकांक्षारहितैः निष्कामैः कर्मठैः विधिदृष्टः शास्त्रप्रोक्तविध्युक्तः यः यज्ञः इज्यते विधीयते स यज्ञः सात्त्विकः सत्त्वगुणविशिष्टः भवति ॥ ११॥

अभिसंधायेति = हे भरतश्रेष्ठ! हे भरतर्षभ! हे अर्जुन! फलं स्वकृतयज्ञा-दिजनितस्वर्गादिफलम् अभिसंधाय संयोज्य इज्यते क्रियते। अथ च दम्भार्थं अपि स्वमहत्तादर्शनमात्रार्थं यः यज्ञः इज्यते तं यज्ञं राजसं रजोगुणविशिष्टं विद्धि जानीहि ॥ १२।

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७॥
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९॥
यातयामं गतरसं पूति पर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १०॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११॥

XVII



* १ श्रातमिति = हे जीवात्मन्! यथा ऋत्विग् गोमहिषीदुग्धं दुग्धपात्रे स्थाने ऊधनि श्रातं परिपक्वं मन्ये। यथ भोजनं अग्नौ अग्न्याधारे श्रातं परिपक्वं मन्ये। तत् तत् नवीयः अत्यन्तं सुश्रृतं सुपक्वं ऋत यथायोगुणकरं नवीयः नूतनं सुश्रृतं सुपक्वं मन्ये। हे पुरुकृत! हे बहुकर्मन्! हे वज्रिन्! हे आयुधधारिन्! जीवात्मन्! हे इन्द्र! हे ऐश्वर्यसम्पन्न जीवात्मन्! जुषाणः सेवमानः परिपक्वं भोजनं सेवमानः त्वं माध्यन्दिनस्य मध्याह्ने सवनस्य यज्ञस्य दध्नः दधि पिब पानं कुरु॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसम्॥१२॥

१ श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रृतं मन्ये तदृतं नवीयः। माध्यन्दिन-सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः। अथ० ७।७२।३॥

२ नूतनः मंत्रः — पुण्यं भक्षीमहि क्षवम्। अथ० १९।८।५॥

३ तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे। ऋ० १०।८५।३४॥

४ घृतेन त्वं तन्वं वर्धयस्व। ऋ० १०।५९।५॥

५ तद्वो महित्वं घृतान्नावस्तु। ऋ० १०।६७।८॥

६ अप पापं परिक्षवम्॥ अथ० १९।८।५॥

७ उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम्। यदि श्रातं जुहोतन यद्यश्रातं ममत्तन। अथ० ७।७२।१

८ यत्पुरुषेण हविषा यज्ञं देवा अतन्वत। अस्ति नु तस्मादोजीयो यद्विहव्येनेजिरे। अथ० ७।५।४॥

९ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ अथ० ७।५।१॥

*१. → अर्थः = २ पुण्यमिति = वयं पुण्यं धर्मवर्धकमायुरादिवर्धकं भक्षणम् अन्नं भक्षीमहि॥

६ अपेति = पापं दूषितं यातयामादिभाजकं परिक्षवम् अन्नम् अप = दूरीकुरु।

७ उत्तिष्ठतेति = हे जीवात्मानः भोजनाय उत्तिष्ठत। इन्द्रस्य सर्वैश्वर्यसम्पन्नस्य परमात्मनः ऋत्वियं ऋत्वनुकूलं मूलफलान्नादिपदार्थस्य भागम् अवपश्यत अवलोकयत। फलाद्याम भागं मा पश्यत। यदि श्रान्तं परिपक्वमस्ति तर्हि जुहोतन भक्षयत। यदि अश्रातम् अपरिपक्वमस्ति तर्हि ममत्तन तत्पाकप्रतीक्षां कुर्वन्तः आनन्देन वसत॥

८ यदिति = देवाः अफलाकांक्षिणः विद्वांसः यत् यज्ञं पुरुषेण हविषा पुरुषात्मकहविषा आत्मसमर्पणेन अतन्वत विस्तारयन्ति कुर्वन्ति इति भावः। तस्मात् आत्मसमर्पणात् ओजीयः अधिकः श्रेष्ठः यज्ञः नु अस्ति = अपरः कः अस्ति। यत् विहव्येन विविधप्रकारैः हविर्द्रव्यैः हवनेन ईजिरे = यजन्ते अर्थात् स एव सात्त्विकः यज्ञः अस्ति।

९ यज्ञेनेति = देवाः केचित् विद्वांसः पुरुषाः यज्ञेन लौकिकयज्ञेन अर्थात् लौकिकपदार्थेन यज्ञं परमात्मानं अयजन्त पूजयन्ति। तानि धर्माणि प्रथमानि श्रेष्ठानि आसन् सन्ति। ह निश्चयोऽस्ति। ते लौकिकफलाभिकांक्षिणः पुरुषाः महिमानः संसारे महत्त्वं प्राप्नुवन्तः नाकं स्वर्गं तत्सुखं वा सचन्त प्राप्नुवन्ति। यत्र यस्मिन् स्वर्गे पूर्वे पूर्वयुगीनाः साध्याः यज्ञसाधनसंपन्नाः देवाः सिद्धाः पुरुषाः सन्ति वर्तन्ते॥

तुलना = गीतायां ऐहिकपारलौकिकसुखाभिलाषिणः जनाः यजन्ते ते रजोगुणविशिष्टाः सन्ति इत्युक्तम्। वेदेऽपि च ये याज्ञिकाः यज्ञेन

लौकिकं सुखं स्वर्गादिसुखं वा अभिलषन्ति ते इह संसारे स्वकामनां प्राप्य स्वर्गं प्राप्नुवन्ति इत्युक्तम्।

विधिहीनमिति = विधिहीनं शास्त्रविधिशून्यं, असृष्टान्नं अधिकारिभ्यः अन्नदानरहितं, मन्त्रहीनं श्रौतस्मार्तमन्त्रोच्चारणशून्यं, अदक्षिणं दक्षिणाविरहितं श्रद्धाविरहितं श्रद्धाशून्यं यज्ञं तामसं तमोगुणविशिष्टं परिचक्षते कथयन्ति॥१३

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते॥१३॥

मुग्धा देवा उत शुनायजन्तोत गोरङ्गैः पुरुधा यजन्त॥ अथ० ७।५।५॥

मुग्धा इति = मुग्धाः देवाः मूढाः याजकाः शुना कुक्कुरमांसेन उत अपि च गोः धेनोः यद्वा इन्द्रियस्य अङ्गैः यद्वा विषयैः पुरुधा बहुप्रकारं अयजन्त यजन्तो स तामसः यज्ञ उच्यते।

तुलना = गीतायां शास्त्रविधिं त्यक्त्वा स्वेच्छया यज्ञसम्पादनं तत्र अन्नादिदानाकरणम्, वेदमन्त्रोच्चारणं विहाय साधारणश्लोकानामुच्चारणं अश्रद्धया हवनम्, एवंविधं यज्ञं तामसं कथयन्ति इत्युक्तम्। वेदेऽपि च मूढानां कृत्यं मूढतां वदन्ति अर्थात् तामसी कृत्यमुच्यते। कोऽपि विद्वान् तत्कर्म श्रेष्ठं न मन्यते। दक्षिणारहितं श्रद्धयाऽनिष्पन्नं मांसहविषा युक्तं तामसं यज्ञं कथयन्तीत्युक्तम्॥

१ यद्वा = " य इमं यज्ञं मनसा चिकेत, प्र णो वोचस्तमिहेह ब्रवः।
२ यद्वा = अयं स यस्य " ऋ० १०।८।१॥
३ यद्वा = सरस्वतीं यां पितरो यजन्ते दक्षिणा यज्ञमभिनक्षमाणाः। ऋ० १०।१७।८॥
४ यद्वा = यथा ह वा इदमनोऽपुरोग वरिष्यति, एवं हैव यज्ञोऽदक्षिणो रिष्यति। तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवति अल्पिकाऽपि। ऐत० ब्रा० ८।५।८॥
५. यद्वा = हैव यज्ञोऽदक्षिणो रिष्यति तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवति अल्पिकाऽपि। ऐत० ब्रा० ६।५।८॥

१ य इति = यः मर्त्यः इमं तामसं यज्ञं चिकेत जानाति स दैवीजीवः नोऽस्मान् मनुष्यान् प्रवोचः कथयतु तं यः ब्रवः।

देवद्विजेति = देवाः अग्न्यादयः यद्वा देवः ईश्वरः द्विजाः श्रोत्रियब्राह्मणाः प्राज्ञाः ब्रह्मवेत्तारः तेषां पूजनादरसत्कारः सेवा वा, शौचं बाह्याभ्यन्तर पवित्रता, आर्जवम् सरलप्रकृतित्वं ब्रह्मचर्यं वीर्यसंरक्षणम् अहिंसा कस्यापि प्राणिनः अपीडनम् एतत् सर्वं शारीरं तपः शरीरेण निर्वर्त्यत्वात् शारीरं तप उच्यते॥१४॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥१४॥

यदग्ने तपसा तप उपतप्यामहे तपः। प्रियाः श्रुतस्य भूयास्मा युष्मन्तः सुमेधसः। अथ० ७।६१।१॥

यदग्ने इति = हे अग्ने! हे विद्वन्! तपसा तव सम्बन्धिना पर्युक्षणपरिसमूहन-

समिदाधानादिरूपेण कर्मणा यत् शारीरं तपः निर्वर्तयितुम् अस्ति तत् तपः उपतप्यामहे सात्त्विकत्वेन त्वत्समीपे तप्यामहे = अर्जयामः। यद्वा = तपसा कृच्छ्रचान्द्रायणादिरूपेण यत् तपः तपनं शरीरक्लेदनं "तपः क्लेशसहिष्णुत्वम्" इति तद्विदः। कृच्छ्रव्रतादिचरणेन यच्छरीरशोषणं तत् तपः उपतप्यामहे। तव समीपे परिचरणेन अर्जयाम इत्यर्थः। यद्वा = तप पर्यालोचने इत्यस्मात् असुन्। पर्यालोचनेन देवताविषयज्ञानेन "मनसश्चेन्द्रियाणां चैकाग्र्यं तप उच्यते" इति हि तद्विदः। सहार्थे तृतीया। तेन तपसा सहितं तपः कृच्छ्रचान्द्रायणादिरूपो नियमः। इति योग द० २।३२॥ तत् तपः हे अग्ने! त्वत्समीपे परिचरणेन तप्यामहे अर्जयामः। "तपस्तपःकर्मकस्यैव" इति कर्मकर्तरि यक् आत्मनेपदे। तेन तपसा श्रुतस्य सम्यक् अधीतस्य वेदशास्त्रादेः प्रियाः प्रियतमाः सुहृदः निवासस्थानत्वेन प्रीणयितारः आयुष्मन्तः दीर्घकालजीवनाः सुमेधसः शोभनधारणशक्तिसहिताः भूयास्म।

तुलना = गीतायां देवद्विजगुरुप्राज्ञपूजनम्, शारीरिकशुद्धिः मनसि देहे ऋजुता च, ब्रह्मचर्यपालनं अहिंसा शारीरं तप उच्यते। वेदेऽपि च शरीरेण तपश्चर्या वेदशास्त्रविध्यनुकूलता, दीर्घायुषः शुद्धबुद्धेः प्राप्तिसाधनानीत्युक्तम्।

अनुद्वेगकरमिति = अनुद्वेगकरं कठोरतारहितं सत्यं यथार्थं प्रियहितं श्रवणे प्रियं श्रवणानन्तरं कल्याणकरं यत् अस्ति यच्च स्वाध्यायाऽभ्यसनं स्वाध्यायः वेदाध्ययनं तदभ्यासः पुनः पुनरुच्चारणं एतत् वाङ्मयं वाचा निर्वर्त्यमानत्वात् वाङ्मयं तप उच्यते॥१५॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

सूनृतावन्तः सुभगा इरावन्तो हसामुदाः। अतृष्या अक्षुध्या स्त गृहा मास्मद् बिभीतन। अथ० ७।६२।६॥

सूनृतावन्त इति = हे गृहाः! हे गृहस्थाश्रमवासिनः! मुमुक्षवः जीवाः! यूयं सूनृतावन्तः "प्रियसत्यात्मिका वाक् सूनृता इत्युच्यते" तद्वन्तः प्रियसत्यवाग्मिनः सत्यप्रियहितवाक्यानां वक्तारः स्त भवत। अरिष्टादिनिमित्तवाग्राहित्येन पुत्रमित्रादिसम्पत्तिनिमित्तवाक्सहिताः भवत इत्यर्थः। सुभगाः स्त शोभनभाग्योपेताः भवत। इरावन्तः स्त = इरा अन्नं वाणी वा तद्वन्तः भवत। हसामुदाः स्त = हासेन मोदमानाः भवत। गृहस्थानां हासेन तदीयः सन्तोषोऽभिव्यज्यते, हासाभिव्यक्तसन्तोषाः भवत। अतृष्याः स्म = तृष्णाकामः तद्रहिताः भवत। अक्षुध्याः क्षुधं बुभुक्षां लोभं नार्हन्ति इति अक्षुध्याः क्षुधारहिताः निर्लोभा भवत। एतद् गुणविशिष्टाः ~~कर्म~~ भयतपोरताः यूयम् अस्मद् = गृहस्थाश्रमव्यतिरिक्तात् वीतरागात् अस्मत्तः मा बिभीतन = भयं मा प्राप्नुत।

हसामुदः = हस हसने, भावे क्विप्। तदन्तात् तृतीया हसा इति। मोदते: इगुपधलक्षणः कः। 'तत्पुरुषे कृति बहुलम्' इति बहुलग्रहणात् तृतीयायाः अलुक्। अक्षुध्याः अतृष्याः = 'क्षुत्तृष्णा शब्दाभ्याम्' 'तदर्हति' इत्यर्थे 'छन्दसि च' इति 'य' प्रत्ययः। 'स्त' = अस्तेर्लोटि मध्यमबहुवचनेन रूपम्। बिभीतन = ञिभी भये लोटि तस्य तनादेशः।

तुलना = गीतायां अनुद्वेगकरं सत्यं वाक्यं प्रियहितञ्च नित्यमेव स्वाध्यायः वाचिकं तप उच्यते। वेदेऽपि च स गृहस्थः तपते यः सत्यं प्रियं हितं वचनं भाषते, स एव प्रसादोन्मुखः तृषा बुभुक्षा विहीनः वाचिकः तपस्वी इत्युच्यते॥

मन इति = मनसः प्रसादः प्रसत्तिः केनापि केनापि विषयेण अविचलम्। सौम्यत्वं सर्वहितकर्तृत्वम् अक्रूरता वा। मौनं ध्यानपरायणः। मुनिः मुनेर्भावः मौनम्। एकाग्रवृत्त्या परमात्मचिन्तनम् इत्यर्थः। आत्मविनिग्रहः असम्प्रज्ञात समाधिना मनोनिरोधनम्। भावसंशुद्धिः भाव्यतेऽर्थो ऽनेनेति भावः अन्तःकरणम्। तस्य रागद्वेषादिदोषासंपर्कः। यद्वा व्यवहारकाले कपटराहित्यम्। इत्येतत् तपः मानसं मनएकसाध्यत्वात् मानसमुच्यते मुनिभिः कथ्यते।१६।

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥१६॥

१ अग्ने तपस्तप्यामहे उप तप्यामहे तपः।
श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः। अथ० ७।६१।२

२ यद्वा = यज्ञं यन्तं मनसा बृहन्तमन्वारोहामि तपसा सयोनिः। उपहूता अग्ने। जरसः परस्तात् तृतीये नाके सधमादं मदेम। अथ० ६।१२२।४॥

१ अग्ने इति = हे परमात्मन्! वयं मानसिकतपस्विनः तपः मनःप्रसादसौम्यत्वमौनात्मकं मानसं तपः नियमं तप्यामहे अर्जयामः। उपतप्यामहे तव समीपमागन्तुं तादृशं भावशुद्ध्यात्मकं तपः साधयामः। तेन मानसेन तपसा श्रुतानि सम्यक् अधीतानि वेदशास्त्रादीनि शृण्वन्तः कर्णाभ्याम् आकर्णयन्तः मनसा मन्यमानाः वेदशास्त्रश्रवणमननाद्धेतोः वयमायुष्मन्तः दीर्घकालजीविनः सुमेधसः समीचीनधारणशक्तियुक्ताश्च भूयास्म इति शेषः।

२ यद्वा = यज्ञमिति = तपसा तपोयुक्तेन मनसा यन्तं गच्छन्तं बृहन्तं बृहत्तमं यज्ञं सयोनिः समानस्थाने उत्पन्नः सन् अहं अनु = अनुकूलतया आरोहामि आरोहणं करोमि प्राप्नोमीत्यर्थः। हे अग्ने! हे परमात्मन्! जरसः वृद्धावस्थातः परस्तात् परं उपहूताः अमृत्युं प्राप्ताः सन्तः तृतीये स्वर्गधामनि सधमादम् सहैव स्थित्वा मदेम सुखं प्राप्नुमः।

तुलना = गीतायां मनस उपरतिः, सौम्यत्वम्, मौनम्, मनसोऽवग्रहः, मानसिकवृत्तिशुद्धता मानसं तप उच्यते। वेदेऽपि च वेदशास्त्रश्रवणमनननिदिध्यासनम् मानसिकं तप उच्यते। मानसिकयत्नेन परमधामप्राप्तिः रपि जायते इत्युक्तम्।

श्रद्धयेति = युक्तैः परमात्मनि ध्यानपरैः अफलाकांक्षिभिः स्वकृत यज्ञादिकर्मफलाभिलाषाशून्यैः नरैः मनुष्यैः परयोत्कृष्टया श्रद्धया त्रिविधं मनसा वाचा

कायेन कृतं त्रिप्रकारकं तप्तं तपः सात्त्विकं सत्त्वगुणविशिष्टं परिचक्षते कथयन्ति ॥१७॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।
अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥

1 श्रद्धायाः दुहिता तपसोऽधिजाता स्वसा ऋषीणां भूतकृतां बभूव। सा नो मेखले मतिमा धेहि मेधामथो नो धेहि तप इन्द्रियञ्च॥ अथ० ६।१३३।४॥

2 यद्वा = तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः। विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये। ऋ० १।८५।७॥

1 श्रद्धाया इति = श्रुतिस्मृत्यादिवचनेषु आस्तिक्यबुद्धिः श्रद्धा तस्याः दुहिता पुत्री सात्त्विकतपश्चर्या अस्ति। सा च सात्त्विकतपश्चर्या तपसोऽधिजाता सृष्ट्यादौ ब्रह्मणः तपसः उत्पन्ना। यद्वा परया श्रद्धया कृतेन तपसाऽधिजायते। अतः भूतकृतां भूतग्रामस्य स्वायत्तकर्तॄणां ऋषीणां कृतकर्मफलाकांक्षाशून्यानां परमात्मभक्तियुक्तानां मुनीनां स्वसा सहोत्पन्ना बभूव अस्ति। लकारव्यत्ययः। हे मेखले। तपश्चर्यायां मनोबन्धनकर्त्रि! रज्जुस्वरूपे! हे मते! सा चित्तैकाग्र्यकर्त्री सात्त्विकी तपश्चर्या त्वं नोऽस्माकं सात्त्विकतपोवृत्तिमतां मतिं आगामिगोचरां बुद्धिं आधेहि आभिमुख्येन कुरु। तथा मेधां श्रुतधारणसमर्थां बुद्धिं आधेहि धारय। अथो अपि च तपः सात्त्विकनियमविशेषं कायिकं वाचिकं मानसं तपः इन्द्रियं इन्द्रस्य आत्मनः लिङ्गं सत्त्वस्वरूपं नः अस्माकं ~~सात्त्विकं~~ धेहि धारणं कुरु अर्थात् प्रदानं कुरु।

तुलना = गीतायां फलाकांक्षाविहीनः श्रद्धान्वितः कायिकं वाचिकं मानसिकं तपः सात्त्विकं कथयन्तीत्युक्तम्। वेदेऽपि सात्त्विकवृत्तिः सात्त्विकतपश्चर्या च श्रद्धादुहिताऽस्ति ऋषिभिः सहोत्पन्ना स्वाभाविकी ऋषीणां मतिः सात्त्विकवृत्त्या कृतं तपः सात्त्विकं विद्वांसः कथयन्तीत्युक्तम्।

सत्कारेति = सत्कारमानपूजार्थं सत्कारार्थं स्वस्तुत्यर्थं मानार्थं अभ्युत्थानादिसम्मानार्थं पूजार्थं स्वदेहादिसेवार्थं दम्भेन वेषभूषादिप्रकाशनेन यत् तपः क्रियते विधीयते तत् तपः इह अस्मिन् लोके सत्कारप्रभृतिदायकं भवति न तु परलोके। तत् तपः अध्रुवम् अदृढं चलं सामयिकफलप्रदं यत् तपः अस्ति तत् तपः राजसं रजोगुणविशिष्टं पण्डितैरुक्तम् ॥१८॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारं च हरासि मे निहारन्निहराणि ते स्वाहा। यजु० ३।५०॥

देहीति = हे मित्र! स्वाहा = सम्यक्तया अग्र भवान् कथयति। मे मह्यं प्रथमं देहि ततः ते तुभ्यं नि=नितरां ददामि देयं पदार्थं यच्छामि। मे मम प्रथमं धेहि धारय पश्चात् अहमपि ते तुभ्यं पदार्थं नि=नितरां दधे धारये। मे मह्यं निहारं नितरां हरणं निहारः अवश्यकर्तव्यमुच्यते। यद्वा = मूल्येन –

क्रेतव्यं वस्तु नि=नितरां ह्रियते इति। निहारं=मूल्येन क्रेतव्यं वस्तु। च=समुच्चये। हरासि=हरसि, गृह्णासि त्वमिति। अहमपि ते तुभ्यं निहारं पदार्थमूल्यं निहराणि-नि=नितरां प्रयच्छानि। सर्वमेतद् इज्यागुणविशिष्टं अर्थात् राजसमस्ति।

तुलना= गीतायां स्वसत्कारार्थं स्वमानार्थं स्वपूजार्थं पाखण्डेन यत्तपः क्रियते तद्राजसं तप उच्यते। वेदेऽपि वस्तु दत्वा वस्तुग्रहणं स्वार्थमुद्दिश्य अन्यदानं राजसं तप उच्यते।

मूढेति = मूढग्राहेण विवेकाविवेकज्ञानशून्यः मूढः तस्य ग्राहः ग्रहणं तेन मूढग्राहेण अत्यन्ताविवेकबुद्ध्या आत्मनः स्वस्य पीडया देहक्लेशेन यत् त्रिविधं कायिकं वाचिकं मानसं तपः क्रियते वाऽथवा परस्य शत्रोः उत्सादनार्थं विनाशार्थं यत् तपः क्रियते तत् तपः तामसं तमोगुणविशिष्टं उदाहृतं कथितमिति। १९॥

मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

दीर्घतमा मामते यो जुजुर्वान् दशमे युगे। अपामर्थं यतीनां ब्रह्मा भवति सारथिः॥
ऋ० १।१५८।६॥

दीर्घतमा इति = दीर्घतमाः दीर्घं बहु तमः अज्ञानं मूढता यस्य तथाभूतः दीर्घतमाः अतिशयेन तमोगुणविशिष्टः यद्वा मूढतमः मामतेयः ममतायाः 'अहं महान् प्रकृष्टोऽस्मि, अयं मत्तो हीनतरः' इत्यभिमानस्य पुत्रः मामतेयः बहु अभिमानयुक्तः पुरुषः जुजुर्वान् विषयसेवनैः अतीव जीर्णः सन् अर्थं मूढैः पुरुषैः अर्थ्यमानं धनादि लौकिकीं सम्पत्तिं यद्वा = परोत्सादनादिकं यतीनां प्राप्नुवतीनां अपाम् अपसां सांसारिककर्मणां सारथिः वाहकः दशमे युगे दशयुगपर्यन्तं बहुकालं यावदित्यर्थः। ब्रह्मा तत्र दृढतरः भवति अर्थात् बहुकालं यावत् विषयोपभोक्ता तमः प्राकृतिकः भवति॥

तुलना = गीतायां स्वदेहमिन्द्रियाणि वा संपीड्य शत्रुविनाशार्थं वा यत् कर्म क्रियते तत् तामसं तप उच्यते। वेदेऽपि महामूढः ममतायाः पुत्रः विषयसेवनेन जर्जरीभूतः संसारे दुष्कृत्येषु अग्रणीः तामसीं क्रियां कुर्वन् तामसः पुरुषः उच्यते तत्कर्म च तामसमुच्यते।

दातव्यमिति = दातव्यं दातुं योग्यं यद्दानं अनुपकारिणे दानानन्तरं उपकारकर्तृत्वहीनाय देशे योग्यस्थाने, काले समये, पात्रे अधिकारिणि च दीयते तत् दानं सात्त्विकं सत्त्वगुणविशिष्टं विदुः कथयन्ति ॥२०॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥२०॥

१ आर्षेयेषु निदध्य ओदन त्वा नानार्षेयाणामप्यस्त्यत्र। अग्निर्मे गोप्ता मरुतश्च सर्वे विश्वेदेवा अभिरक्षन्तु पक्वम्। अथ० ११।१।३३॥

२ यद्वा = न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः। इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति। ऋ० १०।१०७।८॥

३ यद्वा = पृणीयादिन्नाधमानाय तव्यान् द्राघीयांस मनुपश्येत पन्थाम्
ओहि वर्तन्ते रथ्येव चक्रा ऽन्यमन्यमुपतिष्ठन्त रायः। ऋ० १०।११७।५॥
४ यद्वा = त्वमग्ने प्रयत दक्षिणं नरं वर्मेव स्यूतं परिपासि विश्वतः।
स्वादु क्षद्मा यो वसतौ स्योनकृज्जीव याजं यजते सोपमा दिवः॥ ऋ० १।३१।१५॥
१ आर्षेयेषु इति = हे ओदन! हे पात्रदेवान्न! त्वा त्वां आर्षेयेषु = ऋषिगुणवत्सु पात्रेषु ब्राह्मणेषु धारयामि। अत्र अस्मिन् दाने अनार्षेयाणाम् = ऋषिगुणैः शून्यानां कुपात्राणां अपि संभावनापि नास्ति न विद्यते अपिः संभावनार्थः। अग्निः अग्रणीः देवः परमात्मा मे मम गोप्ता = "गुपू रक्षणे" गोपायिता रक्षिताऽस्ति। तथा सर्वे सप्तगणात्मकाः मरुतः मरुत्संज्ञकाः देवाः मम गोप्तारः सन्ति। अपि च विश्वे सर्वे देवाः मित्रवरुणार्यमादयः पक्वं पचनेन संस्कृतं इमं ओदनं अभिरक्षन्तु अभितः पालयन्तु। गोप्ता = 'गुपू रक्षणे' तृचि "आयादय आर्धधातुके वा" इति आय् प्रत्ययाभावः। पक्वम् = पचेः कर्मणि निष्ठा "पचो वः" इति वः।
२ यद्वा = नेति = भोजाः भोजयितारः पात्रे धनदातारः न मम्रुः न म्रियन्ते। सर्वदा तन्नाम जगति तिष्ठति। यद्वा देवत्वं भजन्ते। अत एव न्यर्थं श्वादिनिकृष्टां गतिं नेयुः न प्राप्नुवन्ति, तथा न रिष्यन्ति कैश्चिदपि हिंसिताः न भवन्ति। ~~ह प्रसिद्धौ। किञ्च इदं दृश्यमानं विश्वं सर्वं~~ अत एव भोजाः दातारः न व्यथन्ते परस्परं न भीताः न बाधिता वा भवन्ति। ~~अत एव~~ ह प्रसिद्धौ। किञ्च इदं दृश्यमानं विश्वं सर्वं भुवनं भूतजातमस्ति। स्वः स्वर्गलोकञ्च एतत् सर्वं दक्षिणा स्वयम् एभ्यः तद्दातृभ्यो ददाति प्रयच्छति। न्यर्थम् = ऋ गतौ — "उषिकुषिगार्तिभ्यः स्थन्"। ईयुः = इण् गतौ, लिटि दीर्घः इणः किति' इति दीर्घः। ऋध्यन्ति = कर्मणि व्यत्ययेन परस्मैपदम्।
३ यद्वा = पृणीयादिति = तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानाय अतिथये पृणीयात् इत् धनानि दद्यात् एव। द्राघीयांसं दीर्घतमं पन्थां पन्थानं सुकृतमार्गं अनुपश्येत अवलोकयेत। तत्र कारणमाह। रायः धनानि। ओहि = आ उ वर्तन्ते खलु एकत्र न तिष्ठन्ति दृष्टान्तमाह = रथ्या इव, रथ्या रथ्यानि रथसम्बन्धीनि चक्राणि उपर्यधोभावेन आवर्तन्ते। तद्वत् अन्यं पुरुषं धनानि उपतिष्ठन्ते समवेतानि भवन्ति। "उपाद्देवपूजासंगतिकरणदानेषु" इत्यात्मनेपदम्। तस्माद्धनानि देयानीति भावः। पृणीयात् = "पॄ पालनपूरणयोः" ~~क्र्यादिः~~। "प्वादीनां ह्रस्वः"। द्राघीयांसम् = दीर्घशब्दादीयसुनि — "प्रियस्थिर —" इत्यादिना द्राघित्यादेशः। अनुपश्येत् = व्यत्ययेन आत्मनेपदम्। रथ्या = "रथाद्यत्" इति तस्येदमर्थे यत्॥

तुलना = गीतायां सुदेशे सुसमये सुपात्रे यातव्यदानं सात्विकदान

XVII



मुच्यते। वेदेऽपि सात्त्विकदानदातॄणां पुरुषाणां नाम चिरं तिष्ठति।
दानेन तच्चित्तं प्रसीदति। धनमस्थिरं मन्वानाः तेन ध्रुवं पदं
लभन्ते। सात्त्विकदानं सर्वोत्तमं गण्यते इत्युक्तम्।

५ यद्वा= त्वमग्ने इति = हे अग्ने! त्वं प्रयतदक्षिणं दानस्य दातारं नरं
स्यूतं ओतप्रोतं वर्म इव कवचमिव विश्वतः सर्वतः परिपासि संरक्षसि।
स्वादुक्षद्मा = उत्तमान्नवान् यः दाता वसतौ स्ववासस्थाने स्योनकृत् सुख-
दायी सन् जीववाजं जीवेभ्यः वाजं अन्नं यजते करोति सः दिवः स्वर्गस्य उपमा असि।

६ नूतनमंत्रः—"त्वमिन्द्र शर्म रिणा हव्यं पारावतेभ्यः। विप्राय स्तुवते
वसु निं दुरश्रवसे वह"। अथ० २०।१३५।११

६ त्वमिति = हे इन्द्र! हे जीवात्मन्! त्वं पारावतेभ्यः परब्रह्मशरणप्राप्तेभ्यः
विद्वद्भ्यः शर्म=सुखकारकं हव्यं अन्नं धनञ्च रिणाः = ऋणाः = देहि। तथा
दूरश्रवसेभ्यः अतिविख्यातेभ्यः बहुश्रुतेभ्यः स्तुवते परमात्मनः भक्ताय विप्राय
मेधाविने ब्राह्मणाय वसु धनं निवह प्रापय देहि वा।

७ यद्वा= "सर्वं तं तनुमन्वैके तरन्ति स पचामि स ददामि स यजे स दत्तान्मा
यूषम्॥ अथ० ६।१२३।४॥

७ स इति = स अहं पचामि अन्नपाककर्म करोमि। स अहं ददामि दानकर्म करोमि,
स अहं यजे=यज्ञकर्म करोमि। स अहं दत्तात्=दानप्रधानात् मा यूषम्=पृथक् न भूयासम्।

८ यद्वा = ततं तनुमन्वेके तरन्ति येषां दत्तं पित्र्यमायनेन। अबन्ध्वेके ददतः प्रयच्छ-
न्तो दातुं चेच्छिक्षान्त्स स्वर्ग एव॥ अथ० ६।१२२।२॥

८ ततमिति = एके जनाः ततं विस्ततं तन्तुं यज्ञसूत्रं यद्वा दानमयं तन्तुं अनुतरन्ति =
अनुकूलतया वर्तमानाः संसारसमुद्रात् अवतरन्ति। येषाम् आयनेन प्राप्त्या पित्र्यं
पितृभ्यः देयं ऋणं दत्तम्। एके पुरुषाः अबन्धुः बन्धून् विहाय ददतः दानं ददति अर्थात्
अयं बन्धुरिति ज्ञात्वा तेभ्यः दानं न यच्छन्ति अन्यः पुरुषोऽयमिति ज्ञात्वा तेभ्यः दानं
न गच्छन्ति अन्यः पुरुषोऽयमिति ज्ञात्वा प्रयच्छन्तः बन्धुभिन्नेभ्यः पुरु-
षेभ्यः दानं कुर्वन्तः इत एव दातुं शिक्षान् समर्थाः भवन्ति चेत् तर्हि स तत् दानं
स्वर्ग एव अर्थात् तेन दानेन स्वर्गसुखं लभ्यते।

यत्त्विति = यत् दानं तु प्रत्युपकारार्थं स्वस्मिन् उपकारत्व प्राप्तये वा अथवा
पुनः फलं कमपि लाभम् उद्दिश्य लक्ष्यीकृत्य दीयते पुनश्च दानानन्तरं परिक्लिष्टं
लोभातिशयेन अन्तःकरणक्लेशसंयुक्तं यद्दानमस्ति तद्दानं राजसं रजोगुणवि-
शिष्टं उदाहृतं मुनिभिः कथितम्।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम्॥ २१॥

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय। अरमस्मै भवति यामहूता
उतापरीषु कृणुते सखायम्। ऋ० १०।११७।३॥

२ यद्वा = देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने। यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः॥ ऋ. ६।७१।२॥

३ यद्वा = ~~देवस्य वयं सवितु~~ देवा ददत्वासुरं तद्वो अस्तु सुचेतनम्। युष्माँ अस्तु दिवे दिवे प्रत्येव गृभायत। अथ. २०।१३५।१०॥

१ स इत् इति = स एव भोजः दाता राजसोऽस्ति यः गृहवे प्रतिगृहीत्रे अन्नकामाय अन्नं याचमानाय चरते गृहमागतवते कृशाय दरिद्राय दारिद्र्येण क्षीणाय अन्नं ददाति प्रयच्छति। यामहूता = यामहूतौ यामाः गन्तारो देवाः ते आहूयन्ते अत्रेति यामहूतिः यज्ञः तस्मिन् यज्ञे अस्मै रजोगुणविशिष्टाय दात्रे अलम् अरम् अलं पर्याप्तं भव- ति कामप्रदानं भवतीत्यर्थः। अतः अपि अपरीषु अन्यासु प्रजासु सखायं सख्यं कृणुते करोति। तस्य सर्वे नराः सखाय एव भवन्ति न शत्रवः। गृहवे = गृहे, मृगय्वादित्वात् कु प्रत्- ययः। यामहूतौ = यातेः "अर्तिस्तुसुहुसृ—" इत्यादिना मन् प्रत्ययः। अपरीषु = "केवल- मामक—" इति ङीप्।

२ देवस्येति = हे परमात्मन्! वयं राजसाः निदातारः पुरुषाः सवितुः जगदुत्पा- दकस्य देवस्य ज्योतिःस्वरूपस्य तव परमेश्वरस्य सवीमनि = प्रसवे सृष्टौ अनुज्ञा- ने वा, यथाह यास्कः = "सवीमनि प्रसवे" (निरु. ६।७॥) श्रेष्ठे अतिशयेन प्रशस्ते वसुनः धनस्य दावने दाने स्याम समर्थाः भूयास्म। यः त्वं परमेश्वरः विश्वस्य सर्वस्य द्विपदः मनुष्यादेः भूमनः भूरेश्चतुष्पदः चतुष्पादस्य पश्वादेश्च निवेशने स्वस्वकर्मपालनाय स्थितौ प्रसवे उत्पादने च तत्तत्कर्मानुसारं असि स्वतंत्रः असि।

३ यद्वा = देवा इति = देवाः दानिपुरुषाः आसमन्तात् वरं वरणयोग्यं सर्वश्रेष्ठं धनं ददतु दानं कुर्वन्तु। तत् = तद्धनम् वः युष्मान् विदुषः पुरुषान् सुचेतनम् = सम्यक्तया चेतनताकारकं अस्तु। दिवे दिवे प्रतिदिनं युष्मान् पुरुषान् अस्तु तद्धनमेवास्तु। अथ च भवान् तद्धनं प्रतिगृभायत एव = स्वीकरोतु एव इति।

तुलना = गीतायां यद्दानं कमपि प्रत्युपकारमुद्दिश्य दीयते अर्थात् "एतत्पदार्थं दत्वा अस्मात् इमं पदार्थं ग्रहीष्यामि" यद्वा कमपि लाभं मनसि निधाय मनःक्लिष्ट- कारकं यद्दानं दीयते तद्राजसं दानमुच्यते इति कथितम्। वेदेऽपि दानग्रहीतुः पार्श्वे न गत्वा इच्छेत् मत्पार्श्वे ऽत्रैव यः समेत्य दानं ग्रहीष्यति तद्दास्यामीति निश्चित्य गृहमा- गताय यद्दानं दीयते तद्राजसदानमुच्यते इत्युक्तम्।

अदेशेति = अदेशकाले ऽस्वच्छस्थाने कुसमये च अपात्रेभ्यः पात्रत्वशून्येभ्यः जनेभ्यः असत्कृतं सत्काररहितं पूजारहितमित्यर्थः। अवज्ञातं "गृहाण एतत्" इत्यवमानपूर्वकं यत् दानं दीयते तत् दानं तामसं तमोगुणविशिष्टं उदा- हृतं कथितम्॥२२॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्॥२२॥

"बभ्रे रक्षः समदमा वपेभ्यो ऽब्राह्मणा यत मे त्वोपसीदान्। पुरीषिणः

प्रथमाना: पुरस्तादार्षेयास्ते मारिषन् प्राशितारः। अथ० ११।१।३२॥

बभ्रे इति = हे बभ्रे। हे भरणशील! हे अन्न! अब्राह्मणा: ब्रह्मज्ञानशून्या: पामरा: कुपात्रा: यतमे ये त्वा त्वाम् उपसीदान दानग्रहणार्थं तदनुप्राशनार्थम् उपसन्ना: भवेयु:, एभ्य: अब्राह्मणेभ्य: कुपात्रेभ्य: रक्ष:समदं रक्षोजात्या सह दुष्टजीवैः सह मदनं यद्वा समानं माद्यन्ति अस्मिन् इति समत् संग्राम:। राक्षसै: दुष्टजीवैः सह कलहम् आवप प्रक्षिप। राक्षसकृतां पीडां प्रापयेत्यर्थ:। कुपात्रदाननिन्दां कृत्वा सुपात्रदानं प्रशंसति = ये तु आर्षेया: ऋषिगुणयुक्ता: पुरीषिण: पृणाति पूरयति वा पुरीषं प्रजापश्वादिकं तद्वन्त: प्रजापश्वादिपालका:। यास्कस्तु = "पुरीषं पृणातेः पूरयतेर्वा (निरु० २।२२)। "प्रजा वै पशव: पुरीषम्" - "प्रजयैवैनं पशुभि: पुरीषवन्तं करोति" तै० सं० २।६।४।३॥ अत एव प्रथमाना: लोके दानादिभि: प्रसिद्धिं प्राप्ता: ते तव प्राशितार: पात्रत्वेन भोक्तार: मारिशन् हिंसां मा प्राप्नुवन्तु। बभ्रे = डुभृञ् धारणपोषणयो:। "आदृगमहनजन: किकिनौ लिट् च" इति कि प्रत्यय:। यतमे = "वा बहूनां जातिपरिप्रश्ने" इति यच्छब्दात् उतमच्। तदन्तस्य सर्वनामसंज्ञायां जस: शीभाव:। रिषन् = रिष हिंसायाम्॥

कालनिषेधे शंखस्मृतौ = "आहारं मैथुनं निद्रां सन्ध्याकालेषु वर्जयेत्। कर्म चाध्ययनं चैव तथा दानप्रतिग्रहौ"॥ स्कन्दपुराणे यथा = "रात्रौ दानं न कर्तव्यं कदाचिदपि केनचित्। हरन्ति राक्षसा: यस्मात् तस्माद्दातुर्भयावहम्"।

अपात्रलक्षणमाह = गोपालांश्च वाणिजकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्"॥ तथा च यमस्मृतावपि = "व्यपेता: स्वनिजकर्मभ्य: परपिंडोपजीविन:। द्विजत्वमभिकांक्षन्ति तांश्च शूद्रवदाचरेत्"॥ "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्"॥ व्यासशातातपावपि यथाऽऽहतु: = "नष्टे शौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्"॥ मनुरप्याह = "पात्रभूतो हि यो विप्र: प्रतिगृह्य प्रतिग्रहम्। असत्सु विनियुञ्जीत तस्य देयं न किञ्चन"॥

तुलना = गीतायां कुपात्रकुदेशकुकाले दानं तामसमुच्यते। वेदे तु अन्नं कुपात्रं न जिगमिषति, सुपात्रसम्बन्धमीहते इति कथितम्।

ओं तदिति = ओम् तत् सत् इति ब्रह्मण: परमेश्वरस्य निर्देश: = निर्दिश्यते इति निर्देश: = नाम त्रिविध: त्रिप्रकारक: स्मृत: कथित:। तेन नामत्रितयेन परमात्मना ब्राह्मणा: ब्राह्मणवर्णोत्पन्ना:, वेदा: ऋगादयश्चत्वारो वेदा: यज्ञा: श्रौता: स्मार्ता: सर्वे यज्ञा: पुरा सृष्ट्यादौ विहिता: विरचिता:॥२३

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविध: स्मृत:।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिता: पुरा॥ २३॥

"त्रिभिष्ट्वं देव सवितर्वर्षिष्ठै: सोम धामभि:। अग्ने दक्षै: पुनीहि न:। ऋ० ९।६७।२६॥

२ यद्वा = त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः।
अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः॥
ऋ॰ ४।१।७॥

१ त्रिभिरिति = हे देव! हे देदीप्यमान! हे स्तुत्य! हे सवितः! हे सर्वजगदुत्पादयितः! हे सोम! हे पवमान गुणविशिष्ट! हे पतितपावन! हे अग्ने! हे ज्योतिःस्वरूप! हे परमात्मन्! त्वं वर्षिष्ठैः सर्वेभ्यः श्रेष्ठैः वृद्धतमैर्वा दक्षैः सर्वसामर्थ्यविद्भिः त्रिभिः "ओम्, तत्, सत्, इति त्रिसंख्याकैः धामभिः, नामभिः 'धाम नाम भवति' यथाह यास्कः = "धामानि त्रयाणि भवन्ति। स्थानानि, नामानि, जन्मानीति" (निरु॰ ९।२८)। नः अस्मान् भक्तान् पुनीहि पवित्रीकुरु परिशुद्धान् कुरु॥

२ त्रिरस्येति = देवस्य प्रकाशमानस्य ज्योतिःस्वरूपस्य अस्य अग्नेः अस्य परमात्मनः तानि त्रिः "ओम्, तत्, सत्, इति प्रसिद्धानि परमा परमाणि अत्युत्तमानि सत्या सत्यानि सत्यस्वरूपाणि सर्वदा स्थिति मन्ति जनिमानि जगदुत्पादकानि त्रिः = "ओं तत्, सत् इति त्रिनामानि स्पार्हा = सर्वैः स्पृहणीया सन्ति। अनन्ते हृदयाकाशे अन्तर्मध्ये स्वतेजसा परिवीतः परिवेष्टितः शुचिः सर्वस्य शोधकः, शुक्रः दीप्यमानः दीप्तियुक्तः, ज्योतिःस्वरूपः, अतएव रोरुचानः भृशं दीप्यमानः, अर्यः सर्वस्वामी = "अर्यः स्वामिवैश्ययोः"। परमात्मा आ + अगमत् = आ समन्तात् अस्माकं हृदये आगच्छतु। सत्या = "शेश्छन्दसि बहुलम्" इति शेर्लुक्। परिवीतः = 'व्येञ् संवरणे', कर्मणि क्तः। यजादित्वात् सम्प्रसारणम्। अर्यः = "ऋ गतौ" इति यत्प्रत्ययान्तो निपातितः॥

तुलना = गीतायां आब्रह्मभुवनात्सर्वे सुखाः लोकाः सर्व शुभकर्मारम्भे "ओं तत् सत् इति परमात्मनः नामत्रयं गृहीत्वा कार्यं विदधाति येन सर्वाणि कर्माणि निर्विघ्नं समाप्नुवन्ति इत्युक्तम्। वेदेऽपि च — "ओं तत् सत्, इत्युच्चार्य कार्यं कुर्वन्ति तेषां कार्यं कुर्वन्ति तेषां कार्यं निर्विघ्नं समाप्नोति इत्युक्तम्॥

तस्मादिति = ओं तत् सत् इति नामत्रितयपवित्रत्वात् — 'ओं' — सर्वकर्मारम्भे "ओम्" इति नाम उदाहृत्य उच्चार्य ब्रह्मवादिनां वेदतदर्थज्ञानां ब्राह्मणानां विधानोक्ताः विधिप्रोक्ताः यज्ञदानतपःक्रियाः; यज्ञक्रिया, दानक्रिया, तपःक्रिया, एतास्तिस्रः क्रियाः त्रीणि कर्माणि सततं सर्वदा प्रवर्तन्ते प्रकर्षेण वर्तन्ते॥२४॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥२४॥

यस्मात् कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम्।
कृतमिष्टं ब्रह्मणो वीर्येण तेन मा देवास्तपसावतेह॥ अथ॰ १९।७२।१॥

यस्मादिति = यस्मात् कोशात् सर्ववर्णमन्त्रायतनत्वात् संचयात् महतः ओंकारात् "कोशः कुष्णातेः, विकुषितो भवति, अयमपीतरः कोशः एतस्मादेव, संचयः आचितमात्रो महान् भवति (निरु॰ ५।२६)। वेदं = विदन्त्यनेन प्रत्यक्षानुमानविषयम् उपायमिति वेदः तं श्रौतस्मार्तसकलकर्मप्रतिपादकमन्त्रब्राह्मणरूपं वेदम् उदभराम उद्धृतवन्तः कर्मानुष्ठानार्थं प्रथमम्

"ओम्" इत्युच्चारितवन्तः स्मः। तस्मिन् कर्मानुष्ठातरि जने एनं तं एतम्
अन्वादिष्टम् ओंकारनामानं ~~स्वमुखात्~~ अन्तः कर्मारम्भमध्ये अवदध्मः
पुनः स्थापयामः। कर्मप्रयोगार्थं स्वमुखात् ओंकारो~~च्चारणपूर्वकं कर्मानु-
ष्ठानेन~~ पूर्विकाः उच्चारिताः वर्णरूपाः मंत्राः तथैव यदि निस्सरेयुः तर्हि
उत्तरकाले मंत्राभावेन ओंकारोच्चारणपूर्वकं कर्मानुष्ठानं न भवेदिति
पुनः पूर्वोक्तः ओंकारात्मकः कोशः एव प्रतिपादितः। ब्रह्मणः देशकालवस्तु-
परिच्छेदशून्यस्य ओंकारस्वरूपस्य परमात्मनः वीर्येण वीर्यरूपेण ओंकारोच्चा-
रणेन कृतं ब्रह्म यज्ञदानतपः~~क्रिया~~ प्रभृतिकं निष्पादितं कर्म इष्टं स्वाहावौषडादि-
शब्दैः "तवेदं, न मम" इत्यादिदानैः कृच्छ्रचान्द्रायणादितपोभिः सम्पादितं प्रियं
श्रेष्ठं वा भवति। हे देवाः! हे परमात्मन्! तेन ओंकारोच्चारणपूर्वककर्मानुष्ठान-
जन्येन तपसा कर्मफलेन मा माम् ओंकारोच्चारणपूर्वकं सर्वकर्मानुष्ठातारं
अवत रक्षत। अथवा तपः पर्यालोचनम्। तेन ब्रह्मपर्यालोचनेन मां संतर्पय।
उदभराम = हरतेः रूपम्। "हृग्रहोर्भः" इति भत्वम्॥ प्रश्नोप० प्र० ५ श्लो० १-५॥
"अथ हैनं शैब्यः, सत्यकामः पप्रच्छ = स यो ह वै तद्भगवन् मनुष्येषु
प्रायणान्तमोंकारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति॥
तस्मै स होवाच = "एतद्वै सत्यकाम! परञ्चापरञ्च ब्रह्म यदोंकारः। तस्माद्विद्वाने-
तेनैव यत्नेनैकतरमन्वेति"॥ "स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितः
तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा
ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति। अथ यदि द्विमात्रेण मनसि
संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्, स सोमलोके विभूतिम-
नुभूय पुनरावर्तते॥ यः पुनरेतं त्रिमात्रेणेत्येतेनैवाक्षरं परं पुरुषं अभि-
ध्यायीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदरः त्वचा विनिर्मुच्यते,
एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्मात्
जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते।

तुलना = गीतायां यज्ञतपोदानादिकर्मारम्भे 'ओं तत् सत्' इत्युच्चार्य कर्म
आरब्धव्यम् प्रत्येककर्म विदुषा कारयितव्यम् यतः सर्वमांगलिकपदार्थेषु
सच्छब्दप्रयोगो विधीयते इत्युक्तम्। वेदेऽपि च ओंकाराद्वेदः प्रादुर्भूतः। ओं-
कारः वर्णकोशः। ओंकारनाम्ना आरब्धं कर्म निर्विघ्नं समाप्यते। तत्र कापि
विगुणता नोपपद्यते इत्युक्तम्।

तदिति = हे अर्जुन! मोक्षाकांक्षिभिः मोक्षाभिलाषयुक्तैः ब्राह्मणैः फलं
स्वकृतकर्मजन्यं फलम् अनभिसंधाय फलाभिसंधिं अकृत्वा यज्ञतपः-
क्रियाः श्रौतादिकाः यज्ञक्रियाः शारीरिकक्लेशभूताः तपःक्रियाः विविधाः
नानाप्रकाराः दानक्रियाः कन्यागोदानादीनि कर्माणि "तत्" इति पदप्रयो-
गेण क्रियन्ते विधीयन्ते॥

XVII



तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥२५॥

१ तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि। ऋ० ५।८२।१॥

२ यद्वा = तदु चुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत्। उपप्रयन् दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे। ऋ०१।१०।४॥

१ तदिति = हे परमात्मन्! भगस्य सर्वैः भजनीयस्य देवस्य स्वप्रकाशेन द्योतमानस्य सवितुः जगदुत्पादकस्य परमात्मनः भोजनं सर्वैः कर्मिभिः भोग्यं स्वस्वकर्मारम्भे व्यवहरणीयम् श्रेष्ठं प्रशस्यं सर्वधातमं सर्वपदार्थधारकं तुरं पापहिंसकं "तत्" इति नाम धीमहि ध्यायेमहि धारयामः ॥

२ तदुचुषे इति = परब्रह्मणः 'तद्' इतिनाम उचुषे सर्वकर्मारम्भे उक्तवते यजमानाय कीर्तेन्यं लोके लौकैः कीर्तनीयं यशः बिभ्रत् धारयन् मघवा पूज्यः परमात्मा मानुषा मानुषाणि मनुष्याणां सम्बन्धीनि इमा = इमानि युगानि अहोरात्रनिष्पाद्यानि श्रौतस्मार्तकर्माणि निष्पादयतीति शेषः। वज्री = दुर्जनदण्डविधानाय वज्रधारी, सूनुः = सर्वजगदुत्पादकः परमात्मा, यत् ह = यत् खलु नाम "तत" इतिनाम दस्युहत्याय = दस्यूनां पापस्वरूपाणां शत्रूणां हत्याय = हननाय उपप्रयन् कर्मानुष्ठातृसमीपमागच्छन्। श्रवसे कल्याणाय जयलक्षणाय यशसे वा दधे = धृतवान्। उचुषे = ब्रूञ् - व्यक्तायां वाचि। "ब्रुवो वचिः", "लिटः क्वसुः", "वचिस्वपियजि —" इति संप्रसारणम्। चतुर्थ्येकवचने भसंज्ञायां "वसोः संप्रसारणम्" इति संप्रसारणम्। "शासिवसिघसीनां च" इति षत्वम्। कीर्तेन्यम् = 'कृत संशब्दने'। "कृत्यार्थे तवैकेनेति केन्यप्रत्ययः। मघवा = मघशब्दाच्छन्दसि वनिपौविति मत्वर्थीयो - वनिप्। बिभ्रत् = 'डुभृञ् धारणपोषणयोः'। शतरि जुहोत्यादित्वात् शपः श्लुः। "भृञामित्" इत्यभ्यासस्येत्वम्। "नाभ्यस्ताच्छतुः" इति न नुम्॥ उपनिषद्यप्युक्तम् = "तदिति वा एतस्य महतो भूतस्य नाम।

तुलना = गीतायां मायास्वरूपायां शय्यायां सुप्तोऽयं जीवः सर्वाभिलाषशून्यः मोहनिद्राप्रबुद्धः "तत्" इति परमात्मनाम सर्वकर्मसूच्चारयति, अतः तस्य यज्ञदानतपांसि निर्विघ्नं समाप्नुवन्तीत्युक्तम्। वेदेऽपि उपनिषद्यपि च भगवतोऽपरं नाम "तत्" इत्यस्ति, यस्मिन् उच्चारिते परमात्मा भक्तरक्षां विधातुं स्वयमेवागच्छति। तं संरक्ष्य मुक्तिधामनि तं प्रेषयतीत्युक्तम्॥

सद्भावे इति = हे पार्थ! हे अर्जुन! सद्भावे सतः ब्रह्मणो भावः सद्भावः, सद्भावे ब्रह्मभावे साधुभावे सत्यतायां वा साधुभावे सद्वृत्ततायाञ्च विदद्भिः 'सत्' इतिशब्दः प्रयुज्यते प्रयोगः क्रियते। तथा च तेनैव प्रकारेण प्रशस्ते कर्मणि मंगलकर्मणि सच्छब्दः सच्छब्दस्य प्रयोगः विधीयते॥ यज्ञे श्रौतस्मार्तादियज्ञे तपसि शारीरिकतपश्चर्यायां दाने च गोदानकन्यादानप्रभृतौ च स्थितिः अवस्थितिः "सत्" इत्युच्यते - कथ्यते। तदर्थीयं परमेश्वरनिमित्तं कर्म "सत्" इत्येवाभिधीयते कथ्यते ॥२७॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते॥ २६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते॥ २७॥

"सदस्य मदे सद्वस्य पीताविन्द्रः सदस्य सख्ये चकार। रणा वा ये निषदि सत्ते अस्य पुरा विविदे सदु नूतनासः॥ ऋ० ६।२७।२॥

सदस्येति = इन्द्रः सर्वैश्वर्यसम्पन्नः परमात्मा अस्य यजमानस्य मदे प्रसन्नतायै "सत्" नारायणात्मकसद्भावस्वरूपोऽस्ति। अस्य यजमानस्य पीतौ = ब्रह्मरसपानादिकर्मणि 'सद्' सद्भावम् अभिधत्ते। अस्य भक्तस्य सख्ये परस्परं सखित्वेऽपि 'सत्' सच्छब्दं चकार करोति। ये रणाः = स्तोतारः सन्ति ते निषदि यज्ञतपोदानात्मके गृहे पुरा-आदौ एव सत् = सत्स्वरूपात्मकं शब्दं विविदे = लभन्ते। नूतनासः = दैवीं जीवानं अवलम्ब्य राजसाः तामसाः अन्ये जना अपि स्तोतारः सदु = सत् एव सकलशुभकर्मणि सच्छब्दमेव व्यवहरन्ति। तुलना = गीतायां यज्ञदानतपांसि सद्भावयुक्तानि स्युः। यज्ञादिकानामारम्भे 'सत्' इति शब्दः प्रयोक्तव्यः। येन सर्वाणि कर्माणि निर्विघ्नं समाप्नुयुः इत्युक्तम्। वेदेऽपि च परमात्मा स्वभक्तप्रसन्नतायै 'ओं' 'तत्' इति नामभ्यां सह 'सत्' इति शब्दोऽपि प्रयुक्तः भोजनादिकर्मणां तथा यज्ञदानतपसां स्थितौ 'सत्' इत्येव शब्दः प्रयोक्तव्यः, येन सर्वाणि कार्याणि निर्विघ्नं समाप्स्यन्तीत्युक्तम्।

अश्रद्धयेति = अश्रद्धया श्रद्धारहितेन यत् हुतम् अग्नौ चरुरूपं हविः प्रक्षिप्तं यत् दत्तं ब्राह्मणादिभ्योऽन्नादिकं दानत्वेन दत्तं, यत् तपः शरीरेण तप्तं, यत् कृतं = श्रौतस्मार्तं कर्म कृतं भवति, तत् सर्वं कृतं कर्म असत् निष्फलम् उच्यते कथ्यते। हे पार्थ! हे अर्जुन! श्रद्धाशून्यं बहुप्रयासकृतं तत्कर्म प्रेत्य मरणानन्तरं परलोकसुखाय न भवति न च इह अस्मिन् जन्मनि सुखनिमित्तं भवति॥ २८॥

इति श्री लैयावासि जगन्नाथ शास्त्रि संकलितायां गीतावेदार्थबोधिन्यां सप्तदशोऽध्यायः॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ! न च तत्प्रेत्य नो इह॥ २८॥

इति श्रीमद् भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे सप्तदशोऽध्यायः समाप्तः॥ १७॥

"श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥ ऋ० १०।१५१।१॥

श्रद्धयेति = अग्निः श्रद्धया समिध्यते। हविः श्रद्धया हूयते। भगस्य परमात्मनः मूर्ध्नि वचसा वेदवचसा श्रद्धां वेदयामः विद्मः॥ "प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्॥ इति स्मृतिः। अग्निपुराणेऽप्युक्तम् = "श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः। श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत्॥ सर्वस्वं जीवितं चापि दद्यादश्रद्धया यदि। नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत्॥

तुलना = गीतायां श्रद्धया दानयज्ञतपांसि शुभावहानि, परन्तु अश्रद्धयाविहितानि तान्येव इह परत्र च सुखकारकाणि न भवन्तीत्युक्तम् ॥२८॥

इतिश्री लैयावास्तव्य सारस्वतान्वय कपालक्षति न्यायभूषण जगन्नाथशास्त्रिकृतायां वेदगीतार्थ बोधिन्यां सप्तदशोऽध्यायः समाप्तः ॥१७॥

## अथाष्टादशाध्यायारम्भः =

यस्य निःश्वसितं वेदा यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनो यातः कुरुक्षेत्रे युदर्णवम् ॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीता पृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२॥

अर्जुन उवाच = संन्यासस्येति = हे महाबाहो! महान्तौ बाहू यस्य स महाबाहुः तत्संबुद्धौ हे महाबाहो! हे महाभुज! हे हृषीकेश! हृषीकाणां इन्द्रियाणाम् ईशः स्वामी हृषीकेशः। तत्संबुद्धौ हे हृषीकेश! हे केशिनिषूदन! केशिनामानं दैत्यं निषूदितवान् यद्वा केशिनः सूर्यादिप्रकाशकान् निषूदितवान् हिंसितवान् इति केशिनिषूदनः तत्संबुद्धौ हे केशिनिषूदन! संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य त्यागशब्दार्थस्य च पृथक् विभज्य तत्त्वं सत्यस्वरूपं वेदितुं ज्ञातुं इच्छामि अभिलषामि।१॥

श्रीभगवानुवाच = काम्यानामिति = कवयः संन्यासतत्त्वज्ञातारः विद्वांसः काम्यानां पुत्रेष्टिज्योतिष्टोमादीप्सितानां कर्मणां न्यासं परित्यागमेव विदुः जानन्ति। तथा विचक्षणाः बुद्धिमन्तः सर्वकर्मफलत्यागं सर्वेषां काम्याकाम्यानां नित्यनैमित्तिकानां कर्मणां फलस्य फलमात्रस्य त्यागं परित्यागं प्राहुः कथयन्ति।२॥

अर्जुन उवाच = "संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश! पृथक्केशिनिषूदन ॥१॥

श्रीभगवानुवाच = "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

'वेदमंत्रो न लभ्यते'

त्याज्यमिति = एके कतिपये मनीषिणः विद्वांसः दोषवत् दूषणयुक्तं पापात्मकं कर्म त्याज्यं त्यक्तव्यं प्राहुः कथयन्ति। तपः कर्म - यज्ञो दानं तपः इति वैदिकं कर्म न त्याज्यम् इति अपरे विद्वांसः प्राहुः ॥३॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥

"अयज्ञियो हतवर्चा भवति नैनेन हविरत्तवे। छिनत्ति कृष्याः गोर्धनात् यं क्रव्यादनुवर्तते ॥ अथ० १२।२।३७॥

अयज्ञिय इति = यं जनं अनुक्रव्यात् = क्रव्यम् आममांसम् अत्तीति क्रव्यात् = मांसभक्षकः यं यज्ञस्य अकर्तारमुद्दिश्य अनुवर्तते, स पुरुषः अयज्ञियः यज्ञानर्हः।

स एव हतवर्चाः = निस्तेजस्कः भवति। एनेन सर्वविधपुरुषहस्तद्वारा हविः यज्ञस्य हविष्कं न अत्तवे भक्षणाय योग्यं न भवति। स एव कृष्याः कृषिप्रभृतिकर्मणः तथा गोः गोप्रभृतिपशुभ्यः तथा धनात् धनसंपत्तेः छिन्नोत्ति वञ्चितो भवति।

निश्चयमिति = हे भरतसत्तम! हे भरत कुलश्रेष्ठ अर्जुन! तत्र पूर्वोक्ते त्यागे काम्यकर्मत्यागे सर्वकर्मफलत्यागे च मे निश्चयं मया निश्चितं अर्थं श्रृणु आकर्णय। हे पुरुषव्याघ्र! हे पुरुषश्रेष्ठ! हे अर्जुन! त्यागः काम्यकर्मत्यागः सर्वकर्मफलत्यागश्च त्रिविधः सात्त्विकः, राजसः, तामस इति त्रिप्रकारः संप्रकीर्तितः विद्वद्भिः कथितः ॥४॥

यज्ञदानेति = यज्ञः दानं तपः श्रौतस्मार्तयज्ञः, सत्पात्रे वस्त्वर्पणात्मकं दानं, स्वाध्यायमयस्तपः इति कर्म न त्याज्यं न त्यक्तव्यम्। तत् यज्ञदानतपः इति कर्म कार्यं यथाविधि कर्तव्यमेव। यज्ञः दानं तपः च एतानि त्रीणि मनीषिणां सदसद्विवेकिनां मुमुक्षुपुरुषाणां पावनानि पवित्रकर्तृणि सन्ति ॥५॥

निश्चयं श्रृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र! त्रिविधः संप्रकीर्तितः ॥४॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

१ "यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः। यज्ञेन यज्ञमव यज्ञियः सन् यज्ञस्ते वज्रमहिहत्य आवत्। ऋ० ३।३२।१२॥

२ मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः। अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभिसंयन्तु शोकाः॥ ऋ० १।१२५।७॥

३ दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः। दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्रतिरन्त आयुः। ऋ० १।१२५।६॥

४ तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्। स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ऋ० १०।१०७।६॥

५. तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन्। अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा॥ ऋ० ९।८३।२॥

६. त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। अग्ने दक्षैः पुनीहि नः॥ ऋ० ९।६७।२६॥

१ यज्ञ इति = हे इन्द्र! हे जीवात्मन्! यज्ञः! यज्ञकर्म ते तव वर्धनः हविःप्रदानेन वर्धयिता हि खलु भूत = भवति। उत = अपि च सुतसोमः = अभिषुतसोमवान् मियेधः = सारभूतोऽयं यज्ञः ते तव प्रियः भवतु। स त्वं यज्ञियः यज्ञार्हः सन् यज्ञं यज्ञस्य कर्तारं जनं यज्ञेन अनुष्ठीयमानेन यज्ञकर्मणा अव रक्ष। किञ्च अयं यज्ञः ते मुमुक्षोः तव वज्रम् अहिहत्ये पापहननकर्मणि आवत् = आ अवतु आसमन्तात् रक्षतु। वर्धनः = 'वृधु वर्धने' इत्यस्य ण्यन्तस्य नन्द्यादित्वात् ल्युट् प्रत्ययः। 'अव = अवतेः लोटि रूपम्। सन् = अस्तेः शतरि रूपम्। अहिहत्ये = 'हन हिंसागत्योः' इत्यस्य भावे 'हनस्त च' इति क्यप्, तकारश्चान्तादेशः। आवत् = अवतेः छान्दसे लङि रूपम्॥

(दानम्)

२ मा पृणन्त इति = पृणन्तो दातारः सन्तः दुरितं दुःखं यथा भवति तथा प्राप्य दुःखं एनः तत्साधनं पापञ्च मा आरन् न प्राप्नुवन्ति। सूरयः दानमहत्त्वज्ञातारः विद्वांसः तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि नराः मा जारिषुः जरया जीर्णाः न भवेयुः न भवन्ति। तेषां दातॄणां सूरीणां सुव्रतानां वा अन्यः तेभ्यः भिन्नः यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु। यद्वा अन्योऽन्यः कश्चन पापदेवः तेषां परिधिः परिधिस्थानीयो व्यवधायकोऽस्तु। अथ अन्यः यज्ञदानतपः— कर्मविशेषो धर्मः तेषां दातप्रभृतीनां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु। यज्ञदानतपःकर्मोकर्तॄणां किं फलं भवतीत्युच्यते = अपृणन्तं देवादीन् अप्रीणयन्तं अदातारं शोकाः चित्तपीडाः तत्साधनाः पाप्मानः अभि अभिमुखं संयन्तु सम्यक् प्राप्नुवन्तु।

३ (दक्षिणा) दक्षिणावतामिति — दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणां इत् = एव इमानि भूमौ दृश्यमानानि चित्राणि भिन्नभिन्नप्रकाराणि चायनीयानि स्रक्चन्दनमणिमुक्तादिरूपाणि द्रव्याणि सम्पन्नानि भवन्ति। दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसम्बन्धिनो लोकाः तदनुगृहीता भोगा वा सम्पन्ना भवन्ति। दक्षिणावन्त एव अमृतं जरामरणरहितं स्थानं भजन्ते सेवन्ते। यद्वा दानेन अपहतपाप्मानः आत्मानं विदित्वा अमृतं अविनाशं मोक्षं प्राप्नुवन्ति। 'यज्ञेन दानेन' इति श्रुतेः। दक्षिणावन्त एव ~~अमृतं जरामरणरहितं स्थानं~~ आयुः प्रतिरन्ते अतिदीर्घमायुष्यं लभन्ते प्राप्नुवन्ति। प्रपूर्वस्तिरतिः वर्धनार्थः। इव इति सर्वत्र संबध्येत।

४. तमेवेति = तमेव दक्षिणायाः दातारं एव ऋषिं अतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः। तथा तमु = तमेव ब्रह्माणं = ब्राह्मणमाहुः। किञ्च तमेव यज्ञन्यं यज्ञस्य नेतारमाहुः। तमेव सामगां साम्नां गातारं तथा उक्थशासं = शास्त्राणां शंसितारं होतारं इति ब्रुवन्ति। दक्षिणादानेन सत्कर्मणः परिग्रहात् स दाता शुक्रस्य दीप्यमानस्य ज्योतिषः तिस्रः तन्वः अग्निवैद्युतादित्यात्मकानि त्रीणि शरीराणि वेद जानाति, यद्वा शुक्रस्य ब्रह्मणः आध्यात्मिकाधिदैविकाधिभौतिकानि त्रीणि रूपाणि वेद जानाति। प्रथमो मुख्यो योजनः दक्षिणया रराध ऋत्विगादीन् आराधयति। यज्ञन्यम् = णीञ् प्रापणे। क्विप्। उदात्तस्वरितयोः यण्। उक्थशासम् = 'शंसु स्तुतौ' क्विप्। संहितायां दीर्घः छान्दसः। रराध = राध संसिद्धौ, लिटि रूपम्॥

५ (तपः) तपोरिति = तपोः पापानां तापकस्य तपसः पवित्रं शोधकम् अंगं तेजो वा दिवस्पदे द्युलोकस्य उच्छ्रिते स्थाने विततं विस्तृतं अस्ति। अस्य ~~तपसः~~ तंतवः अंशवः शोचन्तो दीप्यमानाः व्यस्थिरन् विविधं तिष्ठन्ति। अस्य तपसः कर्मणः आशवः शीघ्रगामिनः रसाः पवीतारं पावयितारं यजमानं अवन्ति रक्षन्ति। ते तपस्विनः दिवः द्युलोकस्य पृष्ठं पृष्ठभागं उन्नतदेशं चेतसा बुद्ध्या देवगमनेच्छावता आधितिष्ठन्ति आश्रयन्ते।

६. त्रिभिरिति = हे देव! दिव्यगुणात्मन्! हे सोम! हे अग्ने! हे ज्योतिःस्वरूप! परमात्मन्! त्वं वर्षिष्ठैः सर्वश्रेष्ठैः त्रिभिः यज्ञदानतपःकर्मभिः धामभिः स्वस्थान

न रूपै: न: अस्मान् मुमुक्षुपुरुषान् पुनीहि पवित्रीकुरु॥
एतानीति = हे पार्थ! हे अर्जुन! एतानि यज्ञदानतपांसि कर्माणि काम्यकर्मजन्यस्वर्ग-प्राप्त्यादीनि त्यक्त्वा कर्तव्यानि सर्वदा करणीयानि इति मे निश्चितं स्थिरीभूतं उत्तमं अत्युत्कृष्टं मतं सिद्धान्तमिति ज्ञेयम्॥६॥
नियतस्येति = नियतस्य श्रुतिस्मृतिप्रोक्तस्य संध्योपासनादेः कर्मणः संन्यासः परित्यागः नोपपद्यते न युज्यते। तस्य यज्ञदानादेः मोहात् अविवेकात् परित्यागः तामसः तमोगुणविशिष्टः परिकीर्तितः विद्वद्भिः कथितः॥७॥

एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥६॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥७॥
(वेदमंत्रो न लभ्येत)

दुःखमिति = कायक्लेशभयात् कायस्य देहेन्द्रियादिसंघातस्य क्लेशः भवतीति तस्य क्लेशस्य भयात् यत्कर्म यज्ञादिकं कर्म दुःखं श्रमसाध्यत्वाद् दुःखमिति बुद्ध्या त्यजेत् विमुञ्चेत्। सः पुरुषः एव राजसं रजोगुणमय्या मनीषया विशिष्टं त्यागं कृत्वा कर्मसंन्यासं कृत्वा त्यागफलं नैव लभेत। त्यागजन्यं फलं मोक्षं नैवाप्नुयात् इत्यर्थः।
कार्यमिति = हे अर्जुन! कार्यं परमात्मप्रीत्यै न तु स्वर्गादिप्राप्त्यै सन्ध्योपासनादिकं कर्तव्यं श्रुतिस्मृतिविधिप्रतिपादितं कर्म संगं कर्तृत्वाभिनिवेशयुक्तं चैव तथैव फलं तज्जन्यं फलं त्यक्त्वा नियतं नियमपूर्वकं क्रियते विधीयते। स त्यागः सात्त्विकः सत्त्वगुणविशिष्टः मतः कथितः॥९॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥८॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥९॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ यजु० ४०।२॥
कुर्वन्निति = अस्मिन् मनुष्यजन्मनि यद्वा अस्मिन् संसारे मनुष्यः कर्माणि नियतानि श्रौतस्मार्तकर्माणि संगं फलं च त्यक्त्वा कुर्वन् एव शतं समाः शतवर्षायुःपर्यन्तं जिजीविषेत् जीवितुमिच्छेत्। एवं फलभोगेच्छारहितत्वेन कर्म कुर्वति त्वयि कर्मफले-च्छारहितकर्मकर्तरि मनुष्ये न लिप्यते - तत्कर्म मनुष्यबन्धनहेतुकं न भवति। इतः भिन्नप्रकारः अन्यथा अन्यप्रकारः नास्ति।
नेति = त्यागी सात्त्विकत्यागवान् मुमुक्षुः योगी सत्त्वसमाविष्टः सत्त्वगुणेन समाविष्टः सम्यक्तया मिलितः मेधावी मेधा ब्रह्मज्ञानबुद्धिः साऽस्यास्तीति मेधावी ब्रह्मज्ञानी छिन्नसंशयः ~~सर्वसंशय~~ छिन्नाः विनष्टाः सर्वे अनात्मबुद्धि-

प्रतिपादकः संशयाः यस्य स छिन्नसंशयः सर्वसंशयशून्यः अकुशलं अशुभं कर्म न द्वेष्टि, द्वेषः अप्रीतिः तां न करोति, कुशले कुशलसाधने यज्ञदानादिकर्मणि न अनुषज्जते आसक्तो न भवति ।१०॥

न हीति = देहभृता देहं बिभर्तीति देहभृत् प्राणी तेन देहभृता देहधारिणा पुरुषेण अशेषतः सर्वाणि नित्यनैमित्तिकादीनि कर्माणि त्यक्तुं संन्यसितुं न हि शक्यम्। यस्तु पुरुषः कर्मफलत्यागी सर्वेषां कर्मणां फलस्य त्यागकर्ताऽस्ति स त्यागी इत्यभिधीयते॥११

न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥१०॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥११॥

५ अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ।
ऋ० १।६।८॥ अथ० २०।४०।२॥

अनवद्यैरिति = सहस्वत् = निष्कामकर्मात्मकबलयुक्तः मखः यज्ञात्मकः जीवः अभिद्युभिः काम्यैः अवश्यं कर्तुं योग्यैः अतः प्रियैः गुणैः यज्ञदानतपोभिः इन्द्रस्य इन्द्रं सर्वैश्वर्यसम्पन्नं परमात्मानं अर्चति सात्त्विकभावपूर्वकं सात्त्विकत्यागेन सेवते ।

अनिष्टमिति = अत्यागिनां त्यागरहितानां संसारे संसक्तानां अनिष्टम् अनभीष्टम् इष्टम् अभिलषितम् मिश्रं इष्टानिष्टम् इति त्रिविधं त्रिप्रकारकं कर्मणः फलं प्रेत्य मरणानन्तरं भवति । संन्यासिनां तु फलत्यागिनां तु क्वचित् न भवति॥

पञ्चेति = हे महाबाहो! महान्तौ बाहू यस्य स महाबाहुः तत्संबुद्धौ हे महाबाहो! हे महाभुज! अर्जुन! अधिष्ठानं सुखदुःखभोगायतनं शरीरम्१ तथाशब्दः चकारवाचकः। कर्ता भोक्ताऽहम् इत्यभिमानयुक्तः जीवः) पृथग्विधं पृथक् पृथक् विधाः प्रकाराः यस्य तथाभूतं पृथग्विधं बाह्याभ्यन्तरभेदेन द्विधाविभक्तं करणं ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि मनो बुद्धिश्चेति। विविधाः नानाप्रकाराः पृथक् भिन्नाः भिन्नाः चेष्टाः प्राणादिचेष्टाविशेषाः। यद्वा पञ्चमं पञ्चसंख्यापूरकं दैवं पूर्वजन्मकृतं शुभाशुभं कर्म दैवमित्युच्यते इत्येतानि पञ्च पञ्चसंख्याकानि कारणानि सर्वकर्मणां सकलशुभाशुभकर्मणां सिद्धये निष्पत्तये सांख्ये सम्यक् ख्यायते निरुच्यते आत्मानात्मतत्त्वम् अनेनेति सांख्यं तस्मिन् सांख्ये ज्ञानप्रधाने वेदान्तशास्त्रे। कृतान्ते = कृतः स्पष्टीकृतः आत्मानात्मनोः अन्तः तत्त्वनिर्णयः यत्र तत् कृतान्तम्। यद्वा कृतस्य कर्मणो वैदिकस्य नित्यनैमित्तिकादेः अन्तः समाप्तिः यत् श्रवणनिमित्तं तत्कृतान्तं तस्मिन् कृतान्ते प्रोक्तानि कथितानि तानि मे मत्तः निबोध सम्यक्तया जानीहि॥

XVIII



अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्।
भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ॥१२॥
पञ्चैतानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥
पञ्चपदानि रूपो अन्वरोहं चतुष्पदी मन्वेमि व्रतेन। अक्षरेण-
प्रतिमिम एतामृतस्य नाभावधि संपुनामि ॥ ऋ० १०।१३।३॥
(अल्पपाठान्तरेण)। अथ० १८।३।४०॥

पञ्चेति = रूपः संसारे उत्पन्नः जीवात्मा अहं पञ्च पदानि पंच स्थानानि अर्थात शरीरं कर्ता, करणम्, चेष्टा, दैवम् इति एतानि पदानि अन्वरोहम पुनः व्रतेन यज्ञादिकर्मणा चतुष्पदीम् अर्थात कर्तृत्वम्(१), करणत्वं (२), चेष्टां (३), दैवम्(४), इति चतुष्पदीम् अन्वेमि अनुसरामि। पुनः अक्षरेण अर्थात ब्रह्मोपासनया एताम् तत्वं ओंकारेण प्रतिमिमे = संयोजयामि। पुनः ऋतस्य नाभौ परब्रह्मणः मुक्तिधामनि यद्वा सत्यस्य मध्ये यद्वा संसारिकयज्ञमध्ये संपुनामि स्वात्मनि पवित्रीकरोमि।

शरीरेति = नरः पुरुषः शरीरवाङ्मनोभिः शरीरेण वाग्व्यतिरिक्तेन्द्रियजालेन वाचा वागिन्द्रियेण मनसा चित्तेन न्याय्यं न्यायादनपेतं शास्त्रीयं यत् कर्म- विपरीतं प्रतिषिद्धं वा यत्कर्म प्रारभते करोति। तस्य शुभस्य अशुभस्य वा कर्मणः एते अधिष्ठानादयः पञ्च हेतवः कारणानि भवन्ति।१५।

तत्रेति = तत्र शुभाशुभ कर्मकर्तृत्वविषये एवं सति अधिष्ठानादि हेतुपंचके सति यः पुरुषः केवलम् एककात्रम् आत्मानं जीवात्मानं तुशब्दः निश्चयात्मकः कर्तारं तत्तत्कर्मणां कर्तारं पश्यति निरीक्षते। अकृतबुद्धित्वात् कृता धर्माधर्म- विवेकसंस्कृता बुद्धिः यस्य स कृतबुद्धिः प्रबुद्धात्मतत्त्वः तद्विपरीतः अकृतबुद्धिः आत्मतत्त्वज्ञानशून्यः तस्य भावः अकृतबुद्धित्वं तस्मात् अकृतबुद्धित्वात् दुर्मतिः मन्दबुद्धिः स पुरुषः न पश्यति सम्यक्तया न निरीक्षते।१६।

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः ॥१६॥
(वेदमन्त्रो न लभ्यते)

यस्येति = यस्य ब्रह्मविदः यतेः अहंकृतः 'अहमेव करोमि' अहमेव भुनज्मि इत्येवंकृतः भावः विचारः न अस्ति तथा यस्य निरहंकारस्य बुद्धिः कर्मकर्तृत्व- वृत्तिरूपा बुद्धिः मया इदं शुभम् अशुभं वा कृतमित्येवंभाववती न लिप्यते लिप्ता न भवति, स एवंविधः पुरुषः इमान् लोकान् देवर्षिब्राह्मणादीन्

सर्वप्राणिनो हत्वापि स्वहस्तेन सर्वसंहारं कृत्वापि न हन्ति न किञ्चिदपि हिनस्ति, न निबध्यते तत्कार्येण फलेन शुभेन अशुभेन वा न संयुज्यते ॥१७

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते ॥१७॥

'नकिरस्य शचीनां नियन्ता सूनृतानाम् । नकिर्वक्ता न दादिति ।
ऋ० ८।३२।१५॥

नकिरिति = अस्य ब्रह्मविदः यतेः सूनृतानां "सूनृतशब्दः शोभनाशोभनकर्मद्वयोपलक्षकः" । शोभनानां अशोभनानाञ्च शचीनां कर्मणां – "धीः शचीति – कर्मनामसु पाठः (निरु०)। नियन्ता नियामकः नकिः न कश्चिदस्ति । अहंकृत – शून्यत्वात् तत्तत्कर्मफलोपभोक्ता न भवति । "एवं कुरु, एवं मा कुरु" इति सर्वत्र समदृष्टेः तस्य ब्रह्मविदः वक्ता उपदेष्टा नकिः न कश्चिदस्ति । नकिः न कश्चित् दात् = हन्तृत्वादिकर्मफलप्रदाता न कश्चिदस्ति ।

ज्ञानमिति = ज्ञानम् = ईप्सितानीप्सितरूपं द्रव्यगुणाद्यवबोधः । ज्ञेयं द्रव्यगुणादिविषयः । परिज्ञाता ज्ञेयज्ञानयोः प्रमाता, एषा त्रिविधा त्रिप्रकारा कर्मचोदना कर्मणः चोदना चोद्यते प्रवर्त्यतेऽनया इति चोदना प्रवर्तनाऽस्ति । करणं क्रियतेऽनेनेति करणं बाह्याभ्यन्तररूपं वागादीन्द्रियव्यूहसाधनम् । कर्म ईप्सिततमं क्रियाविषयभूतं यज्ञादिकं कर्म । कर्ता स्वतंत्रः कर्ता । विज्ञानात्मा इति कर्मसंग्रहः सम्यक् गृह्यतेऽस्मिन्निति संग्रहः, कर्मणां संग्रहः कर्मसंग्रहः त्रिविधः त्रिप्रकारकः अस्ति ॥१८॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

"त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ।
ऋ० ९।६७।२६॥

त्रिभिरिति = हे देव ! हे दीप्यमान परमात्मन् ! हे सवितः ! हे जगदुत्पादक ! परमेश्वर ! यद्वा सर्वेषां प्राणिनां स्वे स्वे कर्मणि चोदयतः ! हे सोम ! हे पवमान गुणविशिष्ट ! हे अग्ने ! हे ज्योतिः स्वरूप ! त्वं वर्षिष्ठैः सर्वश्रेष्ठैः दक्षैः सामर्थ्यवद्भिः त्रिभिः ज्ञानज्ञेयतत्वपरिज्ञातृत्वैः त्रिप्रकारकैः धामभिः कर्मचोदनस्वरूपैः शरीरैः नः अस्मान् पुरुषान् पुनीहि परिशुद्धान् कुरु ।

ज्ञानमिति = गुणसंख्याने गुणाः सत्त्वरजस्तमांसि संख्याने सम्यक् ख्यायन्ते प्रतिपाद्यन्ते यत्र तद् गुणसंख्यानं कापिलं सांख्यशास्त्रं तस्मिन्, ज्ञानं पदार्थबोधः, कर्म श्रौतस्मार्तादिकं कर्म । कर्ता कर्मकर्ता, एतत् त्रितयं गुणभेदतः सत्त्वरजस्तमोगुणभेदात् त्रिधा एव त्रिप्रकारा एव प्रोच्यते प्रकथ्यते । तानि अपि यथावत् यथार्थतया शृणु आकर्णय ॥१९॥

XVIII



ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥

१. प्र वह्निरृतस्य धीतिं ब्रह्मणो मनीषाम्। गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः। ऋ० ९।९७।३४॥

२. यद्वा— त्रीणि छन्दांसि कवयो वियेतिरे पुरुरूपं दर्शतं विश्वचक्षणम्। आपो वाता ओषधयस्तान्येकस्मिन् भुवन आर्पितानि। अथ० १८।१।१७॥

१ प्र इति = वह्निः शरीरधारकः आत्मा तिस्रः त्रिसंख्याकाः वाचः विद्या ज्ञानं मतिं कर्मबुद्धिं कर्तृत्वं च प्र+ईरयति = प्रेरयति। ऋतस्य आत्मनः धीतिं = ब्रह्मणः वेदस्य मनीषां त्रिविधं ज्ञानकर्मकर्तृत्वं प्रेरयति। गावः इन्द्रियाणि गोपतिं इन्द्रियस्वामिनं मनः पृच्छमानाः यन्ति संसारयात्रां कुर्वन्ति। मतयः कर्माणि बुद्धयः ज्ञानानि च वावशानाः कामयमानाः सोमम् आत्मानं यन्ति प्राप्नुवन्ति।

२ यद्वा = त्रीणि इति = कवयः ज्ञानिनः आपः सर्वत्र व्यापकपरमात्मनः बोधकं ज्ञानमिति भावः। वाताः पावकाः सदागतयः कर्मेति भावः। ओषधयः ओषधि-द्वारा नीरोगतां दधानः अर्थात् कर्ता, एतानि त्रीणि त्रिसंख्याकानि छन्दांसि = समग्र-संसाराच्छादकानि अर्थात् समग्रसंसारे उपलब्धिमन्ति संसारनिर्वाहाय वि+येतिरे = विविधयत्नैः रक्षितानि। पुरुरूपम् = प्रत्येकमर्थात् ज्ञानं, कर्म, कर्ता च प्रत्येकं बहुरूपवत् प्रत्येकदर्शतम् अद्भुतं, विश्वचक्षणं = प्रत्येकं सर्वैः दर्शनीयम्। तानि त्रीणि एकस्मिन् भुवने केवलं संसारे एव अर्पितानि स्थापितानि।

सर्वभूतेष्विति = यः पुरुषः सर्वभूतेषु सर्वेषु अव्यक्तादारभ्य स्थूलपर्यन्तेषु भूतेषु स्थावरेषु जंगमेषु च येन ज्ञानेन एकमविलक्षणं अव्ययं विकार-रहितं विभक्तेषु विभागं प्राप्तेषु अपि पदार्थेषु अविभक्तं विभागरहितं भावं प्रत्यगात्मस्वरूपं ईक्षते पश्यति। तत् सा ज्ञानं सात्त्विकं सत्त्वगुणविशिष्टं विद्धि जानीहि॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥२०॥

१. यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते। यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः। ऋ० २।१२।९॥
अथ० २०।३४।९॥

२ यद्वा = यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन। स धीनां योगमिन्वति, ऋ० १।१८।७॥

१ यस्मादिति = जनासः जनाः सात्त्विकज्ञानरहिताः राजसास्तामसाः पुरुषाः यस्मात् ऋते सत्त्वज्ञानात् विना न विजयन्ते विजयं मुक्तिं न प्राप्नुवन्ति। अतः युध्यमानाः विरुद्धवृत्तिभिः इन्द्रियैः सह रजस्तमोभ्यां गुणाभ्यां सह वा सत्त्वगुणलब्धये युद्धं कुर्वाणाः अवसे स्वरक्षायै यं हवन्ते सत्त्वगुणं प्रत्यगात्मस्वरूपवृत्तिं वा आह्वयन्ति ध्यायन्ते। यः सत्त्वगुणः प्रत्यगात्मा वा विश्वस्य सर्वस्य जगतः

प्रतिमानं प्रतिनिधिः प्रतिस्वरूपं वा बभूव भवति। यो अच्युतच्युतः = अच्युता (रजोगुण तमोगुणे च) स्थिर वृत्तीनामपि च्यावयिताऽस्ति। हे जनासः! हे जना स इन्द्रः परमैश्वर्यवान् सत्वगुणविशिष्टः जनः अस्ति।

२ यद्वा = यस्मादृते = यस्मात् सत्वगुणात् यद्वा सात्विकज्ञानात् ऋते विना विपश्चितश्चन बुद्धिमतः पुरुषस्य अपि यज्ञः यज्ञप्राप्तिः विष्णूपलब्धिः न सिध्यति सिद्धिं न प्राप्नोति, स सात्विकः पुरुषः धीनां सात्विकबुद्धीनां योगं संयोगं इन्वति प्राप्नोति॥ यथा च महानारायणोपनिषदि श्रुतिः = " यथा शुद्धसुवर्णस्य कटकमुकुटांगदभेदाः, यथा भूमेः पर्वतवृक्षतृणगुल्म लताघनभाः वस्तुभेदाः, तथैवाद्वैतपरमानन्दलक्षणापरब्रह्मणो मम सर्वाद्वैतमुपपन्नं भवत्येव।

पृथक्त्वेनेति = नानाविधवासनया मिलितः यः पुरुषः सर्वेषु भूतेषु देवर्षि मनुष्य पशुसरीसृपादि देहेषु यत् ज्ञानं पृथक्त्वेन प्रतिदेहं भिन्नत्वेन पृथग्विधान् सुखदुःखादिभिः मिथो विलक्षणान् नानाभावान् अनेकान् जीवान् वेत्ति जानाति तत् ज्ञानं राजसं रजोगुणविशिष्टं विद्धि जानीहि॥ २१

यत्त्विति = एकस्मिन् कार्ये भूतकार्ये कृत्स्नवत् परिपूर्णवत् सक्तं आत्मा परमात्मा च स्वस्वरूपेणैव एतावानिति निश्चययुक्तम् अहैतुकं = हेतुः युक्तिः तद्रहितं युक्तिशून्यमित्यर्थः। अल्पं निकृष्टम् अतत्त्वार्थवत् मिथ्याविषयभूतं यत् ज्ञानमस्ति तत् ज्ञानं तामसं तमोगुणविशिष्टं उदाहृतं कथितम् इति " २२॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्॥ २१॥
यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् " २२॥
(वेदमंत्रो न लभ्यते)

नियतमिति = नियतं श्रुतिस्मृतिप्रतिपादितमावश्यकं संगरहितं कामनारहितं अरागद्वेषतः रागश्च द्वेषश्च रागद्वेषौ, न स्तः रागद्वेषौ यस्य स अरागद्वेषः तेन अरागद्वेषेण " तृतीयार्थे तसिः," अफलप्रेप्सुना फलाकांक्षारहितेन यत् कर्म कृतमस्ति तत् कर्म सात्विकं सत्वविशिष्टं कर्म उच्यते कथ्यते॥ २३॥

यत्विति = कामेप्सुना काम्यते इति कामः कर्मफलं तं कामं आप्तुं इच्छता कामेप्सुना तु पुनः अपि साहंकारेण अहमिदं करोमीत्यभिमानयुक्तेन बहुलायासं बहुलः महान् आयासः परिश्रमः यस्मिन् कर्मणि तत् बहुलायासं यत् कर्म क्रियते विधीयते तत् कर्म राजसं रजोगुणविशिष्टं उदाहृतं कथितमस्ति। २४॥

अनुबन्धमिति = अनुबन्धं भविष्यत्काले भावि अनर्थं फलं क्षयं क्रियमाणे कर्मणि धनक्षयं बलक्षयं पुण्यादिक्षयं वा, हिंसां प्राणि-नाशं पौरुषञ्च स्वसामर्थ्यञ्च अनवेक्ष्य यत् कर्म मोहात् अविवेकात् आरभ्यते तत् कर्म तामसं तमोगुणविशिष्टं उच्यते कथ्यते ॥२५॥

नियतं संगरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥
(वेदमंत्रो न लभ्येत)

मुक्तेति = मुक्तसंगः मुक्तः परित्यक्तः संगः फलकामना येन स मुक्तसंगः निष्कामः, अनहंवादी 'अहमेव करोमीति' वदनशीलः यः न भवति सः अनहंवादी, धृत्युत्साहसमन्वितः अर्थव्ययादौ धृतिः धैर्यम्, उत्साहः चिकीर्षा वेगः ताभ्यां समन्वितः सम्यक्तया युक्तः सिद्ध्यसिद्ध्योः स्वकार्यसिद्धौ स्वकार्यासिद्धौ वा निर्विकारः निर्गतौ हर्षविषादौ यस्मात् स निर्विकारः हर्षविषादरहितः कर्ता कर्मणां कर्ता सात्त्विकः सत्त्वगुणविशिष्टः उच्यते कथ्यते ॥२६॥

रागीति = रागी कर्मफलेषु रागः कामः विषयोपभोगेच्छा, स्यास्तीति कर्मफलप्रेप्सुः कर्मणां फलं पुत्रधनादिकं प्रेप्सुः प्राप्तुमिच्छुः लुब्धः दानादौ धनत्यागासहिष्णुः लुब्धः यद्वा परधनाभिलाषुकः लुब्धः हिंसात्मकः परहितघातकः, अशुचिः शास्त्रप्रतिपादिताशौचरहितः हर्ष-शोकान्वितः हर्षश्च शोकश्च हर्षशोकौ ताभ्यामन्वितः मिलितः कार्य-सिद्धौ हर्षान्वितः, कार्यासिद्धौ शोकान्वितः इति भावः, कर्ता कर्मणां कर्ता योऽस्ति स राजसः रजोगुणविशिष्टः परिकीर्तितः विद्वद्भिः कथितः ॥२७॥

अयुक्त इति = अयुक्तः विषयासक्तत्वात् सकलशुभकर्मकर्तृत्वायोग्यः। प्राकृतः शास्त्रसंस्कारैः शून्यः कार्याकार्यविवेकरहितः। स्तब्धः अनम्रः नैष्कृतिकः परवञ्चकः अलसः अवश्यकर्तव्यकार्येष्वपि प्रवृत्ति-शून्यः उद्यमरहितः इत्यर्थः, विषादी क्लिष्टचित्तः, दीर्घसूत्री = सद्यः कर्तव्ये कर्मणि अपि चिरकर्ता, ईदृशकर्मणां कर्ता यः पुरुषः अस्ति स पुरुषः कर्ता तामसः तमोगुणविशिष्टः, इत्युच्यते इति कथ्यते ॥२८

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।

हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

" परोऽपेहि मनस्पाप किमशस्तानि शंससि। परेहि न त्वा कामये वृक्षान् वनानि संचर गृहेषु गोषु मे मनः ॥ अथ० ६।४५।१॥

पर इति = हे मनस्पाप! हे मनसः पाप! अर्थात् पापात्मक विचार! परः दूरे अपेहि = गच्छ। अशस्तानि अनिष्टविचारान् किम् = कुतः शंससि कथयसि उपदिशसीति वा। परा = दूरं इहि याहि, त्वा त्वां दुष्टविचारं न कामये नाभिलषामि। वृक्षान् = वृक्षेषु वनानि = वनेषु च सञ्चर = विचरणं कुरु। यतः मे मम मनः गृहेषु गृहकार्येषु, गोषु = गोकर्मसु च विद्यते। अर्थात् = दुष्कर्तृत्व तामसविचाराः सर्वदा परिहेयाः एव। तामसकृत्यं देहे गृहे कर्तुमीहते - तद्दूरीकरणीयमिति - भावः।

बुद्धेरिति = हे धनंजय! हे अर्जुन! बुद्धेः अन्तःकरणवृत्तिविशेषस्य भेदं प्रकारं चैव तथा धृतेः धैर्यस्य भेदम् अशेषेण कात्स्न्र्येन पृथक्त्वेन भिन्नभिन्नत्वेन (तथा) प्रोच्यमानं मया प्रकर्षेण कथ्यमानं गुणतः सत्वादि गुणभेदतः त्रिविधं त्रिप्रकारकं शृणु - आकर्णय ॥२९॥

प्रवृत्तिमिति = हे अर्जुन! हे पार्थ! या बुद्धिः प्रवृत्तिं विषयेषु प्रवृत्तिं, निवृत्तिं विषयेभ्यः निवृत्तिं कार्याकार्ये कर्तव्यकार्यम् अकर्तव्यकार्यम्। भयाभये = भयम् - अनर्थकारणम्, अभयं कल्याणकारणं, बन्धं संसारबन्धनं, मोक्षं संसारविमुक्तिं वेत्ति जानाति। सा बुद्धिः सात्विकी सत्वगुणविशिष्टा भवति ॥३०॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥२९॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्विकी ॥३०॥

1 " यामथर्वा मनुष्पिता दध्यङ् धियमत्नत। तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मताऽर्चन्ननु स्वराज्यम् ॥ ऋ० १।८०।१६॥

2 यद्वा = " सोऽचिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती। यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥ अथ० १८।१।२०॥ ऋ० १०।११।३॥

1 यामिति = अथर्वा - हिंसारहितः पुरुषः मनुः शास्त्रप्रतिपादितवाक्यमननशीलः पिता = इन्द्रियप्रवृत्तिनिवृत्तिनियमपालयिता, दध्यङ् = हृदये बन्धमोक्षनियमधारकः जनः यां सात्विकीं धियं बुद्धिं अत्नत अतन्वत तनोति (लकारव्यत्ययः) तस्मिन् सात्विककर्मणि सात्विकबुद्धौ इन्द्रे = जीवात्मनि सति ब्रह्माणि = ब्रह्मप्रतिपादकानि उक्था = उक्थानि स्तोत्राणि पूर्वथा = पूर्वजन्मवत् सम् + अगमत = समगच्छन्त = सम्यक्तया गच्छन्ति। सात्विकबुद्धिधारणात् जीवः स्वराज्यं स्वस्य राज्यत्वं मोक्षम् अनु अर्चन् प्रकाशयन् वर्तते। अत्नत = तनु विस्तारे। 'बहुलं छन्दसि' इति विकरणस्य लुक् "तनिपत्योश्छन्दसि" इत्युपधालोपः॥ पूर्वथा = "प्रत्नपूर्वविश्व - छन्दसि" इतीवार्थे पूर्वशब्दात् थाल प्रत्ययः। उक्था = "शेश्छ-

न्यसि बहुलम्" इति शेर्लुक्। समग्मत = सम् गम्धातोः "समो गम्यृच्छिभ्याम्" इत्यात्मनेपदम्। "लुङ् मन्त्रे घसे-" "च्लेर्लुक्" "गम हन-" इत्युपधालोपः। स्वराज्यम् = राज्ञः - भावः कर्म वा राज्यम्, "पत्यन्तपुरोहितादिभ्यो यक्" इति यक्।

२ सोऽचिदिति = हे जीवात्मन्! सा प्रवृत्तिनिवृत्त्योः, कार्याकार्ययोः, भयाभययोः बन्धमोक्षयोः, उपदेष्ट्री वेदज्ञानोत्पन्ना सात्त्विकी बुद्धिः उ = एव, चित् नु = निश्चयेन भद्रा मनुष्यकल्याणकर्त्री, क्षुमती = वेदमंत्रोपदिष्ट ज्ञानवती, यशस्वती वीर्यवती तथा परकीर्तिमती उषा सर्वप्राणिवशकर्त्री वा उषा इव सर्वेषां पदार्थानां गुणदोषौ आविष्कुर्वती, स्वर्वती = स्वर्गमयसुखवती, मनवे = मनुष्यमात्राय उवास = संसारे निवासं करोति। यत् यतः उशतां संसारे बहुविधकामनां कामयमानानां मध्ये उशन्तं वेदज्ञान प्राप्तिमभिलषन्तं क्रतुं वेदाज्ञानुकूलं निष्कामकर्मकर्तारं होतारं परमात्मपूजकं अग्निं ज्ञानाग्निना प्रकाशमानं जीवात्मानं विदधाय ज्ञानोपदेशं दातुं जीजनत् = प्रकटितवती ॥३०॥

ययेति = हे पार्थ! हे अर्जुन! यया बुद्ध्या धर्मं शास्त्रविहितं जगदुपकारकं धर्मं अधर्मं शास्त्र प्रतिषिद्धं जीवाघोगतिकारकं अधर्मं कार्यं देशकालानुसारिकर्तव्यंकर्म अकार्यं अकर्तव्यं कर्म अयथावत् यथार्थतारहितत्वेन यः जीवः प्रजानाति सा राजसी रजोगुणविशिष्टा बुद्धिः अस्ति ॥३१॥

अधर्ममिति = हे पार्थ! हे अर्जुन! ~~यया बुद्ध्या धर्मं शास्त्रविहितं~~ ~~जग~~ या बुद्धिः अधर्मं चौर्यादिकं यद्वा देहं धर्मं मन्यते जानाति। सर्वार्थान् सर्वविषयान् विपरीतान् प्रतिकूलान् मन्यते, तमसा अज्ञानमूलकेन तमोगुणेन आवृता आच्छादिता सा - तामसी तमोगुणविशिष्टा बुद्धिः अस्ति ॥३२॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ ~~तामसी~~ ॥ राजसी ॥३१॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२॥
( वेदमन्त्रो न लभ्यते )

धृत्येति = हे पार्थ! हे अर्जुन! ~~पुरुषः~~ यः पुरुषः योगेन चित्तवृत्तिनिरोधेन अव्यभिचारिण्या संतत भाविन्या अविनाभूतया इत्यर्थः यया धृत्या मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्च इन्द्रियाणि च तानि मनःप्राणेन्द्रियाणि तेषां क्रियाः चेष्टाः प्रवृत्तिरूपाः सर्वाः क्रियाः धारयते स्वायत्तीकुरुते सा सात्त्विकी सत्त्वगुणविशिष्टा धृतिः अस्ति ॥३३॥

ययेति = हे ~~अर्जुन~~ पार्थ! हे अर्जुन! यः दुर्मेधाः दुष्टा मेधा बुद्धिर्यस्य स दुर्मेधाः दुर्मगः पुरुषः यया धृत्या ~~[illegible]~~ स्वप्नं निद्रां भयं भीतिं शोकं सन्तापं विषादं - वैकल्यं मदमेव विषयमदोन्मादं च न विमुञ्चति न परिहरति सा तामसी तमोगुणविशिष्टा धृतिः अस्ति ॥३५॥

धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥ ३३॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन।
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी॥ ३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च।
न विमुञ्चति दुर्मेधाः धृतिः सा पार्थ तामसी॥ ३५॥
(वेदमन्त्रो न लभ्यते)

सुखमिति = हे भरतर्षभ! हे भरतकुलश्रेष्ठ! हे अर्जुन! इदानीं संप्रति सुखं त्रिविधं सात्त्विकं राजसं तामसं इति त्रिप्रकारकं शृणु आकर्णय। यत्र यस्मिन् सुखे अभ्यासात् यमनियमाद्यभ्यासात् पुरुषः रमते रमणं कुरुते, दुःखान्तञ्च दुःखस्य अन्तं नाशञ्च निगच्छति प्राप्नोति॥ ३६॥

यदिति = यत् सुखम् अग्रे प्रारम्भकाले विषमिव विषसदृशं दुःखमयं प्रतीयते, परिणामे ज्ञानपरिपक्वावस्थायां तत् सुखं अमृतोपमं अमृतसदृशं सुखकरं प्रतीयते. तत् सुखम् आत्मबुद्धिप्रसादजं आत्मवैषयिकी या बुद्धिः ज्ञानं तस्य यः प्रसादः प्रसत्तिः तस्मात् प्रसादात् जायते उत्पद्यते इति आत्मबुद्धिप्रसादजं सुखं सात्त्विकं सत्त्वगुणविशिष्टं भवति॥ ३७॥

विषयेति = यत् सुखं अग्रे पूर्वं विषयेन्द्रियसंयोगात् विषयाः पदार्थाः इन्द्रियाणि चक्षुरादीनि तयोः यः संयोगः संसर्गः तस्मात् अमृतोपमं अमृतसदृशं प्रतीयते, परिणामे परिपक्वावस्थायां विषमिव विषसदृशं दुःखकरं भवत् तत्सुखं राजसं रजोगुणविशिष्टं स्मृतं कथितमस्ति॥ ३८॥

यदिति = यत् सुखम् अग्रे प्रारम्भकाले अनुबन्धे च परिणामे च आत्मनः सदसद्विवेकहेतोः विचारशक्तेः मनसो वा मोहकारकं निद्रालस्यप्रमादोत्थं निद्रा = स्वापः, आलस्यं कर्मसम्पादने चिरकरणं प्रमादः उन्मत्तता एभ्यः उत्थं समुत्पन्नं सुखमस्ति तत् सुखं तामसं तमोगुणविशिष्टमस्ति॥ ३९॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ।
अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति॥ ३६॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्॥ ३७॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्।
परिणामे विषमिव तत्सुखं राजसं स्मृतम्॥ ३८॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्॥ ३९॥
(वेदमन्त्रो न लभ्यते)

नेति = पृथिव्यां भूमौ दिवि वा स्वर्गलोके देवेषु ब्रह्मादिदेवेषु वा न तत्-

XVIII



सत्त्वं द्रव्यं प्राणी वा अस्ति यत् प्रकृतिजैः प्रकृत्युत्पन्नैः एभिः त्रिभिः गुणैः मुक्तं रहितं स्यात् ॥४०॥

ब्राह्मणेति = ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषां ब्राह्मणक्षत्रियविशां शूद्राणां कर्माणि स्वभावप्रभवैः स्वभावः प्रकृतिः तस्मात् स्वभावात् प्रकृतेः प्रभवैः उत्पन्नैः गुणैः सत्त्वरजस्तमोभिः प्रविभक्तानि प्रकर्षेण विभक्तानि गुणभेदेन भिन्नानि व्यवस्थापितानि भवन्ति ॥४१॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैः गुणैः ॥४१॥

चत्वारि शृंगाः त्रयो अस्य पादाः द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो -
वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥ ऋ० ४।५८।२॥ यजु० १७।९१॥ -
तै० आर० १०।१०।२॥ निरु० १३।७॥

चत्वारीति = अस्य विराड्रूपब्रह्मणः मानववंशस्य वा चत्वारि शृंगाः = आर्तो - जिज्ञासुरर्थार्थी ज्ञानीति = चत्वारः परमात्मभक्ताः शृंगवदुच्चतराः सन्ति। त्रयः - पादाः कर्मोपासनाज्ञानानि मानवोन्नत्यर्थं चरणानि सन्ति। द्वे शीर्षे = इन्द्रियनिग्रहः - रागद्वेषादिद्वन्द्वपरित्यागश्च द्वे शीर्षे। अस्य मानवस्य सप्त हस्तासः = जगति पुनः पुनर्जन्म ग्रहणाय मोक्षप्राप्तये वा कामक्रोधमदलोभाहंकारासूयास्पर्धा इति सप्त, यद्वा दम्भो दर्पोऽभिमानः क्रोधः पारुष्यं सदसद्विवेकशून्यता अज्ञानं तत्कार्यञ्चेति सप्त दोषाः, अथवा स्तेयपरदारस्पर्शो ब्रह्म भ्रूण हत्यासुरापानदुष्कर्मप्रवृत्ति- मिथ्यापातकदोषाः इति सप्त हस्तासो = हस्ताः। यथा = सप्त मर्यादाः कवयस्तत - क्षुस्तासामेकामिदभ्यंहुरो गात्" ऋ० १०।५।६॥ अथ० ५।१।६॥ निरु० ६।२७॥ = इति मंत्रव्याख्यायां यास्कमुनिनाऽपि स्तेयादिकाः सप्त दोषाः प्रकथिताः। एत- त्सर्वं आसुरीजीवाय प्रादर्शि, दैवीजीवाय तु पूर्वोक्तविपरीतं ज्ञेयम्। दैवीजीवानां मर्यादाः प्रकरान्तरेण सप्त कथ्यन्ते। यज्ञ दानतपः सत्त्वशुद्धि स्वाध्याय सत्यभाषण- भूतदया इति दैवीजीवानां सप्त हस्ताः सन्ति। यथा च = " द्वौ भूतसर्गौ लोकेऽस्मि- न् दैवः आसुर एव च" इत्युक्तेः दैवासुरभेदात् द्विविधा सृष्टिः॥ तथा वेदेऽपि - आर्यदस्युभेदात् द्विविधाः जीवाः वर्णिताः सन्ति। वृषभः = प्राण्यप्राणि - सांसारिकाः जीवाः पदार्थाश्च त्रिधा बद्धाः सत्त्वरजस्तमोगुणैः संयताः मिलिताः सन्ति। ईदृशः पदार्थः कोऽपि नास्ति यः सत्त्वादिगुणविमुक्तः स्यात्। महो देवः = ज्योतिः स्वरूप परमात्मा मर्त्यान् आविवेश = मरणधर्मकेषु पदार्थेषु व्याप- करूपेण प्रविष्टोऽस्ति। परञ्च सः पुष्करपलाशवन्निर्लेपः अर्थात् प्राकृतिक- गुणरहितोऽस्ति।

व्याख्यान्तरम् —

चत्वारीति = चिद्बुद्ध्यहङ्कार मनांसि इमानि चत्वारि अस्य मनुष्यस्य -

शृंगाः। ज्ञानकर्मोपासनास्त्रयः पादाः, अनन्तसान्तौ द्वे शीर्षे, सप्त प्राणाः सप्त हस्ताः, त्रिधा बद्धः स्थावरजङ्गमेभिः त्रिभिर्गुणैर्बद्धः संयुतः प्राणी वा अप्राणी कश्चन पदार्थः गुणैर्बद्धः सन् संसारबन्धनाद्विमुक्तये परमात्मप्रीत्यर्थं रोरवीति= उच्चैः स्वरेण शब्दं करोति = "हे परमात्मन्! मां जन्मदुःखाद् उद्धर। महो देवः मर्त्यां - आविवेश = ज्योतिःस्वरूपः परमात्मा प्राण्यप्राणिपदार्थेषु प्रविष्टः सन् पुष्कर - पलाशवन्निर्लेपः वर्तते॥ तथा यास्कमुनिः यज्ञार्थं प्रस्तौति = चत्वारीति = अस्य यज्ञस्य चत्वारि ऋगादिकाः चत्वारो वेदाः शृंगाः, प्रातर्मध्या- ह्नसायमिमानि त्रीणि सवनानि पादाः, प्रायणीयोदयनीये द्वे शीर्षे, अनुष्टुबादीनि सप्त छन्दांसि अस्य यज्ञस्य हस्ताः सन्ति। त्रिधा बद्धः = मंत्रब्राह्मणकल्पैः त्रिभिः बद्धः वृषभः = कामानां वर्षिकर्ता रोरवीति = शब्दं करोति। महो देवः = देवरूपो यज्ञः मर्त्यान् आविवेश॥

शम इति = शमः अन्तःकरणशान्तिः, दमः चक्षुरादीन्द्रियनिग्रहः, तपः ब्रह्म- चर्यादितपश्चरणम्, शौचम् बाह्याभ्यन्तरशुद्धिः, क्षान्तिः शत्रौ सत्यामपि शत्रुतायां सहनशीलता, आर्जवं सारल्यं, ज्ञानं सदसद्वस्तुविवेकः, वि- ज्ञानं ईश्वरसाक्षात्कारावबोधः, आस्तिक्यं = वेदशास्त्रे श्रद्धा एतदेव स्वभा- वजं स्वाभाविकं सत्वगुणात्मकं ब्रह्मकर्म ब्राह्मणस्य कर्म अस्तीति॥४२॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।

ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥४२॥

1 हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं विजहुर्वेद्याभिरोह ब्रह्माणो विचरन्त्यु त्वे॥ ऋ० १०।७१।८॥

2 यद्वा = शुष्मो वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः॥ ऋ०७।५६।८

1 हृदेति = यत् = यतः ब्राह्मणवर्णाः हृदा चिन्तनतष्टेषु सूक्ष्मीकृतेषु मनसः अन्तःकरणस्य जवेषु विचारेषु सखायः मिलिताः सन्तः संयजन्ते सम्यक्तया यजनं कुर्वन्ति। अत्र ब्राह्मणसमुदाये वेद्याभिः ज्ञातव्याभिः प्रवृत्तिभिः त्वम् एकं अशमम् अदमम् अतपः अशौचम् अक्षान्तिम् अनार्जवम् अज्ञानम् नास्तिकत्वम् अजहुः परित्यजन्ति। त्वे अपरे ओह ब्रह्माणः आ समन्तात् ऊहेन तर्केण वेदज्ञातारः श्रुत्या मत्या बुद्ध्या च विचरन्ति प्रयान्ति॥

शौर्यमिति = शौर्यं शूरस्य भावः शौर्यं पराक्रमः, तेजः प्रागल्भ्यम्, धृतिः विपत्तौ सत्यामपि मनसः विकलतारहित्यम्, दाक्ष्यम् = दक्षस्य भावः दाक्ष्यम् शतशः विघ्नेषु सत्स्वपि स्वकार्यसम्पादनसामर्थ्यम्। युद्धे च संग्रामे च अपलायनम् युद्धे प्राणसंकटे प्राप्तेऽपि युद्धादधावनम्। दानम् पात्रेभ्यः द्रव्याद्यर्पणम्। ईश्वर- भावः ऐश्वर्यं सर्वनियामकत्वं धर्मपूर्वकं प्रजापालनमित्यर्थः। एतत्सर्वं कर्म स्वभावजं स्वभावात् जातं क्षात्रं क्षत्रियजातये कर्तव्यं शास्त्रप्रतिपादितमस्ति॥४३॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥४३॥

१ शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि। तिग्मायुधः क्षि-
प्रधन्वा समत्स्वषाढः साह्वान् पृतनासु शत्रून्॥ साम० १४०९॥ ऋ० ९।९०।३॥

२ ~~शूरग्राम इति~~ यद्वा = युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषेम-
षाळ्हः। व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान॥ ऋ० ७।२०।३॥

~~अथ० १।७।७॥~~

३. यद्वा = त्वमग्ने यातुधानानुपबद्धाँ इहावह। अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु।
अथ० १।७।७।

४ यद्वा = आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽति-
व्याधी महारथो जायताम्। यजु० २२।२२॥

१ शूरग्राम इति = हे क्षत्रिय! शूरग्रामः शूराणां वीराणां ग्रामः संघो यस्य सः शूरग्रामः, सर्ववीरः
सर्वे वीराः सहायकाः यस्य स सर्ववीरः, सह्वान् सहनवान् क्षमाशीलः, जेता युद्धजयशीलः
प्रपलायन विरहितः। धनानि सनिता = धनप्रदाता दानशीलः। तिग्मायुधः तीक्ष्णप्रहरण-
साधनः, क्षिप्रधन्वा = क्षिप्रसहनशीलधन्वा। समत्सु संग्रामेषु अषाढः = असोढा संग्राम-
कर्ता इत्यर्थः। पृतनासु शत्रुसेनासु शत्रून् रिपून् साह्वान् = अभिभवन् त्वं क्षत्रियजाति-
जः त्वं पवस्व = क्षत्रियधर्मपालनेन आत्मानं पवित्रीकुरु।

२ यद्वा = युध्म इति = युध्मो योद्धा, अनर्वा अभिगन्तृरहितः युद्धेषु अपराङ्मुखो वा, खज-
कृत् = युद्धकृत् "खले खजे" इति युद्धनामसु पाठः। समद्वा = समत् = कलहः तद्वान्।
शूरः शौर्योपेतः। जनुषा जन्मना स्वभावतः एव सत्राषाट् बहूनामभिभविता। अषाळ्हः =
स्वयन्तु न केनाप्यभिभूतः, स्वोजाः सुबलः, ईम् अयम् इन्द्रः ऐश्वर्यवान् क्षत्रियः पृत-
नाः = शत्रूणां सेनाः व्यास = विक्षिपति इतस्ततः प्रधावयति। अधा = अपि च शत्रू-
यन्तं शात्रवमाचरन्तं विश्वं सर्वं जघान = हन्ति (लकारव्यत्ययः)॥

३ त्वमिति = हे अग्ने! हे अग्निस्वरूप! जीवात्मन्! क्षत्रिय! त्वं यातुधानान्
परपीडकान् शत्रून् उपबद्धान् पूर्णरूपेण बद्ध्वा इह दण्डनीयजनाकुले कारागारे
वह धारय। अथ पुनः इन्द्रः ऐश्वर्यवान् क्षत्रियराजः एषां मनुष्यघातकशत्रूणां
शीर्षाणि शिरांसि वज्रेण कठोरास्त्रेण वा वृश्चतु छिनत्तु।

कृषीति = कृषिः भूमिकर्षणम्। गोरक्ष्यम् = गाः रक्षतीति गोरक्षः तस्य
भावः गोरक्ष्यं गवां रक्षणं गोशब्देन पशुः उपलक्ष्यते, गोरक्ष्यं पशुपालन-
मित्यर्थः। वाणिज्यं क्रयविक्रयलक्षणं वाणिजः कर्म, इत्येतत्कर्म स्वभावजं
स्वाभाविकं वैश्यकर्म विशो जातेः योग्यं कर्म अस्ति। परिचर्यात्मकं ब्राह्मण-
क्षत्रिय वैश्येतर वर्णत्रयस्य सेवास्वरूपं कर्म शूद्रस्य चतुर्थवर्णस्यापि स्वभाव-
जं स्वाभाविकमस्ति।४४।

XVIII



कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥ ४४॥

१ "मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः। रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम॥ अथ० ३।१४।६॥

२A 'कृषि मत् कृषस्व—"। ऋ० १०। ३४।१३॥

२ यद्वा= इन्द्रमहं वणिजं चोदयामि स न ऐतु पुर एता नो अस्तु। नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम्। अथ० ३।१५।१॥

३ यद्वा= सा विट् सुवीरा मरुद्भिरस्तु ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी सञ्चरन्ति। ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि। अथ० ३।१५।२॥

४(a) यद्वा= सा विट् सुवीरा मरुद्भिरस्तु सनात् सहन्ती पुष्यन्ती नृम्णम्। ऋ० ७।५६।५॥

(b) " = याम् येष्ठाः शुभाः शोभिष्ठाः श्रिया संमिश्लाः ओजोभिरुग्राः। ऋ० ७।५६।६॥

५ यद्वा= इहैव साथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत्॥ अथ० ३।८।४

(b) अस्मै कामायोपकामिनीर्विश्वे वो देवा उपसंयन्तु।

१ मयेति= हे गावः! गोपतिना गोरक्षकेण गोपालकेन वा मया वैश्येन सचध्वं—समवेता भवत। इहास्मिन् लोके मदीये गृहे वा अयं गोष्ठः त्वद्वासस्थानं वः युष्माकं पोषयिष्णुः पोषणशीलः भवतु। रायस्पोषेण रायः धनस्य पोषेण धनसमृद्ध्या बहुलाः असंख्याताः भवन्तीः जीवन्तीः चिरकाल जीवनोपेताः वः युष्मान् गाः जीवाः चिरंजीविनो वयं उपसदेम उपगच्छेम।

२ इन्द्रमिति= अहं व्यवहर्ता वणिक् वैश्यः इन्द्रं परमैश्वर्योपेतं धनवन्तमित्यर्थः। वणिजं वाणिज्यकर्तारं चोदयामि प्रेरयामि प्रवर्तयामि इतिभावः। स वणिक्त्वेन प्रेरितः इन्द्रः धनैश्वर्यवान् वणिक् नः अस्मान् ऐतु आगच्छतु। आगत्य च नोऽस्माकं वणिजां पुरः एता पुरतो गत्वा अस्तु भवतु। पोषयिष्णुः= पोषयतेः= "पोष्ठच्छन्दसि" इति इष्णुच् प्रत्ययः। "न लोकाव्यय—" इति षष्ठीनिषेधात् "वः" इति पदे द्वितीयाविभक्तिः। रायस्पोषेण= षष्ठ्याः "पतिपुत्र—" इति विसर्जनीयस्य सत्वम्। सदेम= सदेराशीर्लिङि "लिङ्याशिषि" इति अङ् प्रत्ययः। चोदयामि= चुद प्रेरणे। पुरः= "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इति पूर्वशब्दात् असि प्रत्ययः। तत्संनियोगेन पुरादेशश्च। परिपन्थिनम्= "छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि" इति इनिप्रत्ययान्तो निपातितः। ईशानः= ईश ऐश्वर्ये। अदादित्वाच्छपो लुक्। धनदाः= ददातेः "आतो मनिन्—" इति विच् प्रत्ययः।

३ ये इति= ये बहवः बहुसंख्याकाः पन्थानः मार्गाः देवयानाः देवैः गन्तव्यमार्गाः द्यावापृथिवी द्यावापृथिव्योः अन्तर मध्ये सञ्चरन्ति नानानगरेषु गच्छन्ति ते मार्गाः मां व्यापारकर्तारं वैश्यं पयसा

जलेन दुग्धेन वा घृतेन घृतादिपुष्टिकारकेण पदार्थेन जुषन्ताम् – प्राप्नुवन्तु। हे वैश्याः यथा येन प्रकारेण दूरदेशं गत्वाऽहं क्रीत्वा बहूनां पदार्थानां क्रयं कृत्वा धनं बहुधनं आहराणि स्वदेशे आनयानि।

४. सा विडिति = सा विट् वैश्य प्रजा मरुद्भिः मरणधर्मैः मनुष्यैः सह सनात् चिरात् सहन्ती व्यापारस्य सहन्ती नम्णं धनं पुष्यन्ती लभन्ती सुवीरा शोभनपुत्रयुक्ताऽस्तु भवतु। इमे वैश्याः यामं यातव्यं प्रदेशं येष्ठाः यातमाः अतिशयेन गन्तारः शुभाः धनलाभेन शोभिष्ठाः अतिशयेन शोभायुक्ताः श्रिया कान्त्या लक्ष्म्या वा संमिश्लाः संमिश्राः संगच्छमानाः ओजोभिः धनबलैः उग्राः उद्गूर्णाः भवन्ति।

५. इहेति = हे वैश्य! इह एतस्मिन् व्यापारकर्मणि इत = एव असाथ = एकविचारेण संवसथ अर्थात् व्यापारभिन्ने कस्मिंश्चिदपि कर्मणि चित्तं न संयोजयत। परः न गमाथ = एतद्व्यापारकर्मतः दूरं न याथ। यद्वा परस्परं पृथक् न भवत। ईर्यः = कृषिकर्मण्यऽन्नोत्पादकः, गोपाः गोरक्षकः, पुष्टपतिः धनादिना परेषां पुष्टिकर्ता वैश्यः वः आजत युष्मान् एकपंक्त्यां बद्ध्वा आनयतु। विश्वेदेवाः अस्मै कामाय अस्यै इच्छापूर्त्यै कामिनीः व्यापारकर्म कामयमानाः वः युष्मान् वैश्यप्रजाः उप = उपसंयन्तु एकताविचारेण संयोजयन्तु।

स्वे इति = नरः ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा पुरुषः स्वे स्वे शमशौर्यकृषिपरिचर्यात्मके स्वकीये स्वकीये कर्मणि शमशौर्यादौ अभिरतः नियमेन यथाविधि संलग्नः पुरुषः यथा येन प्रकारेण सिद्धिं सत्त्वशुद्धिं विन्दति लभते, तद्विधं शृणु आकर्णय॥ ४५॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥ ४५॥

(वेदमंत्रो न लभ्यते)

यत इति = यतः यस्मात् परब्रह्मणः "जन्माद्यस्य यतः", "यतो वा इमानि भूतानि जायन्ते" भूतानां पृथिव्यादीनां भूतानां जीवानां वा प्रवृत्तिः उत्पत्तिः जन्म वा अस्ति। येन परब्रह्मणा इदं दृश्यमानं सर्वं जगत् ततं व्याप्तम्। मानवः ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा पुरुषः स्वकर्मणा श्रौतस्मार्तेन शमादिस्वस्वसात्त्विककर्मणा तं परमात्मानं अभ्यर्च्य संपूज्य सिद्धिं मुक्तिफलं विन्दति प्राप्नोति॥ ४६॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ ४६॥

१ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्नेः जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः। साम० ५।३।७। साम० ८४३। ऋ० ९।९६।५।

२ यद्वा = यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत्। इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं सख्याय हवामहे॥ ऋ० १।१०१।५॥

XVIII



१ सोम इति = मतीनां सर्वप्राणिबुद्धीनां जनिता जनयिता उत्पादकः दिवः द्युलोकस्य जनिता प्रादुर्भावयिता, पृथिव्याः भूमेः जनिता उत्पादकः। अग्नेः अनलस्य जनिता प्रकाशयिता, सूर्यस्य आदित्यस्य जनिता उत्पादकः, इन्द्रस्य सर्वैश्वर्यसम्पन्नस्य प्राणिनः आत्मनः वा जनिता उत्पादयिता, उत अपि विष्णोः सर्वत्र व्यापनशीलस्य सत्त्वादिगुणस्य आकाशस्य वा जनिता उत्पादयिता अस्ति। स सोमः परमेश्वरः पवते स्वाम्यर्चकं नरं पवित्री कुरुते। मुक्तिं प्रयच्छतीत्यर्थः। जनिता = "जनिता मंत्रे—" ६।४।५३ (पाणि०) इति निपातेन णिलोपः।

२ यद्वा = य इति = यः परमात्मा विश्वस्य सर्वस्य जगतः ब्रह्माण्डस्य प्राणतः प्रश्वास गृह्णतः प्राणिजातस्य पतिः स्वामी अस्ति। यश्च परमात्मा प्रथमः सर्वादिभूतः ब्रह्मणे चतुराननाय ब्रह्मज्ञानिने वा ऋषये गाः चतस्रः वेदवाणीः अविन्दत् प्रापयत्। ईश्वरः यः इन्द्रः परमेश्वरः दस्यून् पापान् अधरान् निकृष्टान् अधोगतान् कृत्वा अवातिरत् अवधीत् हतवान्। तं मरुत्वन्तं परमात्मानं सख्याय सखिलकर्मणे मुक्तिप्राप्तिकर्मणे हवामहे आह्वयामहे गच्छामः। जगतः = गम्लृ सृप्लृ गतौ। "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" इति अतिप्रत्ययान्तो निपातितो जगच्छब्दः। प्राणतः = "श्वस प्राणने अन च" अस्मात् अन् धातोः लटः शतृ। अदादित्वाच्छपो लुक्। प्राणतस्पतिः = षष्ठ्याः "पतिपुत्र—" इति विसर्जनीयस्य सत्वम्। सख्याय = सख्युः कर्म सख्यं—"सख्युर्यः" इति य प्रत्ययः। हवामहे = ह्वेञो—लटि = "बहुलं छन्दसि" इति संप्रसारणम्।

मन्त्रान्तरम्

३ यद्वा = यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः। वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय। ऋ० १।१०।१।४॥

३ यद्वा = य इति = यः मनुष्यः अश्वानां वशी अर्थात् क्षत्रियः, यः गवां वशी वैश्यः, यः गोपतिः सर्वेन्द्रियस्वामी ब्राह्मणः, यः कर्मणि कर्मणि = स्वस्ववर्णकर्मणि स्थिरः परिपक्वः स आरितः स्तुत्यः। यः इन्द्रः जीवात्मा ब्राह्मणः क्षत्रियो वैश्यो वा वीरोश्चित् = पूर्णप्रधानेन असुन्वतः कर्मविरोधि शत्रून् वधः = वधकर्ता, तं मरुत्वन्तं जीवं सख्याय हवामहे।

श्रेयानिति = परधर्मात् स्वजातिवर्णाश्रमभिन्नात् धर्मात् आचारात् स्वनुष्ठितात् सम्यक्तया विहितात् विगुणः तत्तद्वर्णाश्रमगुणरहितोऽपि स्वधर्मः स्वकीयजातिवर्णाश्रमानुकूलः धर्मः श्रेयान् श्रेष्ठः अस्ति। स्वभावनियतं स्वभावः स्वयं भाव्यते इति स्वभावः जातिः तमुद्दिश्य नियतं शास्त्रेण नियतीकृतं कर्म शमशौर्यकृषिपरिचर्यादिकं कर्तव्यं कार्यं कुर्वन् सम्पादयन् किल्बिषं चित्तशुद्धिप्रतिकूलं पापं न आप्नोति न प्राप्नोति ॥ ४७॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७॥

XVIII



"इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्। क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥"

"इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टिपतिर्व आजत्। अस्मै कामायोप-
कामिनीर्विश्वे वो देवा उपसंयन्तु॥ अथ॰ ३।८।४॥

इहेति = हे मनुष्याः! इह अस्मिन् स्वाभाविक स्वजातिकर्मणि इत् = एव असाथ =
वसथ। परः दूरे न गमाथ = न गच्छत अर्थात् परजातिकर्मणि गमनं
न कुरुत। अस्मै कामाय स्वजातिकर्मकामनापूर्तये कामिनीः युष्म-
द्वासनाः विश्वे देवाः संयोजयन्तु तथा इर्यः = सर्वसंसारप्रेरकः गोपाः
पृथिवीरक्षकः पुष्टिपतिः सर्वेषां पुष्टिकर्ता परमात्मा वः युष्मान् स्व-
स्वजातिकर्म विधानानुकूलं आजत् मुक्तिप्राप्तये स्थापयति।

असक्तबुद्धिरिति = सर्वत्र शमशौर्यकृषिपरिचर्यादिकानां सर्वेषां कर्मणां
फलेषु असक्तबुद्धिः = असक्ता अननुरक्ता बुद्धिर्यस्य स असक्तबुद्धिः। जितात्मा =
जितः आत्मा मनो येन स जितात्मा वशीकृतमनाः। विगतस्पृहः = विगताः दूरीभूताः
स्पृहाः कामाः यस्य स विगतस्पृहः पुरुषः परमाम् अत्युत्कृष्टां नैष्कर्म्यसिद्धिं -
निर्गतं कर्माकर्मफलं यस्मात् तत् निष्कर्म निष्कर्मणः भावः नैष्कर्म्यम् ब्रह्मभावः,
तस्य सिद्धिं नैष्कर्म्यसिद्धिं परमपुरुषार्थसिद्धिं संन्यासेन सम्यक्तया ससाध-
नानां कर्मणां विधिना परित्यागेन अधिगच्छति प्राप्नोति॥ ४९॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ ४९॥

"न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा न तपः कुतश्चन। यस्य देवा
गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः॥ ऋ॰ ७।८२।७॥

न तमिति = हे इन्द्रावरुणा! हे मरुतः! ऐश्वर्यसम्पन्न जीवात्मन्! हे वरुण!
हे सर्वश्रेष्ठ! हे यते! तं विगतस्पृहं सर्वत्रासक्तबुद्धिं मर्त्यं मनुष्यं अंहः = पापं
न नशते न व्याप्नोति। न च दुरितानि दुर्गमनानि पापफलानि च प्राप्नुवन्ति।
कुतश्चन कस्मादपि निमित्तात् तपः लौकिकसन्तापः तं न प्राप्नोति। हे देवा
हे देवौ! हे निष्कामकर्मभिः प्रकाशमानौ विद्वांसौ! हे ज्ञानदानादिगुण-
युक्तौ! युवां यस्य मर्तस्य मनुष्यस्य अध्वरं यज्ञं हिंसारहितां संगतिं
वा गच्छथः प्राप्नुथः। युवां वीथः = यस्य नैष्कर्म्यसिद्धिं कामयेथे तं मनु-
ष्यं न परिह्वृतिः = परिबाधा यद्वा कुटिलता न व्याप्नोति। ४९।

सिद्धिमिति = हे कौन्तेय! हे अर्जुन! सिद्धिं नैष्कर्म्यसिद्धिं प्राप्तः मुमुक्षुः नरः
यथा येन प्रकारेण ब्रह्म परमात्मानं आप्नोति ब्रह्मस्वरूपम् अधिगच्छति तथा
तेन प्रकारेण मे मत्तः निबोध जानीहि। ज्ञानस्य = नित्यशुद्धबुद्धस्वभावः
आत्मा सदा एकरसः इति यत् ज्ञानं तस्य ज्ञानस्य या परा अत्युत्कृष्टा
निष्ठा स्थितिरस्ति तामपि समासेनैव संक्षेपेणैव मे मत्तः निबोध जानीहि॥ ५०॥

(वेदमन्त्रो न लभ्यते)

कठोपनिषद् श्रुतिः ११ = "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।

मनसस्तु परा बुद्धि: बुद्धेरात्मा महान् पर:। महत: परमव्यक्त-
मव्यक्तात् पुरुष: पर:। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति:॥

इन्द्रियेभ्य इति = चक्षुरादीन्द्रियेभ्य:, हीति निश्चये, अर्था: रूपरसादय: विषया: परा: सन्ति। अर्थेभ्यश्च रूपरसादिविषयेभ्यश्च मन: अन्त:करणं परमस्ति। मनसोऽन्त:करणात् बुद्धि: विवेचनात्मिका शक्ति: पराअस्ति। बुद्धे: विवेचनात्मकशक्ते: आत्मा महान् अत्यर्थं पर: अस्ति। महत: अव्यक्तं परमस्ति। अव्यक्तात् पुरुष: परमात्मा पर: अस्ति। पुरुषात् परमात्मन: परं न किञ्चित् अन्यत् किञ्चिदपि नास्ति। सा काष्ठा सीमा अस्ति सा परा गति: मुक्तिरस्ति।

बुद्ध्येति = विविक्तसेवी एकान्तदेशवासी लघ्वाशी लघुहितं मितं मेध्यं अन्नमशितुं शीलमस्येति लघ्वाशी यतवाक्कायमानस: यतानि संयतानि स्ववशीकृतानि वाक्काय मानसानि येन तथाभूत: विशुद्धया मलविक्षेपरहितया बुद्ध्या अध्यवसायात्मिकया बुद्ध्या युक्त: मिलित: धृत्या सात्विक्या धृत्या आत्मानं चित्तं नियम्य संरुध्य शब्दादीन् विषयान् शब्दस्पर्शरूपरसगन्धान् विषयान् त्यक्त्वा विहाय ~~नित्यं सर्वदा वैराग्यं सर्वत्रेच्छाराहित्यं समुपाश्रित: सन् ध्यानयोगपर:~~ ध्यानं च रागद्वेषौ प्रियाप्रिये वस्तुनी व्युदस्य परित्यज्य च अहंकारं अभिमानं बलं दर्पं कामं क्रोधं परिग्रहं शरीररक्षानिमित्ते कौपीनकाषायादिकं विमुच्य विहाय नित्यं सर्वदा वैराग्यं विषयेभ्यो विगतो निर्गतो राग इच्छा यस्य स विराग: तस्य भाव: वैराग्यं सर्वत्रेच्छाराहित्यं समुपाश्रित: सन् ध्यानयोगपर: ध्यानं योगश्च ध्यानयोगौ तत्र पर: ध्यानयोगपर: निर्मम: नि:शेषेण गतो निर्गतो देहे ममभावो यस्य स निर्मम: परदेहे इव स्वदेहे ममतारहित:, शान्त: शान्तिमापन्न: ब्रह्मभूयाय ब्रह्मभावाय ब्रह्मभावो नाम सच्चिदानन्दैकरसब्रह्मात्मनाऽवस्थानं तस्मै ब्रह्मभावाय कल्पते ब्रह्माकारेण तिष्ठतीति भाव:। ५१—५३॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।
शब्दादीन् विषयाँस्त्यक्त्वा रागद्वेषौ व्युदस्य च॥ ५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानस:।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रित:॥ ५२॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्मम: शान्तो ब्रह्मभूयाय कल्पते॥ ५३॥

१ देवो न य: सविता सत्यमन्मा क्रत्वा निपाति वृजिनानि विश्वा।
पुरु प्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत्। ऋ० १।७३।२॥

२. यद्वा = ये बच्यमानमनुदीध्यौना अन्वैक्षन्त मनसा चक्षुषा च।

XVIII



अग्निष्टानग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः। अथ० २।३४।२

३. यद्वा = गूहता गुह्यं तमो वियात विश्वमत्रिणम्। ज्योतिष्कर्ता यदुश्मसि।
ऋ० २।८६।१०॥

१ देव इति = सविता सत्यधर्मप्रसविता "देवो न" = द्योतमान इव यः शान्तः पुरुषः सत्यमन्मा सत्यं अवितथं मन्म = ज्ञानं यस्य स सत्यमन्मा — सत्यज्ञानः यथार्थदर्शी कृत्वा आत्मीयेन कर्मणा बुद्ध्या वा विश्वा = विश्वानि सर्वाणि वृजिनानि अहंकार बल दर्प काम क्रोध स्वरूपाणि पापानि = (निमातिभ्यस्यः) विश्वेभ्यः वृजिनेभ्यः सर्वेभ्यः पापेभ्यः निपाति = आत्मानं नितरां रक्षति। अपि च पुरु प्रशस्तः पुरुभ्यः बहुभ्यः प्रशस्तः श्रेष्ठः यद्वा बहुभिः ज्ञानिभिः प्रशस्तः स्तुतः "अमतिर्न" = स्वरूपमिव सत्यः साक्षात् सत्यस्वरूपः, शेवः = सुखरूपः आत्मेव, परमप्रेमास्पदतया निरतिशयानन्दस्वरूपः आत्मा यथा सर्वान् प्राणिनः सुखयति "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति" "एष ह्येवानन्दयाति" एवंभूत आत्मा दिधिषाय्यः स्वशुभकर्मसु स्थापयितुं योग्यो भूतः भवति,,

२ यद्वा = ये इति = ये शुद्धबुद्धियुक्ताः यतवाक्कायमनसः परमेश्वरध्यानपरायणाः योगिनः बध्यमानं कामक्रोधलोभमोहाहंकारैः बध्यमानं जनम् अनुदीध्यानाः = अनुकम्पादृष्ट्या सन्तः मनसा शुद्धमनसा सर्वत्र परमात्मव्याप्तिदृष्ट्या चक्षुषा स्नेहवशात् दयादृष्ट्या अन्वैक्षन्त अनुपश्यन्ति स्नेहात् कारुण्यात् वा न जहति विश्वकर्मा विश्वं कर्म कर्तव्यं यस्य स विश्वकर्मा विश्वस्य कर्ता देवः प्रकाशस्वरूपः अग्निः सर्वस्याग्रणीः परमेश्वरः तान् प्रजया स्वसृष्ट्या संरराणः संरममाणः सन सर्वान्तर्यामी ईश्वरः तान् कामक्रोधादिहीनान् जनान् अग्रे सर्वतः पूर्वमेव प्रमुमोक्तु — प्रकर्षेण मुक्तिं ~~प्रयच्छतु~~ यच्छति।

सत्यमन्मा = मननं मन्म। मन ज्ञाने। "अन्येभ्योऽपि दृश्यते" इति मनिन् प्रत्ययः। वृजिनानि = वृजी वर्जने। "कृपृवृजी —" इति क्यु प्रत्ययः। अम गत्यादिषु अमेरतिः। दिधिषाय्यः = दधातेः दिधिषाय्यः (उणा० ३।९६) इति साय्यप्रत्ययान्तो निपात्यते। ऐक्षन्त = ईक्ष दर्शने। "छन्दसो लङ्"। मुमोक्तु = मुञ्चतेः छान्दसः शपः श्लुः। रराणः = रै शब्दे इत्यस्माल्लिटः कानच्। अग्निष्टान् = "युष्मत्तत्क्षुष्वन्तः पादम्" इति षत्वम्॥

२ गूहतेति = हे जीवात्मन्! हे मुमुक्षो! यत् = यदि उश्मसि = परमात्मानं प्राप्तुमिच्छसि तदा — विश्वं जगत् अत्रिणं = भक्षकं कामक्रोधादिपरिपन्थिजातं वियात = मनसः दूरीकुरु। ज्योतिष्कर्ता ज्ञानेन प्रकाशमानः त्वं गुह्यं स्वहृदये गुप्तं तमः अज्ञानं गूहत = ज्ञानेन आच्छादयत = ज्ञानप्रकाशेन अज्ञानान्धकारं दूरीकुरु।

ब्रह्मभूत इति = प्रसन्नात्मा अहंकारादि परित्यागेन प्रसन्नः मुदितः आत्मा मनो यस्य स प्रसन्नात्मा, ब्रह्मभूतः विदेहमुक्तः ब्रह्मवित्तमः इत्यर्थः न शोचति, न कस्यापि विनष्टवस्तुनः शोकं कुरुते न कांक्षति न कस्यापि वस्तुनः कामनां करोति। सर्वेषु सकलेषु भूतेषु प्राणिषु — समः समानदृष्टिं पश्यन् पराम् अत्युत्तमां मद्भक्तिं मदीयां भक्तिं प्राप्नोति। पृ० ४॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥ ५४॥

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह। ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म-दधातु मे ब्रह्मणे स्वाहा। अथ॰ १९।४३।८

यत्रेति = ब्रह्मविदः ब्रह्म परमेश्वरं वेदं वा वेदज्ञानं वा जानातीति ब्रह्मवित् ते ब्रह्मविदः = ज्ञानिनः पुरुषाः यत्र यस्मिन् मुक्तिपदे दीक्षया = "ब्रह्मज्ञानाय दृढव्रतपालन प्रतिज्ञा दीक्षा भवति" तया दीक्षया ब्रह्मज्ञानव्रतपालनया तपसा तपश्चर्यया सह यान्ति ब्रह्मप्राप्नुवन्ति। ब्रह्मा सर्वत्र वर्तनशीलः परमेश्वरः मा = मां दासं तत्र तस्मिन् ब्रह्मपदे नयतु प्रापयतु। ब्रह्मा परमेश्वरः वेदज्ञाता आचार्यों का ब्रह्म ब्रह्मपदं मे मह्यं दधातु धारयतु। सर्वं मे ज्ञानं ब्रह्मणे परमेश्वराय स्वाहा सुहुतं भवतु।

भक्त्येति = यः मुमुक्षुः पुरुषः भक्त्या निर्विकल्पेन समाधिना यावान् यावन्मात्रः यश्च यादृशस्वरूपः तत्त्वतः वास्तविकस्वरूपतः ज्ञात्वाऽवबुध्य तदनन्तरम् ईश-ज्ञानानन्तरं विशते = नित्यानन्देऽखण्डे परे ब्रह्मणि लयं प्राप्नोति॥ ५५॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ ५५॥

१ पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः। समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः। ऋ॰ १०।१७७।१॥ तै॰ आ॰ ३।११।१०॥

२ यद्वा = महत्तन्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम्। प्रत्नं जातं ज्योति-र्यदस्य प्रियं प्रियाः समविशन्त पञ्च। ऋ॰ १०।५५।२॥

१ पतङ्गमिति = विपश्चितः वेदान्तसिद्धान्तज्ञातारः यतयः असुरस्य सकलप्राणिप्राणप्रदातुः सर्वोपाधिविहीनस्य परब्रह्मणो मायया ब्रह्मबुद्ध्या अक्तम् अभिव्यक्तं पतङ्गं = पतति व्याप्नोति इति पतंगः परमात्मा तं पतंगं परमात्मानं हृदा अन्तर्मुखेन मनसा पश्यन्ति साक्षात्कुर्वन्ति इति भावः। अपि च ते कवयः क्रान्तदर्शिनः वेदान्ताभिज्ञाः मुमुक्षवः समुद्रे = समुद्रवन्ति अस्मात् भूतानि इति समुद्रः परमात्मा तस्मिन्नधिष्ठानभूतेऽन्तर्मध्ये सर्वं दृश्यजातं अध्यस्तत्वेन विचक्षते = विपश्यन्ति इति अतः दृग्व्यतिरिक्तस्य सर्वस्य विनश्वरत्वात् वेधसः ब्रह्मज्ञानिनः ते मरीचीनां वृत्तिज्ञानानां पदम् अधिष्ठानभूतं सच्चिदानन्दस्वरूपं यत्परं ब्रह्म तदेव इच्छन्ति तद्भावप्राप्तिमेव कामयन्ते।

२ यद्वा = महदिति = हे योगिन्! हे मुमुक्षो! तत् तस्य परब्रह्मणः गुह्यं गोपनीयम् अन्यैरविज्ञातं, पुरुस्पृक् = पुरुभिः बहुभिः भक्तैः स्पर्शनीयं स्पृहणीयं वा नाम। ओम् इत्यभिधानं शरीरं वा महत् अत्यन्तं प्रवृद्धमस्ति। येन नाम्ना भूतं पूर्वोत्पन्नपदार्थजातं भव्यम् अग्रे भाविपदार्थजातं सर्वं जनयः उत्पन्नमस्ति। सर्वं भूतभव्यात्मकं जगत् परमेश्वरात् उत्पद्यते। अस्य परमात्मनः प्रत्नं पुराणं पूर्वकालीनं यत् ज्योतिः द्योतमानं प्रकाशमण्डलं आदित्याख्यं प्रियं प्रियभूतं तत्त्वं जातमुत्पन्नमस्ति। प्रियाः भक्त्युद्रे-

किन: प्रीयमाणा: भगवत्प्रिया: पंच पंचजना: पुरुषा: प्रियं सर्वप्रियभूतं परमात्मानं समविशन्त प्रविशन्ति।

सर्वेति = मद्व्यपाश्रय: अहं परमेश्वर: एव व्यपाश्रय: संसार विमुक्तये आश्रयणीय: यस्य स मद्व्यपाश्रय: ईश्वराश्रय: य: योगी सर्वकर्माणि अपि सर्वाणि नित्य-नैमित्तिक श्रौतस्मार्त्तानि कर्माणि अपि सदा सततं कुर्वाण: मत्प्रसादात् मम परमेश्वरस्य प्रसादात् अनुग्रहात् शाश्वतं नित्यं अव्ययं वृद्धिक्षय विकार रहितं परं मोक्षारव्यं स्थानं अवाप्नोति प्राप्नोति ॥ ५६॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रय:।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६॥

"परमां तं परावतमिन्द्रो नुदतु वृत्रहा। यतो न पुनरायति शश्वतीभ्य: समाभ्य:। अथ० ६।७५।२॥ ("अनवद्यैः") - ऋ० १।६।८॥

परमामिति = वृत्रहा वृत्रं पापं हन्ति इति वृत्रहा पापहन्ता इन्द्र: परमैश्वर्यसम्पन्न: परमेश्वर: तं परया भक्त्या सेवमानं भक्तजनं परमाम् अत्युत्तमां परावतं संसारादतिशयदूरे वर्तमानं स्थानं नुदतु नुदति स्वप्रसादात् प्रेरयति प्रेषयति। यत: यस्मात् स्थानात् स भक्त: शश्वतीभ्य: अनन्ताभ्य: समाभ्य: वेलाभ्य: अनन्तसमयादपि न पुनरायति = पुनर्नावर्तते इति। परावतम् = "उपसर्गाच्छन्दसि धात्वर्थे" इति वति: प्रत्यय:।

चेतसेति = निष्कामकर्म सम्पादनसन्तुष्टपरमेश्वरप्रसादात् मुक्तिरिति ज्ञानविशिष्टेन चेतसा विवेकबुद्ध्या सर्वकर्माणि सर्वाणि कर्माणि श्रौत स्मार्तादीनि कर्माणि मयि परमेश्वरे संन्यस्य संत्यज्य मयि समर्प्येत्यर्थ:। मत्पर: = अहमेव पर: प्राप्य: पदार्थ: यस्य स मत्पर: बुद्धियोगं "सर्वत्रैव ब्रह्मव्याप्तं" इति ज्ञानयोगम् उपाश्रित्य सर्वदा वेदान्तविचारे तत्परो भूत्वा मच्चित्त: मयि परमात्मनि चित्तं मनो यस्य स मच्चित्त: सततं नित्यं भव ॥ ५७॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्पर:।
बुद्धियोगमुपाश्रित्य मच्चित्त: सततं भव ॥ ५७॥

मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु। मम वाचमेकमना-जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्। पार० कां० २ मं० १६॥

ममेति = हे मुमुक्षो! हे जीवात्मन्! मम व्रतं स्वकीयं व्रतं स्वमूर्ति ध्यानयोगव्रतं ते - तव भक्तस्य हृदयं हृदये बुद्धौ (विभक्तिव्यत्यय:) दधामि धारयामि। अत एव ते तव मुमुक्षो: चित्तं हृदयं मम परमेश्वरस्य अनुचित्तं चित्तानुकूलं अस्तु अर्थात् त्वं बुद्धियोगमुपाश्रित्य सततं मच्चित्त: भव। मम परमेश्वरस्य वाचं सर्वकर्म संन्यासोपदेशमयीं वाणीं एकमना: मय्येक समाहितमना: जुषस्व सेवस्व कुरु। बृहस्पति: बृहतां ज्ञान योगबुद्धीनां पति: स्वामी ज्ञानोपदेष्टा आचार्य: त्वा त्वां शिष्यं मह्यं मत्परमेश्वराय नियुनक्तु योजयतु।

मच्चित्त इति = मच्चित्त: अहमेव चित्ते मनसि यस्य स मच्चित्त:

XVIII



मन्मनाः त्वं मत्प्रसादात् मम कृपायाः सर्वदुर्गाणि सर्वाणि दुःखेन गन्तुं शक्यानि दुस्तराणि अविद्यादीनि तरिष्यसि। अविद्यादिपारं यास्यसीति। अथ चेत् मद्वचन-मननाभावे अहंकारात् 'अहमेव सर्वशास्त्रज्ञः मत्तः अपरः कोऽपि विद्वान् नास्तीति अभिमानात् मद्वचनं न श्रोष्यसि श्रवणमपि न करिष्यसि, अथ च श्रुत्वापि तन्नाचरिष्यसि च तर्हि विनंक्ष्यसि विनाशं प्राप्स्यसि।५८॥

यदिति = अहंकारं 'अहमेव पण्डितः, 'अहमेव ज्ञानी' इत्यात्मकं अभिमानम् आश्रित्य अवलम्ब्य 'न योत्स्ये-युद्धं न करिष्यामि' इति इत्थं यत्-यदि मन्यसे स्वीकरोषि, एषः ते तव व्यवसायः निश्चयः मिथ्या निरर्थकः। प्रकृतिः क्षात्रधर्मस्वभावः त्वां प्रकृत्यधीनं त्वां नियोक्ष्यति युद्धार्थं नियुक्तीकरिष्यति॥ ५९॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि। अथ चेत्त्वमहंकारा-
न श्रोष्यसि विनंक्ष्यसि॥५८॥

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥५९॥

"न सः स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युः विभीदको अचित्तिः। अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चन इदनृतस्य प्रयोता। ऋग्० ७।८६।६॥

नेति = हे वरुण! हे श्रेष्ठ जीवात्मन्! सुरा-प्रमादकारिमदस्वरूपा, मन्युः = सर्वप्राणिनां स्वभावानुसारं स्वस्वभावप्रदात्री क्रोधमयी सहनशक्तिः उत्साहश्च, विभीदकः = भयोत्पादिका अचित्तिः-अज्ञानमयी मोहात्मिका सा ध्रुतिः जन्मसमयादेव सर्वेषां स्वभावकारिणी जन्मसमये एव निर्मिता प्रकृतिः एव ब्राह्मणक्षत्रियादिधर्मप्रवृत्तिकारणम्। न तु स अहमेव पण्डितः, अहमेव ज्ञानी, इत्यहंकार एव स्वो दक्षः स्वरूपबलं तन्निवृत्तौ प्रवृत्तौ वा कारणमस्ति। कनीयसः अल्पस्य आनन्दहीनत्वात् तुच्छस्य उपारे समीपे ज्यायान् नियन्तृत्वेन स्थितः अधिकः सहजः स्वभावः अस्ति। स एव स्वभावः प्रकृतिर्वा तं कनीयांसं जीवात्मानं स्वस्ववर्णधर्मे प्रवर्तयति। स्वप्नश्चन = स्वप्नेऽपि अहंकारविशिष्टस्य पुरुषस्य अनृतस्य मिथ्याव्यवसायस्य प्रयोता = प्रकर्षेण मिश्रयिता भवति॥ ध्रुतिः = ध्रु गतिस्थैर्ययोः इति धातोः क्तिन् प्रत्ययः।

स्वभावजेनेति = हे कौन्तेय! हे अर्जुन! त्वं मोहात् अविवेकात् स्वभ्रातृत्वाद्यनुरागात् यत् युद्धात्मकं कर्म कर्तुं विधातुं न इच्छसि इच्छां न करोषि, स्वभावजेन पूर्वजन्मशुभाशुभकर्मसंस्कारस्वरूपः प्रवृत्तिनिवृत्तिहेतुः स्वभावः प्रकृतिगुणविशेषः तस्मात् जायते इति स्वभावजं तेन स्वभावजेन स्वाभाविकेन स्वेन-आत्मीयेन कर्मणा निबद्धः स्पृष्टः बन्धनं प्राप्तो वा त्वम् अवशोऽपि पराधीनोऽपि प्रकृतिवशोऽपि इत्यर्थः, तत् युद्धात्मकं कर्म करिष्यसि युद्धे प्रवृत्तो भविष्यसीत्यर्थः॥६०॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्॥६०॥

XVIII



अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः। यं कामये तंतमुग्रं कृणोमि ब्रह्माणं तमृषिं तं सुमेधाम्॥ ऋ० १०।१२५।५॥ अथ० ४।३०।३॥

अहमिति = अहं स्वयमेव परमात्मा देवेभिः देवैः ज्ञानिभिः विद्वद्भिः मानुषेभिः मनुष्यैः वा जुष्टं सेवितं स्वाभाविकं इदं बचनं वदामि उपदिशामि। यं पुरुषं तत्प्राक्तनकर्मानुकूलं फलस्वरूपं कर्म कारयितुं कामये वाञ्छामि तं तं पुरुषं उग्रं उग्रं कर्म कारयितुं प्रवर्तयामि। तं ब्रह्माणं ब्रह्मज्ञानिनं कृणोमि, तमेव ऋषिं अतीन्द्रियार्थदर्शिनं कृणोमि- करोमि तमेव सुमेधां शोभनप्रज्ञं च कृणोमि करोमि॥

ईश्वर इति = हे अर्जुन! ईश्वरः सर्वलोकनियन्ता यन्त्रारूढानि यंत्रे स्वस्वनियममये यंत्रे आरूढानि स्थितानि सर्वभूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वाणि भूतानि मायया स्वशक्त्या भ्रामयन् स्वस्वकर्मसु प्रवर्तयन् सर्वभूतानां सर्वेषां भूतानां प्राणिनां अप्राणिनां च हृद्देशे हृदये तिष्ठति वर्तते॥६१॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया॥६१॥

"विशं विशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा। यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः॥ ऋ० १०।४३।६॥ अथ०२०।१७।६॥

विशमिति = वृषा भक्तानां कामानां वर्षयिता, मघवा सर्वैः पूजनीयः इन्द्रः = परमेश्वरः विशं विशं सर्वान् मनुष्यान् सर्वप्राणिहृद्देशे पर्यशायत परिशेते तिष्ठति। जनानां मुमुक्षुजीवानां धेनाः स्तुतीः अवचाकशत् अभिपश्यति। हृद्देशे तिष्ठन् सर्वप्राणिनां कर्माणि पश्यतीत्यर्थः। किंच शक्रः सर्वशक्तिसम्पन्नः परमेश्वरः यस्य अह = यस्य यजमानस्य एव सवनेषु प्रातर्मध्याह्नसायंकालिकेषु यज्ञेषु रण्यति रमते। स एव यजमानः मुमुक्षुः यतिः तीव्रैः तीव्राकारैः सोमैः सवनैः पृतन्यतः भगवद्भक्तेन सह युद्धमिच्छतः कामक्रोधप्रभृतिशत्रून् सहते तत्प्रहारसहनं प्रकरोति तत्प्रभावमभिभवतीत्यर्थः। "एष मे आत्माऽन्तर्हृदये" छान्दो० ३।१४।३ = "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः" = छान्दो० ८।८।१॥

तमिति = हे भारत! हे भरतकुलोत्पन्न! अर्जुन! त्वं सर्वभावेन सर्वत्र परमेश्वर एव विद्यते' इति भावेन तं परमेश्वरं शरणं गच्छ आप्नुहि। तत्प्रसादात् तस्य परमेश्वरस्य प्रसादात् अनुग्रहात् परां शान्तिं सर्वोत्कृष्टां शान्तिं प्राप्स्यसि लप्स्यसे तथा च शाश्वतं नित्यं स्थानं पदं मुक्तिपदं प्राप्स्यसि इति॥६२॥

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥
६२॥

१ — "तवाहं मग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः। द्वेषो युतो न दुरिता तुर्याम मर्त्यानाम्॥" ऋ० ५।९।६॥

२ यद्वा = तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः। त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्व दातवे। ऋ० ८।१९।२९॥

३ यद्वा = य एक इत् तमु ष्टुहि, कृष्टीनां विचर्षणिः। पतिर्जज्ञे वृषक्रतुः॥ ऋ० ६।४५।१६

१ तवेति = हे अग्ने! हे ज्योतिःस्वरूप! परमात्मन्! अहं भवतः शरणं आपन्नः, मित्रस्य सर्वेषां मित्रभूतस्य तव परमात्मनः ऊतिभिः युष्मत्कर्तृकरक्षणैः च तथा तव प्रशस्तिभिः अस्मत्कृतैः ~~[illegible]~~ स्तोत्रैः शरणागतानां मर्त्यानां मरणधर्माणां ~~[illegible]~~ मादृशां मनुष्याणां दुरिता दुरितानि पापानि पापसाधनकर्माणि च "द्वेषो युतो न" = द्वेषयुक्तान् कामक्रोधादिशत्रून् इव तुर्याम तरेयम्। त्वद्रक्षणैः त्वत्सम्बन्धिस्तुतिभिश्च बाह्याभ्यन्तर शत्रून् तरेयम् इत्यर्थः। ऊतिभिः = अव रक्षणे, क्तिन्। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च'(ऊठ्)। ऊतियूतिजूतिसातिहेतिकीर्तयश्चेत्यन्तोदात्तत्वेन निपातितः। प्रशस्तिभिः = शंसु स्तुतौ। क्तिन्। द्वेषो युतः = द्विष् अप्रीतौ भावे असुन् प्रत्ययः। युमिश्रणे। कर्तरि क्विप्, तुक्, कृदुत्तरपदप्रकृतिस्वरत्वम्। तुर्याम = तॄ प्लवनतरणयोः। प्रार्थनायां लिङ्। यासुट्। "लिङः सलोपोऽनन्त्यस्येति सकारलोपः। "बहुलं छन्दसीति शपो लुक्। "उदोष्ठ्यपूर्वस्य" "बहुलं छन्दसि" इत्युत्वम्।

२ तवेति = हे अग्ने! ज्योतिःस्वरूप परमात्मन्! तव त्वदीयेन शरणरूपेण क्रत्वा कर्मणा सनेयं त्वां संभजेयं त्वां शरणम् आगच्छेयम्। तव परमात्मनः रातिभिः स्वैः आत्मसमर्पणैः सनेयं त्वां भजेयम्। तथा तव परमात्मनः प्रशस्तिभिः स्तोत्रैः सनेयं त्वां भजेयम् तथा तव परमात्मनः प्रशस्तिभिः स्तोत्रैः सनेयं त्वां संभजेयम्। हे वसो! हे सर्ववासस्वरूप परमात्मन्! मम शरणमापन्नस्य मम यजमानस्य इमां प्रमतिं प्रकृष्टबुद्धिं प्रकृष्टज्ञानिनं त्वां ~~इत्~~ त्वामेव आहुः ब्रह्मवादिनः कथयन्ति। हे अग्ने! हे ज्योतिःस्वरूप ब्रह्मन्! दातवे स्वशरणं दातुं हर्षस्व हृष्टो भव हर्षयुक्तः सन् मह्यं शरणं प्रयच्छ इत्यर्थः।

इति ते इति = "अहमपि आसम पुरा त्वमपि अभूः" इत्यारभ्य "स्थानं प्राप्स्यसि शाश्वतम्" इत्यन्तं गुह्यात् गोप्यात् गुह्यतरं गोप्यतरं ज्ञानं मया ते शरणं प्रपन्नाय तुभ्यम् आख्यातं कथितम्। त्वं एतद् मत्प्रोक्तं ज्ञानं अशेषेण सकलं विमृश्य विचार्य यथा येन प्रकारेण इच्छसि इच्छां करोषि तथा तेनैव प्रकारेण कुरु विधेहि॥६३॥

इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥६३॥

गुहाहितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम्। उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूरवीर्येण। ऋ० २।११।५॥

गुहाहितमिति = हे शूर! हे ज्ञानशूर! गुहाहितं गुहायां हृदयाकाशे हितं निहितं अत एव गुह्यं कस्मैचिदपि अप्रकाश्यं गूढं गुह्यतरं अप्सु कर्मसु अपीवृतं-

तिरोहितं ज्ञानमस्ति। यत् ज्ञानं ब्रह्म शक्तिमन्तं सर्वशक्तिसम्पन्नं क्षियन्तं = सर्वमुक्तवासकर्तृकं वदन्ति, इतो = अपि च तस्तम्भांसं ज्ञानविकसितहृदया-काशे स्तम्भयन्तं अज्ञानं अपः = दूरीकुरु। तथा वीर्येण स्वसामर्थ्यभूतेन ज्ञानवीर्येण अहिं पापात्मकं अज्ञानं अज्ञानात्मकं सर्पं वा जहि।

सर्वगुह्येति = सर्वगुह्यतमं सर्वेषु गुह्येषु अत्यन्तरहस्यतमं मे मम परमेश्वरस्य परमं अत्युत्तमं वचः भूयः पुनः शृणु आकर्णय। त्वं मे मम इष्टः प्रियः असि। ततः तस्मात् इति बुद्ध्वा ते तुभ्यं दृढं यथा स्यात्तथा हितं हितसाधनं वचनं वक्ष्यामि कथयिष्यामि - त्वं सावधानतया शृणु = आकर्णय। ६४॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥ ६४॥

तमिद्वोचेमा विदथेषु शंभुवं मंत्रं देवा अनेहसम्। इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत्॥ ऋ० १।४०।६॥

तमिति = हे देवाः! हे विद्वांसः! हे ज्ञानेन द्योतमानाः यतः तमित् तमेव शंभुवं सुखस्य भावयितारं अनेहसं अहिंसनीयं दोषरहितं मंत्रं भगवज्ज्ञानप्रतिपादकं मननात्मकं विवेकं विदथेषु ज्ञानयज्ञेषु "विदथानि वेदनानि" - "विदथानि प्रचोदयन्" इत्यपि निगमो भवति (निरु० ६।७)। वोचेम = ब्रवाम। हे नराः! हे ज्ञानिनः मनुष्याः इमां च चेत् मया उच्यमानां मंत्ररूपां वाचं वाणीं प्रतिहर्यथ यूयं कामयध्वम् तर्हि विश्वा सर्वा इत् एव वामा वननीया भजनीया वाक् वो युष्मान् मुमुक्षून् अश्नवत् व्याप्नुयात्। वोचेम = वच परिभाषणे। आशीर्लिङि "लिङ्याशिष्यङ्" इत्यङ्। 'वच उम्' इत्युमागमः। "छन्दस्युभयथा" इति सार्वधातुकत्वात् "लिङः सलोपोऽनन्त्यस्य" इति यासुटः सकारस्य लोपः। "अतो येयः" इतीयादेशः। "आद्गुणः" इति गुणः विदथेषु = विद् ज्ञाने। विद्यते फलसाधनत्वेन ज्ञायते इति विदथो यज्ञः, ज्ञानं वा। "रुधिविदिभ्यः कित्" - (उणादि ३।११४) इत्यथप्रत्ययः। शंभुवम् - भवतेरन्तर्भावितण्यर्थात् "क्विप् च" इति क्विप्। "ओः सुपि" (पाणि०६।४।८३) इति यणादेशस्य "न भूसुधियोः" इति प्रतिषेधः। प्रतिहर्यथा = हर्य गतिकान्त्योः अश्नवत् = अशू व्याप्तौ। लेटि अडागमः। व्यत्ययेन परस्मैपदम्। "इतश्च लोपः" इतीकारलोपः। "इगुपधयोः गुणवृद्धी भवतः विप्रतिषेधेन" इति गुणः।

मन्मना इति = मन्मनाः मयि परमात्मनि एव मनः चित्तं यस्य स मन्मनाः मच्चित्तः, मद्भक्तः मामेव भजतीति मद्भक्तः भव। मद्याजी = मामेव यष्टुं शीलमस्यास्तीति मद्याजी मद्यजनशीलो भव। मां परमात्मानं नमस्कुरु। मां सच्चिदानन्दस्वरूपं परंब्रह्म एव एष्यसि प्राप्स्यसि। ते तव अस्मिन्निमित्ते सत्यं व्यलीकं प्रतिजाने प्रतिज्ञां करोमि। यतः त्वं मे मम प्रियोऽसि इष्टोऽसि इत्यत्र संशयलेशोऽपि नास्ति। ६५॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥६५॥

"अहं गृभ्णामि मनसा मनांसि मम चित्तमनुचित्तेभिरेत। मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत॥ अथ० ६।९४।२॥

अहमिति= अहं परमात्मा मनसा स्वमनसा मनांसि भक्तानां मनांसि गृभ्णामि गृह्णामि स्वायत्ती करोमि। मम चित्तस्य अनु अनुकूलचित्तेभिः मनोभिः अनु आ इत= अनुकूलं कृत्वा आगच्छत। मम वशेषु ममाधीने वः युष्माकं हृदयानि मनांसि कृणोमि करोमि, मम यातम् अनु मदाचरणानुकूलं अनुवर्त्मानः अनुवर्तनः आ इत=आगच्छत।

सर्वधर्मानिति= श्रुतिभक्तिविहित श्रौतस्मार्त कर्मनष्टपापौघः त्वं सर्वधर्मान् निष्प्रयोजनान् असद्विषयान मुक्तिप्रतिबन्धकान् सर्वान् धर्मान् परित्यज्य विहाय-यद्वा "जीवेशौ आभासेन करोति" इति श्रुतेः मम आभासिकं मायिकं असत्यस्वरूपं परित्यज्य मां "मायातत्कार्यसम्बन्धरहितं नित्यं निराभासं शुद्धं सच्चिदानन्दैकस्वरूपं एकमद्वितीयं परं ब्रह्म शरणं व्रज मां परं ब्रह्मैव अनुसन्धेहि। अहं परमात्मा त्वा त्वां सर्वदा सर्वत्र ब्रह्मैव पश्यन्तं त्वां सर्वपापेभ्यः सर्वेभ्यः जराजन्ममृत्युकारकेभ्यः पापेभ्यः मोक्षयिष्यामि प्रापयिष्यामि। त्वं मा शुचः= मा शोकं कुरु॥६६।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥६६॥

१ "मा बिभेर्न मरिष्यसि जरदष्टिं कृणोमि त्वा। निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव॥ अथ० ५।३०।८॥

२ यद्वा= न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः। विश्वा इदस्मात् ध्वरसो विबाधसे यं सुगोपाः रक्षसि ब्रह्मणस्पते॥ ऋ० २।२३।५॥

१. मेति = हे मुमुक्षो! अहं परमात्मा निरवोचम् निःशेषतया कथयामि। तव अंगेभ्यः देहात् यक्ष्मं सांसारिकजनैः पूज्यं यद्वा यक्ष्मा व्याधीनां राजा जन्ममरणादिहेतुकं कर्म तथा अङ्गज्वरं देहजनितपापज्वरं अपाकरोमीति शेषः। अतः त्वं मच्छरणं प्राप्तः न मरिष्यसि, भूयो भूयो मृत्युं न प्राप्स्यसीत्यतः मा बिभेः "मम मृत्युर्भविष्यति", "पुनर्जन्म भविष्यति" इति भयं मा कुरु॥ त्वा त्वां मच्छरणं प्राप्तं मुमुक्षुं भक्तं जरदष्टिं जराविहीनं मुक्तं कृणोमि करोमि।

२ यद्वा= न तमिति= हे ब्रह्मणस्पते! हे ब्रह्माण्डस्वामिन्! सुगोपाः सम्यक्तया रक्षकः त्वं यं स्वशरणं प्राप्तं यं भक्तजनं रक्षसि, न तं अंहः=पापं बाधते न दुरितं भवति। अरातयः कामक्रोधादिशत्रवः कुतश्चन कदाचिदपि न बाधन्ते। द्वयाविनः इहलोकपरलोकयात्रिकस्य तितिरुः=तिरस्कारः न भवति अर्थात् लोकद्वये आनन्दितो भवति। अस्मात् कारणात् विश्वाः सकलाः ध्वरसः= वाचिककायिकमानसिकहिंसाः तं न विबाधसे= विशेषेण न बाधन्ते।

१ इदमिति = हे अर्जुन! इदं ज्ञान शास्त्रं मोक्षशास्त्रं वा ते त्वया

XVIII



अतपस्काय = नास्ति ऋतं सत्यं वा वैदिक कर्मादिकं तपः यस्य स अतपस्कः तस्मै अतपस्काय विषयासक्ताय पुरुषाय न वाच्यं न कथनीयम्। अभक्ताय = भगवद्भक्तिशून्याय कदाचन न वाच्यम्। तथा च अशुश्रूषवे = श्रोतुमिच्छा शुश्रूषा, शुश्रूषा यस्यास्ति स शुश्रूषुः "सनाशंसभिक्ष उः" न शुश्रूषुः अशुश्रूषुः तस्मै अशुश्रूषवे, गीताशास्त्रं श्रोतुमिच्छारहिताय अपि न वाच्यम्। यः मां प्राकृतं मनुष्यं मत्वा अभ्यसूयति निन्दति तस्मै अपि इदं गीताशास्त्रं न वाच्यम्॥६७॥

य इति = यः ब्रह्मविद् यतिः मद्भक्तेषु मां परमात्मानमेव आराधयन्तः ये भजन्ति ते मद्भक्ताः भगवद्भक्ताः तेषु मद्भक्तेषु ~~मां परमात्मानमेव~~ भगवद्भक्तेषु इदं परमं परमपुरुषार्थ साधनं अत्युत्तमं गुह्यं गोप्यं अतपस्कादिभ्योऽवाच्यं गीताज्ञानम् अभिधास्यति कथयिष्यति, स मयि परमात्मनि पराम् अनन्यां भक्तिं सर्वत्र मद्व्याप्तिदृष्टिं कृत्वा मां परमात्मानमेव एष्यति प्राप्स्यति इत्यत्र असंशयः संशयलेशोऽपि नास्ति॥६८॥

नेति = यः गीताज्ञानोपदेष्टाऽस्ति तस्मात् पुरुषात् अन्यः इतरः कश्चित् पुरुषः प्रियतमः मम प्रसत्तेः श्रवण मननादिसाधनानि ये कुर्वन्ति ते प्रियकृतः तेभ्यः प्रियकृद्भ्योऽपि उत्तमः प्रियकृत्तमः अतिशयप्रियकर्ता मनुष्येषु मंत्र-स्तोत्रादिबहिरंगसाधनपरेषु मनुष्येषु नास्ति। तस्मात् प्रियकृत्तमात् पुरुषात् अन्यः भिन्नः प्रियतरः अतिशयेन प्रियः भुवि पृथ्वीलोके मे न भविता न च भविष्यति॥६९

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥६७॥
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥६८॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि॥६९॥

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम॥निरु०२।४॥

विद्येति = विद्या ब्रह्मज्ञानं अर्थात् वेदवाणी ह = प्रसिद्धौ, वै निश्चयेन, ब्राह्मणं ब्रह्मज्ञानिनं गीताशास्त्रज्ञं आजगाम आगता अकथयत् च = मा मां गोपाय अनधिकारिभ्यः रक्ष। अहं वेदगीताशास्त्रप्रतिपादितं ज्ञानं ते तव ब्रह्मज्ञानिनः शेवधिः = निधिः आनन्दकोशोऽस्मि। हे ब्रह्मन्! त्वं असूयकाय परनिन्दकाय, अनृजवे = कुटिलाय, अयताय असावधानाय चंचलाय इति यावत्। मा मां विद्यां न ब्रूयाः न कथय। असूयकादिभ्यः कथनेन निर्वीर्या भविष्यामि। तथा अधिकारिभ्यः कथनेन वीर्यवती बलवती अर्थात् बुद्धिमती स्याम्॥

अध्येष्यते इति = हे अर्जुन! यः अधिकारी पुरुषः आवयोः तव मम

च आवयोः संवादं संलापमयं धर्म्यं धर्मादनपेतम् इमं गीताग्रन्थं अध्येष्यते नियमपूर्वकं पठिष्यति तेन गीताशास्त्रभक्तेन पुरुषेण अहं परमेश्वरः ज्ञानयज्ञेन ज्ञानमेव यज्ञो ज्ञानयज्ञः तेन ज्ञानयज्ञेन इष्टः प्रियः आराधितः स्याम् भवेयम् इति मे मम मतिः बुद्धिः अस्ति ॥ ७०॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः॥ ७०॥

" इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त। आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः॥ ऋ० २।२७।२॥

इमामिति = मित्रः = प्रमीतेस्त्रायकः यद्वा सर्वेषां स्निग्धः। अर्यमा = अरीन् कामादिशत्रून् नियच्छतीति अर्यमा कामक्रोधादिनियन्ता। वरुणः सर्वश्रेष्ठः पापनिवर्त्ता वा एतद्गुणविशिष्टाः पुरुषाः सक्रतवः समानप्रज्ञाः वा अद्य इदानीम् ब्रह्मज्ञानोपलब्धप्रवसरे इमं मे मया प्रोक्तं स्तोमं ज्ञानशास्त्रं जुषन्त जुषयन्तां सेवन्ताम्। मत्प्रदत्तं ज्ञानं सेवमानाः ते पुरुषाः आदित्यासः ज्ञानेन सूर्यवत् देदीप्यमानाः शुचयः शुद्धान्तःकरणाः धारपूताः ज्ञानधाराभिः पूताः पवित्राः क्षालिताः वा निर्मलाः इत्यर्थः। अवृजिनाः = वृजी वर्जने। सर्वेषां ज्ञानिनां संग्राहकाः यद्वा वृजिनं पापं तेन रहिताः सन्तः अनवद्याः अवद्येन गर्ह्येण पापेन रहिताः अतः अरिष्टाः वनेऽपि पापकर्मणाऽहिंसिताः वर्तन्ते॥

श्रद्धावानिति = यः नरः मूढः वृद्धो युवा वापि श्रद्धावान् गीताशास्त्रे श्रद्धाधारकः, अनसूयः भगवच्छास्त्रानिन्दकः शृणुयात् गीताशास्त्रम् आकर्णयेत् सोऽपि एवंविधः श्रोताऽपि मुक्तः = अज्ञानोत्पन्नेभ्यः पापेभ्यः रहितः सन् पुण्यकर्मणां पुण्यं यज्ञयागादिकं शुभं कर्म येषां ते पुण्यकर्माणः तेषां पुण्यकर्मणां शुभान् सुखकरान् लोकान् स्थानानि प्राप्नुयात् लभेत॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणाम्॥७१॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्॥ ऋ० २।२६।३॥
तै० सं० २।३।१४।३॥ तै० ब्रा० २।८।१।२॥

स इति = यः नरः मूढः वृद्धो युवापि वा श्रद्धामनाः ज्ञानशास्त्राय श्रद्धा मनसि यस्य स श्रद्धामनाः सन् देवानां ज्ञानज्योतिषा द्योतमानानां विदुषां पितरं रक्षकं ईश्वरं वा ब्रह्मणस्पतिं ब्रह्मणः मन्त्रस्य पतिः पाता पालयिता वा तं ब्रह्मणस्पतिं परमेश्वरं हविषा अन्तःकरणस्थया अनन्यया भक्त्या आविवासति परिचरतीति "विवासतिः परिचरणकर्मा"। स इत् = स एव नरः जनेन जातेन सर्वेण लोकेन स च विशा प्रजया आत्मीयेन बन्धुजनेन, स एव पुत्रैः आत्मीयैः अपत्यैः वाजं

ज्ञानबलं भरते बिभर्ति। स एव नृभिः अन्यैः सहचरैः पुरुषैः सह अपि धना= धनानि ज्ञानधनानि भरते सम्पादयति। ब्रह्मणस्पतिम् इष्टवतो यजमानस्य सर्वे जनाः अन्नधनसम्पादने साधना: भवन्तीति भावः।

कच्चिदिति = हे धनञ्जय! हे अर्जुन! त्वया तत्त्वचक्षुकेन त्वया एकाग्रेण समाहितेन चेतसा मनसा एतत् मया प्रोक्तं शास्त्रं श्रुतं कच्चित् = किमु? ते तव अज्ञानसं- मोहः अज्ञानात्मकः संमोहः विपरीतग्रहः प्रनष्टः प्रकर्षेण नाशं गतः कच्चित् किमु: न वा? ॥७२॥

अर्जुन उवाच = नष्ट इति = हे अच्युत! हे भगवन्! कृष्ण! त्वत्प्रसादात् तव प्रसादात् उपदेशजन्यानुग्रहात् मोहः सर्वानर्थहेतुः स्वाविवेकतः उत्पन्नः आत्माऽव- रकः विपरीतग्रहः नष्टः नाशं गतः। स्मृतिः स्वात्मतत्त्वविषया क्षात्रधर्मस्मृतिः लब्धा प्राप्ता। अधुनाऽहं अर्जुनः गतसन्देहः सन्देहरहितः स्थितोऽस्मि स्थितिं प्राप्तोऽस्मि। अतः तव श्रीकृष्णस्य वचनं युद्धधर्मकथनं करिष्ये विधास्ये ७३

कच्चिदेतच्छ्रुतं पार्थ! त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय॥७२॥

अर्जुन उवाच = नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥७३॥

"त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि। चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि। ऋ० १०।१२०।५" अथ० ५।२।५॥ अथ० २०।१०७।८॥

त्वयेति = हे परमात्मन्! त्वया अनुगृहीताः वयं क्षत्रियाः प्रपश्यन्तः अवलोकयन्तः रणेषु संग्रामेषु शाशद्महे भृशं शत्रून् शादयामः। सर्वक्षत्रियकुले तु अहं नरोऽपि युधेन्यानि योधनार्हाणि भूरि बहूनि बहुलानि आयुधा आयुधानि आयोधन- साधनानि असिबाणादीनि, ते तव भगवतः वचोभिः ज्ञानामृतवचनैः चोदयामि शत्रून् प्रति प्रेरयामि। ते तुभ्यं ब्रह्मणा स्तुतिरूपेण मंत्रेण वयांसि स्वायुर्मात्रं संशिशामि सम्यक्तया तनू करोमि समर्पयामीत्यर्थः। शाशद्महे = शद्लृ- शातने। अस्माद् यङ्न्तान्महिङ्। "छन्दस्युभयथा" इत्यार्धधातुकत्वात् अतो लोपः यलोपश्च। युधेन्यानि = "कृत्यार्थे तवैकेन्केन्यत्वन" इति युधेरर्हार्थे केन्यप्रत्ययः। भूरि = "सुपां सुलुक्" इति शसो लुक्। आयुधाः = "शेश्छन्दसि बहु- लम्" इति शेर्लोपः। शिशामि = शो तनूकरणे। छान्दस्य विकरणस्य श्लुः। "बहुलं छन्दसि" इत्यभ्यासस्येत्वम्॥५॥

संजय उवाच = इतीति = हे धृतराष्ट्र! वासुदेवस्य = वसन्ति भूतानि अस्मिन्, यद्वा भूतेषु वसतीति वसुः। वसुश्चासौ देवः वसुदेवः। वसुदेवस्या- पत्यं पुमान् वासुदेवः श्रीकृष्णः तस्य वासुदेवस्य श्रीकृष्णस्य च तथा महात्मनः = महान् आत्मा मनः यस्य स महात्मा महानुभावः। तस्य महा...

त्मनः महानुभावस्य पार्थस्य पृथायाः कुन्त्याः अपत्यं पुमान् इति पार्थः अर्जुनः तस्य पार्थस्य अर्जुनस्य इति = पूर्वोक्तं अद्भुतं आश्चर्यकरं इमं गीताग्रन्थं संवादं प्रश्नप्रतिवचनरूपं संलापं रोमहर्षणं रोमाञ्चप्रफुल्लितकरं अश्रौषम् आकर्णितवानस्मि ॥७४॥

सञ्जय उवाच = इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥
(वेदमन्त्रो न लभ्येत)

राजन्निति = हे राजन्! हे धृतराष्ट्र! केशवार्जुनयोः कृष्णार्जुनयोः पुण्यं पवित्रं पुण्यकरं वा अद्भुतं आश्चर्यकरं संवादं प्रश्नोत्तरमयं संलापं इमं गीताख्यं ग्रन्थं संस्मृत्य संस्मृत्य भूयो भूयः स्मृत्वा मुहुः मुहुः पुनः पुनः हृष्यामि - हर्षं प्राप्नोमि ॥७६॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम्।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः॥७६॥
(वेदमन्त्रो न लभ्येत)

तच्चेति = हे राजन्! हे धृतराष्ट्र! हरेः = हरति पापानीति हरिः तस्य हरेः श्रीकृष्णस्य तत् अत्यद्भुतं अत्याश्चर्यकरं रूपं सहस्रशीर्षाद्यात्मकं विराट्स्वरूपं संस्मृत्य संस्मृत्य स्मृत्वा स्मृत्वा मे महान् विस्मयः आश्चर्यं भवति। पुनः पुनः च भूयो - भूयः एतत् संस्मृत्य हृष्यामि हर्षं प्राप्नोमि। धन्योऽहं धन्योऽहमिति सन्तोष - समुद्रे निमज्जामीति भावः॥७७॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः॥७७॥
(वेदमन्त्रो न लभ्येत)

यत्रेति = यत्र यस्मिन् पक्षे योगेश्वरः विद्याऽविद्याभ्यां युज्यते इति योगः, योगो विद्याविद्ये ईशितुं शीलमस्यास्तीति योगेश्वरः यद्वा योगः ज्ञानयोगः कर्मयोगश्च तयोः ईश्वरः योगेश्वरः ~~श्रीकृष्णः अस्ति~~ यद्वा चित्तवृत्तिनिरोधः योगः - योगस्य निरुद्धचित्तवृत्तेः ईश्वरः योगेश्वरः श्रीकृष्णः अस्ति। यत्र यस्मिन् पक्षे धनुर्धरः गाण्डीवधनुर्धारकः पार्थः अर्जुनः अस्ति, तत्र तस्मिन् पक्षे ध्रुवा स्थिरा श्रीः राजलक्ष्मीः तिष्ठति। तत्र भूतिः गजतुरगधनधान्यादिसंपत्तिः स्थिरा तिष्ठति इति मम मतिः निश्चयः अस्तीति। अतः त्वं स्वपुत्रपराजयं विद्धि इति ॥७८॥

इति श्रीलेयावास्तव्य जगन्नाथशास्त्रिकृतायां गीतावेदार्थबोधिन्यां अष्टादशाध्यायः समाप्तः॥१८॥

वसुनन्दांकभूचन्द्रे वत्सरे वैक्रमे मया।
द्वादश्यां च भृगौ ज्येष्ठे गीताव्याख्या सुपूरिता॥

XVIII



यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः समाप्तः ॥१८॥

यस्मिन् विश्वा अधिश्रियो रणन्ति सप्त संसदः। इन्द्रं सुते हवामहे।
अथ० २०।२१०।२

इति श्री वेदगीता समाप्ता ॥

यस्मिन्निति = यस्मिन् अधि परमात्मनि स्मृते सति अर्थात् परमात्मस्मृतिलक्ष्ये विश्वाः समग्राः श्रियः राज्यलक्ष्मीविजयलक्ष्मी प्रभृतयः लक्ष्म्यः तथा सप्त संसदः सप्त भूर्भुवःस्वरादिनिवासस्थानानि, यद्वा शरीराश्रयाः सप्त धातवः सप्त प्राणाः वा रणन्ति शोभन्ते। अतः वयं भगवद्भक्ताः इन्द्रं भक्तैश्वर्यवन्तं जीवात्मानं सुते ब्रह्मानन्दरसप्राप्तौ हवामहे आह्वानं कुर्मः अर्थात् परमात्मभक्त्यै जीवात्मानमाह्वयाम इति भावः।

इति श्री सारस्वतान्वय लैया वास्तव्य जगन्नाथ शास्त्रि ज्योतिषि कृतायां वेदगीतार्थबोधिन्यां अष्टादशोऽध्यायः समाप्तः।

समाप्तश्चायं ग्रन्थः श्रीभगवत्कृष्णचन्द्रप्रसादतः।
शुभं वो भूयात्।
श्रीरस्तु ॥

हरिः ओ३म्

अथ अकारादिक्रमेण श्रीमद् भगवद् गीता श्लोक सूची तथा – वेदगीतानुसारि वेद मंत्र तालिका :—

| श्रीमद् भगवद्गीता प्रतीकात्मक श्लोका: | वेदगीतानुसारि प्रतीकात्मक वेद मंत्राः |
|---|---|
| १ ओं तत्सदिति निर्देशः, गी॰ १७।२३। | (१) त्रिरस्य ता परमा, ऋ॰ ४।१।७॥ (२) त्रिभिष्ट्वं देव, ऋ॰ ९।६७।२६॥ |
| २ ओमित्येकाक्षरं ब्रह्म, गी॰ ८।१३। | — |
| ३ अकीर्तिं चापि भूतानि, गी॰ २।३४। | ३. यदचरस्तन्वा, ऋ॰ १०।५४।३ |
| ४ अक्षरं ब्रह्म परमम्, गी॰ ८।३। | ४ मुभूः स्वयम्भूः, वाज॰ यजु॰ २३।६३ |
| ५ अक्षराणामकारोऽस्मि, गी॰ १०।३३ (चरण १) | ५ येनेमा विश्वा च्यवना, अथ॰ २०।३४।४ |
| ६ अग्निर्ज्योतिरहः शुक्लः | |
| ७ अच्छेद्योऽयमदाह्यः, गी॰ २।२४ | ७ पञ्चारे चक्रे, ऋ॰ १।१६४।१३। अथ॰ ९।९।११॥ |
| ८ अजोऽपि सन्नव्ययात्मा, गी॰ ४।५ | ८ अहं मनुरभवम्, ऋ॰ ४।२६।१ |
| ९ अज्ञश्चाश्रद्दधानश्च, गी॰ ४।४० | ९ — — |
| १० अन्तकाले च मामेव, गी॰ ८।५ | १० अहमेवास्म्यमावास्या३। अथ॰ ७।७९(८४)।२। |
| ११ अन्तवत्तु फलं तेषाम्, गी॰ ७।२३ | (क) ११ देवान् वसिष्ठो अमृतान्। ऋ॰ १०।६५-६६।१५। ~~ऋ॰~~ |
| " " " | (ख) समिधा यो निशिती दाशत्। ऋ॰ ८।१९।१४ |
| १२ अन्तवन्त इमे देहाः, गी॰ २।१८ | १२. अयं होता प्रथमः। ऋ॰ ६।९।४॥ अपश्यमस्य – ऋ॰ १०।७९।१॥ |
| १३ अत्र शूरा महेष्वासाः, गी॰ १।४ | १३ — — |
| १४ अथ केन प्रयुक्तोऽयम्। गी॰ ३।३६ | १४. उदस्य श्यावौ विथुरौ। ~~अथ॰~~ ७।९५।१ |
| १५ अथ चित्तं समाधातुम्। गी॰ १२।९ | १५ — — — — |
| १६ अथ चेत्त्वमिमम् । गी॰ २।३३ | १६ विदुर्गा विद्विषः पुरः। ऋ॰ १।४१।३ |
| १७ अथ चैनं नित्यजातम्। गी॰ २।२६ | १७ अयं पन्था: अनुवित्त पुराणः। ऋ॰ ४।१८।१ |
| १८ अथवा योगिनामेव। गी॰ ६।४२ | १८ पुनर्मनः पुनरायुर्म आगन्। वाज॰ यजु॰ ४।१५ |
| १९ अथवा बहुनैतेन। गी॰ १०।४२ | १९ (क) एतावानस्य महिमाऽतो। ऋ॰ १०।९०।३ |
| " " | (ख) त्रिभिः पद्भिर्द्यामरोहत्। अथ॰ १९।६।२ |
| " " " | (ग) त्रिपादूर्ध्व उदैत् पुरुषः। ऋ॰ १०।९०।४॥ |
| २० अथ व्यवस्थितान् दृष्ट्वा। गी॰ १।२० | २० — — — — |
| २१ अथैतदप्यशक्तोऽसि। गी॰ १२।११ | २१ (क) अयं ते अस्म्युप। ऋ॰ १०।८३।६॥ (ख) अथ॰ ४।३२।६॥ |
| २२ अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा। गी॰ ११।४५ | २२ (क) अत्रा ते रूपमुत्तमम्। ऋ॰ १।१६३।७॥ यजु॰ २९।१८॥ |
| २३ अदेशकाले यद्दानम्। गी॰ १७।२२ | २३ बभ्रे रक्षः समदमा वपेभ्यः। अथ॰ ११।१।३२ |
| २४ अद्वेष्टा सर्व भूतानाम्। गी॰ १२।१३ | २४ सर्वे नन्दन्ति यशसागतेन। ऋ॰ १०।७१।१० |
| २५ अधर्मं धर्ममिति या। गी॰ १८।३२ | २५ — — — — |
| २६ अधर्माभिभवात् कृष्ण। गी॰ १।४१ | २६ — — — — |
| २७ अधश्चोर्ध्वं प्रसृताः। गी॰ १५।२ | २७ अयं लोको जालमासीत्। अथ॰ ८।८।८ |
| २८ अधिभूतं क्षरो भावः। गी॰ ८।४ | (क) २८ इदं यमस्य सादनम्। ऋ॰ १०।१३५।७ |
| " " | (ख) पृथक् सर्वे प्राजापत्याः। अथ॰ ११।५।२२ |

| | |
|---|---|
| २९ अधियज्ञः कथं कोऽत्र । गी० ८।२ | २९ — — — — |
| ३० अधिष्ठानं तथा कर्ता । गी० १८।१४ | ३० पञ्च पदानि रूपो । ऋ० १०।१३।३॥ अथ० १८।३।४० |
| ३१ अध्यात्मज्ञाननित्यत्वम् । गी० १३।११ | ३१ — — — |
| ३२ अध्येष्यते च य इमम् । गी० १८।७० | ३२ इमं स्तोमं सक्रतवः । ऋ० २।२७।२ |
| ३३ अनन्तविजयं राजा । गी० १।१६ | ३३ — — — — |
| ३४ अनन्तश्चास्मि नागानाम् । गी० १०।२९ (पूर्वार्ध) | ३४ वरुणोऽपामधिपतिः स मोऽवतु । अथ० ५।२४।४ |
| ३५ अनन्यचेताः सततम् । गी० ८।१४ | ३५ परि प्रयन्तं वय्यं सुषंसदम् । ऋ० ९।६८।८ |
| ३६ अनन्याश्चिन्तयन्तो माम् । गी० ९।२२ | ३६ योगक्षेमं व आदधाहम् । ऋ० १०।१६६।५ |
| ३७ अनपेक्षः शुचिर्दक्षः । गी० १२।१६ | ३७ प्रियास इत्ते मघवन् । ऋ० ७।१९।८॥ अथ० २०।३७।८॥ |
| ३८ अनादित्वान्निर्गुणत्वात् । गी० १३।३१ | ३८ साकंजानां सप्तथम् । ऋ० १।१६४।१५॥ अथ० ९।९।१६ |
| ३९ अनादिमध्यान्तम् । गी० ११।१९ । | ३९ यस्य सूर्यश्चक्षुश्चन्द्रमाश्च । अथ० १०।७।३३॥ |
| ४० अनाश्रितः कर्मफलम् । गी० ६।१ | ४० तमेव ऋषिं तमु ब्रह्माणमाहुः । ऋ० १०।१०७।६ |
| ४१ अनिष्टमिष्टं मिश्रं च । गी० १८।१२ | ४१ पञ्च पदानि रूपो । ऋ० १०।१३।३॥ अथ० १८।३।४० |
| ४२ अनुद्वेगकरं वाक्यम् । गी० १७।१५ | ४२ सूनृतावन्तः सुभगाः । अथ० ७।६०।६ |
| ४३ अनुबन्धं क्षयं हिंसाम् । गी० १८।२५ | ४३ — — — — |
| ४४ अनेकचित्तविभ्रान्ताः । गी० १६।१६ | ४४ — — — |
| ४५ अनेकबाहूदरवक्त्रनयनम् । गी० ११।१६ | ४५ अतो विश्वान्यद्भुता चिकित्वाँ । ऋ० १।२५।११ |
| ४६ अनेकवक्त्रनयनम् । गी० ११।१० | ४६ — — — |
| ४७ अन्नाद्भवन्ति भूतानि । गी० ३।१४ | ४७ (क) यज्ञ इन्द्रमवर्धयत् । ऋ० ८।१४।५॥ अथ० २०।२७।५ साम० १२१ |
| " " | (ख) यदीमृतस्य पयसा । ऋ० १।७९।३ |
| ४८ अन्ये च बहवः शूराः । गी० १।९ | ४८ — — — |
| ४९ अन्ये त्वेवमजानन्तः । गी० १३।२५ | ४९ (क) त्रिभिः पवित्रैरपुपोद्ध्यर्कम् । ऋ० ३।२६।८ |
| " " " | (ख) शतधारमुत्समक्षीयमाणम् । ऋ० ३।२६।९ |
| ५० अपरं भवतो जन्म । गी० ४।४ | ५० कथा त एतदहमा चिकेतम् । ऋ० १०।२८।५ |
| ५१ अपरे नियताहाराः । गी० ४।३० | ५१ (क) मुनयो वातरशनाः । ऋ० १०।१३६।२॥ ऋ० ३।६-१॥ |
| " " | (ख) युञ्जन्ति ब्रध्नमरुषम् । अथ० २०।२६।४॥ साम० १४६८॥ |
| ५२ अपरेयमितस्त्वन्याम् । गी० ७।५ | ५२ इयमेव सा या प्रथमा । अथ० ३।१०।४ |
| ५३ अपर्याप्तं तदस्माकम् । गी० १।१० | ५३ — — — |
| ५४ अपाने जुह्वति प्राणम् । गी० ४।२९ | ५४ — — — |
| ५५ अपि चेत्सुदुराचारः । गी० ९।३० | ५५ इच्छन्ति त्वा सोम्यासः । ऋ० ३।३०।१ |
| ५६ अपि चेदसि पापेभ्यः । गी० ४।३६ | ५६ — — — |
| ५७ अप्रकाशोऽप्रवृत्तिश्च । गी० १४।१३ | ५७ उत्केतुना बृहता देव आगन् । अथ० १३।२।९ |
| ५८ अफलाकांक्षिभिर्यज्ञः । गी० १७।११ | ५८ यज्ञेन यज्ञमयजन्त । ऋ० १।१६४।५०॥ अथ० ७।५।१॥ |
| ५९ अभयं सत्त्वसंशुद्धिः । गी० १६।१ | ५९ अष्टाविंशानि शिवानि । अथ० १९।८।२ |

| | |
|---|---|
| ६० अभिसंधाय तु फलम्। गी० १७।१२ | ६० यत् पुरुषेण हविषा। अथ० ७।५।४ |
| ६१ अभ्यासयोगयुक्तेन। गी० ८।८ | ६१ अन्तरिच्छन्ति तं जने। ऋ० ८।७२।३ |
| ६२ अभ्यासेऽप्यसमर्थोऽसि। गी० १२।१० | ६२ अभागः सन्नप। ऋ० १०।८३।५॥ अथ० ४।३२।५ |
| ६३ अमानित्वमदम्भित्वम्। गी० १३।७ | ६३ पर्शुर्ह नाम मानवी। अथ० २०।१२६।३ |
| ६४ अमी च त्वां धृतराष्ट्रस्य। गी० ११।२६ | ६४ (क) समस्य मन्यवे विशः। साम० १७।४।२॥ ऋ० ८।६।४॥ |
| | (ख) यद्वा वाजसनद्। अथ० २०।८१।१०॥ ऋ० १०।६७।१० |
| ६५ अमी हि त्वां सुरसंघाः। गी० ११।२१ | ६५ गायन्ति त्वा गायत्रिणः। ऋ० १।१०।५॥ साम० ४।१२।१॥ |
| ६६ अयनेषु च सर्वेषु। गी० १।११ | ६६ — — |
| ६७ अयतिः श्रद्धयोपेतः। गी० ६।३७ | ६७ सेमं नः काममा पृण। ऋ० १।१६।९ |
| ६८ अयुक्तः प्राकृतः स्तब्धः। गी० १८।२८ | ६८ |
| ६९ अवजानन्ति मां मूढाः। गी० ९।११ | ६९ मया सोऽन्नमत्ति। अथ० ४।३०।४॥ अथ० ८।१०।४ |
| ७० अवाच्यवादांश्च बहून्। गी० २।३६ | ७० यः शशाप शपनेन। अथ० १।२८।३ |
| ७१ अविनाशि तु तद्विद्धि। गी० २।१७ | ७१ असति सत् प्रतिष्ठितम्। अथ० १७।१।१९ |
| ७२ अविभक्तं च भूतेषु। गी० १३।१६ | ७२ वेनस्तत्पश्यन्निहितं गुहा सत्। यजु० ३२।८ |
| ७३ अव्यक्तादीनि भूतानि। गी० २।२८ | ७३ तमिद्गर्भं प्रथमम्। ऋ० १०।८२।६॥ यजु० १७।३० |
| ७४ अव्यक्ताद् व्यक्तयः सर्वाः। गी० ८।१८ | ७४ — — — |
| ७५ अव्यक्तोऽक्षर इत्युक्तः। गी० ८।२१ | ७५ तद्विष्णोः परमं पदम्। ऋ० १।२२।२०॥ साम० १६७२ |
| " " " " | — " " अथ० ७।२६।७ |
| ७६ अव्यक्तोऽयमचिन्त्योऽयम्। गी० २।२५ | ७६ को ददर्श प्रथमम्। ऋ० १।१६४।४॥ अथ० ९।९।४ |
| ७७ अव्यक्तं व्यक्तिमापन्नम्। गी० ७।२४ | ७७ असच्छाखां प्रतिष्ठन्तीम्। अथ० १०।७।२१ |
| ७८ अशास्त्रविहितं घोरम्। गी० १७।५ | ७८ अदेवेन मनसा यो रिषण्यति। ऋ० २।२३।१२ |
| ७९ अशोच्यानन्वशोचस्त्वम्। गी० २।११ | ७९ प्र यदित्था परावतः। ऋ० १।३९।१॥ |
| ८० अश्रद्दधानाः पुरुषाः। गी० ९।३ | ८० यस्य कूरमभजन्त। ६ |
| ८१ अश्रद्धया हुतं दत्तम्। गी० १७।२८ | ८१ (क) श्रद्धयाग्निः समिध्यते। ऋ० १०।१५१।१ |
| " " | (ख) एवं भोजेषु यज्वस्वस्माकम्। ऋ० १०।१५१।३ |
| " " | (ग) अश्रद्धा मनृते [illegible]। यजु० १९।७७ |
| ८२ अश्वत्थः सर्ववृक्षाणाम्। गी० १०।२६ (पूर्वार्द्ध) | ८२ (क) अश्वत्थः [illegible] ३।६।१ |
| " " | (ख) शमीमश्वत्थ आरूढः। अथ० ६।११।१ |
| ८३ असक्तबुद्धिः सर्वत्र। गी० १८।४९ | ८३ न तमंहो न दुरितानि मर्त्यम्। ऋ० ७।८२।७ |
| ८४ असक्तिरनभिष्वङ्गः। गी० १३।९ | ८४ — — — |
| ८५ असत्यमप्रतिष्ठं ते। गी० १६।८ | ८५ प्र सु स्तोमं भरत। ऋ० ८।१००।३ |
| ८६ असौ मया हतः शत्रुः। गी० १६।१४ | ८६ — — — |
| ८७ असंयतात्मना योगः। गी० ६।३६ | ८७ संज्ञपनं वो मनसः। अथ० ६।७४।२ |
| ८८ असंशयं महाबाहो। गी० ६।३५ | ८८ (क) यथा मनो मनस्केतैः। अथ० ६।१०५।१ |
| | (ख) यद्वो मनः परागतम्। अथ० ७।१२।४ |

| | |
|---|---|
| ८९ अस्माकं तु विशिष्टा ये। गी०१।७ | ८९ — — — — |
| ९० अहं क्रतुरहं यज्ञः। गी० ९।१६ | ९०(क) अग्निरस्मि जन्मना। ऋ० ३।२६।७॥<br>साम० ६।३७॥ यजु० १८।६६ |
| ९१ अहंकारं बलं दर्पम्। गी० १६।१८ | ९१ ~~(ख) अन्नाद्धि~~ मा पृणन्तो। ऋ०१।१२५।७ |
| ९२ अहंकारं बलं दर्पम्। गी० १८।५३ | ९२ — — — — |
| ९३ अहमात्मा गुडाकेश। गी० १०।२० | ९३(क) स एव मृत्युः सोऽमृतम्। अथ० १३।६।२५<br>(ख) स रुद्रो वसुवनिर्वसुदेये। अथ० १३।६।२६ |
| ९४ अहं वैश्वानरो भूत्वा। गी० १५।१४ | ९४(क) य इन्द्रेण सरथं। अथ० ३।२१।३ |
| 〃 〃 〃 | 〃 (ख) यः सोमे अन्तर्यो गोष्वन्तर्यः। अथ०३।२१।२ |
| 〃 〃 〃 | (ग) अयं होता प्रथमः। ऋ० ६।९।४<br>(घ) मथीद् यदीं विष्टो मातरिश्वा। ऋ०१।१४८। |
| ९५ अहं सर्वस्य प्रभवः। गी० १०।८ | ९५(क) अहं जजान पृथिवीम्। अथ० ६।६१।३ |
| 〃 〃 〃 〃 | (ख) तमु ष्टवाम य इमा जजान। ऋ० ८।९६।६ |
| ९६ अहं हि सर्वयज्ञानाम्। गी० ९।२४ | ९६. अहं सो अस्मि यः पुरा। ऋ०१।१०५।७ |
| ९७ अहिंसा सत्यमक्रोधः। गी० १६।२ | ९७ — — — — |
| ९८ अहिंसा समता तुष्टिः। गी० १०।५ | ९८ — — — — |
| ९९ अहो बत महत्पापम्। गी० १।४५ | ९९ |
| १०० अज्ञश्चाश्रद्दधानश्च। गी० ४।४० | १०० |
| १०१ आख्याहि मे को भवान्। गी० ११।३१ | १०१ कुर्मस्त आयुरजरं यदग्ने। ऋ०१०।५१।१ |
| १०२ आचार्याः पितरः पुत्राः। गी० १।३४ | १०२ — — — |
| १०३ आढ्योऽभिजनवानस्मि। गी० १६।१५ | १०३ अहं पचाम्यहं ददामि। अथ०१२।३।४६ |
| १०४ आत्मसंभाविताः स्तब्धाः। गी० १६।१७ | १०४ अति वा यो मरुतो मन्यते नो। अथ०२।१२।६ |
| १०५ आत्मौपम्येन सर्वत्र। गी० ६।३२ | १०५ आत्मानं ते मनसा। ऋ०१।१६३।६॥ वा० यजु० २९।१७ |
| १०६ आदित्यानामहं विष्णुः। गी० १०।२१ (प्रथम चरण) | १०६ ऋते नादित्यास्तिष्ठन्ति। ऋ० १०।८५।१॥ सोमेनादित्या बलिनः॥ ऋ० १०।८५।२॥ विष्णुर्युनक्तु बहुधा। अथ० ५।२६।७ |
| १०७ आपूर्यमाणमचलप्रतिष्ठम्। गी० २।७० | १०७(क) परा हि मे विमन्यवः। ऋ०१।२५।४ |
| 〃 〃 〃 | (ख) आ त्वा विशन्त्विन्दवः। ऋ०८।८२।२२। साम० १६६० |
| १०८ आ ब्रह्म भुवनाल्लोकाः। गी० ८।१६ | १०८(क) परमां तं परावतम्। अथ०६।७५।२ |
| 〃 〃 〃 | (ख) ये पन्थानो बहवो देवयानाः। अथ०६।५५।१ |
| १०९ आयुधानामहं वज्रम्। गी० १०।२८ (चरण१) | १०९ वज्रमेको बिभर्ति हस्त आहितम्। ऋ० ८।२९।४ |
| ११० आयुः सत्त्वबलारोग्य-। गी० १७।८ | ११० — — — |
| १११ आरुरुक्षोर्मुनेर्योगम्। गी० ६।३ | १११ — — — |
| ११२ आवृतं ज्ञानमेतेन। गी० ३।३९ | ११२ कामो जज्ञे प्रथमो नैनं देवाः। अथ० ९।२।१९ |
| ११३ आशापाशशतैर्बद्धाः। गी० १६।१२ | ११३ तेऽधराञ्चः प्रप्लवताम्। अथ० ३।६।७ |
| ११४ आश्चर्यवत्पश्यति कश्चिदेनम्। गी० २।२९ | ११४(क) उत त्वः पश्यन्न ददर्श वाचम्। ऋ०१०।७१।१ |
| 〃 〃 | (ख) शिवास्त एका अशिवास्त एकाः। अथ०७।४४।१ |
| ११५ आसुरीं योनिमापन्ना। गी० १६।२० | ११५(क) येना निचक्र आसुरीन्द्रं –। अथ०७।३८।२ |
| 〃 〃 | 〃 (ख) ये पाकशंसं विहरन्त। ऋ०७।१०४।९ |

| | |
|---|---|
| ११६ आहारस्त्वपि सर्वस्य। गी० १७।७ | ११६ (क) अप पापं परिक्षवम्। अथ० १९।८।५ |
| " " | (ख) श्रावं मेन्यु ऊर्धानि। ऋ० १०।१०९।२। अथ० ७।१२।३ |
| ११७ आहुस्त्वामृषयः सर्वे। गी० १०।१३ | ११७ – – – |
| ११८ इच्छाद्वेषसमुत्थेन। गी० ७।२७ | ११८ अयं लोको जालमासीत्। अथ० ८।८।८ |
| ११९ इच्छा द्वेषः सुखं दुःखम्। गी० १३।६ | ११९ (क) प्राणापानौ चक्षुःश्रोत्रम्। अथ० ११।८।२६ |
| " " " | (ख) आशिषश्च प्रशिषश्च। अथ० ११।८।२७ |
| " " " | (ग) या आपो याश्च देवताः। अथ० ११।८।३० |
| " " " | (घ) सूर्यश्चक्षुर्वातः प्राणम्। अथ० ११।८।३१ |
| " " " | (ङ) चतुर्दशान्ये महिमानो अस्य। ऋ० १०।११४।७ |
| १२० इति गुह्यतमं शास्त्रम्। गी० १५।२० | १२० गूहता गुह्यं तमो वि यात। ऋ० १।८६।१० |
| १२१ इति ते ज्ञानमाख्यातम्। गी० १८।६३ | १२१ गुहा हितं गुह्यं गूळ्हमप्सु। ऋ० २।११।५ |
| १२२ इति क्षेत्रं तथा ज्ञानम्। गी० १३।१८। | १२२ तस्माद् वै विद्वान् पुरुषम्। अथ० ११।८।३२ |
| १२३ इत्यर्जुनं वासुदेवस्तथोक्त्वा। गी० ११।५० | १२३ अत्रा ते रूपमुत्तममपश्यम्। ऋ० १।१६३।७ |
| १२४ इत्यहं वासुदेवस्य। गी० १८।७४ | १२४ यस्मिन् विश्वाश्रियो रणन्ति। ऋ० ८।९२।१३ |
| १२५ इदमद्य मया लब्धम्। गी० १६।१३ | १२५ (क) न हि मे रोदसी उभे। ऋ० १०।११९।८ |
| " " " | (ख) हन्ताहं पृथिवीमिमाम्। ऋ० १०।११९।९ |
| " " " | (ग) यावच्चतस्रः प्रदिशः। अथ० ३।२२।५ |
| १२६ इदं तु ते गुह्यतमम्। गी० ९।१ | १२६ गुहाहितं गुह्यं गूळ्हमप्स्वपीवृतम्। ऋ० २।११।५ |
| १२७ इदं ते नातपस्काय। गी० १८।६७ | १२७ विद्या ह वै ब्राह्मणमाजगाम। निरु० २।४ |
| १२८ इदं शरीरं कौन्तेय। गी० १३।१ | १२८ अक्षेत्रवित् क्षेत्रविदं ह्यप्राट्। ऋ० १०।३२।७ |
| १२९ इदं ज्ञानमुपाश्रित्य। गी० १४।२ | १२९ – – – |
| १३० इन्द्रियस्येन्द्रियस्यार्थे। गी० ३।३४ | १३० (क) यो नः पूषन्नघो वृकः। ऋ० १।४२।२ |
| | (ख) अप त्यं परिपन्थिनम्। ऋ० १।४२।३ |
| १३१ इन्द्रियाणां हि चरताम्। गी० २।६७ | १३१ (क) मनसा संकल्पयति। अथ० १२।४।३१ |
| | " (ख) मनसे चेतसे धिये। अथ० ६।४१।१ |
| १३२ इन्द्रियाणि पराण्याहुः। गी० ३।४२ | १३२ (क) परो दिवा पर एना पृथिव्या। ऋ० १०।८२।५ |
| " " " | " (ख) साकंजानां सप्तथमाहुरेकजम्। ऋ० १।१६४।१६ अथ० ९।९।१५ |
| १३३ इन्द्रियाणि मनो बुद्धिः। गी० ३।४० | १३३ अयमग्निरमूमुहत्। अथ० ३।२।२ |
| १३४ इन्द्रियार्थेषु वैराग्यम्। गी० १३।८ | १३४ ——— |
| १३५ इमं विवस्वते योगम्। गी० ४।१ | १३५ अहं सो अस्मि यः पुरा। ऋ० १।१०५।७ |
| १३६ इष्टान् भोगान् हि वो देवाः। गी० ३।१२ | १३६ न स सखा यो न ददाति सख्ये। ऋ० १०।११७।४ |
| १३७ इहैकस्थं जगत् कृत्स्नम्। गी० ११।७ | १३७ अयमस्मि जरितः पश्य। ऋ० ८।१००।४ |
| १३८ इहैव तैर्जितः सर्गः। गी० ५।१९ | १३८ ये पुरुषे ब्रह्म विदुस्ते। अथ० १०।७।१७ |
| १३९ ईश्वरः सर्वभूतानाम्। गी० १८।६१ | १३९ विशं विशं मघवा पर्यशायत। ऋ० १०।४३।६। अथ० २०।१७।६ |
| १४० उच्चैःश्रवसमश्वानाम्। गी० १०।२७ (पूर्वार्ध) | १४० (क) ये त्वा श्वेता उच्चैःश्रवसः। अथ० २०।१२८।१६ |
| " " " | " (ख) प्रष्टिं धावन्तं हर्योरौच्चैःश्रवसम्। अथ० २०।१२८।१५ |
| " " " | " (ग) युक्ताः श्वेता औच्चैःश्रवसम्। अथ० २०।१२८।१६ |

१४१ उत्क्रामन्तं स्थितं वापि। गी० १५।१० — १४१ (क) ऊर्ध्वं भरन्तमुदकम्। अथ० १०।८।१४
" " " — " (ख) अपाङ् प्राङेति स्वधया। ऋ० १।१६४।३८

१४२ उत्तमः पुरुषस्त्वन्यः। गी० १५।१७ — १४२ (क) इमं च लोकं परमं च लोकम्। अथ० १९।५४।५
" " " " — " (ख) त्रयः केशिनः ऋतुथा। ऋ० १।१६४।४४
अथ० ९।१०।२६

१४३ उत्सन्नकुलधर्माणाम्। गी० १।४४ — १४३ — —
१४४ उत्सीदेयुरिमे लोकाः। गी० ३।२४ — १४४ भद्रमिच्छन्त ऋषयः। अथ० १९।४१।१
१४५ उदाराः सर्व एवैते। गी० ७।१८ — १४५ एते शामी भिः सुशमी। ऋ० १०।२८।१२
१४६ उदासीनवदासीनम्। गी० १४।२३ — १४६ — —
१४७ उद्धरेदात्मनात्मानम्। गी० ६।५ — १४७ (क) यो३ऽस्मान् द्वेष्टि तमात्मा। अथ० १६।७।५
" " " — " ख निर्द्विषन्तं दिवो निःपृथिव्याः। अथ० १६।७।-६॥

१४८ उपद्रष्टाऽनुमन्ता च। गी० १३।२२ — १४८ हंसः शुचिषद्वसुः। ऋ० ४।४०।५। यजु० १०।२४
१४९ ऊर्ध्वं गच्छन्ति सत्त्वस्थाः। गी — १४९ (क) वरुणेन प्रव्यथिताः। अथ० १०।३।९
" " " — " (ख) तिस्रो ह प्रजा अत्यायमायन्। ऋ० ८।१०१।१४॥ अथ० १०।८।३
" " — "

१५० ऊर्ध्वमूलमधःशाखम्। गी० १५।१ — १५० अश्वत्थो देव सदनः। अथ० १९।३९।६
१५१ ऋषिभिर्बहुधा गीतम्। गी० १३।४ — १५१ — — —
१५२ एतच्छ्रुत्वा वचनम्। गी० ११।३५ — १५२ —
१५३ एतद्योनीनि भूतानि। गी० ७।६ — १५३ अहं सुवे पितरम्। ऋ० १०।१२५।७। अथ० ४।३०।७
१५४ एतन्मे संशयं कृष्ण। गी० ६।३९ — १५४ — —
१५५ एतान्न हन्तुमिच्छामि। गी० १।३५ — १५५ — —
१५६ एतान्यपि तु कर्माणि। गी० १८।६ — १५६ कुर्वन्नेवेह कर्माणि। यजु० ४०।२
१५७ एतां दृष्टिमवष्टभ्य। गी० १६।९ — १५७ अयं लोकः प्रियतमः। अथ० ५।३०।१७
१५८ एतां विभूतिं योगं च। गी० १०।७ — १५८ सर्वा हि ते विभूतयः। अथ० २०।६०।६॥
१५९ एतैर्विमुक्तः कौन्तेय। गी० १६।२२ — १५९ इमे उप्ता मृत्युपाशाः। अथ० ८।८।१६
१६० एवमुक्तो हृषीकेशः। गी० १।२४ — १६० — — —
१६१ एवमुक्त्वार्जुनः संख्ये। गी० १।४७ — १६१
१६२ एवमुक्त्वा ~~अर्जुनः संख्ये~~। गी० ततो राजन्
गी० ११।९॥ — १६२ (क) सहस्रशीर्षा पुरुषः। यजु० ३१।१। ऋ० = १०।९०।१॥
" — (ख) विभ्रतं भुरत। ऋ० १०।८१।३
यजु० १७।१९॥

१६३ एवमुक्त्वा हृषीकेशम्। गी० २।९ — १६३
१६४ एवमेतद्यथाऽऽत्थ त्वम्। गी० ११।३ — १६४
१६५ एवं परम्पराप्राप्तम्। गी० ४।२ — १६५
१६६ एवं प्रवर्तितं चक्रम्। गी० ३।१६ — १६६ यस्तित्याज सचिविदम्। ऋ० १०।७१।६
१६७ एवं बहुविधा यज्ञाः। गी० ४।३२ — १६७ ऐन्द्राग्नं पावमानम्। अथ० ११।७।६
" " " — " राजसूयम् वाजपेयम्। अथ० ११।७।७
" " " " — " अग्न्याधेयमथो दीक्षा। अथ० ११।७।८
" " " " — " अग्निहोत्रं च श्रद्धा च। अथ० ११।७।९

| | |
|---|---|
| १६८ एवं बुद्धेः परं बुद्ध्वा । गी० ३।४३ | १६८ एतानि सोम पवमानो । ऋ० ९।७८।१ |
| १६९ एवं सततयुक्ता ये । गी० १२।१ | १६९ —— |
| १७० एवं ज्ञात्वा कृतं कर्म । गी० ४।१५ | १७० अस्तावि मन्म पूर्व्यम् । ऋ० ८।५२।९ साम० १६७७ ॥ |
| " " " " | (ख) देवस्य सवितुः सवे । अथ० ६।२३।३ |
| १७१ एषा तेऽभिहिता सांख्ये । गी० २।३९ | १७१ (क) महो अर्णः सरस्वती । ऋ० १।३।१२ यजु० २०।८६ |
| " " " " | " (ख) उप षु शृणुही गिरः । ऋ० १।८२।१ |
| १७२ एषा ब्राह्मी स्थितिः पार्थ । गी० २।७२ | १७२ उदीर्ध्वं जीवो असुर्न । ऋ० १।११३।१६ |
| १७३ कच्चिन्नोभयविभ्रष्टः । गी० ६।३८ | १७३ —— |
| १७४ कच्चिदेतच्छ्रुतं पार्थ । गी० १८।७२ | १७४ (क) त्वया वयं शाशद्महे । ऋ० १०।१२०।५ ॥ अथ० ५।२।५ । |
| १७५ कट्वम्ललवणात्युष्ण । गी० १७।९ | १७५ (क) उत तिष्ठताव पश्यतेन्द्रस्य । अथ० ७।७२।१ |
| " " " " | " (ख) तृष्टमेतत् कटुकमेतत् । ऋ० १०।८५।३४ ॥ अथ० १४।१।२९ ॥ अथ० |
| १७६ कथं न ज्ञेयमस्माभिः । गी० १।३९ | १७६ —— |
| १७७ कथं भीष्ममहं संख्ये । गी० २।४ | १७७ —— |
| १७८ कथं विद्यामहं योगिन् । गी० १०।१७ | १७८ |
| १७९ कर्मजं बुद्धियुक्ता हि । गी० २।५१ | १७९ (क) आ नयैतमा रभस्व । अथ० ९।५।१ |
| " " " " | " (ख) तद्विष्णोः परमं पदम् । ऋ० १।२२।२० ॥ यजु० वा० ६।५ ॥ साम० १६७२ ॥ अथ० ७।२६।७ ॥ |
| १८० कर्मणः सुकृतस्याहुः । गी० १४।१६ | १८० (क) ये अर्वाञ्चस्ताँ उ । ऋ० १।१६४।१९ ॥ अथ० ९।९।१९ |
| " " " | " (ख) स्वर्गो बहुधा विचक्रे । अथ० ११।३।५४ |
| १८१ कर्मणैव हि संसिद्धिम् । गी० ३।२० | १८१ विष्णू शर्मा तरणित्वेन । ऋ० २।११।४ |
| १८२ कर्मणो ह्यपि बोद्धव्यम् । गी० ४।१७ | १८२ —— |
| १८३ कर्मण्यकर्म यः पश्येत् । गी० ४।१८ | १८३ —— |
| १८४ कर्मण्येवाधिकारस्ते । गी० २।४७ | १८४ कुर्वन्नेवेह कर्माणि । यजु० ४०।२ |
| १८५ कर्म ब्रह्मोद्भवं विद्धि । गी० ३।१५ | १८५ तस्माद् यज्ञात् । ऋ० १०।९०।८ ॥ यजु० वा० ३१।६ ॥ अथ० १९।६।१४ ॥ |
| १८६ कर्मेन्द्रियाणि संयम्य । गी० ३।६ | १८६ एष वाजी हितो नृभिः । ऋ० ९।२८।१ ॥ साम० १२८० ॥ |
| १८७ कर्षयन्तः शरीरस्थम् । गी० १७।६ | १८७ —— |
| १८८ कविं पुराणमनुशासितारम् । गी० ८।९ | १८८ (क) मूर्धानमस्य संसीव्य । अथ० १०।२।२६ |
| " " " " | (ख) ध्रुवोऽच्युतः प्रमृणीहि । अथ० ६।८८।३ |
| १८९ कस्माच्च ते न नमेरन् । गी० ११।३७ | १८९ (क) बृहन्तो नाम ते देवाः । अथ० १०।७।२५ |
| " " " " | " (ख) असति सत् प्रतिष्ठितम् । अथ० १७।१।१९ |
| १९० काम एष क्रोध एषः । गी० ३।३७ | १९० —— |
| १९१ कामक्रोधवियुक्तानाम् । गी० ५।२६ | १९१ ब्राह्मणासः सोमिनः । ऋ० ७।१०३।८ |
| १९२ काममाश्रित्य दुष्पूरम् । गी० १६।१० | १९२ यो मा पाकेन मनसा । अथ० ८।४।८ ॥ ऋ० ७।१०४।८ |
| १९३ कामात्मानः स्वर्गपराः । गी० २।४३ | १९३ यज्ञपतिमृषय एनसाहुः । अथ० २।३५।२ |
| १९४ कामैस्तैस्तैर्हृतज्ञानाः । गी० ७।२० | १९४ यस्ते यज्ञे स मर्त्यः । ऋ० १०।९३।२ |

| | |
|---|---|
| १९५ काम्यानां कर्मणां न्यासम्। गी० १८।२ | १९५ — — |
| १९६ कायेन मनसा बुद्ध्या। गी० ५।११ | १९६ दुहं मे पञ्च प्रदिशः। अथ० ३।२०।९ |
| १९७ कार्पण्यदोषोपहतस्वभावः। गी० २।७ | १९७ इन्द्रस्य गृहोऽसि तम्। अथ० ५।६।११ |
| १९८ कार्यकारणकर्तृत्वे। गी० १३।२० | १९८ (क) यस्मिन्वृक्षे सुपलाशे। ऋ० १०।१३५।१ |
| " " " " | " (ख) इदं यमस्य सादनम्। ऋ० १०।१३५।७ |
| १९९ कार्यमित्येव यत्कर्म। गी० १८।९ | १९९ — |
| २०० कालोऽस्मि लोकक्षयकृत्। गी० ११।३२ | २०० (क) कालेऽङ्गिरा देवोऽथर्वा। अथ० १९।५४।५ |
| " " " " | " (ख) कालादापः समभवन्। अथ० १९।५४।१ |
| २०१ काश्यश्च परमेष्वासः। गी० १।१७ | २०१ — — — |
| २०२ काङ्क्षन्तः कर्मणां सिद्धिम्। गी० ४।१२ | २०२ तेऽविन्दन् मनसा दीध्यानाः। ऋ० १०।१८१।३ |
| २०३ किं कर्म किमकर्मेति। गी० ४।१६ | २०३ — |
| २०४ किं तद् ब्रह्म किमध्यात्मम्। गी० ८।१ | २०४ — |
| २०५ किं पुनर्ब्राह्मणाः पुण्याः। गी० ९।३३ | २०५ (क) यं विप्रा उक्थवाहसः। ऋ० ८।१२।१३ |
| " " " " | " (ख) या दम्पती समनसा। ऋ० ८।३१।५ |
| २०६ किरीटिनं गदिनं चक्रिणम्। गी० ११।४६ | २०६ — — — |
| २०७ किरीटिनं गदिनं चक्रिणं च। गी० ११।१७ | २०७ त्वमिन्द्राऽभिभूरसि। ऋ० ८।९८।२॥ अथ० २०।६२।६॥ |
| २०८ कुतस्त्वा कश्मलमिदम्। गी० २।२ | २०८ — — — |
| २०९ कुलक्षये प्रणश्यन्ति। गी० १।४० | २०९ — — — |
| २१० कृपया परयाविष्टः। गी० १।२८ | २१० — — — |
| २११ कृषिगोरक्ष्यवाणिज्यम्। गी० १८।४४ (पूर्वार्ध) | २११ (क) अक्षैर्मा दीव्यः कृषिमित्। ऋ० १०।३४।१३ |
| " " " " | " (ख) मया गावो गोपतिना। अथ० ३।१४।६ |
| " " " " | (ग) इन्द्रमहं वणिजम्। अथ० ३।१५।१ |
| " " " " | (घ) ये पन्थानो बहवः। अथ० ३।१५।२ |
| " " " " | (ङ) सा विट् सुवीरा। ऋ० ७।५६।५ |
| २१२ कैर्लिङ्गैस्त्रीन् गुणान्। गी० १४।२१ | २१२ (क) दृते दृंह मा मित्रस्य। यजु० ३६।१८ |
| " " " | (ख) प्र तु विद्युमस्य। ऋ० ६।१८।१२ |
| " " " | (ग) ते अज्येष्ठा अकनिष्ठासः। ऋ० ५।५९।६ |
| २१३ क्रोधाद्भवति संमोहः। गी० २।६३ | २१३ — |
| २१४ क्लैब्यं मा स्म गमः। गी० २।३ | २१४ — — |
| २१५ क्लेशोऽधिकतरस्तेषाम्। गी० १२।५ | २१५ स पर्यगाच्छुक्रमकायम्। यजु० ४०।८ |
| २१६ गतसंगस्य मुक्तस्य। गी० ४।२३ | २१६ अपादु शिप्र्यन्धसः। साम० १४५॥ ऋ० ८।९२।४ |
| २१७ गतिर्भर्ता प्रभुः साक्षी। गी० ९।१८ | २१७ अया विष्ठा जनयन् कर्वराणि। अथ० ७।४।१ |
| २१८ गाण्डीवं स्रंसते हस्तात्। गी० १।३० | २१८ — — — |
| २१९ गामाविश्य च भूतानि। गी० १५।१३ | २१९ (क) अयं स यो वरिमाणं। ऋ० ६।४७।४ |
| | (ख) त्वमिमा ओषधीः। ऋ० १।९१।२२ |
| | (ग) स एव सं भुवनान्याभरत्। अथ० १९।५३। |

| | |
|---|---|
| २२० गुणानेतानतीत्य त्रीन्। गी० १४।२० | २२० त्रयः सुपर्णास्त्रिवृता। अथ० ५।२८।८ |
| २२१ गुरूनहत्वा हि महा०। गी० २।५ | २२१ — — |
| २२२ चञ्चलं हि मनः कृष्ण। गी० ६।३४ | २२२ — — |
| २२३ चतुर्विधा भजन्ते माम्। गी० ७।१६ | २२३(क) चत्वारि ईं बिभर्ति। ऋ० ४।४७।४ |
| " " " | (ख) मां चत्वार आशवः। ऋ० ८।७४।१४ |
| " " | (ग) आ पथयो विपथयः। ऋ० ५।५२।१० |
| २२४ चातुर्वर्ण्यं मया सृष्टम्। गी० ४।१३ | २२४(क) ब्राह्मणोऽस्य मुखमासीत्। ऋ० १०।९०।१२ |
| " " " " | (ख) वा० य० ३१।११॥ अथ० १९।६।६॥ |
| २२५ चिन्तामपरिमेयां च। गी० १६।११ | २२५ |
| २३० चेतसा सर्वकर्माणि। गी० १८।५७ | २३० ~~मम व्रते ते हृदयं दधामि।~~ |
| २३१ जन्म कर्म च मे दिव्यम्। गी० ४।९ | २३१ आ यो धर्माणि प्रथमः। अथ० ५।१।२ |
| २३२ जरामरण मोक्षाय। गी० ७।२९ | २३२ तुभ्येदेत मरुतः सुशेवा। ऋ० ५।३०।६ |
| २३३ जातस्य हि ध्रुवो मृत्युः। गी० २।२७ | २३३ मृत्युरीशे द्विपदाम्। अथ० ८।२।१३ |
| २३४ जितात्मनः प्रशान्तस्य। गी० ६।७ | २३४ तद्विप्रासो विपन्यवः। ऋ० १।२२।२१ |
| २३५ ज्यायसी चेत्कर्मणस्ते। गी० ३।१ | २३५ यच्चिद्धि ते पुरुषत्रा। ऋ० ४।१२।४ |
| २३६ ज्योतिषामपि तज्ज्योतिः। गी० १३।१७ | २३६ अन्धं तमः प्रविशन्ति। यजु० ४०। |
| " " | (ख) इदं श्रेष्ठं ज्योतिषाम्। साम० १३।३।१३ ऋ० १।१२७।३ |
| " " | (ग) यस्य विश्व उपासते प्रशिषम्। ऋ० १०।१२१।२ |
| " " | (घ) वेदाहमेतं पुरुषं महान्तम्। यजु० ३१।१८ |
| " " | (ङ) चन्द्रमा मनसो जातः। ऋ० १०।९०।१३ |
| " " | (च) ज्योतिरसि विश्वरूपम्। यजु० ५।३५ |
| २३७ तं तथा कृपयाविष्टम्। गी० २।१ | २३७ — — — |
| २३८ ततः पदं तत्परिमार्गितव्यम्। गी० १५।४ | २३८ — — — |
| २३९ तच्च संस्मृत्य संस्मृत्य। गी० १८।७७ | २३९ — — — |
| २४० ततः शंखाश्च भेर्यश्च। गी० १।१३ | २४० — — |
| २४१ ततः श्वेतैर्हयैर्युक्ते। गी० १।१४ | २४१ — — |
| २४२ ततः स विस्मयाविष्टः। गी० ११।१४ | २४२ अपश्यमस्य महतो महित्वम्। ऋ० १०।७९।१ |
| २४३ तत्त्ववित्तु महाबाहो। गी० ३।२८ | २४३ ऋतस्य प्रेषा ऋतस्य। ऋ० १।६८।३ |
| २४४ तत्र तं बुद्धिसंयोगम्। गी० ६।४३ | २४४ एषा ते शुक्र तनूरेतत्। यजु० ४।१७ |
| २४५ तत्र सत्त्वं निर्मलत्वात्। गी० १४।६ | २४५ — — |
| २४६ तत्रापश्यत्स्थितान् पार्थः। गी० १।२६ | २४६ — — — |
| २४७ तत्रैकस्थं जगत् कृत्स्नम्। गी० ११।१३ | २४७ — — — |
| २४८ तत्रैकाग्रं मनः कृत्वा। गी० ६।१२ | २४८ — |
| २४९ तत्रैवं सति कर्तारम्। गी० १८।१६ | २४९ — |

| | |
|---|---|
| २५० तत्क्षेत्रं यच्च यादृक् च। गी० १३।३ | २५० चतुष्कपर्दा युवतिः सुपेशाः। ऋ० १०।११४।३ |
| २५१ तदित्यनभिसंधाय। गी० १७।२५ | २५१ तत्सवितुर्वृणीमहे। ऋ० ५।८२।१ |
| २५२ तद्बुद्धयस्तदात्मानः। गी० ५।१७ | २५२ अविन्दन्ते अतिहितं यदासीत्। ऋ० १०।१८१।२ |
| २५३ तद्विद्धि प्रणिपातेन। गी० ४।३४ | २५३ ब्राह्मणेभ्यः ऋषभं दत्वा। अथर्व० ९।४।१९ |
| २५४ तपाम्यहमहं वर्षम्। गी० ९।१९ | २५४(क) सन्नुच्छिष्टे असंश्चोभौ। अथ० ११।७।३ |
| " " " | " (ख) अहं भूमिमददामार्यायाहम्। ऋ० ४।२६।२ |
| २५५ तमस्त्वज्ञानजं विद्धि। गी० १४।८ | २५५(क) यदि स्थ तमसावृता। अथ० २०।१।३० |
| " " " | " (ख) मैतं पन्थामनु गा भीम एषः। अथ० ८।१।१० |
| २५६ तमुवाच हृषीकेशः। गी० २।१० | २५६ — — — |
| २५७ तमेव शरणं गच्छ। गी० १८।६२ | २५७(क) तवाहमग्न ऊतिभिः। ऋ० ८।८।६ |
| " " " | (ख) तवक्रत्वा सनेयं तव रातिभिः। ऋ० ८।१९।२९ |
| " " " | (ग) य एक इत् तमु ष्टुहि। ऋ० ६।४५।१६ |
| २५८ तं विद्याद् दुःखसंयोगम्—"। गी० ६।२३ | २५८ सम्भूतिञ्च विनाशञ्च। यजु० ४०।११ |
| २५९ तस्माच्छास्त्रं प्रमाणं ते। गी० १६।२४ | २५९ इन्द्रो यज्वने पृणते च शिक्षति। ऋ० ६।२८।२ |
| २६० तस्मात् प्रणम्य प्रणिधाय कायम्। गी० ११।४४ | २६० इन्द्रं क्रतुं न आभर। ऋ० ७।३२।२६<br>साम० ऐन्द्रकाण्ड ३।३।७ |
| २६१ तस्मात्त्वमिन्द्रियाण्यादौ। गी० ३।४१ | २६१ अपहत रक्षसो भङ्गुरावतः। ऋ० १०।७६।४ |
| २६२ तस्मात्त्वमुत्तिष्ठ यशो लभस्व। गी० ११।३३ | २६२(क) उत्तिष्ठन्नोजसा सह। ऋ० ८।७६।१०। यजु० |
| " " " | " " ८।३९॥ अथ० २०।४२।३ |
| " " | (ख) भिन्धि विश्वा अप द्विषः। अथ० २०।४३।१ |
| " " " | (ग) यजस्व वीर प्र विहि। ऋ० २।२६।२ |
| " " " | (घ) अनु त्वा रोदसी उभे। अथ० २०।४२।२। ऋ० ८।७६।११ |
| २६३ तस्मात्सर्वेषु कालेषु। गी० ८।७ | २६३ एवा वन्दस्व वरुणं बृहन्तम्। ऋ० ८।४२।२ |
| २६४ तस्मादसक्तः सततम्। गी० ३।१९ | २६४ विद्यां चाविद्यां च। वा० य० ४०।१४ |
| २६५ तस्मादज्ञानसंभूतम्। गी० ४।४२ | २६५ यूयं धूर्षु प्रयुजो न रश्मिभिः। ऋ० १०।७७।५ |
| २६६ तस्मादोमित्युदाहृत्य। गी० १७।२४ | २६६ यस्मात्कोशादुदभराम वेदम्। अथ० १९।७२।१ |
| २६७ तस्माद्यस्य महाबाहो। गी० २।६८ | २६७(क) यो जागार तमृचः कामयन्ते। ऋ० ५।४४।१४<br>साम० १८२६ |
| " " " " " | (ख) अग्निर्जागार तमृचः कामयन्ते। ऋ० ५।४४।१५<br>साम० १८२७ |
| २६८ तस्मान्नार्हाः वयं हन्तुम्। गी० १।३७ | २६८ — — |
| २६९ तस्य संजनयन् हर्षम्। गी० १।१२ | २६९ — — |
| २७० तानहं द्विषतः क्रूरान्। गी० १६।१९ | २७० — — |
| २७१ तानि सर्वाणि संयम्य। गी० २।६१ | २७१(क) दश साकमजायन्त। अथ० ११।८।३ |
| " " " " | (ख) दाशराज्ञे परियत्ताय। ऋ० ७।८३।८ |
| २७२ तुल्यनिन्दास्तुतिर्मौनी। गी० १२।१९ | २७२ यज्ञैः संमिश्लाः। अथ० २०।६७।४॥ ऋ० २।३६-२॥ |
| २७३ तेजः क्षमा धृतिः शौचम्। गी० १६।३ | २७३ — — |

२७४ ते तं भुक्त्वा स्वर्गलोकम् । गी० ९।२१
२७५ तेषामहं समुद्धर्ता । गी० १२।७
२७६ तेषामेवानुकम्पार्थम् । गी० १०।११
२७७ तेषां सततयुक्तानाम् । गी० १०।१०
२७८ तेषां ज्ञानी नित्ययुक्तः । गी० ७।१७
२७९ त्यक्त्वा कर्मफलासंगम् । गी० ४।२०
" " " "
२८० त्याज्यं दोषवदित्येके । गी० १८।३
२८१ त्रिभिर्गुणमयैर्भावैः । गी० ७।१३
२८२ त्रिविधा भवति श्रद्धा । गी० १७।२
२८३ त्रिविधं नरकस्येदम् । गी० १६।२१
" " " "
" " " "
२८४ त्रैगुण्यविषया वेदाः । गी० २।४५
२८५ त्रैविद्या मां सोमपाः । गी० ९।२०
२८६ त्वमक्षरं परमं वेदितव्यम् । गी० ११।१८
२८७ त्वमादिदेवः पुरुषः पुराणः । गी० ११।३८
" " "
" " "
" " "
" " "
२८८ दण्डो दमयतामस्मि । गी० १०।३८
" " "
" "
" " "
२८९ दम्भो दर्पोऽभिमानश्च । गी० १६।४
२९० दंष्ट्राकरालानि च ते मुखानि । गी० ११।२५
२९१ दातव्यमिति यद्दानम् । गी० १७।२०
" " "
" " "
" " "
" " "
" " "
" " "

२७४ स्वयन्तो नापेक्षन्त । अथ० ४।१४।४ ॥ का० य० १७।६८
२७५ — — —
२७६ मैतं पन्थामनु गा भीम एषः । अथ० ८।१।१०
२७७ तेषां सर्वेषामीशाना । अथ० ११।९।२६
२७८ सत्यमित्त्वा महेनदि । ऋ० ८।७४।१५
२७९ (क) अश्वत्थे वो निषदनम् । वा० य० १२।७९
(ख) कृतस्य कार्यस्य चेह स्फातिम् । अथ० ३।२४।५
२८० — — —
२८१ ये त्रिषप्ताः परियन्ति विश्वा । अथ० १।१।१
२८२ — — —
२८३ (क) त्रिते देवा अमृजतैतदेनः । अथ० ६।११३।१
(ख) त्रितः कूपेऽवहितो देवान् । ऋ० १।१०५।१७
(ग) यस्य त्रितो व्योजसा । ऋ० १।१८७।१
२८४ तिस्रो देष्ट्राय निर्ऋतीरुपासते । ऋ० १०।११४।२
२८५ येन देवाः स्वराऽरुरुहुर्हित्वा शरीरम् । अथ० ४।११।६
२८६ उरुः कोशो वसुधानस्तवायम् । अथ० ११।२।११
२८७ (क) एषा सनत्नी सनमेव जातैषा । अथ० १०।८।३०
(ख) यत्रादित्याश्च रुद्राश्च । अथ० १०।८।३०
(ग) ऊर्ध्वं नु सृष्टा३स्तिर्यङ् नु । अथ० १०।२।२८
(घ) त्वमध्वर्युरुत होतासि पूर्व्यः । ऋ० १।९४।६
(ङ) उतेशिषे प्रसवस्य त्वमेकः । ऋ० ५।८१।५
२८८ (क) दण्डा इवेद्गो अजनास । ऋ० ७।३३।६
(ख) जयतामिव तन्यतुर्मरुताम् । ऋ० १।२३।११
(ग) मंत्रमखर्वं सुधितं सुपेशसम् । ऋ० ७।३२।१३
(घ) ब्रह्म पदवायं ब्राह्मणोऽधिपतिः । अथ० १२।५।८
२८९ सप्त मर्यादाः कवयस्ततक्षुः । ऋ० १०।५।६ ॥ अथ० ५।१।६ ॥
२९० विश्वम्भर विश्वेन मा । अथ० २।१६।५
२९१ (क) आर्षेयेषु नि दध ओदन । अथ० ११।१।३३
(ख) न भोजा मम्रुर्न न्यर्थमीयुः । ऋ० १०।१०७।८
(ग) पृणीयादिन्नाधमानाय । ऋ० १०।११७।५
(घ) वर्मेव स्यूतं परि पासि । ऋ० १।३१।१५
(ङ) त्वमिन्द्र शर्मरिणा हव्यं । अथ० २०।१३५।११
(च) तं तं तन्तुं मन्वेके तरन्ति । अथ० ६।१२२।२
(छ) स पचामि स ददामि । अथ० ६।१२३।४

| | |
|---|---|
| २९२ दिवि सूर्यसहस्रस्य। गी० ११।१२ | २९२ यद् द्याव इन्द्र ते शतम्। ऋ० ८।७०।५॥ अथ० २०।८१।१ |
| २९३ दिव्यमाल्याम्बरधरम्। गी० ११।११ | २९३ — — — |
| २९४ दुःखमित्येव यत्कर्म। गी० १८।८ | २९४ — — — |
| २९५ दुःखेष्वनुद्विग्नमनाः। गी० २।५६ | २९५ येनो समत्सु सासहोऽवे स्थिरा। वा० य० २५।४० |
| २९६ दूरेण ह्यवरं कर्म। गी० २।४९ | २९६ यस्तित्याज सचिविदं सखायम्। ऋ० १०।७१।६ |
| २९७ दृष्ट्वा तु पाण्डवानीकम्। गी० १।२ | २९७ — — — |
| २९८ दृष्ट्वेदं मानुषं रूपम्। गी० ११।५१ | २९८ — — — |
| २९९ देवद्विजगुरुप्राज्ञपूजनम्। गी० १७।१४ | २९९ यदग्ने तपसा तप उपतप्यामहे। अथ० ७।६१।१ |
| ३०० देवान् भावयतानेन। गी० ३।११ | ३०० भूम्यां देवेभ्यो ददति। अथ० १२।१।२२ |
| ३०१ देहिनोऽस्मिन् यथा देहे। गी० २।१३ | ३०१ (क) कस्य नूनं कतमस्यामृतानाम्। ऋ० १।२४।१ |
| 〃 〃 〃 | (ख) अग्नेर्वयं प्रथमस्यामृतानाम्। ऋ० १।२४।२ |
| 〃 〃 〃 | (ग) पुनर्मैत्विन्द्रियं पुनरात्मा। अथ० ७।६७।१ |
| ३०२ देही नित्यमवध्योऽयम्। गी० २।३० | ३०२ आ पप्रौ पार्थिवं रजो। ऋ० १।८१।५ |
| ३०३ दैवमेवापरे यज्ञम्। गी० ४।२५ | ३०३ हविर्भिरेके स्वरितः सचन्ते। ऋ० १०।१०६।१२। ऋ० परिशिष्ट— ८।६।३॥ |
| ३०४ दैवी ह्येषा गुणमयी। गी० ७।१४ | ३०४ (क) सुत्रामाणं पृथिवीं द्याम्। ऋ० १०।६३।१०॥ (ख) 〃 〃 अथ० ७।६।३॥ |
| ३०५ दैवी सम्पद्विमोक्षाय। गी० १६।५ | ३०५ इहेदसाथ न परो गमाथेर्यो। अथ० ३।८।४ |
| ३०६ दोषैरेतैः कुलघ्नानाम्। गी० १।४३ | ३०६ — — |
| ३०७ द्यावापृथिव्योरिदमन्तरं हि। गी० ११।२० | ३०७ (क) यस्मिन् भूमिरन्तरिक्षम्। अथ० १०।७।१२ |
| 〃 〃 〃 | (ख) अग्निर्द्यावापृथिवी विश्वजन्ये। ऋ० ३।२५।३ |
| 〃 〃 〃 | (ग) यस्य द्यावापृथिवी पौंस्यम्। ऋ० १।१०१।३ |
| ३०८ द्यूतं छलयतामस्मि। गी० १०।३६ (चरण प्रथम) | ३०८ (क) अजैषं त्वा संलिखितम्। अथ० ७।५०।५ |
| 〃 〃 〃 | (ख) त्वं मायाभिरनवद्य मायिनम्। ऋ० १०।१४७।२ ~~अथ० ...~~ |
| 〃 〃 〃 | (ग) मायाभिरिन्द्र मायिनं त्वम्। ऋ० १।११।७ |
| ३०९ द्रव्ययज्ञास्तपोयज्ञाः। गी० ४।२८ | ३०९ उपास्मान् प्राणो ह्वयताम्। अथ० १९।५८।२ |
| ३१० द्रुपदो द्रौपदेयाश्च। गी० १।१८ | ३१० — — — |
| ३११ द्रोणं च भीष्मं च जयद्रथं च। गी० ११।३४ | ३११ (क) प्रसूत इन्द्र प्रवता हरिभ्याम्। ऋ० ३।३०।६ (ख) 〃 〃 〃 अथ० ३।३।४. |
| 〃 〃 〃 | (ग) यो जिनाति तमन्विच्छ। अथ० ६।१३४।३ |
| 〃 〃 〃 | (घ) यं कामये तं तमुग्रं कृणोमि। ऋ० १०।१२५।५ |
| ३१२ द्वाविमौ पुरुषौ लोके। गी० १५।१६ | ३१२ द्वा सुपर्णा सयुजा सखाया। ऋ० १।१६४।२० अथ० ९।९।२० |
| ३१३ द्वौ भूतसर्गौ लोकेऽस्मिन्। गी० १६।६ | ३१३ द्वे विरूपे चरतः स्वर्थे। यजु० ३३।५ |
| ३१४ धर्मक्षेत्रे कुरुक्षेत्रे ...। गी० १।१ | ३१४ — — |
| ३१५ धूमो रात्रिस्तथा कृष्णः। गी० ८।२५ | ३१५ कृष्णं नियानं हरयः। ऋ० १।१६४।४७॥ अथ० —६।२२।१ |
| ३१६ धूमेनाव्रियते वह्निः। गी० ३।३८ | ३१६ (क) यन्मे मनसो न प्रियं न चक्षुषः। अथ० ६।२।२ |
| ३१७ धृष्टकेतुश्चेकितानः। गी० १।५ | (ख) कामस्तदग्रे समवर्तताधि। ऋ० १०।१२९।४ |
| | ३१७ — — |

३१८ ध्यानेनात्मनि पश्यन्ति। गी०१३।२४ ३१८ – – –

३१९ ध्यायतो विषयान् पुंसः। गी०२।६२ ३१९(क) त्वया मन्यो सरथमारुजन्तः। अथ० ४।३१।१
" (ख) " " ऋ०१०।८४।१
" " " (ग) अभागः सन्नप परेतो अस्मि। अथ०४।३२।५॥
(घ) " " ऋ०१०।८३।५॥

३२० न कर्तृत्वं न कर्माणि। गी०५।१४ ३२० नाहं तन्तुं न विजानाम्योतुम्। ऋ०६।९।२

३२१ न कर्मणामनारम्भात्। गी०३।४ ३२१ अकुर्वन् कर्म कर्मकृतः। वा०य०३।४७

३२२ न कांक्षे विजयं कृष्ण। गी०१।३२ ३२२ – –

३२३ न च तस्मान्मनुष्येषु। गी०१८।६९ ३२३ असंग्रमिन्द्र वः पृथा। ऋ०८।७।१

३२४ न च मत्स्थानि भूतानि। गी०९।५ ३२४ नार्धप्रब आदेध्रषते। अथ०६।३३।२

३२५ न च मां तानि कर्माणि। गी०९।९ ३२५ इन्द्र ओषधी रसेनो दुहन्ति। अथ०२०।१९।१०

३२६ न चैतद्विद्मः कतरन्नो। गी०२।६ ३२६ – – –

३२७ न जायते म्रियते वा कदाचित्। गी०२।२० ३२७(क) न स जीयते मरुतो न हन्यते। ऋ०५।५४।७॥
" " " (ख) अन्ति सन्तं न जहाति। अथ०१०।८।३२

३२८ न तदस्ति पृथिव्यां वा। गी०१८।४० ३२८(क) चत्वारि शृंगा त्रयो अस्य। ऋ०४।५८।३
" " " (ख) " " " यजु०१७।९१
" " " (ग) सप्त मर्यादाः कवयः। ऋ०१०।५।६

३२९ न तद्भासयते सूर्यो। गी०१५।६ ३२९(क) प्र तद्वोचेत् अमृतस्य विद्वान्। अथ०२।१।२
(ख) ऊर्ध्वो अस्या मतिर्भा। अथ०७।१४।२
" " " (ग) सूर्याचन्द्रमसौ धाता। ऋ०

३३० न तु मां शक्यसे द्रष्टुम्। गी०११।८ ३३०(क) इमामू नु कवितमस्य। ऋ०५।८५।६
" " " (ख) आ पश्यति प्रति पश्यति। अथ०४।२०।१

३३१ न त्वेवाहं जातु नासम्। गी०२।१२ ३३१ प्रथमेन प्रमारेण। अथ०११।८।३३

३३२ न द्वेष्ट्यकुशलं कर्म। गी०१८।१० ३३२ अनवद्यैरभिद्युभिः। ऋ०१।६।८॥ अथ०२०।७०।२

३३३ न प्रहृष्येत् प्रियं प्राप्य। गी०५।२० ३३३ – – – –

३३४ न बुद्धिभेदं जनयेत्। गी०३।२६ ३३४(क) संजानाना उप सीदन्नभिज्ञु। ऋ०१।७२।५॥
" " " (ख) शतहस्त समाहर। अथ०३।२४।५

३३५ नभःस्पृशं दीप्तमनेक। गी०११।२४ ३३५ – – –

३३६ नमः पुरस्तादथ पृष्ठतस्ते। गी०११।४० ३३६ पुरस्तात् ते नमः। अथ०११।२।४॥ पश्चात् पुरस्तात्। – ऋ०१०।८७।२१॥ अथ० ८।३।२०॥

३३७ न मां कर्माणि लिम्पन्ति। गी०४।१४ ३३७ कुर्वन्नेवेह कर्माणि। वा०य०४०।२

३३८ न मां दुष्कृतिनो मूढाः। गी०७।१५ ३३८ परांचरन्तान् प्रणुद कण्वान्। अथ०२।२५।५

३३९ न मे पार्थास्ति कर्तव्यम्। गी०३।२२ ३३९ नाहं तन्तुं न विजानाम्योतुम्। ऋ०६।९।२

३४० न मे विदुः सुरगणाः। गी०१०।२ ३४० न यस्य देवा देवता न मर्ताः। ऋ०१।१००।१५

३४१ न रूपमस्येह तथोपलभ्यते। गी०१५।३॥ ३४१(क) यं कुमार नवं रथम्। ऋ०१०।१३५।३
" " " (ख) यं देवा देवस्वापि देवत्वम्। यजु०१७।३४
" " (ग) सप्त प्राणान् अष्टौ मन्यस्तांस्ते। अथ०२।१२।७

३४२ न वेद यज्ञाध्ययनैर्न दानैः। गी०११।४८ ३४२ अयं सोम इन्द्र तुभ्यम्। ऋ०९।८८।१
। साम०(उत्त०अ०)१३।५।१

| | |
|---|---|
| ३४३ नष्टो मोहः स्मृतिर्लब्ध्वा । गी० १८।७३ | ३४३ — — — |
| ३४४ न हि कश्चित् क्षणमपि । गी० ३।५ | ३४४ (क) देवस्य सवितुः सवे । अथ० ६।२३।३ |
| ३४५ न हि देहभृता शक्यम् । गी० १८।११ | ३४५ ([illegible]) — — — |
| ३४६ न हि प्रपश्यामि ममापनुद्यात् । गी० २।८ | ३४६ — — — |
| ३४७ न हि ज्ञानेन सदृशम् । गी० ४।३८ | ३४७ अया विष्ठा जनयन् कर्वराणि । अथ० ७।३।१ |
| ३४८ नान्तोऽस्ति मम दिव्यानाम् । गी० १०।४० | ३४८ (क) अहमेव वात इव प्र वामि । ऋ० १०।१२५।८ । अथ० ४।३०।८ |
| ३४९ नात्यश्नतस्तु योगोऽस्ति । गी० ६।१६ | ३४९ न तिष्ठन्ति न निमिषन्त्येते । ऋ० १०।१०।८ |
| ३५० नादत्ते कस्यचित्पापम् । गी० ५।१५ | ३५० न तं विदाथ य इमा । ऋ० १०।८२।७ |
| ३५१ नान्यं गुणेभ्यः कर्तारम् । गी० १४।१९ | ३५१ तं प्रत्नथा पूर्वथा । ऋ० ५।४४।१ |
| ३५२ नासतो विद्यते भावः । गी० २।१६ | ३५२ सुविज्ञानं चिकितुषे । ऋ० ७।१०४।१२ ॥ अथ० ८।४।१२ ॥ |
| ३५३ नास्ति बुद्धिरयुक्तस्य । गी० २।६६ | ३५३ (क) यन्मे छिद्रं चक्षुषो हृदयस्य । वा० य० ३६।२ |
| " " " | (ख) यन्मे छिद्रं मनसो यच्च वाचः । अथ० १९।४०।१ |
| ३५४ नाहं प्रकाशः सर्वस्य । गी० ७।२५ | ३५४ परो मात्रया तन्वा वृधान । ऋ० ७।९९।१ |
| ३५५ नाहं वेदैर्न तपसा । गी० ११।५३ | ३५५ न तमश्नोति कश्चन । ऋ० १०।६२।९ |
| ३५६ निमित्तानि च पश्यामि । गी० १।३१ | ३५६ — — — |
| ३५७ नियतस्य तु संन्यासः । गी० १८।७ | ३५७ — — — |
| ३५८ नियतं कुरु कर्म त्वम् । गी० ३।८ | ३५८ कुर्वन्नेवेह कर्माणि । वा० य० ४०।२ |
| ३५९ नियतं संगरहितम् । गी० १८।२३ | ३५९ — — — |
| ३६० निराशीर्यतचित्तात्मा । गी० ४।२१ | ३६० — — — |
| ३६१ निर्मानमोहा जितसंगदोषाः । गी० १५।५ | ३६१ (क) मर्मृजानास आयवो वृथा । ऋ० ९।६४।१७ |
| " " " | (ख) ऋषिर्विप्रः पुर एता । साम० (उत्त०) ६।१।३ |
| " " " | (ग) तं त्वा विप्रा वचोविदः । साम० (उत्त०) ७ माध्या० मं० ३ |
| ३६२ निश्चयं शृणु मे तत्र । गी० १८।४ | ३६२ (क) यज्ञो हि त इन्द्र वर्धनो भूत् । ऋ० ३।३२।१२ |
| " " | (ख) मा पृणन्तो दुरितमेन आरन् । ऋ० १।१२५।७ |
| " " | (ग) दक्षिणावतामिदिमानि चित्रा । ऋ० १।१२५।६ |
| " " | (घ) तमेव ऋषिं तमु ब्रह्माणमाहुः । ऋ० १०।१०७।६ |
| " " | (ङ) तपोष्पवित्रं विततं दिवस्पदे । ऋ० ९।८३।२ |
| " " | (च) त्रिभिष्ट्वं देव सवितः । ऋ० ९।६७।२६ |
| ३६३ निहत्य धार्तराष्ट्रान्नः । गी० १।३६ | ३६३ — — — |
| ३६४ नेहाभिक्रमनाशोऽस्ति । गी० २।४० | ३६४ इयमेषाममृतानां गीः सर्वताता । ऋ० १०।७४।३ |
| ३६५ नैते सृती पार्थ जानन् । गी० ८।२७ | ३६५ द्वे सृती अशृणवं पितॄणाम् । ऋ० १०।८८।१५ |
| ३६६ नैनं छिन्दन्ति शस्त्राणि । गी० २।२३ | ३६६ युष्माकं बुध्ने अपां न यामनि । ऋ० १।७७।४ |
| ३६७ नैव किंचित्करोमीति । गी० ५।८ | ३६७ इन्द्रियाणि शतक्रतो । ऋ० ३।३७।९ |
| ३६८ नैव तस्य कृतेनार्थः । गी० ३।१८ | ३६८ यस्मिन् सर्वाणि भूतानि । वा० य० ४०।७ |
| ३६९ पंचैतानि महाबाहो । गी० १८।१३ | ३६९ — — — |
| ३७० पत्रं पुष्पं फलं तोयम् । गी० ९।२६ | ३७० (क) प्रयाजान्मे अनुयाजांश्च । ऋ० १०।५१।८ |
| " " " | (ख) यो अस्मा अन्नं तृष्वा दधाति । ऋ० १०।९१।५ |

३७१ परस्तस्मात्तु भावोऽन्यः। गी० ८।२० — ३७१ नाम नाम्ना जोहवीति। अथ० १०।७।३१

३७२ परं ब्रह्म परं धाम। गी० १०।१२ — ३७२ अवाचचक्षं पदमस्य। ऋ० ५।३०।२

३७३ परं भूयः प्रवक्ष्यामि। गी० १४।१ — ३७३ बोधश्च त्वा प्रतिबोधश्च। अथ० ८।१।१३

३७४ परित्राणाय साधूनाम्। गी० ४।८ — ३७४ (क) अहं रुद्राय धनुरातनोमि। ऋ० १०।१२५।६
(ख) " " " " अथ० ४।३०।५
" " " (ग) अनुव्रताय रन्धयन्। ऋ० १।५१।९
" " " (घ) ऋतं पिपर्ति अनृतं निपाति। अथ० ८।१०।२३

३७५ पवनः पवतामस्मि। गी० १०।३१ (चरण प्रथम) — ३७५ (क) वायुरेनाः समाकरत्। अथ० ६।१४१।१
" " " (ख) वायुरन्तरिक्षस्याधिपतिः। अथ० ५।२४।८
(ग) वन्दस्व मारुतं गणम्। ऋ० १।३८।१५

३७६ पश्य मे पार्थ रूपाणि। गी० ११।५ — ३७६ } दर्शं नु विश्वदर्शतम्। ऋ० १।२५।१८

३७७ पश्यादित्यान् वसून् रुद्रान्। गी० ११।६ — ३७७ }

३७८ पश्यामि देवांस्तव देव देहे। गी० ११।१५ — ३७८ (क) यस्मादित्याश्च रुद्राश्च। अथ० १०।७।२२
(ख) यस्मिन् भूमिरन्तरिक्षम्। अथ० १०।७।२२

३७९ पश्यैतां पाण्डुपुत्राणाम्। गी० १।३। — ३७९

३८० पार्थ नैवेह नामुत्र। गी० ६।४० — ३८० नैनं प्राप्नोति शपथः। अथ० ४।९।५

३८१ पाञ्चजन्यं हृषीकेशः। गी० १।१५ — ३८१

३८२ पितासि लोकस्य चराचरस्य। गी० ११।४३ — ३८२ (क) प्रजापतिर्जनयति प्रजाः। अथ० ७।२०।१
" " " (ख) न किरिन्द्र त्वदुत्तरं न ज्यायः। ऋ० ४।३०।१॥ [साम० २।९।१०
" " " (ग) न त्वावाँ अन्यो दिव्यः। ऋ० ७।३२।२३॥ यजु० २७।३६॥ साम० २।११।११।२॥ अथ० २०।१२१।२॥
" " " (घ) विश्वमाप्रा अन्तरिक्षं महित्वा। ऋ० १।५२।१३
" " " (ङ) अग्निं मन्ये पितरमग्निम्। ऋ० १०।७।३
" " " (च) त्वं त्राता तरणे चेत्यो भूः। ऋ० ६।१।५
" " " (छ) त्वामग्ने पितरमिष्टिभिः। ऋ० २।१।९

३८३ पिताऽहमस्य जगतः। गी० ९।१७ — ३८३ (क) त्वं त्राता तरणे चेत्यो भूः। ऋ० ६।१।५
" " " (ख) पिता जनितुरुच्छिष्टोऽसोः। अथ० ११।७।१६
" " " (ग) स नः पिता जनिता स उत। अथ० २।१।३
" " " (घ) ऋचो नामास्मि यजूंषि। का० य० १८।१६

३८४ पुण्यो गन्धः पृथिव्यां च। गी० ७।९ — ३८४ (क) तं पुण्यं गन्धं गन्धर्वाप्सरसः। अथ० ८।१०। (५) ८॥
" " " (ख) तेजोऽसि शुक्रमस्यमृतमसि। का० य० १।३१
" " " (ग) तेजोऽसि तेजो मयि धेहि। यजु० १९।९
" " " (घ) जातवेदसे सुनवाम सोमम्। ऋ० १।९९।१
" " " (ङ) त्विषसौ धूम ऋण्वति। ऋ० ६।२।६ [अथ० १८।४।५९]
" " " (च) प्राणो मृत्युः प्राणस्तक्मा। अथ० ११।४।११
" " " (छ) प्राणाद्वायुरजायत। ऋ० १०।९०।१३॥ अथ० १९।६।७॥
" " " (ज) सूर्यो मे चक्षुर्वातः प्राणः। अथ० ५।९।७
" " " (झ) तद् ब्रह्म च तपश्च। अथ० ८।१०(४)।१६

३८५ पुरुषः प्रकृतिस्थो हि। गी० १३।२१ — ३८५ अपाङ् प्राङेति स्वधया। ऋ० १।१६४।३८

३८६ पुरुषः स परः पार्थ। गी० ८।२२ — ३८६ अर्चा शक्राय शाकिने शचीवते। ऋ० १।५४।२

३८७ पुरोधसां च मुख्यं माम्। गी० १०।२४ (पूर्वार्ध) — ३८७ (क) सोमं राजानं वरुणम्। साम० १।१।९।१ ऋ० १०।१४१।३॥ यजु० ९।२६। अथ० ३।२०।४॥
" " " (ख) ~~बृहस्पतिर्हि देवानाम्~~ बृहस्पते यं महिषं द्युमन्। अथ० २।३५।४॥
" " " (ग) बृहस्पतिर्नः परिपातु। अथ० ७।५१।१

